# SRĪ-BHĀṢYA

OR

# BRAHMASŪTRABHĀṢYA

BY

## BHAGAVAD-RĀMANUJA

WITH

1. S'rutaprakáśiká by Sudarśanabhaṭṭáraka
2. Bhávaprakáśiká by Raṅgarâmânujamuni
3. S'rutapradìpiká by Sudarśanabhaṭṭâraka
4. Nayaprakáśiká by Méghanádáriśúri
5. Tattvaṭiká by Védántadéśika
6. Mūlabhávaprakáśiká by Raṅgarāmānujamuni
7. Nyáyasudarśana by Varadanáráyaṇabhaṭṭàraka
8. Adhikaraṇasárávali by Védántadéśika.
9. Adhikaraṇacintámaṇi by Varadanáthasúri
10. Viṣayavákyadípiká by Raṅgarámánujamuni

---

EDITED BY

**Pandit V. ANANTHACHARYA**

Lecturer in Sanskrit, Pachaiappa's College, Madras.

AND

**Vyakaranasiromani V. KRISHNAMACHARYA**

Senior Pandit, Govt. Oriental Mss. Library, Madras.

## Vol 1.

PUBLISHED BY

**Pandit A. R. KRISHNAMACHARIAR**

***Proprietor***

THE MADRAS SANSKRIT BOOK DEPOT

KRISHNAPURAM, KODAMBAKAM, MADRAS.

श्रीः

श्रीभगवद्रामानुजमुनिविरचितं

श्रीभाष्यापरनामधेयं

# ब्रह्मसूत्रभाष्यम्

---

प्रथमं संपुटम्

श्रुतप्रकाशिका, तद्व्याख्या भावप्रकाशिका, श्रुतप्रदीपिका, नयप्रकाशिका, तत्त्वटीका, मूलभावप्रकाशिका, वेदान्तन्यायसुदर्शनम्, अधिकरण-सारावलिः, तद्व्याख्या अधिकरणचिन्तामणिः, विषयवाक्यदीपिका, इत्येतैः समलंकृतम्

---


ति. न. च. पण्डित वे. अनन्ताचार्येण

वे. कृष्णमाचार्येण च

परिशोध्य



कोडंपाक्कम्

कृष्णापुराग्रहारवास्तव्येन

ए. आर्. कृष्णमाचार्येण

प्रकाशितम्

१९३७

# उपोद्घातः ।

यदा बहोः कालात्पूर्वमेव श्रीभगवद्रामानुजवदनारविन्दनिर्गलितस्य श्रीमन्नाथमुनिश्रीमद्यामुनमुनिप्रभृतिपरमाचार्यनिर्धारितसिद्धान्तप्रकाशनधुरन्धरस्य भेदाभेदघटकसगुणनिर्गुणादिनानाविधश्रुतिवाक्यानां सर्वेषामपि स्वारसिकाक्लिष्टतत्तत्सन्दर्भानुगुणार्थवर्णनेन प्रदर्शितसर्वशास्त्रानुकूल्यस्य स्मृतीतिहासपुराणागमादीनां सर्वेषामपि मुनिजनवचसामैककण्ठ्यसंपादनप्रक्रियापरितोषितसकलतीर्थकराभिनन्दनीयविषयोपन्यासवैलक्षण्यस्य श्रीभाष्यस्य श्रुतप्रकाशिकासहितं सुस्पष्टाक्षरं समीचीनं मुद्रितपुस्तकं यत्र कुत्रापि लभ्येतेति विचारितम्, तदा अस्पष्टेषु ग्रन्थाक्षरेषु अतिसूक्ष्मेषु निश्वासवातच्छेद्येषु मलीमसेषु काकलेषु मुद्रितमेव पुस्तकं शरणमासीत् । तत्र तत्र देशान्तरेषु मुद्रितानि पुस्तकानि प्रायेण न सुबद्धानि न सुलभानि चैतद्देशीयानाम् । कतिपयकालात्पूर्वं बहुभिरौत्तराहैः पण्डितैरेवमवबोधिता अभूम यथा—श्रुतप्रकाशिकासहितस्य श्रीभाष्यस्य परिष्कृतरीत्या मुद्रणं कृत चेत् महदुपकृतं भविष्यति; बहवश्छात्रा एतादृशग्रन्थानामलाभेन महान्तं क्लेशमनुभवन्ति" इति । उपश्रुत्यानया प्रोत्साहितैरस्माभिः यदा श्रुतप्रकाशिकायाः पाठपरिशोधनाय मातृकान्वेषणे व्यापृतं तदानीं श्रुतप्रदीपिकानयप्रकाशिकामूलभावप्रकाशिकाप्रभृतयो बह्व्यो व्याख्याश्चक्षुषोः पुरतः प्रादुरभूवन् । यावल्लब्धं प्रौढतमैर्व्याख्यानान्तरैः सह संयोज्य मुद्रणे श्रीभाष्यस्य विशेषतः परिष्कारो महानुपकारश्च वाचकानां भविष्यतीति, बहुभिः सुधीभिः प्रेरितास्तत्त्वटीकाया विरहे श्रीभाष्यं नातीव परिष्क्रियेतेति च मन्वानास्तामपि समयोजयाम ।

महाजनैरर्थतो ज्ञानतश्च विशिष्टैः संभूय निर्वर्तयितव्येऽस्मिन् महति कार्ये सर्वप्रकारेणाप्यनधिकारिणो वयं केवलं महदनुग्रहमेव प्रधानं बलमवलम्ब्य शिशव इव निर्भीकाः प्रावर्तिष्महि । बहवः पण्डिताः साधव आचार्याश्चानेन श्रीभाष्यमुद्रणरूपेण महाकैङ्कर्येणाराधिता भवन्तीतीदं न निह्नोतुमर्हम् । तथापि किं चिद्दूरमारूढवतामप्यस्माकं हृदयात् 'कथं वेदं कृच्छ्रसाध्यं कार्यं निर्व्यूढं भविष्यति ; किं वा वयमविज्ञातसाध्वसाः कार्येऽस्मिन् पदं न्यधाम' इति चिन्ता सांप्रतमपि नापैति ।

तत्र यद्यपि श्रुतप्रदीपिका श्रुतप्रकाशिकातोऽनतिरिक्तार्थप्रतिपादनपरा, तथापि इदंप्रथमतया वेदान्तप्रकरणे कृतावताराणां छात्राणां संक्षेपतः श्रीभाष्यार्थप्रतिपादनपरेयं महदुपकरिष्यतीति न वयं श्रुतप्रकाशिकया गतार्थतामस्यां मन्यामहे । तत्त्वटीका तु श्रीभा-

ष्यस्य सारतमापूर्वार्थप्रतिपादनैदंपर्ये मूर्धाभिषिक्ता भगवतो भाष्यकारस्य मूर्तिमद्धृदयभूतेति नास्या महिमानुवर्णने प्रभवामः ।

मूलभावप्रकाशिका तु तत्र तत्र गहनतरातिविस्तृतपूर्वमीमांसाप्रक्रियाविषयविचारणासरण्या संचरमाणा सैरन्ध्रीव स्वाधीनपतिकां श्रीभगवद्रामानुजदिव्यसूक्तिं विशेषतो विभूषयतीत्यपि सुस्पष्टमेवास्यां कृतपरिचयानां संख्यावताम् ।

नयप्रकाशिकापि क्वचित्क्वचित् अस्मत्पूर्वाचार्यैरप्रहते संप्रदायपारंपरीतः किंचिदिव विश्लथिते वर्त्मनि संचरन्त्यपि श्रीमद्भिर्निगमान्तमहागुरुभिः स्वपूर्वकालिकत्वेन त्रय्यन्तशास्त्रनिष्णातत्वेन च तत्र तत्र स्मृतैर्बहुमतैश्च श्रीमेघनादारिसूरिभिर्विरचितेति व्याख्यानान्तरेष्वचुम्बितान् विषयान् सम्यक् प्रतिपादयतीति च नास्माभिरुपेक्षिता । अनेन ग्रन्थकारेण प्रणीतो मुमुक्षूपायसंग्रहाख्यः प्रबन्धोऽस्मदाचार्यपरंपरासमागतेषु सांप्रदायिकेष्वर्थेषु प्रत्यवस्थानरूप इत्यन्यदेतत् ।

वरदनारायणभट्टारकैः प्रणीतः श्रीमन्निगमान्तमहागुरुभिस्तत्र तत्र प्रमाणतया सबहुमानमुपात्तं न्यायसुदर्शनं देशेऽस्मिन् वम्रिभिर्भक्षितप्रायायामत्यन्तजरत्यामद्वितीयायां मातृकायां जीवितं धारयतीति मास्यात्यन्तलोपो भूदिति कृत्वा यावल्लब्धं प्रकाश्यते । निसर्गतः श्रेयःप्रतिघातिप्रत्यूहबहुलेऽस्मिन् प्रपञ्चे श्रीविशिष्टाद्वैतसिद्धान्तस्य प्रथमाधारभूतमिदं श्रीभाष्यमुद्रणकैङ्कर्यं यथा सम्यङ् निर्वर्त्येत तथानुगृह्णीयुः पण्डिताः परमपावनमनोवृत्तयः इति संप्रार्थयामहे ।

अस्मिन् मुद्रणकार्ये ग्रन्थपरिशोधनेन मूलभावप्रकाशिकास्थानां विषयाणामनुक्रमणिकाप्रदानेन च दासेन मया सह सुबहु परिश्रम्य उपकृतवतां जम्बूपाकग्रामाभिजनानां शतक्रतुकुलतिलकानां विद्वद्वरेण्यानां श्रीनरसिंहाचार्याणां वयमत्यन्तमधमर्णाः । मुद्रणसमये पाठपरिशोधनादिकार्याय अस्माकं यथापेक्षितं सुचिरसंरक्षितानि तालपत्रलिखितानि पुस्तकानि प्रदाय अस्मदुद्योगं कृतार्थीकुर्वतां राजकीयप्राच्यलिखितपुस्तकभाण्डागाराधिकारिणां अडैयार् तियासफीसभाध्यक्षाणां च विषये सुबहु कृतज्ञतां प्रकाशयामः ।

कृष्णापुरम् ,
कोडंपाक्कम् पोस्टु
चन्नपुरी.
७—८—१९३७

इति तिरुमलैनल्लान्चक्रवर्त्यभिजनः
वे. अनन्ताचार्यः.
वे. कृष्णमाचार्यः.

## श्रीभाष्यादिग्रन्था एतेषु पृष्ठेषु द्रष्टव्याः

## श्रीभाष्यविषयानुक्रमणिका

# श्रुतप्रकाशिकाविषयानुक्रमणी

## भावप्रकाशिका विषयसूचिका



---

## नयप्रकाशिका विषयसूची

# तत्त्वटीकास्थविषयसूचिका

# मूलभावप्रकाशिकार्थानुक्रमणम्

---

श्रीः ।

श्रीमते रामानुजाय नमः ।

श्रीभगवद्रामानुजमुनिविरचितं

# श्रीभाष्यम् ।

---

## प्रथमाध्याये प्रथमः पादः ।

---

अखिलभुवनजन्मस्थेमभङ्गादिलीले
विनतविविधभूतव्रातरक्षैकदीक्षे ।
श्रुतिशिरसि विदीप्ते ब्रह्मणि श्रीनिवासे
भवतु मम परस्मिञ्शेमुषी भक्तिरूपा ॥

---

श्रीसुदर्शनभट्टारकविरचिता

## श्रुतप्रकाशिका ।

---

[1]यतीन्द्रकृतभाष्यार्था यद्व्याख्यानेन दर्शिताः ।
वरं सुदर्शनार्यं तं वन्दे कूरकुलाधिपम् ॥

---

[2]वरदं द्विरदाद्रीशं श्रीनिधिं करुणानिधिम् ।
शरण्यं शरणं यामि प्रणतार्तिहरं हरिम् ॥ १ ॥
बहिरन्तस्तमश्छेदि ज्योतिर्वन्दे सुदर्शनम् ।
येनाव्याहतसंकल्पं वस्तु लक्ष्मीधरं विदुः ॥ २ ॥

---

१. अयं श्लोकः श्रुतप्रकाशिकाकारविषयः श्रुतप्रकाशिकारम्भे अनुसंधीयते ।

२. अनेन श्लोकेन करिगरौ सेव्यमानानां त्रयाणां बेराणां नामधेयानि अनुसंहितानीति सांप्रदायिको विशेषः ।

सम्यङ्न्यायकलापेन महता भारतेन च ।
उपबृंहितवेदाय नमो व्यासाय विष्णवे ॥ ३ ॥

तस्मै रामानुजार्याय नमः परमयोगिने ।
यः [1]श्रुतिस्मृतिसूत्राणामन्तर्ज्वरमशीशमत् ॥ ४ ॥

वन्देऽहं वरदार्यं तं वत्साभिजनभूषणम् ।
भाष्यामृतप्रदानाद्यः संजीवयति मामपि ॥ ५ ॥

प्रपद्ये प्रणवाकारं भाष्यं रङ्गमिवापरम् ।
परस्य ब्रह्मणो यत्र शेषित्वं स्फुटमीक्ष्यते ॥ ६ ॥

[2]श्रुत्यन्तेषु श्रुतं भाष्ये मतं ध्यातं हृदम्बुजे ।
लक्ष्मीपतिं प्रपद्योऽहं दृष्टं श्रीरङ्गधामनि ॥ ७ ॥

प्रमाणं च प्रमेयं च प्रमातारश्च सात्त्विकाः ।
जयन्तु क्षपितारिष्टं सह सर्वत्र सर्वदा ॥ ८ ॥

अविस्तृताः सुगम्भीरा रामानुजमुनेर्गिरः ।
दर्शयन्तु प्रसादेन स्वं भावमखिलं दृढम् ॥ ९ ॥

श्रीरङ्गेशाज्ञया लब्धव्याससंज्ञं सुदर्शनम् ।
वाचाविजयिनः पुत्रं भाष्यभक्तिरचूचुदत् ॥ १० ॥

गुरुभ्योऽर्थः श्रुतः शब्दैस्तत्प्रयुक्तैश्च योजितः ।
सौकर्याय बुभुत्सूनां संकलय्य प्रकाश्यते ॥ ११ ॥

कः कृत्स्नं वेत्ति भाष्यार्थं श्रुतांशस्थितये कृतिः ।
आढ्यैः काकणिकेवैषा नोपेक्ष्या भाष्यवित्तमैः ॥ १२ ॥

---

१. वेदार्थसंग्रहे श्रुतीनां, गीताभाष्ये स्मृतीनां, सारदीपयोः सूत्राणां, श्रीभाष्ये श्रुतिस्मृतिसूत्राणां चान्तर्ज्वरमस्थिज्वरमशीशमत्, यः मायावादादिभिरुपजनितोऽभूत् इति बोध्यम् ।

२. अस्मिन् श्लोके "द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इति श्रुत्यर्थस्तदभिमतो ज्ञानपर्वक्रमश्चानुसंहितः। अनेन श्रीरङ्गे सेव्यमानं भगवत्स्वरूपमेव योगिभिर्मुक्तावनुभाव्यं परस्वरूपमिति च गम्यते ।

भाष्यं चेद्व्यवृणोत्स्वयं यतिपतिर्व्याख्यानवाचां तथा
गाम्भीर्यादनवस्थितिर्मितमतिर्दूरे जनस्तद्गिराम् ।
प्रष्टव्यः कथमीश्वरः स हि न नः प्रत्यक्षरूपो दृशां
तद्भाष्यं स च भाष्यकृत्स च हरिः सम्यक् प्रसीदन्तु नः ॥ १३ ॥

सर्वेषां पुरुषाणां प्रमाणाधीनप्रमेयनिश्चयानामुपादित्सितजिहासितेष्टानिष्टतत्साधनानामलौकिकपुरुषार्थतत्साधनरूपे वस्तुनि शब्दैकसमधिगम्ये, तत्राप्यपुरुषशेमुषीदोषमषीमालिन्यस्य वेदाख्याक्षरराशेरेव प्रधानतरप्रमाणतयाश्रयणीयत्वे सिद्धे, तत्र च पशुपुत्रवृष्ट्यन्नस्वर्गाद्यैहिकामुष्मिकार्वाचीनफलतत्साधनपरेऽवगते पूर्वभागे, परमपुरुषार्थावबोधके च तदुपरिभागे पूर्वाचार्याभिमतमुक्तिघण्टापथकण्टकायमानविविधकुदृष्टिजनदुर्वचनशतोपप्लुते, तदुपदर्शितकुपथप्रवृत्तिनि च जगति मोमुह्यमाने, तदुज्जिजीवयिषया सदसद्विवेचनचतुरपूर्वाचार्यपरिचितं प्राचीनमेव समीचीनमध्वानं निष्कण्टकीकृत्य परमपुरुषार्थाभ्यर्थिजनसार्थं कृतार्थयितुं भवभयाभितप्तजनभागधेयवैभवभावितावतरणेन परमकारुणिकेन भगवता भाष्यकारेण शारीरकशास्त्रं व्याचिख्यासितम् । परमर्षिप्रणीतानि व्याख्येयानि [1]तेषां च महर्षिप्रणीतानि व्याख्यानानि सन्ति चेत्तान्येवानुरोद्धव्यानि । न ह्यनृषेः सूक्ष्मदर्शित्वम् । ऋषेरभिप्रायमृषिरेव च स्वतो वेदितुमर्हति, न तु जडमतिरितरो जनः । ऋषिवचसामेवाभिन्नवक्तृकाणां मिथो विरोधे [2]पूर्वपक्षाभिप्रायवैभववादादिभिरविरोधो नेयः । भिन्नवक्तृकाणां तु

---

१. 'तेषां च महर्षि......व्याख्यानानि सन्ति चेत्' इति एकचकारविशिष्टः पाठ एव भावप्रकाशिकाकाराभिमतः । तथैव च केषुचित् तालपत्रकोशेषु पाठो दृश्यते । 'तेषां च महर्षि......व्याख्यानानि च सन्ति चेत्' इति चकारद्वयविशिष्टः पाठोऽपि केषुचित् तालपत्रकोशेषु दृश्यते । स एव च सांप्रदायिकः पाठ इत्यपि केचिदभिप्रयन्ति ।

२. धर्मं जैमिनिरत एव (३—१—३९) परं जैमिनिर्मुख्यत्वात् (४—३—११) इत्युपपादितयोर्जैमिनिमतयोर्यद्यपि मिथो विरोधः स्फुरति, तथापि पूर्वस्य पूर्वपक्षाभिप्रायकतयार्थो वर्णनीयः 'एवं जैमिनिनाक्षिप्तं तस्यायं बादरायणीयः परिहारः' इति । अत एव भगवता भाष्यकृता 'संप्रति पूर्वपक्षमाह' इति तत् सूत्रमवतारितम् । यद्वा, वेदः अप्रमाणं, वैदिकं कर्म नानुष्ठेयमिति वदद्भिः—देवताभ्युपगमे पुण्यफलानां देवतास्थानानामस्थिरत्वात् देवतानामप्यभावे अनित्यार्थसंयोगित्वात् वेदस्याप्रामाण्यमेव । फलप्रददेवतानामभावे तदुद्देशेन कर्मानुष्ठानं च न

विरोधे [1]दुष्परिहरे युक्तियुक्तं ग्राह्यमिति न दोषः । ये पुनः सन्त्यपि तान्यनादृत्य व्याख्येयान्तराणि व्याख्यानान्तराणि च तद्विरुद्धानि रचयन्ति, तेषामाग्रहगृहीतहृदयत्वे पण्डितमानित्वे पाण्डित्यख्यापनपरत्वे च तत्प्रवृत्तिरेव प्रमाणं । इतरेषां च व्याख्यातॄणामार्षव्याख्यानातिलङ्घित्वम् "उपासात्रैविध्यात्" "सर्वत्र प्रसिद्धोपदेशात्" "भूमा संप्रसादादध्युपदेशात्" "दहर उत्तरेभ्यः" इत्यादिषु स्पष्टतरम् । इह तु वृत्त्यनुसारः प्रतिज्ञातः । न च तत्प्रतिज्ञानमहृदयमिति शङ्कनीयम्, दुष्परिहरबाधकानुपलम्भात् । यद्यपि कर्ममीमांसायां [2]क्वचित् क्वचिदर्वाचीनैर्व्याख्यातृभिराकुलत्वमापादितम्, तथापि तत्र प्रयोगमार्गे स्खलनाभावादनुष्ठानमात्राधीनायाः स्वर्गादिफलसिद्धेर्देवतास्वरूपतद्याथात्म्यसत्कार्यवादादिज्ञाननैरपेक्ष्यं, परमपुरुषार्थस्य ज्ञानैकसाध्यतया ज्ञानमार्गस्खलनस्यात्महानिफलकत्वेन तद्विपरीतज्ञानानामवश्यपरिहर्तव्यत्वम्, उत्तरभागे च तत्तदर्थौपयिकतया प्रसक्तानां पूर्वभागार्थानां शिक्षणीयत्वं प्रदर्शितयैव दिशानुक्तानामपि शिक्षणीयार्थान्तराणां सुकरनिर्वाहत्वं चाभिप्रेत्य ब्रह्मसूत्राण्येव भगवान् भाष्यकारः प्रारभते विवरीतुम् ।

एवं प्रारिप्सितस्य प्रबन्धस्याविघ्नपरिसमाप्तिप्रचयगमनार्थं स्मृत्याचारसिद्धमिष्टदेवतोपासनरूपं मङ्गलं श्रौतमाचरति—**अखिलेत्यादिना** ।

"मङ्गलाचारयुक्तानां नित्यं च प्रयतात्मनाम् ।
जपतां जुह्वतां चैव विनिपातो न विद्यते ॥"

इति हि स्मर्यते । आचर्यते च तत्तत्प्रबन्धृभिः । श्रोतृमनःसमाधानार्थं शास्त्रार्थ-

---

स्यात्—इति परिचोदिते कर्मणां देवतानैरपेक्ष्यलक्षणं वैभवमस्ति ; पूर्वानुभवस्यात्मगतभावनाद्वारा हेतुत्ववत् जीवगतादृष्टद्वारा कर्मणां स्वर्गादिहेतुत्वोपपत्तेः न वेदाप्रामाण्यं न वा कर्मणामननुष्ठेयत्वमिति परिहारं वक्तुं 'न हि निन्दा' न्यायेन देवतानिरासोक्तिः कर्मप्राधान्यपरा । अतो न विरोध इति भावः ।

१. दुष्परिहरे ; सर्वथा परिहर्तुमशक्ये इत्यर्थः ।

२. कार्यपरवाक्यार्थभावनावाक्यार्थवादमुखेन, अर्थवादानां कार्यशेषकर्मकर्तृप्रशंसापरत्ववादमुखेन, गवादिशब्दैः व्यक्तिलाभस्य लक्षणया आक्षेपाद्वा सिद्धिरित्युक्तिमुखेन, गुणवाचिपदानां गुणिलाक्षणिकत्वोक्तिमुखेन, समानाधिकरणपदानां पार्ष्ठिकाभेदान्वयबोधकत्वोक्तिमुखेनेत्येवंरीत्या भाट्टैः प्राभाकरैश्चाकुलत्वमापादितमिति भावः ।

संक्षेपश्चार्थतः क्रियते ; यथा चोदनासूत्रेण धर्मस्वरूपं प्रमाणं च श्रुत्यर्थाभ्यां निरूपितम् । प्रसिद्धं हि श्रोतुः प्रतिपत्तिसौकर्याय वक्तुरर्थप्रतिपादनस्य संक्षेपपूर्वकत्वम्——"इष्टं हि विदुषां लोके समासव्यासधारणम्" इति । शास्त्रार्थसंक्षेपेण वस्तुनिर्देशो 'भवतु' इत्याशीर्वादश्च कृतौ भवतः । विनतेति भक्तिरूपेति च ब्रह्मणि प्रह्वीभावावगमात् प्रणतिरपि फलिता ; "णमु प्रह्वत्वे" इति हि धातुः । एवं त्रिविधमङ्गलमाचरितं भवति । श्लोकस्य प्रथमपादेन पूर्वस्याध्यायद्विकस्यार्थः संक्षिप्तः ; द्वितीयेन तूत्तरद्विकस्य । कर्ममीमांसायां प्रतिपाद्यभेदेन षट्कभेदवदत्रापि विषयविषयिरूपप्रतिपाद्यभेदेन द्विकभेदः । शास्त्रप्रतिपाद्यमुपायोपेयात्मकम् । सिद्धोपाय उपेयं च ब्रह्म । साध्योपायो भक्तिः । तत्र सप्तम्यन्तैः पदैः सिद्धोपायरूपमुपेयं च ब्रह्मोच्यते । भवतीति भुवनं कार्यवर्गः । रूढिशक्त्या [1]अतत्कारणस्य कुलालादेर्व्यावृत्तिः । भुवनशब्दो हि विपुलतरकार्यविशेषे रूढः । अखिलशब्देन सकलदेशकालवर्तीन्यण्डजातानि विवक्षितानि ; तेन ब्रह्मादिव्यावृत्तिः । खिलं नास्तीत्यखिलम् । कार्येषु ब्रह्मणः सृष्ट्यादिव्यापाराविषयभूतं न किंचिदस्तीत्यर्थः । अनया व्यतिरेकोक्त्या प्रायिकत्वनिवृत्तिः, "अज्ञातं नास्ति ते किंचित्" इतिवत् । अतः सकलमित्यन्वयमुखेनानुक्तिः । अकारोपक्रमत्वसिद्धये निखिलेत्यनुक्तिः । "अ इति भगवतो नारायणस्य प्रथमाभिधानम्" "भगवतो वाचकमकारं प्रयुञ्जानेन किं नाम मङ्गलं न कृतम्" इति चाभियुक्तैरभ्यधायि । अत्र भगवद्वाचित्वाविवक्षायामपि भगवद्वाचित्वशक्तियोगादकारो माङ्गलिकः "अइउण्" इत्यत्राकारवत् । नञो निषेधवाचित्वेऽपि निषेध्यवशाच्छुभत्वाशुभत्वे । अतः "निष्प्रत्यूहमुपास्महे" इत्यादिनिर्देशस्येव शुभतरत्वम् ; वैकल्यनिषेधेन पौष्कल्यपरत्वात् । अखिलशब्देन चिदचिद्भेदोऽप्यभिप्रेतः । **जन्म** [2]नित्यनैमित्तिकप्राकृतरूपम् । **स्थेमा** स्थितिः । सा चान्तर्यामिविष्णववतारलोकपालमन्वादिनृपमातापित्रादिमुखेन क्रियमाणा बहुविधा विवक्षिता । **भङ्गः** नित्यनैमित्तिकप्राकृतरूपः । मोक्षस्य लयान्तर्भावेऽपि शास्त्रस्य

---

१. 'रूढिशक्त्या कुलालादिव्यावृत्तिः' इति भावप्रकाशिकासंमतः पाठः ।

२. "प्रसूतिः प्रकृतेर्या तु सा सृष्टिः प्राकृता स्मृता ।
नैमित्तिकी तथा प्रोक्तावान्तरप्रलयादनु ॥

भूतान्यनुदिनं यत्तु जायन्ते मुनिसत्तम ।
नित्यसर्गो हि स प्रोक्तः पुराणार्थविचक्षणैः ॥" एवं भङ्गोऽपि ।

परमप्रयोजनत्वादत्र स नान्तर्भावितः। अत एवादिशब्देऽपि नान्तर्भाव्यः, तस्य साधारणतया स्फुटप्रतिपत्तिहेतुत्वाभावात्। पृथगेव हि पूर्वैश्च स्पष्टतरं निर्दिष्टो मोक्षः—"जगदुद्भवस्थितिप्रणाशसंसारविमोचनादयः" इति "जगज्जन्मस्थितिध्वंसमहानन्दैकहेतवे" इति च। भगवान् भाष्यकारश्च तथा निर्दिशति; यथा वेदार्थसंग्रहे—"उद्भवस्थितिप्रलयसंसारनिवर्तनैकहेतुभूतः" इति; भाष्ये च—"निखिलजगदुदयविभवविलयमहानन्दैककारणम्" इति। विनतेत्यादिपदेन स्थेमान्तर्भूतस्वर्गादिसांसारिकफलप्रदत्वस्य पृथगुक्तिरनपेक्षिता। असाधारणस्य परमप्रयोजनस्य मोक्षस्यैव हि पृथगुक्त्यपेक्षा। आदिशब्देन सृष्ट्याद्यौपयिकमन्तःप्रवेशनियमनादि गृह्यते। तथाच भाष्ये स्वयमेव वक्ष्यति—"जगदुत्पत्तिस्थितिसंहारान्तःप्रवेशनियमनादिलीलम्" इति। जन्मस्थेमभङ्गोक्त्यैवान्तःप्रवेशनियमनादेरर्थसिद्धत्वाश्रयणमयुक्तम्; अध्यासपरिणामपक्षयोस्तस्यार्थत्वाभावेन तद्व्यावृत्त्यर्थं स्वमते पृथग्वक्तव्यत्वात्; शाब्दत्वे संभवत्यार्थत्वकल्पनायोगात्; विस्तरेणोक्तस्यार्थस्य संक्षेपोक्तौ विवक्षितत्वोपपत्तेश्च। लीलाशब्देन भगवतः परिपूर्णत्वानन्यप्रेर्यत्वस्वच्छन्दचेष्टितत्वादिकमभिप्रेतम्; यथोक्तं महाभारते—

"अप्रमेयोऽनियोज्यश्च यत्र कामगमो वशी।
मोदते भगवान् भूतैर्बालः क्रीडनकैरिव॥" इति।

अप्रमेयत्वं परिपूर्णत्वम्। अनियोज्यत्वमनितरचेतनप्रेर्यत्वम्। यत्रकामगम इत्यनेन वायूदकादिप्रेरणाधीनाबुद्धिपूर्वकस्पन्दादिचेष्टाव्यावृत्तिः; स्वेच्छाकृतप्रवृत्तिविघातव्युदासो वा। स्वाधीनलीलोपकरणत्वं वशिशब्दार्थः, विश्वं वशे यस्य स वशी; इन्द्रियपराधीनचेष्टाव्यावृत्त्यर्थो वा वशिशब्दः। बालकदृष्टान्तेन लीलायाः प्रयोजनान्तरनैरपेक्ष्यमभिप्रेतम्। अनेन राज्ञां पणबन्धपूर्वकद्यूतादिव्यावृत्तिः। कार्यवर्गापेक्षया भगवन्महिम्नो विपुलतरत्वं क्रीडनकैरित्यनेन फलितम्। ननु प्रयोजकव्यापारो हि लीला; अतो [1]भङ्गस्य लीलात्वे युक्तेऽपि कथं प्रयोज्यव्यापारभूतयोर्जन्मस्थित्योर्लीलात्वम्? उच्यते—"बहु स्यां प्रजायेय" इति हि श्रुतिः। अतः प्रयोजकव्यापारवत् प्रयोज्यव्यापारस्य च लीलात्व-

१. "भञ्जो आमर्दने" इत्यस्मात् घञि रूपमिति भावः। तथा च प्रयोगः—
"कण्टकानां खलानां च द्विविधैव प्रतिक्रिया।
उपानन्मुखभङ्गो वा दूरतो वा विसर्जनम्॥" इति।

कथनेनोपादानत्वं फलितम्; लीलाशब्देन निमित्तत्वं च। भङ्गादीत्यन्तेन प्राथमाध्यायार्थः संक्षिप्तः। अवाप्तसमस्तकामस्य व्यापारानुपपत्तिं परिहरता लीलाशब्देन विरोधपरिहारपरद्वितीयलक्षणार्थः सूचितः। एवं पूर्वद्विकोक्तं कारणत्वरूपं परत्वं संक्षिप्तम्। तस्यैव समाश्रयणीयताप्रतिपत्त्यर्थमुत्तरद्विकोक्तमभिगम्यत्वमोक्षप्रदत्वलक्षणं सौलभ्यं संक्षिप्यते—**विनतेत्यादिपदेन**। केवलं प्रकृष्टत्वं केवलं सौलभ्यं च कनकाचललोष्टशकलयोरिव न समाश्रयणीयत्वाय कल्पत इति तदुभयव्यावृत्त्यर्थमिदं पदद्वयम्। विशेषेण नता विनताः प्रह्वीभूताः; न्यासोपासनात्मकाशेषविद्याविशेषनिष्ठा विवक्षिताः। वैविध्यं च "तदुपर्यपि बादरायणः" "ऊर्ध्वरेतःसु च" इत्यादिना वक्ष्यमाणदेवत्वमनुष्यत्ववर्णाश्रमादिभेदेन जन्मवृत्तगुणैश्चाभिप्रेतम्। भगवज्ज्ञानेन लब्धसत्ताकत्वं भूतशब्दार्थः। "अस्ति ब्रह्मेति चेद्वेद, सन्तमेनं ततो विदुरिति" इति हि श्रुतिः। लब्धस्वरूपाणां च "तेषामेवानुकम्पार्थमहमज्ञानजं तमः। नाशयाम्यात्मभावस्थः" "ददामि बुद्धियोगं तम्" "अहं स्मरामि मद्भक्तम्" इत्याद्युक्तप्रकारेण साक्षात्कारविरोधिनिवर्तनादिकं हि भगवत एव भर इति न स्वरूपप्रच्युतिसंभवः। भुतसंबन्धी व्रातो भूतव्रातः। संश्रितसंबन्धिनोऽपि तत एव कारणाद्भगवतो रक्ष्या इत्यभिप्रायः। यथा—

"आस्फोटयन्ति पितरः प्रनृत्यन्ति पितामहाः।
वैष्णवो नः कुले जातः स नः संतारयिष्यति॥" इति,
"पशुर्मनुष्यः पक्षी वा ये च वैष्णवसंश्रयाः।
तेनैव ते प्रयास्यन्ति तद्विष्णोः परमं पदम्॥" इति च।

ननु षष्ठ्यन्तनिर्दिष्टानतिरिक्तविषयः समुदायशब्दः, यथा—ब्राह्मणसमाज इति। नैवम्, राजपरिषदित्यादिष्वतिरिक्तस्यापि दर्शनात्; समासान्तर्गतायाः षष्ठ्याः संबन्धमात्रविषयत्वात्; षष्ठ्यन्तनिर्दिष्टानतिरिक्तत्वनियमस्यानुशासनाभावाच्च। समुदायशब्दे श्रुते समुदायिनः क इत्यपेक्षायां संनिहितशब्दवाच्यनिष्ठः समुदायः शीघ्रं प्रतीयत इति ब्राह्मणसमुदाय इत्यादिष्वनतिरेकप्रतीतिः। राजपरिषदित्यादिष्वतिरिक्तस्यापि दर्शनात्तत्तत्समुदायग्राहकप्रमाणानुरोधेनार्थवर्णनं युक्तमिति यथोक्त एवार्थः। एवं च सति व्रातशब्दप्रयोगस्यार्थवत्त्वं स्यात्। इष्टप्रापणपर्यन्तानिष्टनिवारणलक्षणा रक्षा; तस्याम् एकदीक्षः प्रधानदीक्षः। दीक्षा संकल्पः। स्वसत्ताया अपि संश्रितरक्षासंकल्प-

निर्वर्तनस्यात्यन्ताभिमतत्वं प्राधान्यम् "अप्यहं जीवितं जह्याम्" इति ह्युक्तम् ; "काम-मात्मानं भार्यां पुत्रं वोपरुन्ध्यान्न त्वेव दासकर्मकरम्" इति चापस्तम्बः। ईदृशीयं स्मृतिर्यदाज्ञा तस्यापि तथानुष्ठानस्याभिमततरत्वम् "अप्यहं जीवितं जह्याम्" इत्यनेना-वगम्यते। दीक्षाप्राधान्येन रक्षाप्राधान्यं फलितम्। दीक्षाशब्देनाश्रितसंरक्षणस्य स्वप्र-योजनत्वं दर्शितम्; व्रतभ्रंशसमाप्त्योरनर्थाभ्युदयफलत्वं हि व्रतिन एव। संश्रितरक्षणं च तद्व्रतम्, यथा "ददाम्येतद्व्रतं मम" इति। विनतरक्षाशब्दाभ्यां तृतीयचतुर्थाध्यायार्थौ संक्षिप्तौ। एवं जगत्कारणत्वमोक्षप्रदत्वे कथिते ; एते हि राज्ञश्छत्रचामरवत् ब्रह्मणोऽसाधा-रणं चिह्नम्। परत्वसौलभ्ये च संश्रयणीयतानिमित्ततयावगते; यथा "य एनं विदुर-मृतास्ते भवन्ति" इत्युपक्रम्य "सं बाहुभ्यां नमति सं पतत्रैर्द्यावापृथिवी जनयन् देव एकः" इति; "सर्वलोकमहेश्वरम्" "सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति" इति च। प्रमेयशरीरं साधीयो यदि प्रमाणमुपलभामह इत्यपेक्षायां द्विकद्वयशेषभूत-चतुःसूत्र्यर्थं वदन् प्रमेयानुरूपं प्रमाणं दर्शयति—**श्रुतिशिरसि विदीप्ते इति**। श्रूयते नित्यमिति श्रुतिः। अनेनापौरुषेयत्वान्निर्दोषत्वं विवक्षितम्। अत एव पूर्वमीमांसान्या-यानां प्रामाण्याद्युपयोगिनामत्रोपजीव्यत्वं सूचितम्। शिरःशब्देनानन्यपरत्वं विवक्षितम्; परतत्त्वप्रधाना मन्त्रब्राह्मणभागा ह्युपनिषदः। **विदीप्ते**; पूर्वभागेऽप्यग्नीन्द्रादिरूपतया ब्रह्मण एव प्रतिपाद्यत्वं "तदेवाग्निस्तद्वायुः" इत्यादिनोपनिषद्वाक्येनैव ज्ञायत इति विशेषेण दीप्तं विदीप्तम्; यद्वा क्षुद्रसुखसाधनभूतदुःखात्मकप्रवृत्तिनिवृत्तिरूपं प्रयोजनं पूर्वभागे दीप्तम्; ब्रह्म तु स्वयं निरतिशयानन्दतया परमपुरुषार्थभूतमुपरितनभागे विशेषेण दीप्त-मिति भावः। अनेन समन्वयाधिकरणार्थः सूचितः। तत्पूर्वाधिकरणत्रयार्थश्चात्र द्योतितो भवति; व्युत्पत्तिलक्षणसौष्ठवाभावे श्रुतिशिरोवेद्यत्वायोगात्, श्रुतिशिरःशब्दस्य प्रमा-णान्तरव्यावर्तकत्वाच्च। ब्रह्मणीति सामान्यपदमौपनिषदानां सद्ब्रह्मात्मादिसामान्यशब्दानां प्रदर्शनार्थम्। श्रीनिवास इति विशेषपदं नारायणादिविशेषशब्दानां प्रदर्शनार्थम्। "पशुना यजेत" "छागस्य वपाया मेदसः" इत्यत्र "छागो वा मन्त्रवर्णात्" इति सूत्रोक्तन्यायेन पशुशब्दस्य छागपर्यवसायित्वनिर्णयात् सामान्यवाचिपदानां विशेषवाचिपदे सति तत्पर्यवसायित्वात् सद्ब्रह्मात्मादिसामान्यशब्दानां नारायण एव विशेषे पर्यवसानं सूचितम्। श्रीनिवासशब्दस्यावयवशक्त्या नित्यविभूतिमत्त्वं सूचितम्। रूढि-शक्त्या त्रिमूर्तिसाम्यं तदैक्यं ब्रह्मणस्तदुत्तीर्णत्वं च निषिद्धम्। ईश्वर एव ब्रह्म, स त्रिमूर्त्य-

तिरिक्तः सदाशिवः, ब्रह्मादयस्त्रयोऽप्यनीश्वरा इति पक्षश्च व्युदस्तः । **परस्मिन्निति** [1]"परमतः सेतून्मान" इत्यधिकरणार्थसूचनम् । तेनोपेयान्तरव्यावृत्तिः, "ब्रह्मविदाप्नोति परम्" इत्यत्र प्राप्यस्य परशब्देनाभिधानात्; यद्वा, कारणत्वशङ्कितदोषव्युदासाय "न स्थानतोऽपि" इत्यधिकरणसिद्धं शोधकवाक्योक्तमुभयलिङ्गतया वैलक्षण्यं सूचितम् । अथोपायस्वरूपं वदति—**शेमुषीति** । अयं सामान्यशब्दः; **भक्तिरूपेति** विशेषशब्दः । अत्रापि "छागो वा मन्त्रवर्णात्" इति न्यायोऽभिप्रेतः । शेमुषीशब्दोपादानेन ज्ञानकर्मसमुच्चयव्यावृत्तिः । भक्तिरूपेति वाक्यार्थज्ञानव्यावृत्तिः । "शुद्धभावं गतो भक्त्या शास्त्राद्वेद्मि जनार्दनम्" "भक्त्या त्वनन्यया" "ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च" इत्युक्तप्रकारेण ज्ञानदर्शनप्राप्तिसाधनभूता भक्तिरप्यत्र विवक्षिता, अविशेषेण भक्तिरूपेत्युक्तत्वात् । "अहमस्म्यपराधानामालयः" इत्याद्युक्तप्रकारेण स्वात्मानमनुसंधायाह—**ममेति** । **भवत्विति** भक्तेरेव स्वादुतमतया प्रार्थनीयता सूचिता । यद्वा, न हि भक्तिः सर्वेभ्योपि स्वदत इत्यत्राह—ममेति । मम प्रतिबन्धकपापरहितस्य; शान्तपित्तस्य हि क्षीरे स्वादुतमताबुद्धिरिति भावः । रक्षैकदीक्षे परस्मिन्नित्यन्तैः सप्तम्यन्तैः पदैरुपेयभूत एव सिद्धोपाय उक्तः; भक्तिरूपेति साध्योपायः ।

अत्र श्लोके शास्त्रप्रतिपाद्यैकदेशभूतः परपक्षप्रतिक्षेपश्चार्थात्सूचितो भवति । जन्मस्थेमभङ्गादिशब्देन युगपत्सर्गादिकमनभ्युपगच्छन्तो भाट्टप्राभाकरा व्यावर्तिताः । लीलाशब्देन साक्षिमात्रेश्वरवादिहैरण्यगर्भव्युदासः । विनतेत्यादिपदेन जीवानां परस्परं ब्रह्मणा चाभेदमभ्युपयन्तो ब्रह्माज्ञानवादिनोऽपास्ताः । श्रुतिशिरसीत्यनेन वेदबाह्यचार्वाकबौद्धार्हतनिरासः । तेनैव पदेनानुमानिकेश्वरवादिनो व्युदस्ताः । ब्रह्मणीत्यनेनाब्रह्मात्मकप्रधानपरमाणुकारणवादिसांख्यवैशेषिकादिव्युदासः । श्रीनिवासशब्देन पाशुपतादिव्युदासः । अनेनैवेश्वरोत्तीर्णब्रह्मवादिनो भेदाभेदवादिनो निरस्ताः । शेमुषीशब्देन ज्ञानकर्मसमुच्चयोपायवादिव्युदासः । भक्तिरूपेति वाक्यार्थज्ञानमात्रोपायवादिव्युदास इत्येवमनुसंधेयम् ।

---

१. यद्यपि तत्र सूत्रे परशब्दोऽन्यवाची, अत्र तु उत्कृष्टवाचीति वैषम्यम्, तथापि तत्र प्राप्यान्तरनिषेधेन ब्रह्मण एव प्राप्यत्वस्य स्थापनात् प्राप्यविशेषवाचिना परस्मिन्नित्यनेन तदधिकरणार्थसूचनमिति भावः । यद्वेत्यादिव्याख्यान्तरे तु उभयत्र परशब्दस्योत्कृष्टवाचित्वम्; परं तु परस्मिन्नित्यनेन नोभयलिङ्गस्य साक्षात्प्रतिपादनं, किंतु अर्थात् सिद्धिरिति भेदः ।

2

श्रीमते रामानुजाय नमः ।

श्रीरङ्गरामानुजमुनिविरचिता श्रुतप्रकाशिकाव्याख्या

# भावप्रकाशिका ।

---

येनोपनिषदां भाष्यं रामानुजमतानुगम् ।
रम्यं कृतं प्रपद्ये तं रङ्गरामानुजं मुनिम् ॥

---

अतसीगुच्छसच्छायमञ्चितोरःस्थलं श्रिया ।
अञ्जनाचलशृङ्गारमञ्जलिर्मम गाहताम् ॥

प्रारिप्सितस्य ग्रन्थस्याविघ्नेन परिसमाप्त्यर्थं प्रचयगमनार्थं च स्वाचार्यस्य वरदगुरोरिष्टदेवतारूपं हस्तिगिरीश्वरं भगवन्तं वरदप्रणतार्तिहरनामभ्यां प्रख्यापितेष्टप्राप्त्यनिष्टपरिहारलक्षणपुरुषार्थदातृभावमत एव शरण्यं शरणमुपगच्छति--**वरदं द्विरदाद्रीशमिति** । द्विरदाद्रीशमित्यनेन सौलभ्यमुक्तम् ।

"दिङ्नागैरर्चितस्तत्र पुरा विष्णुः सनातनः ।
ततो हस्तिगिरिर्नाम ख्यातिरासीन्महागिरेः ॥"

इति पुराणवचनेन दिङ्नागानां तिरश्चामप्यर्चनीयोऽभूत्तत्रेति प्रतीतेः । श्रीनिधिं करुणानिधिमिति पदद्वयेन शरण्यत्वोपयुक्ते सामर्थ्यकारुणिकत्वे अभिहिते । श्रियः पत्युर्हि देयद्रव्येषु न दुर्लभं किंचिद्वस्त्वस्तीति नेष्टप्रापणे देयद्रव्याभावकृतमसामर्थ्यमस्ति । "अप्रमेयं हि तत्तेजो यस्य सा जनकात्मजा" इति श्रीनिधेरप्रमेयतेजोनिधित्वेनानिष्टनिरसनेऽपि तेजोविरहलक्षणमसामर्थ्यं न संभवति । हरिमित्यनेनाश्रितानां दुरितं हरतीत्यर्थसिद्धिः । **अन्तर्ज्वरम्** ; "बिभेत्यल्पश्रुताद्वेदो मामयं प्रतरिष्यति", इति न्यायेन विपरीतार्थप्रतिपादनसमुद्भूतं व्याकुलत्वम् । **अशीशमत्** ; शमयति स्मेत्यर्थः । शमेर्ण्यन्तात्कर्तरि लुङि चङि रूपम् । यथा योगी स्वशक्तिवैभवेन परेषां ज्वरं निवर्तयति, एवमयमपि स्वशक्तिवैभवेन श्रुत्यादीनामन्तर्ज्वरं शमयति स्मेति सूच्यते । **प्रपद्ये प्रणवाकारमिति** ; प्रणवाकारं प्रणवसदृशं रङ्गमिव च स्थितमित्यर्थः । पूर्वार्धप्रतिपादितं भाष्यस्य रङ्गप्रणवाभ्यां सादृश्यमुत्तरार्धेनोपपादयति--**परस्य ब्रह्मण इति** ।

" अकारार्थो विष्णुर्जगदुदयरक्षाप्रलयकृ-
न्मकारार्थो जीवस्तदुपकरणं वैष्णवमिदम् ।
उकारोऽनन्यार्हं नियमयति संबन्धमनयो-
स्त्रयीसारस्त्र्यात्मा प्रणव इममर्थं समदिशत् ॥ "

इत्युक्तरीत्या प्रणवस्य शेषित्वप्रकाशकत्वं भाष्यस्य च परमशेषित्वप्रकाशकत्वं स्फुटमेव । श्रीरङ्गस्यापि परब्रह्मणः शेषशायित्वप्रकाशकत्वेन शेषित्वप्रकाशकत्वम् । यद्यपि श्रीरङ्गस्य शेषशायित्वलक्षणशेषित्वप्रकाशकत्वम्, भाष्यप्रणवयोस्तु स्वामित्वलक्षणशेषित्वप्रकाशकत्वमिति नैकः साधारणो धर्मः ; तथापि " सकलकलं पुरमेतज्जातं संप्रति सुधांशुबिम्बमिव " इत्यत्रेव श्लेषभित्तिकाभेदाध्यवसायमूलया भेदे अभेद इत्येवंरूपया अतिशयोक्त्यैव साधारणधर्मैक्यलाभः । **श्रुत्यन्तेष्विति ;** अत्र श्रुत्यन्तहृदम्बुजरङ्गधामतुल्यतया भगवदभिव्यक्तिस्थानत्वं भाष्यस्य व्यज्यते । तथा रङ्गधाम्नि यो भगवत्साक्षात्कारः, स एव । " परात्परं पुरिशयं पुरुषमीक्षते " इति श्रुतिप्रतिपन्नो मुक्तिकालीनश्रवणमननिदिध्यासनफलभूत इति क्रमवशात् व्यज्यते । **प्रमाणं च प्रमेयं चेति ;** प्रमाणं वेदः, प्रमेयं तत्प्रतिपाद्योऽर्थः । " मन्त्रे तद्देवतायां च " " यस्य देवे परा भक्तिः " इत्यादिप्रमाणानुसारेण भाष्यार्थावगमस्य भाष्यतत्कर्तृतत्प्रतिपाद्यभगवत्प्रसादलभ्यत्वं मन्यमानः—भाष्यार्थाधिगमस्य न तत्प्रसादलभ्यत्वम्, कृत्स्नभाष्यार्थवेदितुर्भाष्यकारस्य तत्प्रतिपाद्यस्य भगवतो वा ' अस्य वाक्यस्यायमर्थः ' इत्येवंरूपाद्वचनाद्भाष्यार्थबोधो भविष्यति—इत्याशङ्कां परिहरति—**भाष्यं चेदित्यादिना** । ननु व्यवृणोदित्यत्र "हेतुहेतुमतोर्लिङ्" इति लिङो भविष्यद्विषयत्वात् लिङ् माभून्नाम ; मा च भूत् " लिङ्निमित्ते लृङ् क्रियातिपत्तौ " इति लृङ्, तस्यापि भविष्यद्विषयकत्वात् ; " भूते च " इत्यनेन भूते काले लिङ्निमित्ते क्रियातिपत्तौ विधीयमानो लृङ् कस्मान्नभवतीति चेत् ; अत्राहुः—सत्या अपि क्रियातिपत्तेरविवक्षितत्वाद्वा सतोऽपि हेतुहेतुमद्भावस्याविवक्षितत्वाद्वा लृङ् न भवति ; सतोऽप्यविवक्षा दृश्यते—अनुदरा कन्येति । केचित्तु गाम्भीर्यादनवस्थितिरिति गाम्भीर्यहेतुकत्वोक्तेः अनवस्थाने विवरणं न हेतुरिति वर्णयन्ति । अष्टादशविद्यास्थानेषु शारीरकस्यैव शास्त्रस्य भगवतो भाष्यकारस्य व्याचिख्यासायां निमित्तमाह—**सर्वेषां पुरुषाणामित्यादिना** । स्वत एव भगवदभिप्रायसाक्षात्कारसमर्थानां वेदस्यामुष्मिकपुरुषार्थप्रतिपत्त्यर्थमनादरणीयत्वादाह—**प्रमाणा-**

**धीनप्रमेयनिश्चयानामिति** । **उपादित्सितेति ;** उपादित्सितजिहासितालौकिकेष्टानिष्टतत्साधनानामित्यर्थः । अलौकिकपुरुषार्थतत्साधनप्रत्यायकत्वाविशेषेण सांख्याद्यागमवैलक्षण्ये वेदस्य निमित्तमाह—**तत्राप्यपुरुषेति** । पूर्वभागे कुतो न व्याचिख्यासेति शङ्कामपाकरोति—**तत्र चेत्यादिना** । पूर्वभागे अर्वाचीनफलतत्साधनपरेऽवगत इति योजना । असंदिग्धतयावगते सतीत्यर्थः । पूर्वभागेऽनुपप्लुत इति यावत् । अत्रार्वाचीनेति विशेषणेन वेदान्तभागप्रतिपाद्यार्थविप्लवे महाफलहानिवत् तदंशे तन्नास्तीत्यपि सूचितम् । तदुज्जिजीवयिषया व्याचिख्यासितमित्यन्वयः । निष्कण्टकीकृत्य कृतार्थयितुं भवभयाभितप्तेत्यन्वयः । तेन उज्जिजीवयिषया कृतार्थयितुमित्यनयोर्न पौनरुक्त्यमिति वदन्ति । केचित्तु उज्जिजीवयिषायाः सदसद्विवेचनचतुरपूर्वाचार्यविरचितमित्यनेनान्वय इति उज्जिजीवयिषां पूर्वाचार्यगतामाहुः । अपरे तु उज्जीवनकृतार्थीकरणयोः द्वारद्वारिभावेन भेदमाहुः । **कुपथप्रवृत्तिनीति ;** कुत्सितः पथः कुपथः ; पथशब्देन समासो न पथिन्शब्देन । तेन "कापथ्यक्षयोः" इति न भवति । पठितश्च त्रिकाण्डशेषे "पथः पन्थाश्च मार्गः स्यात्" इति पथिन्शब्दसमानार्थः पथशब्दोऽकारान्तः । शंकरादिकृतानां शारीरकव्याख्यानानामनादरणीयत्वे हेतुमाह—**परमर्षिप्रणीतानीति** । यत्तदोर्नित्यसंबन्धात् अत्र यानीति शेषः । यानि परमर्षिप्रणीतानि शास्त्राणि तेषां महर्षिप्रणीतानि व्याख्यानानि सन्ति चेदित्यर्थः । व्याख्येयानीति गहनार्थत्वसूचकम् । **सन्त्यपि तान्यनादृत्य व्याख्येयान्तराणी**त्यत्र व्याख्येयान्तरकथनं दृष्टान्तार्थम् ; यथा व्याख्येयान्तराणां शारीरकविरुद्धानामप्रामाणिकत्वं, तथा बोधायनव्याख्यानविरुद्धानां शंकरादिकृतव्याख्यानानामप्रामाणिकत्वमित्यर्थः । यद्वा, तेषां च महर्षिप्रणीतानीत्यत्र चशब्दो भिन्नक्रमः । परमर्षिप्रणीतानि व्याख्येयानि तेषां महर्षिप्रणीतानि व्याख्यानानि च सन्ति चेत्, तान्येव व्याख्येयानि व्याख्यानानि चानुरोद्धव्यानीत्यर्थः । **बाधकानुपलम्भादिति ;** "सर्वत्र प्रसिद्धोपदेशात्" इत्यत्र व्याख्यानान्तरवर्णनं परमतानुसारेण कृतम्[1] । अनन्तरमेव वृत्तिकारोक्तार्थवर्णनात् ; अतो न तद्विरोधः । **पूर्वभागार्थानां शिक्षणीयत्वमिति ;** अरुणाधिकरणादिष्विति भावः । **इष्ट-**

---

१. **परमतसिद्धान्तिमतयोरेकत्र प्रदर्शने रत्नाङ्गारयोरिव तरतमभावः सुस्पष्टो भवेत् । परमतस्य च स्वरूपव्याक्रियैव पराक्रिया । परैस्तु वृत्तिकारविरुद्ध एवार्थः सिद्धान्ततया वर्णित इति भावः ।**

**देवतोपासनरूपं मङ्गलमिति ;** उपासनाशीरूपं मङ्गलमित्यर्थः । अत एव वक्ष्यति 'वस्तुनिर्देशो भवत्वित्याशीर्वादश्च कृतो भवतः' इति । केचित्तु भक्तिप्रार्थनमपि भक्तिरूपमिति मन्यन्ते । यद्वा, उपासनस्य स्वतोऽनुकूलत्वमवगम्य तत्प्रार्थयमानेन तस्याप्यनुष्ठितत्वसंभवादेवमुक्तमिति द्रष्टव्यम् । **मङ्गलाचारयुक्तानामिति ;** न चेदं वचनं जपहोमादितुल्यतया आदर्शदर्शनादिमङ्गलाचारस्य विनिपातनिवृत्तिहेतुत्वावगमकं, न त्वारम्भकाले मङ्गलकर्तव्यतायां प्रमाणम् ; अत एव मङ्गलानुष्ठाने आचारमेव प्रमाणयन्तीति वाच्यम्—समाप्तिप्रतिबन्धकस्यापि विनिपातशब्दार्थत्वेन मङ्गलाचरणस्य विघ्ननिवारकत्वावगमकत्वेन प्रामाण्यसंभवात् । **यथा चोदनासूत्र इति ;** "चोदनालक्षणोऽर्थो धर्मः" इति सूत्रे यश्चोदनालक्षणः स धर्म इति धर्मस्वरूपे कथिते, यथा चोदनैव प्रमाणमित्यर्थादुक्तं भवति तथेत्यर्थः । **प्रह्वीभावावगमात् प्रणतिरपि फलितेति ;** प्रणतिरप्यनुष्ठिता भवतीत्यर्थः । ननु विनतेत्युक्तिमात्रेण कथं प्रणतिरप्यनुष्ठितेत्यवसीयते ? तथा सति 'उपासकानां भगवान्मोक्षप्रदः' इत्युक्तिमात्रेण एतद्वाक्यप्रयोक्तॄणां सर्वेषामप्यनुष्ठितोपायत्वप्रसङ्गे मोक्षप्रसङ्ग इति चेत्—न ; अतिसुकरस्य प्रणामस्य रक्षादीक्षारूपेष्टसाधनत्वमवगम्य तदन्येषामप्युपदिशता भाष्यकृता साप्यनुष्ठितेत्युक्तेर्विरोधाभावात् । **णमु प्रह्वत्वे इति हि धातुरिति ;** ननु भक्तिविनतशब्दयोः प्रह्वीभावावगमकत्वमुपन्यस्य भक्तिशब्दस्य प्रह्वीभावागमकत्वोपपादकानुपन्यासेन नमेस्तदुपन्यासोऽसंगतः । न च भक्तिशब्दे प्रह्वीभावावगमकत्वस्योपपादकनिरपेक्षतया तदनुपन्यास इति वक्तुं शक्यम् ; प्रत्युत भक्तिशब्दस्यैव प्रह्वीभावार्थकत्वस्याप्रसिद्धत्वेन तदुपपादकसापेक्षतया तदुपन्यास एव हि युक्त इति चेत्—मैवम् ; भक्तिविनतिशब्दयोश्चैकार्थ्यं वक्तव्यम् ; इतरथा रक्षाहेतुत्वं विनतेरुपन्यस्य तदतिरिक्ताया भक्तेः प्रार्थने किं तेन संगतं स्यात् ? अतो भक्तिविनतिशब्दयोरैकार्थ्यात्प्रक्रमस्थविनतशब्दस्य "णमु प्रह्वत्वे" इति स्मृत्यनुसारेणार्थे कथिते भक्तिशब्दस्याप्यर्थः कथितः । यथा—

"विदितः स हि धर्मज्ञः शरणागतवत्सलः ।
तेन मैत्री भवतु ते यदि जीवितुमिच्छसि ॥"

इत्यत्र मैत्र्याः शरणागतिरूपत्वसिद्धिरिति मत्वा 'णमु प्रह्वत्वे इति हि धातुः' इत्युक्तम् । न च नमेः प्रह्वीभावार्थकत्वे विनतशब्दस्य न्यासोपासनाख्यविद्याविशेषनिष्ठ-

परत्वं न स्यादिति वाच्यम् , उपसर्गबलेन ज्ञानविशेषविशिष्टप्रह्वीभाववाचकत्वसंभवेन विद्याविशेषवाचित्वसंभवात् । **विषयविषयिरूपेणेति ;** विषयो ब्रह्म, उपासनफले विषयिणी । न चोपासनस्य तृतीयाध्यायप्रतिपाद्यस्य विषयित्वेऽपि कथं फलस्य चतुर्थाध्याय-प्रतिपाद्यस्य विषयित्वमिति वाच्यम् ; फलभूताया मुक्तेरपि भगवदनुभवरूपतया विषयित्वेन क्रोडीकारसंभवेनादोषात् । **भवतीति भुवनमिति ;** यद्यपि भुवनशब्दः "भूसूधू-भ्रस्जिभ्यश्छन्दसि" इति छन्दसि निपातितः, तथापि "वा भुवनम्" इत्यत्र "बहुल-स्मरणात् भाषाविषयत्वमप्यस्ति" इति वैयाकरणोक्तेरदोषः । **रूढिशक्त्या कुलालदिव्या-वृत्तिरिति ;** यद्यपि योगोऽतिप्रसक्तः, तथापि रूढ्या तन्निरास इति भावः । यद्यपि रूढ्यन-भ्युपगमेऽपि अखिलशब्देनैव कुलालादिव्यावृत्तिसिद्धिः , तस्याखिलकार्यहेतुत्वाभावात् ; किंच लीलापदेनापि व्यावृत्तिसिद्धिः, प्रयोज्यरूपघटगतजन्मादिव्यापारस्य कुलाललीलात्वा-भावात् ; तथापि इतरपदनिरपेक्षस्यापि भुवनशब्दस्य कुलालादिव्यावर्तकत्व-सिद्धिरित्यभिप्रेत्य तथोक्तमिति द्रष्टव्यम् । **अण्डजातानीति ;** अण्डान्तर्वर्तीनि भुवनानि विवक्षितानीत्यर्थः ; न त्वण्डसमूहा इति , भुवनशब्दस्याण्डवाचित्वाप्रसिद्धेः । किंच ब्रह्मणोऽण्डोत्पादकत्वगन्धाभावेन तद्व्यावृत्त्यर्थं साकल्यस्याप्यविवक्षणीयत्वापातात् । केचित्तु अण्डजातानि अण्डसमूहा अपीत्यर्थः , तेषामपि विपुलतरकार्यविशेषरूपत्वेन भुवनवा-च्यत्वसंभवात् । न चैवं ब्रह्मणोऽण्डानुत्पादकत्वेन तत एव तद्व्यावृत्तिरिति वाच्यम् , अखिलपदाभावे भूलोकादिलक्षणयत्किंचिद्भुवनजनकत्वस्य चतुर्मुखादावपि संभवेन तद्व्यावृत्त्यर्थत्वेनाखिलपदस्य सप्रयोजनत्वात् । **नञो निषेधवाचित्वेऽपि निषेध्यवशात् शुभत्वाशुभत्वे इति ;** ननु यद्यत्र भुवनवैकल्यस्य निषेध्यस्याशुभत्वात् तन्निषेधस्य शुभत्वं, तर्हि "अखिलहेयप्रत्यनीक" इत्यत्र अखिलशब्दस्य भगवच्छरणागतिवाक्योपक्रमगतस्य हेयवैकल्यनिषेधवाचिनः शुभत्वं न स्यात् , निषेध्यस्य हेयवैकल्यस्य शुभत्वादिति चेत्—न ; तत्रापि "अखिलहेयप्रत्यनीक" इत्यत्र निवर्तकवाचिप्रत्यनीकशब्देन निवृत्तिक्रियाव्यापारा-विषयत्वं हेयगतं निषिध्यते ; हेयगतं च निवृत्तिक्रियाव्यापाराविषयत्वमशुभमेवेति तन्निषेध-स्यापि शुभत्वात् । **चिदचिद्भेदोऽप्यभिप्रेत इति ;** अखिलशब्दस्य सर्वशब्दपर्यायतया सर्वत्वस्य बहुष्वेव वृत्तेः "पृथक्त्वनिवेशित्वात् संख्यया कर्मभेदः स्यात्" इति न्यायेन बहुत्वस्य भेदगर्भतया भुवनानां भेदः सिद्धो भवति । न च सर्वशब्दस्य बहुत्वसापेक्षत्वम-संप्रतिपन्नमिति वाच्यम् ; "विश्वजित्सर्वपृष्ठः" इत्यत्र सर्वपृष्ठशब्दस्य चोदकप्राप्त-

ज्यौतिष्टोमिकपृष्ठानुवादित्वं न संभवति, ज्योतिष्टोमे द्वयोरेव पृष्ठयोः सत्वेन तत्र बहुत्वसापेक्षस्य सर्वशब्दस्याप्रवृत्तेः ; अपितु षाडहिकानां बृहद्रथन्तरवैरूपवैराजशाक्वररैवतानां विधिरिति सप्तमे स्थितत्वात्। **स्थेमा स्थितिरिति** ; न स्थिरत्वमित्यर्थः ; अयमाशयः— यद्यपि स्थिरशब्दादिमनिच् न संभवति, पृथ्वादिष्वस्य पाठाभावात् ; अत एवोक्तं वृत्तौ "प्रियस्थिरेति सूत्रे प्रियशब्दस्य पृथ्वाद्यपाठादिमनिच् नोदाह्रियते" इति ; तथापि तिष्ठतेरौणादिक इमनिच्प्रत्ययो बहुलवचनात् जनिमवेमादिवद् द्रष्टव्यः । प्रसिद्धश्चायं शब्दः शिष्टप्रयोगेषु "द्राधीयांसः संहताः स्थेमभाजः" इत्यादिषु। "निखिलजगदुदयविभवविलय" इत्यत्र विभवपदेन स्थितिरुच्यते। ननु मोक्षस्य पृथङ्निर्देशं सिद्धवत्कृत्य खलु तस्य भङ्गादिशब्दयोरनन्तर्भाव उक्तः ; स न युक्तः, पृथक्कीर्तनस्यास्मिन् श्लोके अदर्शनात् , रक्षापदस्य स्वर्गादिफलप्रदत्वप्रतिपादकत्वादित्याशङ्क्य रक्षापदस्य स्वर्गादिफलप्रदत्वप्रतिपाद नानौचित्यं दर्शयति—**विनतेत्यादिपदेनेति** । **अध्यासपरिणामपक्षयोरिति** ; अध्यासपक्षः शांकरः, परिणामपक्षो यादवभास्करीय इति द्रष्टव्यम्। **तस्यार्थत्वाभावेनेति** ; अभेदे अन्तःप्रवेशासिद्धेः स्वमत एवान्तःप्रवेशश्रुतिस्वारस्यसंभवात् स्वमते अध्यासपरिणामपक्षवैलक्षण्यसिद्ध्यर्थमन्तःप्रवेशनियमनसंभवस्य पृथग्वक्तव्यत्वादित्यर्थः । **विस्तरेणोक्तस्येति** ;" जगदुद्भवस्थितिसंहारान्तःप्रवेशनियमनादिलीलम् " इति ग्रन्थकृतैवान्यत्र विस्तरेणोक्तस्यादिपदेन संक्षेपेणोक्तौ विवक्षितत्वोपपत्तेरित्यर्थः । **प्रयोजकव्यापारो हि लीलेति** ; ननु स्वतन्त्रकर्तृप्रयोजकराजव्यापाररूपप्रेषणादेः लीलात्वादर्शनात् बाललीलाप्रयोजकतत्पितृव्यापारभूतप्रार्थनादेर्लीलात्वाभावाच्च प्रत्युत प्रयोज्यभूतबालव्यापारस्यैव लीलात्वदर्शनाच्च कथमेतदिति चेत्—न ; तद्व्यापारस्तस्य लीला, नान्यव्यापारः इत्यत्र तात्पर्यात् । न चैवं नटविटविदूषकादिव्यापारस्य परिहासादेः राजलीलात्वं न स्यादिति वाच्यम् ; इष्टापत्तेः ; तत्र लीलारसनिष्पादकत्वेन लीलापदस्य औपचारिकत्वात् । न च "लोकवत्तु लीलाकैवल्यम्" इति सूत्रे भगवता भाष्यकृता जगज्जन्मस्थितिध्वंसादेर्लीलैव प्रयोजनमिति जन्मादेर्लीलाप्रयोजकत्वोक्त्या लीलात्वाभावस्य सूचितत्वात् इह जन्मादिषु प्रयुज्यमानो लीलाशब्द औपचारिक एव स्यादिति वाच्यम् ; परिपूर्णानन्यप्रेर्यस्वच्छन्दपुरुषकार्यचेष्टाविशेषे लीलाशब्दस्य प्रचुरप्रयोगसत्त्वेन जन्मस्थित्यादेरपि मुख्यलीलात्वस्य सिद्धान्त्यभिमतत्वात् ; "लोकवत्तु लीलाकैवल्यम्" इति सूत्रभाष्य-

स्यापि जगज्जन्मादेर्लीलात्वपरतया व्याख्यास्यमानत्वाच्च । **भङ्गस्य लीलात्वे युक्तेऽपीति** । न च भङ्गस्य नाशरूपत्वात् नाशस्य च जन्मस्थित्यादिवत् प्रयोज्यगतत्वाविशेषात् कथमर्धवैशसेन भङ्गस्य लीलात्वाभ्युपगम इति वाच्यम्; घटो विनश्यतीतिवत् घटो भनक्तीति प्रयोगाभावेन तयोर्भिन्नत्वात् । अत एव घटो जायते घटस्तिष्ठतीतिवत् घटो भनक्तीति प्रयोगाभावः । घटकर्तृकव्यापारौ जन्मस्थिती, भङ्गस्तु न तद्व्यापार इति विवेकः । **लीलात्वकथनेनोपादानत्वं फलितमिति**; जगज्जन्मस्थित्योः परमात्मलीलात्वकथनेन परमात्मसमवेतव्यापारत्वोक्त्या परमात्मन एव भाव्यवस्थावत्त्वेन उपादानत्वलाभादिति भावः । ननु भूतशब्दस्य लब्धसत्ताकार्थकत्वे लब्धसत्ताकानां तेषां परमात्मसाध्या रक्षा कीदृशीत्याशङ्क्याह—**लब्धस्वरूपाणां चेति** । ननु लब्धस्वरूपाणां स्वरूपाप्रच्युतेर्भगवद्धरत्ववदलब्धस्वरूपाणां स्वरूपलाभरूपरक्षाया अपि भगवद्धरत्वात् कथं लब्धस्वरूपाणां रक्षैकदीक्ष इति पृथक्कृत्योच्यत इति चेत्, आनुकूल्यावस्थायां तद्रक्षाया निमित्तान्तरनैरपेक्ष्येण तत्र विशिष्योक्त्युपपत्तेः । **षष्ठ्याः संबन्धमात्रविषयत्वादिति**; ननु यद्यपि संबन्धवाचिनी षष्ठी, तथापि यस्य विशेषस्याभिव्यञ्जकमस्ति तत्रैव पर्यवस्यति; यथा देवदत्तस्येत्यभेदेन प्रवृत्ता षष्ठी पुत्रः पाणिः कम्बल इति प्रतिसंबन्धिवशेन पितृत्वावयवित्वस्वामित्वरूपविशेषेषु पर्यवस्यति; न हि देवदत्तस्य पुत्र इत्युक्ते देवदत्तस्वामिकमन्यपितृकं पुत्रं प्रतियन्ति । ततश्च भूताभूतव्राते भूतव्रातशब्दस्य सापेक्षमसमर्थमिति न्यायेन अग्नीषोमीये आग्नेयशब्दवदसामर्थ्यादप्रवृत्तिः । अथवा, छत्रिन्यायेन लक्षणा वा समाश्रयणीया स्यात् । राजपरिषदित्यादौ तु परिषत्सेनादिशब्दानां समुदायिविशेषविशिष्टसमुदायवाचिनां नैकान्ततः समुदाय्यपेक्षा; यथा वनघटादिशब्दानां तरुगजादिसमूहवाचिनामन्तर्भावितसमुदायिकतया न समुदाय्यपेक्षा, यथा वा पुत्रीयति जीवतीत्यादीनामन्तर्भावितेषिधारणकर्मकाणां न कर्मापेक्षा । ततश्च परिषदादिशब्देषु स्वाम्याकाङ्क्षामात्रं 'किंस्वामिका परिषत्' इति । ततश्च राजपरिषदित्यत्र राज्ञः स्वामित्वेनान्वयः राजस्वामिका परिषदिति । ततश्च तत्राप्यराज्ञां स्वामित्वमेव वार्यते । न च परिषच्छब्दतुल्य एवायं व्रातशब्दो न समूहादिशब्दवदिति वाच्यम्; तर्हि तथैव वक्तव्यत्वेन संबन्धमात्रस्य षष्ठ्यर्थत्वप्रसाधनवैफल्यादिति चेत्—सत्यम्; समूहशब्दपर्याय एवायं व्रातशब्दः "समूहनिकरव्रात" इति कोशपाठात्; तथापि तस्यानर्थक्यप्रसङ्गात्

विवक्षितविशेषसिद्धिरित्यत्र तात्पर्यात्। इतरथा विनतविविधभूतेत्यनेनैव विवक्षितार्थसिद्धौ व्रातशब्दवैयर्थ्यप्रसङ्गात्। अत एव वक्ष्यति—एवं च व्रातपदप्रयोगस्यार्थवत्त्वं स्यादिति। ब्रह्मजिज्ञासेति सूत्रे संबन्धसामान्यषष्ठीपरिग्रहे ब्रह्मसंबन्धिनामपि जिज्ञास्यत्वं सिध्यतीति सर्वैरपि भाष्यकृद्भिर्व्यवहृतत्वाच्च। अत्र व्रातशब्दस्य "पशुर्मनुष्यः पक्षी वा" इत्यादिप्रमाणानुसारेणानियतवृत्त्युत्सेधजीववाचित्वं केचिन्मन्यन्ते; उक्तं च काशिकायां वृत्तौ "व्रातच्फञोरस्त्रियाम्" इत्यत्र—"व्राता अनियतवृत्तय उत्सेधजीविनः" इति; उत्सेधजीविनः शरीरप्रयासजीविन इत्यर्थः। "काममात्मानम्" इत्यादिस्मृतेर्भगवदाज्ञारूपायाः संसारिचेतनमात्रविषयत्वात् कथमनया स्मृत्या भगवतोऽपि संश्रितरक्षणानुष्ठानस्याभिमतत्वसिद्धिरित्यत आह—**ईदृशीति। परत्वसौलभ्ये च समाश्रयणीयतानिमित्ततयेति**। ननु अखिलेत्यादिप्रथमपादप्रतिपाद्यस्य जगत्कारणत्वस्य परत्वपर्यवसितत्वेऽपि विनतविविधेतिद्वितीयपादप्रतिपाद्यस्य मोक्षप्रदत्वस्य कथं सौलभ्यपर्यवसितत्वम्? न हि पुरुषार्थप्रदत्वमात्रेण सौलभ्यं सिध्यति, तथा सति कल्पकनकाचलादेरपि सौलभ्यप्रसङ्ग इति चेत्—मैवम्; दातृत्वस्यापि सौलभ्यपर्यवसितत्वात्। उक्तं हि अभिगम्यत्वमोक्षप्रदत्वलक्षणं सौलभ्यमिति। वक्ष्यति च ग्रन्थकारः "अन्तस्तद्धर्मोपदेशात्" इत्यत्र—"कारुण्यसौशील्यादीत्यत्र कारुण्यसौशील्यवात्सल्यौदार्याणि सौलभ्योपयुक्तानि" इति। ततश्च नानुपपत्तिः। "य एनं विदुरमृतास्ते भवन्ति" इति मोक्षप्रदत्वलक्षणं सौलभ्यमित्यर्थः। **सं बाहुभ्यां नमतीत्यादि**; पतत्रैः कर्मभिः द्यावापृथिवी संजनयन् परमात्मा स्वाश्रितविषये बाहुभ्यां संनमति सम्यक् प्रह्वीभवति "प्रह्वीभवति नीचे हि परो नैच्यं विलोकयन्" इत्यादिस्मृतेरित्यर्थः। विदीप्त इत्यत्र विशब्दस्य दीप्तिमात्रव्यावर्तकत्वस्य स्वरसतः प्रतीयमानत्वात् पूर्वभागप्रतिपाद्यत्वरूपविशेषणविशिष्टतया दीप्तमित्यस्यार्थस्य स्वरसतोऽप्रतीतेराह—**यद्वा क्षुद्रसुखेति**। केचित्तु द्वितीयपक्षे दीप्तिविदीप्त्योर्भिन्नविषयतया अस्वारस्यं मन्यमानाः प्रथममेव पक्षं रोचयन्ते। ते च तद्वाक्यमेवं योजयन्ति—अग्न्यादिरूपतया पूर्वभागेऽपि ब्रह्मणः प्रतिपाद्यत्वमस्त्येव, "तदेवाग्निस्तद्वायुः" इति उपनिषद्वाक्येन तथैव ज्ञायमानत्वात्। वेदान्तभागे तु विशेषेण दीप्तमिति; अद्वारकतयेत्यर्थः। **व्युत्पत्तिलक्षणसौष्ठवाभाव इति**; व्युत्पत्तिसमर्थनं प्रथमाधिकरणे; लक्षणसौष्ठवसमर्थनं जन्माद्यधिकरणे। **रूढिशक्त्येति**; रूढत्वात् श्रीनिवासे ब्रह्मणीत्यनेन नारायणस्यैव ब्रह्मत्वावि-

ष्करणादिति भावः । **ब्रह्मणस्तदुत्तीर्णत्वं चेति** ; भेदाभेदवादिपक्ष इत्यर्थः । वक्ष्यति हि श्रीनिवासशब्दं प्रस्तुत्य—अनेनैवेश्वरोत्तीर्णब्रह्मवादिनो भेदाभेदवादिनो निरस्ता इति । परस्मिन्नित्यनेन "ब्रह्मविदाप्नोतिपरम्" इति श्रुतिगतपरशब्दार्थसूचनमुखेन "परमतः सेतून्मानसंबन्धभेदव्यपदेशेभ्यः" इत्यधिकरणार्थस्य प्राप्यान्तरव्युदासस्य परशब्दप्रत्यभिज्ञया "न स्थानतोऽपि परस्य" इत्यधिकरणार्थस्य उभयलिङ्गत्वस्य वा स्मरणं संभवतीत्यभिप्रयन्नाह—**परस्मिन्नित्यादि** । वस्तुतोऽर्थद्वयसूचनमपि संभवतीति ध्येयम् । **अविशेषेण भक्तिरूपेत्युक्तत्वादिति** । नच "अत्रापि 'छागो वा मन्त्रवर्णात्' इति न्यायोऽभिप्रेतः" इति पूर्ववाक्येन, "शेमुषी भक्तिरूपेति भक्तिरूपज्ञानस्योपायत्वं प्रागुक्तम् ; कथमिदानीं प्रीतिरूपध्रुवानुस्मृतेरुपायत्वं प्रतिपाद्यत इत्यत्राह—एवंरूपेति ; एवंरूपा साक्षात्कारप्रीतिरूपत्वपर्यन्ता ध्रुवानुस्मृतिरेव भक्तिशब्दवाच्येत्यर्थः" इति लघुसिद्धान्तग्रन्थेन च विरोधः शङ्कनीयः ; एतस्य मतान्तरत्वेनादोषात् । **रक्षैकदीक्षे परस्मिन्नित्यन्तैरिति** ; अत्र रक्षैकदीक्ष इत्यस्मात्परम् 'इति' शब्दोऽध्याहर्तव्यः ; ततश्चेत्थं योजना—परस्मिन्नित्यन्तैः प्रतिपादित उपेयभूत एव रक्षैकदीक्ष इति सिद्धोपाय उक्त इति । ततश्च रक्षैकदीक्ष इति पदोपादानवैयर्थ्यं न चोदनीयमिति द्रष्टव्यम् । **भाट्टप्राभाकरा व्यावर्तिता** इति । भुवनशब्दस्य विपुलतरकार्यविशेषवाचितया तत्सर्गस्य "न कदाचिदनीदृशं जगत्" इति वदद्भिरनभ्युपगतत्वादिति भावः ।

---

**श्रीमते रामानुजाय नमः ।**

श्रीसुदर्शनभट्टारकविरचिता श्रीभाष्यव्याख्या

## श्रुतप्रदीपिका ।

वरदं द्विरदाद्रिशेखरं कमलाया दयितं दयानिधिम् ।
सकलार्थिजनार्थितप्रदं प्रणमामि प्रणतार्तिहारिणम् ॥

---

वेदान्तसूत्रभाष्यार्थमाचार्योपासनाच्छ्रुतम् ।
तद्गिरा दीपिकेवाहं दर्शयिष्ये यथामति ॥

आरिप्सितप्रबन्धस्याविघ्नपरिसमाप्तिप्रचयगमनार्थमिष्टदेवतोपासनलक्षणमङ्गलं श्रुत्या कुर्वन्नार्थं प्रतिपाद्यं संक्षेपतः श्रोतृबुद्धिसमवधानाय दर्शयति—**अखिलेति**। प्रथमेन पादेन प्रथमद्विकार्थसंक्षेपः, द्वितीयेन तूत्तरस्य। भवतीति भुवनं कार्यजातम्। कतिपयकारणचतुर्मुखादिव्यावृत्त्यर्थमखिलशब्दः। प्रायिकत्वनिवृत्त्यर्थं सकलेत्यनुक्तिः। "अज्ञातं नास्ति" इतिवदखिलेति व्यतिरेकोक्तिः। अकारोपक्रमत्वसिद्धये निखिलेत्यनुक्तिः। तस्य भगवद्वाचकत्वशक्तियोगात्तदविवक्षायामपि माङ्गलिकत्वमकारस्य। नञो मङ्गलेतरत्वं निषेध्यविशेषापेक्षया, न स्वतः। अत्र तु वैकल्यनिषेधेन पौष्कल्यपरत्वात् माङ्गलिकत्वमेव। **जन्म** त्रिविधम्। **स्थेमा**—अन्तर्यामिविष्णवतारादिमुखेनैव करणीया विविधा स्थितिः। **भङ्गः**—नित्यनैमित्तिकप्राकृतरूपः। मोक्षस्य लयान्तर्भावेऽपि शास्त्रस्य प्रधानप्रयोजनतया विषयवत् पृथगेव वक्तव्यत्वादनेकार्थसाधारणेन शब्देन तमन्तर्भावयितुमयुक्तम्। अतो हि पूर्वाचार्याः पृथगूचुः—"जगज्जन्मस्थितिध्वंसमहानन्दैकहेतवे" "जगदुद्भवस्थितिप्रणाशसंसारविमोचनादयः" इति। आदिशब्देनानुप्रवेशनियमनधारणादि गृह्यते; प्रदेशान्तरे "जगदुत्पत्तिस्थितिसंहारान्तःप्रवेशनियमनादिलीलम्" इति स्वेनैव कण्ठरवेणोक्तार्थस्वीकारस्यैवोचितत्वात्। "अप्रमेयोऽनियोज्यश्च" इत्याद्युक्तप्रकारेण सापेक्षत्वादिव्युदासाय लीलाशब्दः। जनयितृत्वाद्यनुक्त्वा जन्माद्युक्तिरुपादानाभिप्राया; "बहु स्यां प्रजायेयेति" इति हि श्रुतिः। लीलाशब्देन निमित्तत्वं द्योतितम्। अवाप्तसमस्तकामस्य व्यापारानुपपत्तिं परिहरतानेन लीलाशब्देन द्वितीयलक्षणार्थश्च सूचितः। अथ द्वितीयद्विकार्थं संक्षिपति—**विनतेति**। विनतरक्षापदाभ्यां तृतीयचतुर्थलक्षणार्थौ सूचितौ। विशेषेण नताः प्रह्वीभूता उपासकाः; तद्वैविध्यं "तदुपर्यपि बादरायणः संभवात्" इत्यादिवक्ष्यमाणप्रकारेण। **भूताः**; भगवज्ज्ञानेन लब्धसत्ताका इति भावः; "अस्ति ब्रह्मेति चेद्वेद, सन्तमेनं ततो विदुरिति" इति श्रुतेः। विनतभूतसंबन्धी व्रातो विनतभूतव्रातः। व्रातशब्देन "आस्फोटयन्ति पितरः" "पशुर्मनुष्यः पक्षी वा" इत्याद्यर्थोऽभिप्रेतः। रक्षा इष्टप्रापणानिष्टनिवारणलक्षणा। एकशब्दः प्राधान्यपरः "अप्यहं जीवितं जह्याम्" "काममात्मानं भार्यां पुत्रं वोपरुन्ध्यान्न त्वेव दासकर्मकरम्" इति ह्युक्तम्। सा प्रधाना दीक्षा यस्य तत्तथोक्तम्। दीक्षाशब्देनावर्जनीयत्वं गर्भितम्; "एतद्व्रतं मम" इति हि तदुक्तिः। अथ शास्त्रोपो-

द्घातचतुःसूत्र्यर्थमाह—**श्रुतीति**। ब्रह्मणो मानशून्यत्वान्यमानकत्वव्युदासेन शास्त्रारम्भणीयता हि तदर्थः। श्रुतिशब्दः प्रमाणवैलक्षण्यं द्योतयति ; श्रूयते नित्यमिति हि श्रुतिः। शिरःशब्देनानन्यपरभागोक्तिः। विदीप्तिः विशेषेण दीप्तिः ; अग्न्यादिरूपेण कर्माराध्यताया अपि वेदान्तावगतत्वं ब्रह्मणः स्वतोऽनन्तपुरुषार्थत्वं चाभिप्रेत्य विशेषेण दीप्तत्वमुक्तम्। ब्रह्मणीति सामान्यशब्दः। श्रीनिवास इति विशेषशब्दः। अत्र "छागो वा मन्त्रवर्णात्" इति न्यायोऽभिप्रेतः। श्रीनिवासशब्देन रूढितोऽवयवतश्च त्रिमूर्त्यैक्यसाम्योत्तीर्णत्वादिव्युदासो नित्यविभूतियोगश्च फलितः। **परस्मिन्निति** "परमतः सेतून्मान" इत्यत्र निर्णीतं प्राप्यत्वं विवक्षितम्। अथोपायोपेयात्मके प्रतिपाद्ये विनतपदसूचितमुपायांशं विशिनष्टि----**शेमुषी भक्तिरूपेति**। अत्रापि छागपशुन्यायोऽभिप्रेतः। पदद्वयेन धीकर्मसमुच्चयवाक्यार्थज्ञानमात्रोपायत्वव्युदासः। स्वनिकर्षाभिप्रायेणाह—**ममेति**। **भवतु**—फलान्तरादेतद्विषयोपायः स्वादुतम इति भावः। एवं परमविषयो दर्शितः। प्रयोजनं चात्रातिसंक्षिप्तम्।

---

**श्रीमते रामानुजाय नमः।**

श्रीमेघनादारिसूरिविरचिता श्रीभाष्यव्याख्या

## नयप्रकाशिका।

---

श्रीमदात्रेयनाथार्यान् गुरूञ्नः परमान् गुरून्।
श्रीरामप्रमुखान् सर्वान् श्रीमद्रामानुजं मुनिम् ॥ १ ॥
कृष्णद्वैपायनं व्यासं साङ्गाम्नायप्रवर्तकम्।
सर्वज्ञमञ्जनासूनुं जानकीनायकप्रियम् ॥ २ ॥
जननीं जगतां लक्ष्मीं गरुडध्वजवल्लभाम्।
नियन्तारमशेषाणां जीवानामचितामपि ॥ ३ ॥
श्रियः पतिं हयग्रीवं कल्याणगुणसागरम्।
निर्मलं चापि जगतां कारणं कमलेक्षणम् ॥ ४ ॥
प्रणम्य लक्ष्मणार्यस्य भाष्ये त्रय्यन्तगोचरे।
गम्भीरेऽतिनिगूढानां नयानां तु प्रकाशने ॥ ५ ॥

प्रयत्नः क्रियते बुद्ध्या तत्प्रसादसमुत्थया ।
यथाश्रुतं यथाशक्ति मेघनादारिणा मया ॥ ६ ॥
आचार्याणां निबन्धेषु प्राचां प्रौढेषु सत्स्वपि ।
विवृतौ भाष्यशब्दानां यतस्तेषामुपक्षयः ॥ ७ ॥
भाष्यस्यापि च सूत्राणां पाठगत्यनुधावनात् ।
शङ्कोत्तरत्वात्तेषां च पूर्वराद्धान्तपक्षयोः॥ ८ ॥
व्यामिश्रत्वादुपन्यासो मन्दधीभिर्न भाव्यते ।
तेषामप्यतिसंकोचाद्दीपग्रन्थेऽपि कृत्स्नशः ॥ ९ ॥
नोपन्यासः कृतस्तस्मात्तत्प्रवृत्तौ प्रयोजनम् ।
वेदमार्गानुसारीति जनोऽयं तु कलावपि ॥ १० ॥
दुष्टोक्तावप्यनुग्राह्यो दोषज्ञैरपि पण्डितैः ।
हन्त सूक्ष्मदृशोऽप्यात्मगुणान् मेरुसमुन्नतान् ॥ ११ ॥
परदोषांश्च निर्वैरा ये न पश्यन्त्यपि स्फुटान् ।
महान्तस्ते प्रहृष्यन्ति सदुक्त्या स्वल्पयापि हि ॥ १२ ॥
क्षीणस्यापि शशाङ्कस्य ज्योत्स्नयेव महार्णवः ।
प्रपद्य प्राञ्जलिर्याचे वेदार्थनयपण्डितान् ॥ १३ ॥
चिरकालप्रयत्नेन बहुशास्त्रनिरीक्षणात् ।
महता चावधानेन कृतस्यास्य निरीक्षणम् ॥ १४ ॥
ग्रन्थस्यापि च कार्त्स्न्येन विमर्शे गुणदोषयोः ।
स्वीकार्यो गुणबाहुल्ये त्याज्यो वेतरथा तु सः ॥ १५ ॥
निर्दोषं न हि लोके ... .... षु ।
सर्वारम्भा हि दोषेणेत्युक्तं भगवतैव यत् ॥ १६ ॥
किं वा न दोषबाहुल्यमत्र भावयतः स्वयम् ।
भाष्यार्थसंशये यस्य स्वप्नेऽर्थान् प्राह भाष्यकृत् ॥ १७ ॥
न्यायोपन्यासपाण्डित्यं यदेतत्संनिरीक्षणात् ।
जायेत नूनं मन्दानामपि प्राग्र्यधियां किमु ॥ १८ ॥

परव्याख्यादिभङ्गेषु प्रकारावगमोऽपि च ।
सांख्यादिदर्शनानां च ·············· ॥ १९ ॥

संक्षेपाद्रूपविज्ञाने तन्निरासेऽपि पाटवम् ।
प्रसादे विस्तरो वाचां दुर्ग्रहस्त्वप्रसादतः ॥ २० ॥

अतोऽयं मध्यमां रीतिमवलम्ब्य प्रणीयते ।
न प्रागल्भ्यमुपन्यासे शब्दव्याख्यानमात्रतः ॥ २१ ॥

केवले चाप्युपन्यासे भाष्यार्थावगमो न हि ।
तस्मात्तु पूर्वपक्षादेरुपन्यासे क्वचित्क्वचित् ॥ २२ ॥

अर्थाद्व्याख्यास्यते भाष्यं समाप्तावपि पक्षयोः ।
अत्यन्तगहनं भाष्यमुपादायापि शब्दतः ॥ २३ ॥

अन्यत्रापि यथायोग्यं तद्व्याख्या क्रियते स्फुटम् ।
कर्ममीमांसानभिज्ञज्ञापनाय यथोचितम् ॥ २४ ॥

तत्र तत्र प्रदर्श्यन्ते न्यायास्तत्रोदिता अपि ।
अन्या अपि च वैचित्र्यो निरीक्ष्या ग्रन्थ एव तु ॥२५ ॥

[1]प्रणम्य याचे भूयोऽपि प्राज्ञानस्य निरीक्षणम् ॥
प्रणिपातप्रसन्ना हि साधवोऽभीष्टदायिनः ॥ २६ ॥

ग्रन्थस्योपक्रमे निर्विघ्नपरिसमाप्त्यर्थं प्रचयगमनार्थं च स्वाभीष्टपरदेवतानुस्मृतिरूपां भक्तिं शब्दात्प्रार्थयमाना भाष्यकृतः शिष्यबुद्धिसमाधानाय चार्थाच्छास्त्रप्रतिपाद्यार्थं संगृह्णन्ति—**अखिलेति श्लोकेन** । प्राचामाचार्याणां ग्रन्थारम्भे स्वेष्टदेवताविषयनमस्काराद्यन्यतमाचारात् तदनुष्ठेयता सिद्धा । नन्विष्टदेवतास्मरणादेरनुष्ठेयतास्तु तदारम्भे; किमर्थं स्वानुष्ठानानुसारिग्रन्थनिवेश इति चेत्, स्वग्रन्थप्रवर्तकशिष्याणामतिशयितमङ्गलसिद्ध्यर्थमिति ब्रूमः । महापुरुषस्वगुर्वादिकृतपरदेवतास्तुत्यादिकीर्तनादभीष्टसिद्धिर्भवतीति पुराणादितो लोकतश्च सिद्धम् । पूर्वाचारतोऽपि ग्रन्थे तन्निवेशः सिद्धः । नन्विष्टदेवतास्मरणादेरविघ्नसमाप्त्यादिफलार्थता[2] केनावगम्यत इति चेत्,

---

१. प्रणम्य प्राञ्जलिर्याचे भूयोऽप्यस्य· A    २. फलकाम्यता· G.

" मङ्गलाचारयुक्तानां नित्यं च प्रयतात्मनाम् ।
जपतां जुह्वतां चैव विनिपातो न विद्यते ॥ "
" स्मृते सकलकल्याणभाजनं यत्र जायते ।
पुरुषं तमजं नित्यं व्रजामि शरणं हरिम् ॥ "

इत्यादिस्मृतिभिरिति ब्रूमः । मङ्गलाचारोऽपीष्टदेवतास्मरणादिरेव । विनिपातो नाम स्वाभीष्टसिद्धिविघात एव । मङ्गलाचारयुक्तस्य तदभावो हि तत्रापाद्यते । संसारिणः प्राचीनानादिपापसंभवात् तन्मूला विघ्नाः पाक्षिकत्वेनापि संभवन्तीति तन्निरासाय मङ्गलाचरणे यत्नः कार्य एव । ननु ग्रन्थकर्तॄणां सिषाधयिषितार्थाविघ्नपरिसमाप्त्यादिरेव फलत्वेनेष्ट इति केनावगम्यत इति चेत्; उच्यते—सिषाधयिषितार्थविशेषविशिष्टस्यैव प्रेक्षावतः क्रियासु कर्तृता लोकवेदयोः सिद्धा । ग्रन्थकर्तुः तदविघ्नपरिसमाप्त्यादेरेवेष्टत्वेन धीस्थत्वात् तस्यैव फलत्वेन विशेषणता युक्तेति । ननु अविघ्नपरिसमाप्त्यादेः काम्यत्वेन तत्साधनेष्टदेवतास्मरणादेस्तदारम्भे नावश्यमनुष्ठेयता, काम्यकर्मणामवश्यानुष्ठेयत्वाभावादिति चेत्—न; ग्रन्थकर्तॄणां सर्वेषां तदविघ्नसमाप्त्यादेरिष्टत्वेन तद्विशिष्टत्वात् तत्र प्रवृत्त्युपपत्तेः ।

नन्वखिलेति श्लोके केवलभक्तिप्रार्थनमेव दृश्यते, न तु परदेवतानमस्कारादिः; नमस्कारादिना प्रीतभगवत्प्रसादाद्धि पक्षप्राप्तविघ्नशान्त्यादिसिद्धिः, न तु स्वेष्टप्रार्थनेनेति चेत्—न; परमात्मनः स्वविषयभक्तिप्रार्थनेनापि नमस्कारादिनेव प्रसन्नत्वात् स्वेष्टसिद्धेः । अथवा, आशीरर्थे लोडस्तु । ननु भाष्यारम्भ इष्टदेवतास्मरणादेर्नावश्यानुष्ठेयता, शावरभाष्यादिष्वदर्शनादिति चेत्—न; तत्तद्भाष्यव्याख्यातृभिरारम्भे मङ्गलाचारस्तत्तद्भाष्यकृद्भिर्धर्मादिपदैः कृत इति प्रसाधितत्वात्, प्रशस्तपादभाष्ये कण्ठोक्तिदर्शनाच्च । अतः पूर्वाचार्यैरविशेषेण तदारम्भ इष्टदेवतानमस्कारादिरनुष्ठित एव । भगवता कृष्णद्वैपायनेनापि ब्रह्मजिज्ञासेति वदता मङ्गलाचारः कृत एव । अत्र चाखिलेत्यादिश्लोके शब्दादर्थाच्च तत्सूत्रविवृतिमात्रमेव ग्रन्थाविघ्नसमाप्त्यादिसिद्ध्यर्थं क्रियते । ननु अविघ्नसमाप्त्यादिसिद्ध्यर्थं परमात्मविषयभक्तिप्रार्थनमस्तु; तद्ग्रन्थे वक्ष्यमाणशास्त्रार्थसंग्रहस्य तु न प्रयोजनमिति चेत्—न; शिष्यबुद्धिसमाधानप्रयोजनस्योक्तत्वात् । तथात्वे हि वक्ष्यमाणार्थे तेषां धीसमाधिः; अन्यथा वक्ष्यमाणार्थस्वरूपमजानन्तस्ते मुह्येयुः । जन्मादिलक्षणलक्षितस्य ब्रह्मणो ध्येयत्वाभिधानात् तस्य [1]प्राधान्यद्योतनेन मीमांसाशास्त्रस्यार्थोऽपि द्योतितः ।

---

१. तत्र प्राधान्य· A.

इति भागवतोक्तरीत्या लक्ष्मीवल्लभातिरिक्ते निरतिशयब्रह्मत्वासिद्धिरपि श्रीनिवास इत्यनेन सूचिता भवति। विभूतिः लक्ष्मीरित्यर्थः। "बृहति बृंहयति, तस्मादुच्यते परं ब्रह्म" "बृहत्त्वाद्बृंहणत्वाच्च तद्ब्रह्मेत्यभिधीयते" इति श्रुतिस्मृतिसिद्धे बृहत्वबृंहणत्वरूपब्रह्मशब्दप्रवृत्तिनिमित्ते आद्याभ्यां विशेषणाभ्यां क्रमेण दर्शयति। अखिलानां भुवनानां जन्मस्थेमभङ्गादि लीला यस्य तत् तथोक्तम्। "जगदुत्पत्तिस्थितिसंहारान्तःप्रवेशनियमनादिलीलम्" इत्युत्तरत्र वक्ष्यमाणत्वात् आदिपदेन अन्तःप्रवेशनियमनादि गृह्यते। "लोकवत्तु लीलाकैवल्यम्" इति सूत्रे जन्मस्थित्यादेः लीलैव प्रयोजनमिति वक्ष्यमाणत्वात् लीलाशब्दः तत्साधनलक्षकः। यद्वा "लोकवत्तु" इति सूत्रोक्तरीत्या लीलाप्रयोजकस्यापि जन्मस्थित्यादेः परिपूर्णानन्यप्रेर्यस्वच्छन्दचेष्टारूपतया लीलात्वस्यापि संभवान्नानुपपत्तिः। "सप्तमीविशेषणे बहुव्रीहौ" इति सूत्रे व्यधिकरणबहुव्रीहिसाधुत्वस्यापि ज्ञापितत्वात् भङ्गादिना लीला यस्येति विग्रहः। अनेन विशेषणेन जगत्कारणत्वलक्षणः प्रथमाध्यायार्थः सूचितो भवति। अवाप्तसमस्तकामस्य जगत्सर्गाद्यनुपपत्तिं परिहरता लीलाशब्देनाविरोधलक्षणद्वितीयाध्यायार्थः सूचितो भवति। जगज्जन्मादिहेतुत्वाक्षिप्तसार्वज्ञ्याद्यनन्तकल्याणगुणाश्रयतया स्वरूपतो गुणतश्च बृहत्त्वमपि सूचितम्। विनतानां प्रपन्नानां देवमनुष्यादिभेदेन विविधानां भूतानां प्राणिनां व्रातस्य समूहस्य बन्धनिवृत्तिपूर्वकनिरतिशयानन्दाविर्भावरूपरक्षायाम् एका असंभवद्वैकल्यतया मुख्या दीक्षा संकल्पो यस्य तत्तथोक्तम्। व्रातपदेन विनतानामानन्त्यं सूच्यते। अनेन शरणागतज्ञानविकासहेतुतया वर्धकत्वलक्षणं बृंहणत्वमुक्तं भवति। "बृह बृहि वृद्धौ" इति धातुः। अत्र विनतरक्षापदाभ्यां तृतीयचतुर्थाध्यायार्थौ साधनफलरूपौ सूचितौ भवतः। ननु "एको ह वै नारायण आसीत्" "तमेवं विद्वानमृत इह भवति" इत्यादि प्रमाणवत् "न सन्न चासच्छिव एव केवलः" "ज्ञात्वा शिवं शान्तिमत्यन्तमेति" इत्यादिप्रमाणानां देवतान्तरविषयेऽपि सत्त्वेन बृहत्त्व बृंहणत्वयोः कथं नारायणनिष्ठत्वनिश्चय इत्यत्राह—**श्रुतिशिरसि विदीप्ते इति**। अयं भावः—"सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते, सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति" इत्यादिना आकाशादेः जगत्कारणत्वस्य श्रुतत्वेऽपि

"एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च।

खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी ॥ ”

इति सृज्यत्वश्रवणात् यथाकाशादेर्न जगत्कारणत्वं तथा “ ललाटात् त्र्यक्षः शूलपाणिः पुरुषोऽजायत ” “ नारायणाद्रुद्रो जायते ” इत्यादिभिर्देवतान्तराणामपि सृज्यत्वश्रवणान्न जगत्कारणत्वम् । न च “ सर्वमिदं प्रयुक्तं ब्रह्मविष्णुरुद्रेन्द्रास्ते सर्वे संप्रसूयन्ते ” इति विष्णोरप्युत्पत्तिः श्रूयत इति वाच्यम् ; तस्य “ अजायमानो बहुधा विजायते ” इति श्रुत्या कर्माधीनजनिरहितस्येच्छाधीनशरीरपरिग्रहरूपत्वात् । न च तस्याः श्रुतेर्देवतान्तरविषयत्वं शक्यशङ्कम् ; “ ह्रीश्च ते लक्ष्मीश्च पत्न्यौ ” इति तत्प्रकरणपाठेन “ अद्भ्यः संभूतः ” इत्युत्तरानुवाकस्य लक्ष्मीपतिव्यतिरिक्तविषयत्वशङ्कानवकाशात् । अतः सर्वैरपि कारणवाचकैर्वेदान्तवाक्यैः स एव प्रतिपाद्यत इति । एतत्सर्वं ‘ श्रीनिवासे ’ इति विशेषणेनाभिप्रेतम् । अत्र ‘ श्रुतिशिरसि विदीप्ते ’ इत्यनेन पूर्वभागेऽप्यग्नीन्द्रादिरूपतया प्रतिपाद्यत्वेन दीप्तत्वमस्तीति व्यज्यते । अत एव

“ सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति ।
यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण ब्रवीमि ॥ ”

इति सर्ववेदप्रतिपाद्यतया तपःप्रधानत्वेन तपःशब्दितवेदान्तवेद्यतया च प्रतिपाद्यमानं पदं “सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम् ” इत्युपसंहारेण भगवतो दिव्यात्मस्वरूपमिति प्रतिपादितम् । प्रमाणतन्त्रज्ञानापेक्षया पुरुषतन्त्रं भक्त्युपासनादिशब्दवाच्यमन्यदिति परमतनिरासाय ‘ शेमुषी भक्तिरूपा’ इत्युक्तम् । “ मनो ब्रह्मेत्युपासीत ” इत्युपासिनोपक्रम्य “ भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद ” इति विदिनोपसंहारात् न विदिधात्वर्थज्ञानात् भिन्नमुपासनमित्यभिप्रायः । यद्वा मदीया शेमुषी सर्वा भक्तिरूपा भवत्विति शेमुष्यां भक्तिरूपत्वमेव प्रार्थ्यत इति द्रष्टव्यम् ।

श्रीभाष्यम्

पाराशर्यवचःसुधामुपनिषद्दुग्धाब्धिमध्योद्धृतां
संसाराग्निविदीपनव्यपगतप्राणात्मसंजीवनीम् ।
पूर्वाचार्यसुरक्षितां बहुमतिव्याघातदूरस्थिता-
मानीतां तु निजाक्षरैः सुमनसो भौमाः पिबन्त्वन्वहम् ॥

## श्रुतप्रकाशिका

श्रुतेरेवोपायोपेयावगतौ सत्यां किं भवतो वक्तव्यमित्यत्राह—**पाराशर्येति** । प्रथमश्लोके स्वप्रबन्धस्य [1]परमप्रयोजनतया सिद्धरूपः परमविषयो दर्शितः ; साध्यरूपं प्रयोजनं च रक्षापदेनातिसंक्षिप्तम् । अथ द्वितीयेन श्लोकेन स्वप्रबन्धस्यावान्तरविषयः, परंपरया ब्रह्मविषयत्वं, स्वप्रबन्धं प्रति सम्यग्ज्ञानस्याव्यवहितावान्तरप्रयोजनत्वं, परंपरया मुक्तेः परमप्रयोजनत्वं, स्वव्याख्येयस्य प्रमाणमूलताकथनेन व्याख्येयान्तराणामप्रमाणमूलता, स्वव्याख्येयविषयभाष्यान्तरव्यावृत्त्यर्थं स्वोक्तार्थस्य सांप्रदायिकत्वमित्यादि श्रौतमुच्यते ; स्तुत्यात्मकगुरूपासनरूपमङ्गलाचारश्चार्थतः क्रियते । "जायमानं हि पुरुषं यं पश्येन्मधुसूदनः" "तद्विद्धि प्रणिपातेन" "ददामि बुद्धियोगं तम्" इत्यादिभिराचार्योपसत्तेरपि भगवत्कटाक्षहेतुकत्वावगमात् परदेवतोपासनानन्तरभावित्वं गुरूपासनस्य युक्तम् ; तथा च श्रुतिः—"[2]यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ" इति । पूर्वैरपि तथाचरितम् ; यथा भगवता वैशम्पायनेन—"नमस्कृत्य हृषीकेशम्" "नमो भगवते तस्मै व्यासाय" इति ; तथा च द्रमिडाचार्यैः—"नमः प्रवरगुणैकास्पदाय स्थिरत्रसकुलबीजकुम्भभूताय भुवनकोशस्य गोप्त्रे ब्रह्मणे, [3]नमो जैमिनये वेदरहस्यसंपुटनिगूढविस्फारयित्रे न्यायप्रज्वलितचेतसे नमोऽस्त्वाचार्येभ्यः" इति । पाश्चात्यैश्च—"विशुद्धज्ञानदेहाय" "अभिवन्द्य गुरूनादौ" इति "प्रगम्य हेतुमीश्वरं मुनिं कणादमन्वतः" इति च । पराशर्यशब्देन जन्मोत्कर्षः, "स होवाच व्यासः पाराशर्यः" इति श्रुतिप्रसिद्धिः, तस्यैव बादरायणसंज्ञत्वं च विवक्षितम्[4] । यथोक्तं महर्षिणैव—

---

१. 'परस्मिन्' इत्यनेन "परमतः सेतून्मान" इत्यधिकरणार्थसूचनादिति भावः ।

२. यस्य पुरुषस्य देवे आचार्योपकारकतया परदेवतारूपे परा भक्तिः स्यात् आचार्योपकारकत्वलक्षणगौरवातिशयानुगुण्येन प्रथममुत्कटा स्यात्, तदनन्तरं देवे यथा भक्तिरुपकार्यवस्तुगौरवानुगुण्येनाभूत् तथा गुरावपि ईश्वरोपकारकत्वलक्षणगौरवानुगुण्येन परा भक्तिः स्यात् तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मन इति योजना निर्देशक्रमानुसारिणी विवक्षिता ।

३. शास्त्रैक्यविवक्षया जैमिनेरपि पूर्वाचार्यत्वम् ।

४. "नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्" इत्येकशेषैकवद्भावौ ।

"द्वीपे बदरिकामिश्रे बादरायणमच्युतम्[1] ।
पराशरात्सत्यवती पुत्रं लेभे परंतपम्[2] ॥" इति ।

यद्यपि [3]ऋष्यन्तरेऽपि बादरायणशब्दप्रयोगः, तथापि सूत्रकृद्विषयो बादरायणशब्दः पाराशर्यगोचर एव। तथा च स्कान्दे व्यक्तमुक्तम्—

"नारायणाद्विनिष्पन्नं ज्ञानं कृतयुगे स्थितम् ।
किंचित्तदन्यथा जातं त्रेतायां द्वापरे खिलम् ॥
गौतमस्य ऋषेः शापाज्ज्ञाने त्वज्ञानतां गते ।
संकीर्णबुद्धयो देवा ब्रह्मरुद्रपुरःसराः ॥
शरण्यं शरणं जग्मुर्नारायणमनामयम्[4] ।
तैर्विज्ञापितकार्यस्तु भगवान्पुरुषोत्तमः ।
अवतीर्णो महायोगी सत्यवत्यां पराशरात् ।
उत्सन्नान् भगवान् वेदानुज्जहार हरिः स्वयम् ॥
[5]चतुर्धा व्यभजत्तांश्च चतुर्विंशतिधा पुनः ।

---

१. अच्युतस्य शक्त्यावेशावतारभूतमित्यर्थः ।

२. पराशरादवतीर्णत्वात् स्वयमपि परान् बाह्यकुदृष्टीन् प्रमाणतर्कशरैराश्रृणातीत्यभिप्रायेण परंतपमित्युक्तम् ।

३. भद्रणमद्रणबादरायणेति प्रवरखण्डे पूर्वमीमांसासूत्रेषु चान्यत्र बादरायणशब्दप्रयोग इति भावः । शारीरकसूत्रेषु बादरायणशब्दप्रयोगस्तु पतञ्जलेः "गोनर्दीयस्त्वाह" इति महाभाष्ये स्वस्यैव प्रयोगवत् "वाल्मीकिर्भगवानृषिः" "नान्यं वरं नचिकेता वृणीते" इत्यादिवच्च वक्तुरेवात्मन आप्ततमत्वद्योतनाय परोक्षरूपेण व्यवहार इति भावः ।

४. देवतान्तरवैलक्षण्यमभिप्रेतम् ।

५. चतुर्धा ऋग्यजुःसामाथर्वरूपेण ; चतुर्विंशतिधा ऋक्शाखाविभागेन ; शतधा चैकधा यजुःशाखाविभागेन ; सहस्रधा सामशाखाविभागेन ; द्वादशधा अथर्वशाखाविभागेनेति भावः । अल्पाक्षरमित्यादि—यावद्भिः पदैरक्षरैर्वा विना विवक्षितार्थलाभो न संभवति तावदधिकाक्षरपदादिरहितत्वमल्पाक्षरत्वम् । प्रमाणोपप-

शतधा चैकधा चैव तथैव च सहस्रधा ॥
कृष्णो द्वादशधा चैव पुनस्तस्यार्थवित्तये ।
चकार ब्रह्मसूत्राणि येषां सूत्रत्वमञ्जसा ॥
अल्पाक्षरमसंदिग्धं सारवद्विश्वतोमुखम् ।
अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः ॥
निर्विशेषितसूत्रत्वं ब्रह्मसूत्रस्य चाप्यतः ।
सविशेषाणि सूत्राणि ह्यपराणि विदो विदुः ॥
[1]मुख्यस्य निर्विशेषेण शब्दोऽन्येषां विशेषतः ।

---

त्तिमुखेनार्थनिर्णायकत्वमसंदिग्धत्वम् । अदृष्टहेतुज्ञानविषयार्थदत्वं सारवत्त्वम् । एतावतार्थगतं प्रयोगोपाधिमुक्त्वा संप्रति सूत्रपदप्रवृत्तिनिमित्तमाह—विश्वतो मुखमिति । विश्वस्मिन् कण्ठोक्तार्थोपपादकेषु बहुष्वर्थेषु मुखं तात्पर्यं यस्य तदित्यर्थः । सूचनात् सूत्रमिति हि निर्वचनम् । अथ शब्दगतं प्रयोगोपाधिमाह—अस्तोभमनवद्यं चेति । स्तोभः निरर्थकः शब्दः; "भूवादयो धातवः" इत्यादिषु "भूवादीनां वकारोऽयं मङ्गलार्थः प्रयुज्यते" इति महाभाष्योक्तरीत्या निरर्थकप्रयोगदर्शनेन तेषां सूत्रपदमुख्यार्थत्वव्यावृत्त्यर्थमिदं विशेषणम् । अनवद्यं वेदविरोधादिरूपावद्यरहितम्; "कलेर्ढक्" इत्यादौ वेदविरोधदर्शनात् तद्व्यावृत्तिरप्यत्राभिप्रेता । चकारात् "अथ योगानुशासनम्" इत्यादिषु अप्रसिद्धाधिकारार्थपराथशब्दादिदर्शनात् तद्व्यावृत्तिः । एवं चाल्पाक्षरत्वादिविशेषणपञ्चकविशिष्टं परमपुरुषार्थमोक्षहेतुज्ञानजनकं वाक्यं मुख्यसूत्रम् । तच्च जगच्छरीरकब्रह्मप्रतिपादकं शारीरकसूत्रमेवेति भावः ।

१. सूत्रपदप्रवृत्तिनिमित्तपौष्कल्येन लक्षणसंपत्त्या च शारीरकसूत्राणां निरुपपदसूत्रव्यवहारविषयत्वे साधकं सामान्यन्यायमाह—मुख्यस्येत्यादिना । निर्विशेषेण निर्विशेषत्वेन विशेषणराहित्येनेति यावत् । शब्दः प्रयुज्यत इति शेषः । अन्येषाममुख्यानाम् । विशेषतः सार्वविभक्तिकस्तसिः, विशेषेण उपपदसाहित्येनेति यावत् । अयमर्थः—शब्दः स्वमुख्यार्थस्य विशेषणं विना प्रत्यायकः । गौणार्थानां पदान्तरसमभिव्याहारतः प्रत्यायक इति । वेदविद इत्यस्य सद्ब्रह्मात्मेश्वरेशानपुरुषादिशब्दप्रयोगविद इत्यर्थः । अनेन "अनुपाधिकनिर्देशे ह्यसंकोचो

इति वेदविदः प्राहुः शब्दतत्त्वार्थवेदिनः ॥
एवंविधानि सूत्राणि कृत्वा व्यासो महायशाः ।
ब्रह्मरुद्रादिदेवेषु मनुष्यपितृपक्षिषु[1] ।
ज्ञानं संस्थाप्य भगवान् मोदते परमेश्वरः ॥"

इत्यादिना । **वचःसुधाम्**; [2]वचःशब्दस्यार्थे तात्पर्यम्, यथा 'वेदवित्' 'शास्त्रवित्' इत्यादौ वेदादिशब्दानाम्; अर्थाभिधायकं हि वाक्यम् । वचसः सुधामिति

---

मनीषिभिः । सिद्धे शब्दार्थसंबन्ध इति न्यायेन कथ्यते ॥" इति तत्त्वटीकाप्रतिपादितशब्दप्रयोगमूलभूतन्यायवित्त्वं सूच्यते ।

१. कपोतादीनामपि ब्रह्मवित्त्वाभिप्रायेण पक्षिग्रहणम् ।

२. ननु सुधाशब्दविवक्षितं भोग्यत्वं वचःशब्दार्थे सूक्ते सार्वजनीनानुभवबाधितमित्यत्राह—अर्थे तात्पर्यमिति । अनेन लक्षणाबीजमुक्तम्, तात्पर्यानुपपत्तेर्लक्षणाबीजत्वात् । केचित्तु—नात्र लक्षणाभिप्रेता, सूक्तेष्वपि भोग्यत्वस्य संभवेनात्यन्तानुपपत्त्यभावात् । किंतु "अनेकपदार्थसंसर्गबोधित्वाच्च वाक्यस्य" इति वेदार्थसंग्रहोक्तरीत्या वचःशब्दस्यात्र पदार्थानां परस्परसंसर्गबोधकपदसमुदायात्मकसूत्रपरतया तज्जन्यप्रतीतिविशेषणीभूते संसर्गविशेषे भोग्यत्वस्यान्वय इत्यभिप्रायः । न चैतावता 'स्वर्गी ध्वस्तः' इत्यत्रेव वचसि विशेषणद्वारको भोग्यत्वान्वय इति मन्तव्यम्, तद्वदत्र विशेष्ये बाधकाभावात् । एतदुक्तं भवति—यथा 'घटो जातः, घटो ध्वस्तः' इत्यादौ सत्कार्यवादे घटशब्दोक्तावस्थाव्यतिरेकेण विशेष्यमात्रस्योत्पत्त्याद्यसंभवात् अवस्थामात्रस्य द्रव्यव्यतिरेकेणापदार्थतयोपस्थित्यसंभवाच्च 'जातः, ध्वस्तः' इत्याद्यपरपदार्थानां घटशब्दार्थविशिष्टवेषेऽन्वयः, यथा च तत्र विशेषणभूतावस्थाया एवोत्पत्त्याद्युपपादकतया घटपदजन्यप्रतीतिविशेषणीभूतावस्थायामेव घटशब्दस्य तात्पर्यं, तद्वदेवात्रापि संसर्गशक्तिविशिष्टशब्दसमुदायवाचिवचःशब्दार्थे विशेष्यांशे वीणाशब्दादिष्विव स्वतो भोग्यताया अननुभवबाधितत्वेन भोग्यताया अनन्वयात् तद्विशेषणांशस्य संसर्गशक्तेरपि पृथक्पदार्थत्वाभावेन तदनन्वयाच्च तादृशसंसर्गशक्तिरूपार्थविशिष्टशब्दसमुदायात्मके विशिष्टवेष एव भोग्यत्वस्यान्वयः, न विशेष्यमात्रे न वा विशेषणमात्रे । अथापि विशिष्टवाचिनो वचःशब्दस्य विशेषणांश एव प्रधानतया प्रतिपिपादयिषितत्वलक्षणं तात्पर्यम् । शक्यार्थैकदेशस्य शब्दशक्त्यैवोपस्थितेर्नात्र लक्षणाया अवकाशः । "वचःशब्दलक्षितस्तदर्थः सुधात्वेन रूप्यते" इति तत्त्वटीकायां लक्षितपदं विवक्षितपरम् इत्यभिप्रयन्ति ।

केचिदाचार्याः । [1]रूपकप्रकरणात् सुधाशब्दलक्षणाभयाच्च सुधेव वच इति "उपमितं व्याघ्रादिभिः" इत्यादिसमाससमपर आचार्या आद्रियन्ते । सुधाशब्देन भोग्यत्वमभिप्रेतम् । एवमवान्तरविषय उक्तः । तर्हि कथं ब्रह्मणो विषयत्वमिति शङ्कायां सद्वारकं ब्रह्मविषयत्वमित्याह—उपनिषदिति । ब्रह्मण्युपनिषण्णेत्युपनिषत्; "उपनिषण्णत्वाद्वोपनिषत्"

---

१. वचःसुधाशब्दे षष्ठीतत्पुरुषं निराकर्तुं रूपकप्रकरणानानुगुण्यं सुधाशब्दलक्षणां चोद्भाव्य "उपमितं व्याघ्रादिभिः सामान्याप्रयोगे" इति समासं वदतः श्रुतप्रकाशिकाकृतः कोऽभिप्राय इति विवेचनीयम् । आधुनिका आलंकारिका उपमितसमासं रूपकसमासं च भिन्नतया व्यवहरन्तः "उपमितं व्याघ्रादिभिः सामान्याप्रयोगे" इत्यनेनोपमितसमासं "मयूरव्यंसकादयश्च" इत्यनेन रूपकसामासम्, उपमितसमासे पूर्वपदार्थस्य रूपकसमासे उत्तरपदार्थस्य च क्रियान्वये चमत्कारातिशयं च वर्णयन्ति । अत्र सुधायाः 'पिबन्तु' इति पानक्रियान्वयस्वारस्यानुगुण्येन रूपकसमास एव वर्णनीय इत्यत्र न भावुका विवदेरन् । षष्ठीतत्पुरुषनिराकरणहेतुतया रूपकप्रकरणस्योद्भावितत्वात् रूपकमेव श्रुतप्रकाशिकाकृतामप्यभिमतमिति गम्यते । परं तु "रूपकप्रकरणात् सुधाशब्दलक्षणाभयाच्च सुधेव वच इति 'उपमितं व्याघ्रादिभिः' इत्यादिसमाससमपर आचार्या आद्रियन्ते" इति रूपकप्रकरणमुद्भाव्यानुपदमेवोपमितसमासवर्णनं कथं संगच्छतामिति विचारणीयम् । अत्रायं श्रुतप्रकाशिकाकृतामभिसंधिरुन्नीयते—प्रकरणानुगुण्यात् पानक्रियान्वयस्वारस्याच्च रूपकालंकार एवात्र स्वरसः । समासस्तु "उपमितं व्याघ्रादिभिः सामान्याप्रयोगे" इति सूत्रेणैव । उपमायामिव रूपकेऽपि प्रस्तुताप्रस्तुतयोः सादृश्यं भाव्यत एव । उपमायां स्फुटभेदं रूपके तिरोहितभेदं तदिति परं विशेषः । तथाच दण्डी—"उपमैव तिरोभूतभेदा रूपकमुच्यते । यथा बाहुलता पाणिपद्मं चरणपल्लवम् ॥" इति । उपमायामिव रूपकेऽपि "उपमितं व्याघ्रादिभिः" इत्यनेनैव समासः । अत एव पूर्वोक्तदण्डिकारिकायां बाहुलतापदं 'बाहुः लतेवेति उपमितं व्याघ्रादिभिरिति समासः' इति तरुणवाचस्पतिप्रमुखा व्याचख्युः । "मयूरव्यंसकादयश्च" इति समासस्तु यत्र 'मयूरव्यंसकः यवनमुण्डः' इत्यादावुत्तरपदं गुणवाचि तत्रैव प्रवर्तते । तत्र "उपमानानि सामान्यवचनैः" इत्येव समासे सिद्धे स्वरार्थं सूत्रमिति स्थितम् । मयूरव्यंसकादयश्चेत्येतदपि उपमानोपमेयभाव एव प्रवर्तते; यथा—मयूर इव व्यंसकः यवन इव मुण्डः इत्यपि केषांचिन्मतं समस्ति । तत्राकृतिगणे वचःसुधाशब्दस्यान्तर्भावनं त्वगतिकगतिः । अत एव "भाष्याब्धिः क्वातिगम्भीरः"

इति हि वाक्यम् ; "गहने हीयं विद्या संनिविष्टा" इति तद्विषयं द्रमिडभाष्यम् । "[1]गहने ब्रह्मण्युपनिषण्णा" इति तद्विषया वामनटीका । अद्वारकभगवत्प्रतिपादकत्वमुपनिषण्णत्वम् । दुग्धशब्देन पूर्वभागादप्युपनिषदः सारत्वं विवक्षितम् ; यथा "आरण्यकं च वेदेभ्य ओषधीभ्यो यथामृतम्" इति । अब्धिशब्देन आलोचितानामुपनिषदामानन्त्यादि सूचितम् । मध्यशब्देन सर्ववाक्यानां मुख्यार्थापरित्यागोऽभिप्रेतः । मध्यस्य सर्वपर्यन्तदेशापेक्षया तुल्या ह्यासत्तिः । उद्धृतशब्देनातिनिम्नदेशनिमग्नोद्धरणमभिदधता निःशेषार्थग्रहणं सूच्यते । स्वप्रबन्धस्यावान्तरविषयः पाराशर्यसूत्रं, तस्यावान्तरविषय उपनिषत्, तद्विषयभूतं ब्रह्मेति परंपरया ब्रह्मणः प्रतिपाद्यत्वम् । बादरायणसूत्राणामुपनिषन्मूलकत्वकथनेन सांख्यादिग्रन्थानामप्रमाणमूलत्वात्तदनादरेणैतद्व्याख्यानमिति सूचितम् । प्रणाड्या शास्त्रजन्यं परमप्रयोजनमाह—**संसारेति** । संसाराग्निशब्देन संसारस्य कात्स्न्येन तापत्रयरूपता विवक्षिता ; यथा—"स्वर्गेऽपि पातभीतस्य क्षयिष्णोर्नास्ति निर्वृतिः" इति । दीपनशब्देनासंकोचात्सदाभिज्वलनवाचिना विद्यालब्धेः पूर्वं कदाचिदप्यनिर्वाप्यत्वमभि-

---

इति कैयटप्रयोगे विवक्षितसमान्यधर्माप्रयोगेण समादधते शब्दकौस्तुभकारादयः, न तु मयूरव्यंसकादित्वात् । तत्र शब्दोपात्तं गाम्भीर्यरूपं साधारणधर्मं परित्यज्यानुपात्तसाधारणधर्मान्तरपरिकल्पनक्लेशात् बिभ्यता तु नागेशेन मयूरव्यंसकादित्वं वर्णितमित्यन्यदेतत् । न चात्र वचसः सुधात्वरूपणे सामान्यधर्मान्तरपरिकल्पनमसांप्रदायिकम्, ग्रन्थकृतैव सुधाशब्देन भोग्यत्वमभिप्रेतमिति स्वविवक्षिताविष्करणात्; तत्त्वटीकायां "समाससूच्यं स्वादुत्वसामान्यमिहाप्रयुक्तम्" इति श्रीभाष्यकृदाशयाविष्करणाच्च । तस्मात् रूपकस्थलेऽपि "उपमितं व्याघ्रादिभिः" इत्येव समास इति प्राचीनः संप्रदायः । तमेव संप्रदायमनुरुध्य श्रुतप्रकाशिकातत्त्वटीकादयः प्रवृत्ता इत्यवधेयम् । "उपमितं व्याघ्रादिभिरित्यादिसमासम्" इति श्रुतप्रकाशिकायाः "उपमितं व्याघ्रादिभिः" इत्यारभ्य पठितेन "मयूरव्यंसकादयश्च" इति सूत्रेण समास इति क्लिष्टगस्यार्थवर्णनं तु तत्त्वटीकादिग्रन्थविरुद्धम् । तत्र हि रूपकमुपवर्ण्य सामान्यधर्मप्रयोगात् कथं समास इत्याशङ्क्य परिहृतम् । मयूरव्यंसकादयश्चेत्यत्र 'सामान्याप्रयोगे' इत्यस्यानुवृत्तिवर्णनं त्वप्रामाणिकम् ।

१. "विकर्ता गहनो गुहः" इति सहस्रनामपाठात् गहनशब्दो ब्रह्मपर इति भावः ।

प्रेतम् । वैविध्यमाध्यात्मिकादिरूपेण ; तेषु त्रिष्वैकैकस्यापि शारीरमानसादिरूपेण च । आत्मनां प्राणः परमात्मा ; "सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति" "को ह्येवान्यात्कः प्राण्यात्" इत्यादिश्रुतेः । गतशब्देन तदलाभः । उपसर्गाभ्यां तस्यानादित्वं विविधत्वं च विवक्षितम् । ज्ञानदर्शनप्राप्तिष्वन्यतमस्याप्यभावादलाभस्य वैविध्यम् । **संजीवनीमिति** ; जीवनमुज्जीवनं संसारोन्मोचनम् । 'सम्' इति कैवल्यव्यावृत्तिः । अथ सांप्रदायिकत्वमाह—**पूर्वेति** । पूर्वशब्देन शंकराद्यर्वाचीनव्यावृत्तिः । **सुरक्षिताम्** ; नोपदेशमात्रेण, ग्रन्थरूपेण चेति भावः । पूर्वाचार्यग्रन्थैरर्थस्वरूपं प्रतिपन्नं चेत् किं भवतः कृत्यमित्यत्राह—**बहुमतीति** । बह्व्यो मतयः, बहूनां मतयो वा ; तासां परस्परव्याघातेन ताभिः समीचीनार्थव्याघातेन चार्वाचीनजनैर्दुरवगाहत्वमाह—**दूरस्थताभिति** । सुधापक्षे निजाक्षरैर्गायत्र्यवयवभूतैरमृताक्षरैरिति यावत् ; अतो ममाक्षरैरित्यनुक्तिः । **सुमनसः** "सारासारविवेकज्ञाः" इत्याद्युक्ताः । अनेनासद्परिग्रहो न दोषायेत्युक्तं भवति । देवादीनां वृत्तिकारग्रन्थादिभिः सुगमत्वात् 'भौमाः' इत्युक्तम् । **पिबन्त्वन्वहमिति** ; रस्यतातिशयान्न तृप्तिकरीति भावः । फलान्तराद्भगवत्प्राप्त्युपाय एव हि स्वादुतमः ; यथोक्तम्—

"क्व नाकपृष्ठगमनं पुनरावृत्तिलक्षणम् ।
क्व जपो वासुदेवेति मुक्तिबीजमनुत्तमम् ॥" इति ।

यद्वा गभीरत्वादन्वहं शीलनीयेति भावः ।

## भावप्रकाशिका

**अथ द्वितीयेन श्लोकेन स्वप्रबन्धस्यावान्तरविषय इति** ; पाराशर्यवचोरूपसूत्रसमुदाय इत्यर्थः । **इत्यादिभिराचार्योपसत्तेरिति** ; आदिशब्देन

"विष्णोः कटाक्षमद्वेष आभिमुख्यं च सात्त्विकैः ।
संभाषणं षडेतानि ह्याचार्यप्राप्तिहेतवः ॥"

इत्यादिर्विवक्षितः । **भगवत्कटाक्षहेतुकत्वावगमादिति** ; उपदेशकटाक्षादिभिर्भगवत आचार्यलम्भकत्वेन प्राथमिकोपकारकत्वावगमादित्यर्थः । ततश्च "तद्विद्धि" इत्यादीनां भगवत्कटाक्षहेतुकत्वावगमकत्वं नास्तीति चोद्यस्य नावकाशः । **यस्य देवे**

**परा भक्तिरिति ;** भक्तिर्हि उपकारकत्वकृतः स्नेहविशेषः। तत्र भगवद्भक्तेरुपमानकोटौ निवेशादाधिक्यं व्यज्यते। तदाधिक्यं चोपकारकत्वाधिक्याधीनम् । अतो भगवत आचार्यापेक्षयोपकाराधिक्यलाभ इति भावः । **पाराशर्यशब्देन जन्मोत्कर्ष इति ;** ननु गोत्राधिकारे "गर्गादिभ्यो यञ्" इति यञो विधानादनन्तरापत्ये कथं यञ्प्रत्ययः? उच्यते—गोत्रत्वोपचारात् 'जामदग्न्यो रामः' इतिवत् । ननु शारीरकसूत्रकारो बादरायण इति हि प्रसिद्धिः ; कथं तत्पाराशर्यस्योच्यत इत्याशङ्क्याह—**तस्यैव बादरायणसंज्ञत्वं च विवक्षितमिति । वचःशब्दस्यार्थे तात्पर्यमिति ;** यद्यपि वचस एव सुधात्वं सुनिरूपम्—तथाहि, उपनिषत्पर्यालोचननिष्पन्नत्वलक्षणमुपनिषद्दुग्धाब्धिमध्योद्धृतत्वमर्थस्येव शब्दस्यापि सुवचम् ; संसाराग्निविदीपनव्यपगतप्राणात्मसंजीवनत्वमपि तादृशज्ञानविषयतयार्थस्येव शब्दस्यापि तादृशसंजीवनज्ञानजनकत्वेन सुवचम् ; पूर्वाचार्यसुरक्षितत्वमप्यर्थस्यान्यथाप्रतीतिलक्षणपीडापरिहारमुखेन शब्दस्यापि सुवचम् ; दूरस्थितत्वानीतत्वे अप्यनभिव्यक्ताभिव्यक्तार्थकत्वरूपे शब्देऽपि संभवतः ; उपक्रमगतवचःसुधात्वानुसारेणोपसंहारगतं चास्वारस्यं सोढव्यम्—तथापि रक्षितत्वानीतत्वादिकमर्थद्वारा शब्द इत्यौपसंहारिकबहुस्वारस्यापेक्षया भूयोऽनुग्रहन्यायेनोपक्रमगतवचःशब्दस्यैकस्यैवार्थलक्षकत्वं न्याय्यमिति भावः । **वेदादिशब्दानामिति ;** ननु 'वेदवित्' इत्यादौ विच्छब्दस्यैवार्थतो ज्ञानपरत्वमाश्रित्य वेदशब्दस्यार्थपरत्वाभावोऽपि वक्तुं सुशकः ; यथा "यः सर्वज्ञः सर्ववित्" इत्यत्र सर्वप्रकारतो वेत्तीत्यर्थाश्रयणम् ; न हि तत्र सर्वपदस्य लक्षणा ; तथा 'वेदं वेत्ति' इत्युक्ते वेत्तीति शब्दात् न वेदस्य स्वरूपेण ज्ञानमात्रं प्रतीयते, अपितु तत्तदर्थविशेषप्रतिपादकत्वप्रकारेणापि वेत्तीति ह्यर्थः प्रतीयते ; अत एव "तदधीते तद्वेद" इति सूत्रे "यस्तु सामपाठं पठति नासौ वेदेत्युच्यते" इति "अर्थाभिज्ञ एव वेदेत्युच्यते" इति चोक्तं महाभाष्य इति चेत्—न ; "सोऽहं भगवो मन्त्रविदेवास्मि नात्मवित्" इत्यादौ विच्छब्दस्यार्थप्रतीतिपरत्वाभावेन विच्छब्दादर्थप्रतीत्यदर्शनात् । किंच यदि 'वेदवित्' इत्यादावसंप्रतिपत्तिः, तदा 'नोदाहरणमादर्तव्यम्' इति न्यायेन 'मन्त्रसाक्षात्कारवानयम्' इत्यादिकं संप्रतिपन्नमुदाहरणान्तरं भविष्यतीत्यदोषः । न ह्यत्र मन्त्रशब्दस्यार्थपरत्वे विप्रतिपत्तिरस्ति । लक्षणाबीजभूतं

वचःशब्दमुख्यार्थभूतवाक्यस्य लक्ष्यमाणार्थसंबन्धमुपपादयति—**अर्थाभिधायकं हि वाक्यमिति**। **सुधाशब्दलक्षणाभयाच्चेति**; अर्थे लक्षणाया अभ्युपगन्तव्यत्वादिति भावः। ननु रूपकपक्षेऽपि वचःशब्दस्यार्थे लक्षणावश्यकीति तुल्यमिति चेत्—सत्यम्; त्वन्मते सुधाशब्दलक्षणा वचसः सुधा वचःसुधेति वचःशब्दस्य षष्ठ्यर्थलक्षणाप्यभ्युपगन्तव्या; अस्मन्मते तु वचःशब्दमात्रे लक्षणेति भावः। ननु स्वाभिमते "उपमितं व्याघ्रादिभिः" "मयूरव्यंसकादयश्च" इति सूत्रानुशिष्टरूपकसमासेऽपि सुधाशब्दलक्षणा अविशिष्टा, सुधाशब्दस्य तत्सदृशपरत्वात्; "विशेषणं विशेष्येण" इत्यनियमे प्राप्त आरभ्यमाणस्यास्य सूत्रस्य विशेषणविशेष्यत्वनियमार्थत्वात्, भिन्नार्थयोर्वचःसुधाशब्दयोर्विशेषणविशेष्यभावस्य सुधाशब्दे सदृशलक्षणामन्तरेणायोगात्, आपादपरिसमाप्तेः "समानाधिकरणेन" इत्यधिकाराभ्युपगमाच्च; सुधाशब्देन भोग्यत्वमभिप्रेतमिति वक्ष्यमाणत्वाच्चेति चेत्—सत्यम्; अस्त्येव स्वपक्षेऽपि लक्षणा; तथापि सा "उपमितं व्याघ्रादिभिः" इति सूत्रानुशिष्टा; षष्ठीसमासपक्षे तु सुधाशब्दस्यार्थे लक्षणा न शास्त्रीया, अपि त्वैच्छिकी। अत एव "इन्द्रपीतस्य" इति भक्षमन्त्रे बहुव्रीहौ लक्षणाद्वयसद्भावेऽप्यैच्छिकलक्षणाद्वययुक्ततत्पुरुषपक्षपरित्यागेन शास्त्रानुशिष्टलक्षणाद्वययुक्तबहुव्रीहिपक्ष एवाश्रितः। इन्द्रेण पीत इति तत्पुरुषाश्रयणे पूर्वपद एका लक्षणा तथा पीतपदे पीतावयवलक्षणा। वक्ष्यति चाचार्यः "अन्तस्तद्धर्मोपदेशात्" इत्यत्र "हृदयपुण्डरीकमिति प्रयोगस्तु 'उपमितं व्याघ्रादिभिः' इति सूत्रविहितसमासत्वान्मुख्य एव" इति। केचित्तु रूपकसमासे शक्यतावच्छेदकाहार्यारोपस्यैव व्युत्पत्तेस्तत्र मुख्यत्वमेव। अत एव अन्नमयादावात्मशब्दस्य मुख्यत्वमिति "अन्वयादिति चेत् स्यादवधारणात्" इत्यादौ क्रियासमभिहारेण ग्रन्थकृद्व्यवहार इति वदन्ति। ननु "उपमितं व्याघ्रादिभिः सामान्याप्रयोगे" इति सामान्यधर्माप्रयोग एव समासविधानात् पूर्वाचार्यसुरक्षितत्वादेश्च सामान्यधर्मस्य प्रयुज्यमानत्वात् कथं समास इत्याशङ्क्य 'पुरुषव्याघ्रोऽभिरूपः' इत्यादिषु व्याघ्रशब्दविवक्षितशूरत्वरूपसामान्यधर्माप्रयोगेणाभिरूपशब्दप्रयोगेऽपि समासवत् सुधाशब्दविवक्षितभोग्यत्वरूपधर्माप्रयोगात् समास उपपद्यत इत्यभिप्रयन्नाह—**सुधाशब्देन भोग्यत्वमभिप्रेतमिति**। **आनन्त्यादीति**; आदिशब्देन गाम्भीर्याद्युच्यते। **आध्यात्मिकादीति**; आदिशब्देनाधिदैविकाधिभौतिक-

योर्ग्रहणम् । **समिति कैवल्यव्यावृत्तिरिति** ; नन्वेतद्वाक्यपर्यालोचनायां कैवल्यस्यापि संसारोन्मोचनकोटावनुप्रवेश एवाचार्याणामभिमत इति प्रतीयत इति चेत्—मैवम् ; समिति कैवल्यव्यावृत्तिरिति वदद्भिः कैवल्यस्य समीचीनसंसारनिवृत्तित्वाभावकथनेन संसारानुवृत्तेरेवाभ्युपेतत्वात् । प्राणशब्दस्य परमात्मपरत्वसमर्थनपूर्वकं परमात्मालाभे संसारस्य हेतुत्वं कथयतामाचार्याणां कैवल्ये संसाराभावस्याभिमतत्वे “ निमित्तापाये नैमित्तिकस्याप्यपायः” इति न्यायेन कैवल्ये संसाराभावेन परमात्मलाभस्यैवाभ्युपगन्तव्यत्वप्रसङ्गात् । वस्तुतस्तु व्यपगतप्राणात्मसंजीवनीमित्युक्ते व्यपगतप्राणानां संजीवनीं प्राणधारिकामित्येवार्थः प्रतीयते ; जीवनशब्दस्य प्राणधारणार्थत्वात् । ततश्च यः प्राणो व्यपगतः, तत्प्राणलम्भिकामित्यर्थः पर्यवस्यति । ततश्च व्यपगतपरमात्मरूपप्राणलम्भकत्वं कैवल्यस्याप्रसक्तमेव । कथं तर्हि समिति कैवल्यव्यावृत्तिरित्युच्यत इति चेत् ; इत्थम्—प्राणशब्दो जीवपरमात्मोभयपरः, भूमविद्यायां प्राणशब्दस्य जीवेऽपि प्रयोगात्, ततश्च संसाराग्निविदीपनेन व्यपगतप्राणानां जीवपरमात्मानुभवशून्यानां जीवनीमित्युक्ते कैवल्यस्यापि तदन्यतरजीवरूपप्राणलम्भकत्वमस्तीति तद्व्यावृत्त्यर्थं समित्युपसर्गः । ततश्च व्यपगतयावत्प्राणलम्भकत्वं समित्युपसर्गसिद्धमिति ग्रन्थाभिप्रायो द्रष्टव्यः । निषादस्थपत्यधिकरणन्यायेन कर्मधारयमभिप्रेत्याह—**बह्व्यो मतय इति** । एककर्तृकमतिभेदस्य परस्परव्याहत्यसंभवात् कर्तृभेदोऽवश्यं वाच्य इत्यभिप्रायेणाह—**बहूनां मतयो वेति** । **गायत्र्यवयवभूतैरिति** ; “ कद्रूश्च वै सुपर्णी च ” इत्यनुवाके “ तृतीयस्यामितो दिवि सोम आसीत् ; इति मन्त्रे च गायत्र्यामृताहरणस्य प्रसिद्धेरिति भावः । पिबन्त्वित्यनेन रस्यतायाः स्वरसतः प्रतीतेः अन्वहमित्यस्य तदतिशयद्योतकत्वं युक्तमिति मत्वाह—**रस्यतातिशयादिति** । ग्रन्थस्य तृप्तिकरत्वप्रतिपादनस्य मन्दफलत्वादाह—**यद्वा गभीरत्वादिति** ।

## श्रुतप्रदीपिका

अथ स्वग्रन्थस्यावान्तरविषयं स्वाव्याख्येयस्य व्याख्येयान्तराद्वैषम्यं च वदन् संक्षिप्तं शास्त्रप्रयोजनं च विशदीकुर्वन् व्याख्यानान्तरेभ्यः स्वग्रन्थस्य वैलक्षण्यं च दर्शयन्नर्थात् गुरूपासनरूपं मङ्गलमाचरति—**पाराशर्येति** । व्यासस्यैव बादरायणत्वं श्रुतिसिद्धम् । जन्मतः प्रकर्षं सूचयति पाराशर्यशब्देन । वचःशब्दोऽर्थपर्यन्तः, ‘ वेदवित् ’ इत्यत्र

वेदशब्दवत् । वचसः सुधामिति निर्वाहे रूपकप्रकरणानौचित्यं सुधाशब्दामुख्यत्वं च । अमृतत्वहेतुत्वात् सुधात्वरूपणम् । पूर्वभागादप्यव्यवधानेन ब्रह्मप्रतिपादनरूपा सेत्यभिप्राय उपनिषच्छब्दः । उपनिषदां वेदसारत्वाभिप्रायो दुग्धशब्दः ; यथा "आरण्यकं च वेदेभ्य ओषधीभ्यो यथामृतम्" इति । अब्धिशब्द आनन्त्यपरः । मध्यशब्देन सर्वश्रुतिमुख्यत्वमभिप्रेतम्, मध्यस्य सर्वप्रदेशानुगुण्यात् । अनेन स्वव्याख्येयस्य प्रमाणमूलता अवान्तरविषयश्च दर्शितौ । उद्धृतशब्देनातिनिम्नदेशनिमग्नोद्ग्रहणमभिदधता निःशेषार्थग्रहणं सूचितम् । परमप्रयोजनमाह—**संसारेति** । संसारस्याग्नित्वं तापत्रयात्मकतया । तत्राप्यवान्तरभेदं विद्यालब्धेः पूर्वं कदाचिदप्यनिर्वाप्यत्वं वैविध्यमनुपरतत्वं च द्योतयति विदीपनशब्दः । अनादिकालं बहुमुखश्रवणादिष्वन्यतमप्रकारेणालब्धपरमात्मानो व्यपगतप्राणाः । प्राणः परमात्मा, "प्राणमेवाभिसंविशन्ति" इति श्रौतप्रयोगात् । **संजीवनीमिति** परममोक्षहेतुत्वं विवक्षितम् । स्वग्रन्थस्य सत्संप्रदायमूलकतामाह—**पूर्वेति** । आर्थं गुरूपासनं चैतत्कीर्तनमुखेनात्र कृतम् । शंकरादिव्युदासाय पूर्वशब्दः । **सुरक्षिताम्**; न परमुपदेशेन, ग्रन्थनिर्माणेनापीति भावः । सा किमिति न प्रथितेत्यत्राह—**बहुमतीति** । बहूनां या मतयः तासां व्याघातो मिथो विरोधः, तेन दूरस्थिताम् । न यथावदप्रतिपत्तिमात्रम्, अन्यथा च प्रतिपत्तिरभूदिति भावः । तुशब्दः स्वग्रन्थवैषम्यपरः । सुधासमाख्यानुगुण्याय ममाक्षरैरित्यनुक्तिः ; गायत्र्यवयवामृताक्षरैरित्यर्थः । **सुमनसः** ; सारासारविवेकादिविचक्षणाः । **भौमाः** ; अधीतसाङ्गसशिरस्कवेदाःश्रुतकर्ममीमांसा भूलोकवासिनः । देशकालान्तरादिषु वृत्त्यादिसाफल्यमिति भावः । **पिबन्तु** ; सुधापानवदस्य श्रवणाद्यपि सुखरूपमित्यर्थः । **अन्वहम्** ; भोग्यतातिशयात् गभीरत्वाच्च ।

## नयप्रकाशिका

पाराशर्येति श्लोकेन तु स्वकीयग्रन्थे श्रोतव्यत्वबुभुत्साजननायोपनिषद्विषयव्याससूत्रगणस्य सुधात्वरूपणव्याजेन विषयप्रयोजनसंबन्धान् स्वशास्त्राधिकारिणश्च प्रदर्शयद्भिर्भाष्यकारैरर्थाद्वेदान्तार्थस्य प्रथमप्रवर्तकत्वेन प्रथमगुरोः कृष्णद्वैपायनस्य तन्मतप्रवर्तकत्वेनापरेषां च गुरूणां स्वाचार्यपरंपरात्वेन स्मरणमपि क्रियते । गुरुस्मरणमप्यारम्भेषु मङ्गलत्वेन

पूर्वैराचरितम् । ननु चिरंतनग्रन्थेषु परमगुरुपरमात्मस्मरणादपि गुरुस्मरणस्य प्रथमभावित्वदर्शनात्तत्स्मरणस्य प्रथमभावित्वं युक्तम्; तथाहि—कथावतारव्याजेन वैष्णवे पुराणे श्रीमता पराशरेण स्वगुरुभूतवसिष्ठपौलस्त्यावनुस्मृत्य[1] पश्चाद्धि परमात्मस्मरणं कृतम् । तथा यामुनाचार्यादिभिरपि स्तोत्रादिषु तत्स्मरणस्य प्रथमभावित्वमाचरितम् । तत्कथमत्र व्यत्यासेन तत्स्मरणमिति चेत्—न; महाभारतादौ परमात्मस्मरणस्यापि प्राथम्यदर्शनादुभयथाप्याचारस्य युक्तत्वात् । स्वग्रन्थस्य व्याससूत्राणि विषयः; मोक्षस्तु प्रयोजनम्; संबन्धो व्याख्यानव्याख्येयभावः । ननु व्याख्यानस्य व्याख्येयार्थपरिज्ञानमेव प्रयोजनम्; न तु मोक्षः, तस्य वेदान्तार्थानुष्ठानप्रयोजनत्वादिति चेत्—न; व्याख्येयसूत्राणां वेदान्तार्थनिश्चयप्रयोजनकत्वेन केवलसूत्रार्थज्ञानस्य साक्षादप्रयोजनत्वाद्वाक्यार्थनिश्चयात्मकवेदान्तार्थज्ञानस्याप्यनुसंधानात्मकज्ञानप्रयोजनकत्वेन साक्षादप्रयोजनत्वात्तस्यापि मोक्षप्रयोजनत्वेन तथात्वान्मोक्षस्यैव पुरुषार्थत्वेन प्रयोजनत्वस्य [2]युक्तत्वात् । न हि [3]दुःखात्मककेवलसूत्राद्यर्थज्ञानप्रयोजनाय पुरुषप्रवृत्तिः । अतः सूत्रतद्विषयादेर्यत्परमप्रयोजनं ग्रन्थस्यापि तदेवेति युक्तम् । अत एव हि संसाराग्निविदीपनेत्याद्युक्तिः । **पाराशर्यवचःसुधाम्;** कृष्णद्वैपायनसूत्रात्मकवचःसुधाम् । अत्र वचःशब्दः सार्थसूत्रपरः, केवलशब्दात्मकसूत्रगणस्य सुधात्वरूपणानुपपत्तेः । तस्यार्थद्वारा हि पुरुषार्थहेतुत्वम् । केवलवचःपरत्वे चोत्तरपदानन्वयः । सुधात्वमेव विशिनष्ट्युत्तरपदैः । उपनिषदां दुग्धाब्धित्वरूपणेन गाम्भीर्यविस्तृतत्वे सूचिते । ततो न्यायानपेक्षं तदर्थानां दुर्ग्रहत्वमपि सूचितम् । तस्याब्धेरुद्धृतत्ववचनात् सारत्वं च । न ह्येतन्न्यायव्यतिरेकेणोपनिषत्सारार्थनिश्चयः । तदुद्धरणकर्त्रस्फूर्तावपि सामर्थ्यात् पाराशर्यस्यैव कर्तृत्वम्, अन्यवाक्यस्यान्येनोद्धारानुपपत्तेः । ननु सूत्राणां मानुषत्वादुपनिषद्योनित्वमनुपपन्नम्; न च मन्वादिस्मृतिवत् तत्सूत्राणां स्मृतित्वेन तद्योनित्वमिति वाच्यम्, तेषां न्यायत्वेन प्रत्यक्षाप्रत्यक्षवेदसाधारण्येनेतिकर्तव्यतात्वात्; न्यायस्य चोहापरपर्यायज्ञानत्वान्न वेदमूलत्वोपपत्तिरिति चेत्—न; उपनिषद्वाक्यानां पूर्वापरपर्यालोचनया न्यायात्मकचिन्तोत्पत्तेस्तद्योनित्वस्योपपन्नत्वात् । तदुक्तं नीतिज्ञैः—

---

१. **दीनुपस्तुत्य** A. २. **प्रयुक्तत्वात्** A. ३. **दुःखरूप** A.

" मीमांसासंज्ञकस्तर्कः सर्वो वेदसमुद्भवः ।
स्रोतोवेगरुमाप्राप्तकाष्ठाम्बुलवणत्ववत् ॥ " इति ।

उद्धृतपदेन सूत्राणामुपनिषद्विषयत्वमपि सूचितम् । संसार एवाग्निः **संसाराग्निः,** तस्माद्विदीपनानि विशिष्टद्दीपनानि, अतिशयिततापा इत्यर्थः । संसारः कर्मसंबन्धः; तन्निमित्ता ह्याध्यात्मिकादयस्तापाः, व्यपगतप्राणा नाशितात्मसत्ताकाः ; तेषामात्मनां संजीवनीम् आत्मोज्जीवनकरीम् ; अविद्यया विनाशितात्मस्वरूपाणां वेदान्तार्थ एव हि स्वरूपप्राप्तिरूपात्मोज्जीवनहेतुः । आत्मनां नित्यत्वेन स्वरूपानाशेऽपि कर्माख्ययाविद्यया धर्मभूतज्ञानस्य संकोचात्मकनाशात्तद्द्वारेण नाशो विद्यत एव । सुधापि व्यपगतप्राणत्वेन नष्टसत्ताकदेहोज्जीवनहेतुः । अत एव हि देवानाममरत्वम्, चिरकालेनापि देहक्षरणाभावात् । आत्मानस्तु सर्वत्र नित्याः । अतो न तद्द्वारामरत्वम् । अत्रापि केवलसूत्रगणस्य तदर्थस्य वा यद्यपि नात्मोज्जीवनहेतुता, तथापि वेदार्थनिश्चयहेतुत्वेन तद्द्वारा तद्धेतुत्वमस्त्येव । अत एव ह्यत्र तस्य सुधात्वरूपणम् । **बहुमतिव्याघातदूरस्थितां पूर्वाचार्यसुरक्षिताम्** इत्यन्वयः । वृत्तिकारादिपरंपरागतामपि मिथ्यावादिप्रभृतिबहुमतिव्याघातदूरस्थिताम् ; बहुमतिभिर्यो व्याघातः—मिथ्यावादिप्रभृतीनामेकैकस्याप्येकविषयत्वेन परस्परविरुद्धबाहुमत्यं बहुमतिशब्देन सूच्यते । तेषामेकविषयबाहुमत्यं भाष्ये तत्र तत्रोच्यते । व्याघातो बाधः—तेन दूरस्थितां यथार्थत्वेनाप्रकाशिताम् । तर्हि संप्रदायो विच्छिन्नः, अन्यथैकविषयत्वेन परस्परव्याहतमतोत्थित्यनुपपत्तेरित्यत्राह—**पूर्वाचार्यसुरक्षितामिति** । द्रमिडाचार्यादिभिः सुरक्षितामप्रमादेन रक्षिताम् । प्रमादे हि संप्रदायविच्छेदः । सुधापि बहुमत्यसुरादिव्याघातदूरस्थिता, देवैः सुरक्षिता च । नन्वस्यैव ग्रन्थस्य व्यासादिपूर्वाचार्यपरंपरागतार्थपरत्वं नान्यव्याख्यानस्येत्यत्र किं प्रमाणमित्यत्राह—**अनीतां तु निजाक्षरैरिति** । तुशब्दः पूर्वोक्तशङ्कानिरासाय[1] । सूत्रस्य वाक्यात्मकत्वात् तस्य च परप्रत्यायनार्थत्वेन प्रयुज्यमानत्वात् स्वरसतो यदर्थपरत्वं युक्तं तदर्थ एव वक्तुरभिमतः, नान्यः । मिथ्यावादिप्रभृतिमतानां तु स्वरसतः सूत्रपदानन्वयः स्पष्ट एव । तच्चोत्तरत्र प्रकाश्यते । अत एव तन्म-

---

१. **व्युदासाय** A

तानां न सांप्रदायिकत्वम् । निजाक्षरैः सूत्रगताक्षरैः । अयमर्थः—बोधायनवृत्तेर्विस्तीर्णत्वात् टङ्काद्याचार्यपरंपराभिः संकुचितग्रन्थैरुपदेशपरंपराभिश्च मिथ्यावादिप्रभृतिबहुमतिव्याघातेऽपि सुरक्षितत्वात् गूढामत्यन्ताप्रकाशितां निजाक्षरैः स्फुटं प्रकाशितामिति । **सुमनसो भौमाः** ; सात्त्विकगुणाधिका ब्राह्मणाः । "एते वै देवाः प्रत्यक्षं यद्ब्राह्मणाः" इति ब्राह्मणानां हि [1]भूसुरत्वप्रसिद्धिः । ब्राह्मणग्रहणं विद्याधिकारित्रैवर्णिकोपलक्षणार्थम् । अमृतत्वरूपणसिद्ध्यर्थं तु त उपात्ताः । **अन्वहं** प्रतिदिनम् । **पिबान्त्विति** प्रार्थनायाम् । सा च भाष्यकाराणां परदुःखासहिष्णुतया । श्रवणादिवेलायामपि प्रीतिहेतुत्वप्रदर्शनाय च सुधात्वरूपणम् ; न केवलममृतत्वप्रदर्शनाय । अस्य श्रवणादिवेलायामप्यमृतास्वादवत् सुखं भवतीति तात्पर्यम् । सुधापि निजाक्षरैरानिता ; निजाक्षराणि नाम वेदाक्षराणि । वेदस्यापौरुषेयत्वान्निजत्वम्[2] । "कद्रूश्च वै सुपर्णी च" इत्यनुवाके गायत्र्या सोम आहृत इति प्रतीतेः । "तृतीयस्यामितो दिवि सोम आसीत् तं गायत्र्याहरत्" इति चान्यत्र श्रूयते । गायत्री च छन्दोरूपाक्षरात्मिका । ननु गायत्र्या सोमाहरणे सुधायाः किमायातमिति चेत्—न ; सोमशब्दस्य सुधापर्यायत्वात् । महाभारतादौ वेदमयेन सुपर्णेन विनतायाः स्वजनन्या दासीत्वमोक्षणाय भूलोकं प्रति स्वर्लोकादमृतमानीतमिति प्रसिद्धम् । सुपर्णीविनताशब्दौ चैकार्थपरत्वेन प्रसिद्धौ । गायत्रीशब्दश्च छन्दोऽधिदैवतपक्षिराजपरः । तदनुवाक एव सुपर्णस्य छन्दोमात्रत्वं[3] श्रूयते । "दिवं सुपर्णो गत्वा सोमं वज्रिण आहरत्" इत्यादौ च सोमाहरणं सुपर्णकृत्यमिति प्रतीयते । छन्दोऽङ्गिसुपर्णकृत्यमङ्गभूतच्छन्दस्यारोप्य श्रुतौ गायत्र्या सोमस्याहृतत्वमुक्तम् । अतो निजाक्षरैरिति तदेवाभिप्रेतम् । अहःशब्द एकाहादिक्रतुपरः । प्रतिक्रतु च ब्राह्मणैः सोमः पीयते । एतेनात्मानं भाष्यकारो ग्रन्थारम्भे स्वेष्टसिद्ध्यर्थं भगवन्तं सुपर्णं भावयामासेति प्रतीयते ; यथा सीतान्वेषणार्थं समुद्रं लिलङ्घयिषुराञ्जनेयः "सुपर्णमिव चात्मानं मेने स कपिकुञ्जरः" इत्यादौ तस्य तथाविधानुसंधानं स्मर्यते ।

---

१ सुरत्व G.

२. निजाक्षरत्वं G. निजशब्दो नित्यपर इति भावः

३. मातृत्वं A.

**तत्त्वटीका**

अथ "नमस्कृत्य हृषीकेशम्" "नमो भगवते तस्मै व्यासाय" इत्याद्याचार्यक्रमेणावरगुरुकीर्तनादिरूपमङ्गलगर्भावान्तरविषयाद्युक्त्या विविदिषितस्य स्वप्रबन्धस्यानारम्भतां निरस्यति—पाराशर्य इत्यादिना व्याख्यास्यन्ते इत्यन्तेन ।

कुहकोक्तं भ्रमोक्तं वा निष्फलं निष्परिग्रहम् ।
स्पष्टं दुर्निर्वहं बोद्धृहीनमन्योज्ज्वलं न हि ॥ १८५ ॥

यद्येतच्छास्त्रं लोकायतादिवत्प्रतारकप्रोक्तं भ्रान्तिमूलं निष्प्रयोजनमपरिगृहीतं स्पष्टार्थं विवक्षिते नेतुमशक्यमनधिकारिकमन्यतश्चरितार्थं वा स्यात्, न तर्हि व्याख्येयमिति शङ्कात्र क्षिप्यते। परान् बाह्यकुदृष्टीन् प्रमाणतर्कशरैराशृणातीति पराशरः; तस्यापत्यं पाराशर्यः; न तादृशापत्यमतादृक्स्यादिति व्यक्त्यै पाराशर्योक्तिः। श्रुतिश्च—"स होवाच व्यासः पाराशर्यः" इति। [1]अत्र स्वगुणः पितृगुणेन ख्याप्यते। नात्र सूत्रकृद्बादरायणनामान्य इति मन्तव्यम्;

"द्वीपे बदरिकामिश्रे बादरायणमच्युतम् ।
पराशरात्सत्यवती पुत्रं लेभे परंतपम् ॥"

---

१. अत्रायमाचार्याणामाशयः—यद्यपि "गर्गादिभ्यो यञ्" इति गोत्राधिकारे यञ् विहितः, तथापि "पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः" इति भगवता पाणिनिना व्यासे पाराशर्यशब्दप्रयोगात् पराशरशब्दादनन्तरापत्येऽपि यञ् भवतीति ज्ञायते। अनन्तरापत्ये गोत्रत्वारोपेण निर्वाहस्तु न प्रकृतानुगुणः। जन्मोत्कर्षः पितृगुणेन स्वगुणख्यापनं चानन्तरापत्य एव ह्यतिशयेन स्वरसः। यदि तु औपचारिकतयापि "पाराशर्यशिलालिभ्याम्" इति सूत्रे पाराशर्यशब्दप्रयोगनिर्वाहे नानन्तरापत्ये यञो ज्ञापकत्व तस्येति मन्यते तदेव साधनीयम्—"स होवाच व्यासः पाराशर्यः" इति पराशरानन्तरापत्ये व्यासे पाराशर्यशब्द प्रयुञ्जाना श्रुतिरेव पराशरशब्दादनन्तरापत्ये यञः साधुत्वमनुमन्यते। न हि श्रुतिं कस्मिंश्चिदर्थेऽभिनिविशमानां स्मृतिरुपरोद्धुं प्रभवति, "विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम्" इति श्रुतिविरुद्धस्मृतेरप्रामाण्यस्थापनात्। न चेदं व्याकरणस्य श्रुतिविरोधेऽप्रामाण्यकल्पनमसांप्रदायिकम्ः। तथाहि—"प्रयोगोत्पत्त्यशास्त्रत्वाच्छब्देषु न व्यवस्था स्यात्"

इत्यादिप्रसिद्धेः । तस्य च[1] ब्रह्मसूत्रकृत्त्वं च[2] स्कान्दोक्तम्—

" अवतीर्णो महायोगी सत्यवत्यां पराशरात् ।
उत्सन्नान्भगवान्वेदानुज्जहार हरिः स्वयम् ॥
चतुर्धा व्यभजत्तांश्च चतुर्विंशतिधा पुनः ।
शतधा चैकधा चैव तथैव च सहस्रधा ॥
कृष्णो द्वादशधा चैव पुनस्तस्यार्थवित्तये ।
चकार ब्रह्मसूत्राणि येषां सूत्रत्वमञ्जसा " ॥ इति ।

" ब्रह्मसूत्रपदैश्चैव " इति भाविदर्शिभगवद्वाक्यं सूत्रपश्चाद्भावि वा स्वयमेव भारते न्यवध्नात् । सूत्रविषयतया च तद्वाक्यरूपा प्राक्तनी भाविनी वा कृतिरुदाह्रियत इति न पौर्वापर्यविरोधः ।

अथ वानादिसिद्धत्वात्स्मृतिसूत्रप्रवाहयोः ।
परस्परगृहीतिस्तु न विरोधाय कल्पते ॥ १८९ ॥

आह च परभाष्यव्याख्याता—

" ब्रह्मसूत्रकृते वेदव्यासायापरवेधसे ।
ज्ञानशक्त्यवताराय नमो भगवतो हरेः ॥ " इति ।

सुधाशब्देनास्यार्थस्य भोग्यत्वं दर्शयतीति विवरणम् । अत्र च—वचसः सुधेति विग्रहे सुधाशब्दस्य गौणी वृत्तिः । रूपकप्रकरणानुरूप्येण वा वचःशब्दलक्षितस्तदर्थः सु-

---

इत्यधिकरणे शास्त्रदीपिकायां—' वेदविरुद्धं चेदं व्याकरणम्; " दृष्टं साम " इत्यधिकृत्य " कलेर्ढक् " " वामदेवाड्ड्यड्ड्यौ " इत्युक्तम् । वेदे च " यदकालयत् तत् कालेयस्य कालेयत्वम् " " वस्तु वामं समभवत् तस्माद्वामदेव्यम् " इति । तस्मात् वेदबाधादप्रमाणमिति पूर्वपक्षं कृत्वा सिद्धान्ते वेदविरुद्धांशे कामं भवत्वप्रमाणं सवेवेष्टनादिस्मरणवत्; न तावता सर्वाप्रामाण्यम्; एवं पदानर्थक्यवाक्यस्फोटाभ्युपगमोऽपि न न्यायमूल इति न्यायाभावादप्रमाणमिति वेदस्वारस्यविरुद्धानामप्रामाण्यमेव स्थिरीकृतम् ।

१. चोऽत्रावधारणे । अयोगान्ययोगव्यवच्छेदावभिप्रेतौ ।
२. चोऽत्र समुच्चये । वेदोद्धरणविभागादि समुच्चीयते ।

10

धात्वेन रूप्यते । यद्वा—सूत्रमेव वा सुधेति रूपितम् । उपनिषद्भिमर्शोत्थन्यायरूपार्थद्वारा तूद्धृतत्वाद्युक्तिः । ननु श्लेषोपस्कृतनिजाक्षरानीतत्वादिसामान्यप्रयोगे कथमिह "उपमितम्" इत्यादिना समासः ? इत्थम्—समाससूच्यं स्वादुत्वसामान्यमिहाप्रयुक्तम् ; तदन्यस्य प्रयोगेऽपि न दोषः ; "भाष्याब्धिः क्वातिगम्भीरः" इत्यादिवत् ।[1] वैधर्म्यरूपत्वं वा विशेषणेष्विह सर्वेषु योज्यम् । सुधा हि अमृताक्षरोपचरितैरन्यस्य छन्दसोऽक्षरैरानीता ; इयं तु स्वाक्षरैरेव । सुधा किल केवलदुग्धाब्धिमध्योद्धृता, इयं तु उपनिषद्दुग्धाब्धिमध्योद्धृता । इत्थं शेषमपि योज्यम् ।

साधर्म्यात्स्वादुतासिद्धिस्तथा स्वादुतमत्वधीः ।
वैधर्म्यादिति वैषम्यं भाव्यमत्र मनीषिभिः ॥ १८७ ॥

यद् विवक्षितसामान्यं तत्प्रयोगो निषिध्यते ।
उक्तिस्तदन्यसामान्यविषया न विरुध्यते ॥ १८८ ॥

विवक्षितं तु सामान्यं स्वादुत्वादिकमिष्यते ।

---

१. एवं सामान्यधर्मप्रयोगोऽस्तीति शङ्कमानं प्रति तन्मतान्वारोहेण परिहारमुक्त्वा "अन्वारुह्योक्तिदैन्यं नहि सहत ऋजुः सूत्रकृद्भावदूकः" इतिरीत्या तदनादरेण मुख्यपरिहारमाह—वैधर्म्यरूपत्वं वेति । अमृताक्षरेति ; निजशब्दो नित्यपर इति भावः । ननु उपनिषदित्यादीनां सुधावैधर्म्यपरत्वे सुधाशब्दप्रयोगानुपपत्तिः, सुधासाधर्म्यविवक्षायां वैधर्म्योक्त्यनुपपत्तिरित्यत आह—साधर्म्यादिति । सुधाशब्देनानिष्टनिवृत्तीष्टप्राप्तिसाधनत्वातिरेकेण स्वतोभोग्यत्वं विवक्षितम् । उपनिषदित्यादिना तदविरुद्धं भोग्यतमत्वं विवक्षितम् । तथाहि—प्रसिद्धसुधाया दुग्धाब्धिमध्योद्धरणं प्राकृतामरत्वहेतुभूतम् ; वचःसुधाया उपनिषद्दुग्धाब्धिमध्योद्धरणं तु "तमेवं विद्वानमृत इह भवति" इत्याद्युक्तामृतत्वहेतुभूतम् । प्रसिद्धसुधा प्राकृतप्राणप्राप्तिकरी, वचःसुधा तु परमपुरुषरूपप्राणप्राप्तिकरी । प्रसिद्धसुधा देहार्थं सुरक्षिता, वचःसुधा तु आत्मार्थं सुरक्षिता । प्रसिद्धसुधा देहनाशहेतुदूरस्थिता, वचःसुधा तु आत्मनाशहेतुदूरस्थिता । प्रसिद्धसुधा कद्रूजयार्थं गायत्र्यक्षरैर्हेतुभिः सुपर्णेनानीता, वचःसुधा तु बाह्यकुदृष्टिनिरसनार्थं सूत्राक्षरैर्हेतुभिर्भाष्यकारैरानीता । प्रसिद्धसुधा देवानां कदाचित्पानयोग्या, वचःसुधा तु भौमानामपि सुमनसामन्वहमनुभवयोग्येति स्वादुतमत्वसिद्धिरिति भावः ।

तत्पुनर्नोच्यते साक्षात्समासस्तेन सिध्यति ॥ १८९ ॥

अविवक्षितसामान्यप्रयोगः काव्यशास्त्रयोः ।

दृश्यते बहुशस्तस्मान्न समासोऽत्र दुष्यति ॥ १९० ॥

"ओषधीभ्यो यथामृतम्" इतिवच्छिरःशब्दाभिप्रायव्यक्त्यर्थ उपनिषच्छब्दः। उप निषीदति अव्यवधानेन नित्यं समन्वेतीत्यनन्यपरांशोक्तिः; तथा च वाक्यम्—"उपनिषण्णत्वाद्वा उपनिषत्" इति। तत्र द्रमिडभाष्यम्—"गहने हीयं विद्या संनिविष्टा" इति। तस्य च वामनटीका—"गहने ब्रह्मणि उपनिषण्णा" इति। भाष्यस्य सूत्राणि, तेषामुपनिषदः, तासां ब्रह्मेति विषयक्रमः। प्रयोजनानि च यथार्हाणि। "आरण्यकं च वेदेभ्यः" इति श्रुतिधेनुसारभूतस्वादुतमरसतया आनन्त्यगाम्भीर्यादिभिश्च दुग्धाब्धित्वोक्तिः। मध्यस्याशेषपर्यन्तासत्तिसाम्यात्तदुक्त्या सर्वश्रुत्यानुगुण्यव्यक्तिः। उद्धृतत्वोक्त्यार्थस्याकल्पितत्वमामूलं ग्रहणं च ख्याप्यम्। संसारेत्यादिकमपेक्षिततमावान्तरप्रयोजनकथनम्, "अस्ति ब्रह्मेति चेद्वेद" इत्यादिश्रुतेः; वाक्यार्थनिर्धारणे च सूत्राणां विश्रमात्। अचिद्भिरेकीकृत्य जन्मादिप्रवाहप्राप्तिः ससारः। यद्वा संसरत्यनेनेति संसारः कर्म; स तु स्वर्गादेरपि तापत्रयमयत्वादग्नितयोक्तः। दीपनं क्लेशकर्मादिज्वालोद्धतिः; सा चापवर्गप्रतिकूलतया स्वसंसृष्टनाशकावस्था। तद्वैविध्यमविद्यादिभेदात्पञ्चधा त्रिधा द्विधेत्यादि तत्र तत्र कथ्यते। अत्र शारीरादिविविधदुःखावहतया च वैशिष्ट्यं विशब्दार्थः। अत्र प्राणः प्राणिनां प्राणनहेतुः परमात्मा,

"न प्राणेन नापानेन मर्त्यो जीवति कश्चन।
इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितौ ॥"

"प्राणस्य प्राणम्," "प्राणमेवाभिसंविशन्ति" इत्यादिश्रुतेः। "प्राणस्तु प्रणवे जीवे जीविते परमात्मनि" इति च पठ्यते। अपगतः अतिदूरस्थः शास्त्रेषु दर्शयत्स्वपि कूटयुक्त्यादिभिरद्य यावत् 'असद्ब्रह्म' इति वेद्यतां प्राप्तः। विशब्दः श्रवणाद्यन्यतमेनाप्यनाघ्रातत्वपरः। विशेषतो वापगतः, स्वयमवतीर्य स्वात्मानं दर्शयत्यपि व्यावृत्ततया दुर्दर्शः। अत्र "प्राणो ज्ञानम्" इति न्यायसुदर्शनम्। आत्मनां तद्गुणसारतया तदंशोक्तिः। तदा व्यपगतिरतिसंकोचः। व्यपगतप्राणानां संजीवनं नाम बाह्यकुदृष्ट्य-

नपहार्यप्राणस्थापनम् ; तन्मुखेन रक्षोक्तिसंक्षिप्तपरमप्रयोजनविवरणं वैतत् । तदा तूपसर्गेण स्वात्मप्रापणादिमात्रव्युदासः । पूर्वाचार्याः बौद्धजैनगन्धिभ्योऽन्ये । औपदेशिकी रक्षा तदैव तत्रैव ; ग्रान्थिकी तु कालान्तराद्यनुच्छेदात् सुरक्षोक्ता ।

रक्षितत्वं तु रामार्यैस्त्वर्थ्यन्तार्थे हि सूचितम् ।
आत्मसिद्ध्यादिभिः प्रोक्तं यामुनार्यनिबन्धनैः ॥ १९१ ॥

सुधासुरक्षितशब्दाभ्यां वक्तृस्तुतिरार्थी । सुधा तु सुरगुरुचक्रयन्त्रादिभिर्दृढगुप्ता । सुरक्षितत्वेऽपि त्यक्तसंप्रदायैः कुदृग्भिः क्षोभितत्वमाह—**बहु** इति । बह्व्यः मिथो विरुद्धाः बहूनां वा मतयः, ताभिर्व्याघातः विविधा अभिव्याप्ता पीडा ; स्वारसिकधीविरोध इत्यर्थः । तेन दूरस्थितां बोद्धॄणां रजस्तमस्तारतम्यादबोधासमग्रबोधान्यथाबोधार्हामित्यर्थः ।

अबोधश्चायथाबोधस्तत्त्वबोधविरोधिनौ ।
अनिश्चितावबोधेऽपि तथाबोधकता स्थिता ॥ १९२ ॥
सद्भिर्यदि विगीयेत न संगृह्येत पश्चिमैः ।
न तन्मतानुसारश्च सत्यः स्याद्व्याजिहीर्षतः ॥ १९३ ॥
कुदृष्टिभिश्च बाह्यैश्च यदि वाभ्युपगम्यते ।
कः स्वपक्षतया रक्ष्यः परपक्षश्च को भवेत् ॥ १९४ ॥
तदत्र चतुरध्याय्यां साधनाक्षेपभागयोः ।
निदानमभिसंधाय निर्दिष्टं भेदतो द्वयम् ॥ १९५ ॥

सुधा तु विरुद्धमतिदैत्यादिव्याघातभयात् दूरस्थिता । यद्वा कद्रूविजितायाः सुपर्ण्यास्तथा बहुमतिव्याघातदशायामात्मनिष्क्रयणार्थमाहर्तव्यतया दूरे तृतीयस्यां दिवि स्थिता । स्वव्याख्यानस्याप्यन्यैर्व्याघातादसामर्थ्यापरिहार इत्यत्राह—**आनीताम्** इति । बुद्ध्यासन्ने स्वार्थे स्थापिताम् । एतेन व्याख्यातद्वतोः संबन्धः शोधितः । परेष्टव्यावहारिकसाधकव्यावृत्त्यै तद्व्यनक्ति—**निजाक्षरैरिति** । वचःप्रस्तावात्तदक्षराणि निजाक्षराणि, सूत्राक्षराणीति वक्ष्यमाणत्वात् । यथा विवरणम्—"सूत्राक्षराणि यमर्थं स्वरसतो बोधयन्ति स एव सांप्रदायिकः ; वक्तुः स्वसमीहितार्थवाचकशब्दप्रयोगव्युत्पत्तेः स्वरसतः परप्रत्यायनार्थत्वाच्छब्दप्रयोगस्य" इति । बहूनां व्याख्यानानां मिथो व्याघाते व्याख्येयस्वारस्यं

संप्रदायव्यवस्थापकमिति भावः । सुधा तु सोमाख्या सौपर्णाख्यानप्रसिद्धैर्गायत्र्यवयवैरमृताक्षरैः सहानीता । मदुक्तिभिरिति वार्थः । तन्त्रतः सुधासमाधिसिद्ध्यै तथानुक्तिः । सुधायाः सुमनसो देवा भोक्तारः । यद्वा गायत्र्यभिमानिसुपर्णानीतायाः सोमलतारूपेण परिणताया एकाहाद्युपयुक्ताया भौमाः सुमनसः प्रतिसमयं भोक्तारः । वचोरूपायास्तु "ब्राह्मणा विविदिषन्ति" इतिवत् चोदनानर्हव्यावृत्ताः "सारासारविवेकज्ञाः" इत्यादिना स्वेनैवान्यत्रोक्ताः । एतेन ब्रह्मविद्यासंप्रदानमपि शिक्ष्यते । श्रुतं ह्येतच्छान्दोग्ये—"इदं वाव तज्ज्येष्ठाय पुत्राय पिता ब्रह्म प्रब्रूयात्प्रणाय्याय वान्तेवासिने नान्यस्मै कस्मैचन यद्यप्यस्मा इमामद्भिः परिगृहीतां धनस्य पूर्णां दद्यादेतदेव ततो भूयः" इति । प्रणाय्यः प्रश्रितत्वानसूयुत्वऋजुत्वादिभिर्योग्यः । न हि भौमाः सुमनस इति भूसुरमात्रोक्तिर्युक्ता, अधीतवेदवर्णत्रयार्हत्वान्मीमांसायाः । स्वतो विदुषां स्वर्गादिभुवां प्रायो न सूत्रव्याख्यानापेक्षा ; सत्यामपि तस्यां विशालधीयोग्यैर्वृत्त्यादिभिस्ते चरितार्थाः ; अतो न वृथात्र भौमत्वोक्तिः । **पिबन्तु** ; अयत्नं सुखमनुभवन्तु । यत्नो हि सुधाया मन्थनतस्तदानयनतश्च । **अन्वहम्** ; अतिगम्भीरत्वादत्यन्तहृद्यत्वाच्च ।

सुधेयं सूत्रकारेण हरिणेव समुद्धृता ।
आनीता भाष्यकारेण द्विजेन्द्रेणेति चाशयः ॥ १९६ ॥

## मूलभावप्रकाशिका

प्रेक्षावदुपादेयत्वाय विषयप्रयोजनाधिकारिविशेषान्निर्दिशति—**पाराशर्येति** । पाराशर्यो व्यासः, "स होवाच व्यासः पाराशर्यः" इति श्रुतिप्रसिद्धेः । यद्यपि व्यासस्य पराशरानन्तरापत्यत्वात् गोत्राधिकारविहितो "गर्गादिभ्यो यञ्" न संभवति, तथापि 'जामदग्न्यो रामः' इतिवत् गोत्रत्वारोपात् यञुत्पत्तिर्द्रष्टव्या । तस्य च वचः शारीरकं शास्त्रम् ; तदेव सुधा ; मयूरव्यंसकादित्वात्समासः । मध्योद्धृतामित्यनेन सर्वोपनिषत्पर्यालोचनलब्धत्वं व्यज्यते । **व्यपगतप्राणेति** ; प्राणशब्दो जीवपरमात्मोभयपरः ; भूमविद्यायां "प्राणो वा आशाया भूयान्" इत्यादौ प्राणशब्दस्य जीवे प्रयोगात् ; "यदिदं किंच जगत्सर्वं प्राण एजति निःसृतम्" इत्यादौ प्राणशब्दस्य परमात्मन्यपि प्रयोगात् । ततश्च संसाराग्निविदीपनेन व्यपगतप्राणानां जीवपरमात्मानुभवशून्यानां संजीवनीं प्राणलम्भिका-

मित्यर्थः । "जीव प्राणधारणे," इति हि धातुः । कैवल्यस्यापि जीवरूपप्राणलाभरूपतया तद्धेतुत्वप्रतीतिव्यावृत्त्यर्थः 'सम्' इत्युपसर्गः । तेन च व्यपगतश्रमवत्प्राणलम्भकत्वं सिध्यति । ततश्च जीवपरमात्मानुभवहेतुत्वं संजीवनशब्देन फलति । पूर्वाचार्यशब्देन बोधायनटङ्क-द्रमिडादयो विवक्षिताः । रक्षणं चान्यथाप्रत्यायकत्वलक्षणपीडापरिहारः । प्रसिद्धापि सुधा कैश्चित्सुरक्षिता हि भवति । **बहुमतीति**; वादिनां बहुविधान्योन्यव्याघातेन दूर-स्थितां यथावस्थितार्थप्रत्यायकत्वरहितामित्यर्थः । **आनीताम्**; यथावस्थितार्थप्रत्यायिका-मित्यर्थः । वचःशब्दस्यार्थलक्षणापक्षे सुरक्षितत्वदूरस्थितत्वानि साक्षादेव संगमयितुं शक्यानि; शब्द इव नार्थद्वारा संगमयितव्यानीत्यभिप्रेत्य वचः शब्दस्यार्थलक्षणापक्षमप्याश्रयन्ते । **निजाक्षरैरिति**; सुधापक्षे निजाक्षरैः गायत्र्यवयवभूतैरमृतबीजाक्षरैरित्यर्थः । "कद्रूश्च वै सुप-र्णी च" इत्यनुवाके "तृतीयस्यामितो दिवि सोम आसीत्" इति मन्त्रे च गायत्र्यामृताहर-णस्य प्रसिद्धेः । प्रकृते तु ममाक्षरैरित्यर्थः । **सुमनस** इति;

"सारासारविवेकज्ञा गरीयांसो विमत्सराः ।
प्रमाणतन्त्राः सन्तीति कृतो वेदार्थसंग्रहः ॥"

इत्युक्तलक्षणयुक्ता इत्यर्थः । अनेन "मदुक्तिश्चेदन्तर्मदयति सुधीभूय सुधियः किमस्या नाम [1]स्यादरसपुरुषानादरभरैः" इत्युक्तरीत्या असदपरिग्रहो न दोषायेत्युक्तं भवति । देवादीनां शारीरकार्थप्रतीतेः स्वग्रन्थानपेक्षित्वात् भौमा इत्युक्तम् । **पिबन्त्वन्वहमिति**; [2]अनेनातृप्तिकरानुभवविषयरसघनत्वं व्यज्यते । निजाक्षरैरानीतां पाराशर्यवचःसुधामिति स्वग्रन्थस्य पाराशर्यवचोव्याख्यानत्वाविष्करणेन शारीरकशास्त्रविषयस्यैव स्वग्रन्थविषयत्वं तज्ज्ञानस्यैव प्रयोजनत्वं चोक्तं भवति । संजीवनीमित्यनेन मोक्षस्य परमप्रयोजनत्वमुक्तं भवति । सुमनस इत्यनेन शारीरकार्थजिज्ञासवो मात्सर्यादिदोषरहिता आस्तिक्यादियुक्ता अधिकारिण इत्युक्तं भवति ।

**श्रीभाष्यम्**

**भगवद्बोधायनकृतां विस्तीर्णां ब्रह्मसूत्रवृत्तिं पूर्वाचार्याः संचि-क्षिपुः; तन्मतानुसारेण सूत्राक्षराणि व्याख्यास्यन्ते ।**

---

१. स्यादलसपुरुषेति पाठान्तरम् । २. अत्र तृप्तिपदेन अलंभावोऽभिप्रेतः ।

(जिज्ञासाधिकरणम् १) सू ॥ अथातो ब्रह्मजिज्ञासा ॥ १ ॥

अत्रायमथशब्द आनन्तर्ये भवति ; अतःशब्दो वृत्तस्य हेतुभावे । अधीतसाङ्गसशिरस्कवेदस्याधिगताल्पास्थिरफलकेवलकर्मज्ञानतया संजातमोक्षाभिलाषस्यानन्तस्थिरफलब्रह्मजिज्ञासा ह्यनन्तरभाविनी ।

## श्रुतप्रकाशिका

तर्हि पुरातनग्रन्था एव वाचयितव्याः ; किमपूर्वग्रन्थनिर्माणतत्प्रवर्तनयत्नगौरवेणेति शङ्कायामाह—**भगवदिति** । भगवच्छब्देन शंकरादिभ्योऽप्याप्ततमत्वमभिप्रेतम् । बोधायनग्रहणेन पूर्वाचार्यशब्दोऽप्यर्थाद्विवृतः । **विस्तीर्णां संचिक्षिपुः** इत्यनेन वृत्त्यादीनामत्रत्येष्वद्यतनजनेष्वकार्यकरत्वं सूचितम् । बोधायनेन ह्यतिविस्तीर्णा वृत्तिः कृता ; द्रमिडभाष्यकारादयो हि परपक्षप्रतिक्षेपाद्यनादरेणातिसंक्षिप्तान् ग्रन्थानरचयन् ; अतिविस्तीर्णातिसंकुचितग्रन्थानां साफल्यमायुष्मद्बुद्धिमज्जनप्रचुरेषु देशकालान्तरेष्वेव भवति ; न हीदानींतनपुरुषाणां सर्वेषां शतायुष्ट्वं यावज्जीवं ग्रन्थपरिश्रमः सहजधीविशेषाश्च सन्ति ; तस्मात्परमतनिरासाद्यर्थमनतिविस्तरतया सुग्रहत्वार्थं च सूत्रं व्याख्यातव्यमिति यावत् । **तन्मतानुसारेण** ; न तु स्वोत्प्रेक्षितमतान्तरेण । **सूत्राक्षराणि** ; सूत्रपदानां प्रकृतिप्रत्ययविभागानुगुणं वदामः । न तु स्वोत्प्रेक्षितार्थे सूत्राणि यथा कथंचिद्योजितानीति भावः । **व्याख्यास्यन्ते** ; व्याङ्भ्यामुपसर्गाभ्यामपेक्षितविस्तरानपेक्षितसंक्षेपौ द्योतितौ । ननु

"सूत्रार्थो वर्ण्यते यत्र वाक्यैः सूत्रानुकारिभिः ।
स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः ॥"

इति हि भाष्यलक्षणम् ; अतः सूत्रव्याख्यानरूपत्वाभावादखिलेत्यादिकं न भाष्यान्तर्भावीति चेत्—न ; सूत्रतात्पर्यार्थपरत्वाद्भाष्यान्तर्भाव्येव । सूत्रतात्पर्यार्थपरत्वं च श्लोकव्याख्याने स्पष्टम् । किंच मङ्गलाचरणं प्रारिप्सितग्रन्थाविघ्नपरिसमाप्त्याद्यर्थतया तदुपयोगीति तदन्तर्भाव्येव । शाबरशांकरादिभाष्येषु नमस्कारादर्शनादत्र नमस्कारक-

थनमयुक्तमिति चेत्—न ; "नमः प्रवरगुणैकास्पदाय" इति द्रमिडभाष्ये देवतागुरुनमस्कारश्रवणात् । शाबरशाङ्करयोस्त्वीश्वरानभ्युपगमात् जीवब्रह्मभेदानभ्युपगमाच्च नमस्यानादरः । अत्र तु सिद्धान्तानुरूप्यान्नमस्यात्यन्तोपपन्ना । शांकरग्रन्थोपक्रमे च व्याख्यातृभिर्नमस्काराद्यभावात्तु ग्रन्थत्वमाशङ्क्य युष्मदस्मदित्यादिग्रन्थे प्रत्यगर्थानुसंधानेनार्थान्मङ्गलाचारः कृत इति परिहृतम् ।

पूर्वं पदानि व्याचिख्यासुः प्रथममथशब्दं व्याचष्टे—**अत्रायमथशब्द आनन्तर्ये भवतीति ।**

"पदच्छेदः पदार्थोक्तिर्विग्रहो वाक्ययोजना ।
आक्षेपस्य समाधानं व्याख्यानं पञ्चलक्षणम् ॥"

इति हि व्याख्यानप्रकारः । ननु नैतौ अथातःशब्दौ व्याख्येयौ, प्रयोजनाभावात् । अज्ञानसंशयविपर्ययनिवृत्त्यर्थं हि व्याख्यानम् ; न तावदत्राज्ञानम्—आनन्तर्ये, प्रकृतस्य हेतुभावे च तयोः प्रसिद्धत्वात् । नापि संशयः, अर्थान्तरेषु सत्स्वपि तयोरुक्तार्थपरत्वेन प्रसिद्धिप्राचुर्यात् । न हि गोशब्दं शृण्वतः सास्नादिमति संशयो जायते । अत एव विपर्ययोऽपि दूरोत्सारित इति । अत्र ब्रूमः—आनन्तर्यवृत्तहेतुभावपरत्वनिर्णयस्य पूर्ववृत्तविशेषावगमसापेक्षत्वात्, तदप्रतीत्या प्रसिद्धिप्राचुर्यस्य सापवादत्वात्, अथशब्दस्याधिकारादिषु एतच्छब्दस्य च 'एतदुक्तं भवति' इत्यादिषु वक्ष्यमाणेऽर्थे तसेश्च सर्वविभक्त्यर्थवाचिनः 'इतः' इत्यादिषु पञ्चम्यर्थव्यतिरिक्तेऽर्थे च प्रयोगदर्शनात् संशयविपर्ययौ स्यातामिति तन्निरासाय अथातःशब्दव्याख्यानं युक्तमित्यतस्तौ व्याख्यायेते । अत्र तावत् अथशब्दस्याधिकारार्थत्वमयुक्तम् ; अधिकारो हि प्रस्तावः ; ब्रह्मजिज्ञासा प्रस्तूयत इति वचनं मन्दप्रयोजनम्, प्रारभ्यत इत्युक्तिं विनापि प्रारम्भादेव प्रारभ्यमाणत्वावगमात् । उच्यमानं हि वचनं 'ब्रवीमि' इत्युक्तिमन्तरेणापि संनिहितपुरुषेण 'उच्यते' इत्येवावगम्यते, न तु 'नोच्यते' इति । प्रस्तोतव्यत्वमुच्यत इति चेत्, तदानीमपि न्यायप्रतिपादकस्य सूत्रस्योपदेशाज्ञापनपरत्वाभावात् युक्तितः प्रारम्भयोग्येत्यर्थः स्यात् । योग्यत्वमशाब्दम् । नन्वध्याहारेण योजना स्यात् ; आनन्तर्यपक्षेऽपि 'कर्तव्या' इति ह्यध्याहर्तव्यमिति चेत्—न ; अधिकारार्थत्वपक्षेऽध्याहृतस्यापि पदस्यान्वयदौर्घट्यात् । यथा 'च योग्या' इत्युक्ते समुच्चेतुं योग्येत्यर्थो

न शक्याभिधानः, एवम् ‘ अथ योग्या ’ इत्युक्तेऽप्यधिकर्तुं योग्येत्यभिधानं हि न शक्यम् । अत एव हि महाभाष्ये—“ शब्दानुशासनं शास्त्रमधिकृतं वेदितव्यम् ” इत्युक्तम्, न तु ‘ अधिकर्तुं योग्यम् ’ इति । “ अधिकृतम् ” इत्यपि फलितार्थकथनम्; न तु वाचनिकोक्तिः, चादीनां द्योतकत्वात् । अत्र तु ‘ अधिकृतम् ’ इत्यर्थपरत्वे वैयर्थ्यमुक्तम् । शब्दानुशासनोपक्रमे त्वधिकारार्थत्वमगत्याश्रितम् । न ह्युपनीतेन वेदमधीयानेनाध्येतव्यस्य तदङ्गभूतस्य व्याकरणस्यासाधारणो वृत्तविशेषः संभवति । इह तु प्रयोजनवदर्थान्तरसंभवादधिकारार्थत्वाश्रयणमयुक्तम् । आनन्तर्यपरत्वे प्रयोजनवत्त्वं च वक्ष्यते । मङ्गलं तु नाथशब्दवाच्यम्; अपितु शङ्खस्वनादिवत् श्रूयमाणोऽथशब्दो मङ्गलावह इत्योंकारस्येवार्थान्तरपरत्वेऽपि मङ्गलं सिद्धमिति । ओंकारतुल्यो ह्यथशब्दः स्मर्यते—

“ ओंकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा ।
कण्ठं भित्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ ॥ ” इति ।

मङ्गलवाचित्वाभ्युपगमेऽपि मङ्गलरूपा ब्रह्मजिज्ञासेति ब्रह्मजिज्ञासा स्तुता स्यात्; ततश्च सूत्रस्यार्थवादता स्यात्, न तु न्यायनिबन्धनत्वम् । जिज्ञासाविशेषणत्वाभावे मङ्गलं भवतीति वाक्यभेदः स्यात् । प्रकृतादर्थादर्थान्तरपरत्वं चायुक्तम्; तद्धि प्रकृतमपेक्ष्य वक्ष्यमाणस्यार्थान्तरत्वज्ञापनम्; तच्च कल्पान्तरोपन्यासविवक्षायामेव दृष्टम् । अत्र तु कल्पान्तरोपन्यासाभावात्तदनुपपन्नम् । प्रश्नपरत्वमप्ययुक्तम्; वचनव्यक्तेः प्रश्नप्रतिवचनरूपत्वाभावात् । तदा हि ‘ किं ब्रह्मजिज्ञासा कर्तव्या ’ इत्युक्तं स्यात्; ‘ सा कर्तव्या ’ इति वाक्यान्तरेण प्रतिवचनं स्यात् । न च प्रतिवचनरूपं वाक्यान्तरमुपलभ्यते । अथशब्दस्य कार्त्स्न्यपरत्वे कार्त्स्न्येन सा कर्तव्येत्यर्थः स्यात्; सोऽनुपपन्नः, एकदेशकर्तव्यतायाः शङ्कितत्वाभावात् । कर्तव्यतामात्रं हि संशयपदम्; तन्निरासार्थं च सूत्रम् । किंच अधिकाराद्यर्थान्तरपरत्वमतःशब्दान्वयोऽपि निवारयति । अतःशब्दो हि प्रकृतमर्थं हेतुतया परामृशन्नथशब्दोपस्थापितं ब्रह्मजिज्ञासापदसामर्थ्याक्षिप्तं वा परामृशति । तत्र यद्यथशब्दोपस्थापितमधिकृतत्वं हेतुतया परामृशेत्, तदा ‘ अधिकृतत्वादधिकर्तव्या ’ इति हेतोः साध्याविशिष्टत्वं स्यात् । मङ्गलस्यानभिधेयतया न पदान्तरपरामर्शयोग्यता । वाच्यत्वाभ्युपगमेऽपि तस्य च प्रकृतापेक्षत्वस्य च कार्त्स्न्यस्य च पूर्वपक्षयुक्तिप्रत्यनीकत्वाभावात् तानि न हेतुतया परामर्शनीयानि । न ह्यमङ्गलत्वप्रकृतानपेक्षत्वाकार्त्स्न्यैः पूर्वपक्षोत्थानम् ।

ततश्च यथा धूमे बोधिते स्वयमेवासौ वह्निमनुमास्यतीति बुद्ध्या प्रयुक्ते 'धूमोऽस्ति' इति वाक्ये वह्न्यस्तित्वं न शाब्दम्--मुख्यार्थानुपपत्त्यभावेन वह्नौ लक्षणाया धूमशब्देऽभावात्--तद्वत् प्रारम्भयोग्यत्वस्य कथंचिदथपदप्रयोज्यप्रतीतिविषयत्वे सत्यपि न शाब्दत्वमिति भावः । ननु वह्नितात्पर्यके 'धूमोऽस्ति' इतिवाक्ये वह्न्यस्तित्वस्य शाब्दत्वमपि संभवत्येव, तात्पर्यस्यापि लक्षणाबीजत्वात्; 'अब्भक्षः' इत्यादौ यथाश्रुतार्थप्रतिपादनमात्रेण प्रयोजनानवाप्तेस्तन्मात्र-भक्षणस्य शाब्दत्वाङ्गीकारात्। नद्यां सिस्नासुं प्रति प्रयुक्ते 'नद्यां ग्राहाः सन्ति' इति वाक्ये 'तत्र मा स्नासीः इत्यादिवाक्यार्थलक्षकत्वस्य तान्त्रिकैरभ्युपेतत्वादितिचेत्-न;आरम्भयोग्यत्वस्य व्यङ्ग्यार्थतया शक्तिलक्षणान्यतरमूलकत्वाभावेन शाब्दत्वाभावात्, प्रसिद्धानन्तर्यार्थप्रतिपाद-नमुखेन वक्ष्यमाणप्रयोजनसंभवे अप्रसिद्धमन्दप्रयोजनकप्रारम्भार्थकत्वस्यायुक्तत्वाच्च । अथवा, अशाब्दमवाच्यमशक्यमित्यर्थः; योग्यत्वस्य कथंचिदमुख्यया वृत्त्या प्रतिपाद्यत्वसंभवेऽपि मुख्यत्वासंभवात्, मुख्यार्थग्रहणे संभवति तत्त्यागस्यानुचितत्वादिति भावः । **एवमथ-योग्येत्युक्ते** इति; यद्यपि अथातो ब्रह्मजिज्ञासा योग्या' इत्यध्याहारे अथेत्यस्याधिक्रियत इत्यर्थः, ततश्च 'अधिक्रियते ब्रह्मजिज्ञासा योग्या' इत्यर्थः स्यात्। योग्यत्वं च संनिधानात् अधिकार एव लभ्यते; यथा 'योग्या ब्राह्मणा आनीयन्ताम्' इत्युक्ते आनयनयोग्या इत्येव प्रतीयते। ततश्च 'प्रारभ्यते योग्या ब्रह्मजिज्ञासा' इत्युक्ते प्रारम्भयोग्येति प्रतीतिः सिध्यति, तथाप्यधिक्रियते योग्येति न शाब्दप्रतीतिः स्यादिति भावः। अत एव वक्ष्यति --"अधिकृतमित्यपि फलितार्थ-कथनं न वाचनिकोक्तिरिति"। **चादीनां द्योतकत्वादिति**; निपातानां द्योतकत्वस्य वाक्य-पदीये निर्णीतत्वादिति भावः । नन्विदमानन्तर्यार्थकत्वपक्षेऽपि समानमित्याशङ्क्य सप्रयो-जनत्वाप्रयोजनत्वाभ्यां वैषम्यमित्याह—**अत्र त्वित्यादिना**। **माङ्गलिकावुभाविति**; प्रयोजनार्थे ठक्प्रत्यय इति भावः । यद्यपि भूवादिसूत्रे अन्वयप्रतियोग्यनुपस्थापकस्यापि वाकारस्य मङ्गलार्थत्ववत् सप्रयोजनत्वं संभवति, तथाप्यन्वयप्रतियोग्युपस्थापकत्वेन वाक्यार्थान्वयित्वसंभवे गत्यभावस्वीकार्यमङ्गलमात्रप्रयोजनकत्वस्यायुक्तत्वमिति भावः । **प्रकृतादर्थादर्थान्तरपरत्वमित्यत्र** प्रकृतादिति पञ्चमी ल्यब्लोपे, न तु "अन्यारादि-तर" इत्यन्यार्थ इत्याह—**तद्धि प्रकृतमपेक्ष्येति** । अथशब्देन वक्ष्यमाणस्य कल्पा-न्तरस्य प्रकृतविषयत्वं हि ज्ञाप्यते; किं 'ब्रह्म सगुणमथनिर्गुणम्' इत्युक्ते प्रकृतं ब्रह्मापेक्ष्यैव निर्गुणत्वरूपकल्पान्तरमुपन्यस्यत इति प्रतीयते, न तु तदतिरिक्तं जीवं घटं वापेक्ष्येति; यथा

वा "अथाध्यात्मम्" इत्यादि। ततश्च प्रकृतापेक्षत्वमथशब्दार्थः; अत एवोत्तरत्रापि "न ह्यमङ्गलत्वप्रकृतानपेक्षत्वाकात्स्न्यैः पूर्वपक्षोत्थानम्" इति वक्ष्यति। **हेतौ साध्यावि-शिष्टत्वं स्यादिति**; नन्वानन्तर्यार्थत्वपक्षेऽपि नाथशब्दोपस्थापितमानन्तर्यं हेतूकर्तुं शक्यम्; न ह्यानन्तर्यात् ब्रह्मजिज्ञासा कर्तव्येति वक्तुं शक्यते, अपितु ब्रह्मजिज्ञासाक्षिप्तो ब्रह्मविचार एवातःशब्देन हेतुतया परामृश्यते; स एवाथशब्दनिर्दिष्टानन्तर्यप्रतियोगितयाप्यन्वेतीति वाच्यम्; तद्वदिहापि ब्रह्मजिज्ञासाक्षिप्तकर्मविचार एवातःशब्देन हेतुतया परामृश्यताम्, न त्वथशब्दोपस्थापितमधिकृतत्वमिति चेत्—न;

"उत्तरार्धादिशब्दानां सापेक्षार्थाभिधायिनाम्।
नापेक्षणीयसंबन्धात् प्रागर्थोऽध्यवसीयते॥"

इति न्यायेनाथशब्दस्य केवलानन्तर्याप्रतिपादकत्वेन पूर्ववृत्तकर्मविचारविशिष्टानन्तर्यप्रतिपाद-कतया कर्मविचारस्याप्यथशब्दोपस्थापितत्वेनानन्तर्यार्थत्वपक्षे अथशब्दोपस्थापितस्य कर्मवि-चारस्य अतःशब्देन हेतुतया परामर्शः संभवेत्; अधिकारार्थत्वपक्षे तु न तथेति वैषम्या-दिति भावः। ननु "मङ्गलानन्तरारम्भप्रश्नकात्स्न्येंष्वथो अथ" इत्यानन्तर्यादिवन्मङ्ग-लस्यापि सहपाठात् वाच्यत्वमेव स्यादित्यस्वारस्यादाह—**वाच्यत्वाभ्युपगमेऽपीति**। **पूर्वपक्षयुक्तिप्रत्यनीकत्वाभावादिति**; आनन्तर्यपक्षे तु कर्मणामल्पास्थिरफलत्वप्रतीति-सहितानन्तस्थिरफलापातप्रतीतिरूपाधिकारिविशेषणासंभवरूपपूर्वपक्षयुक्तौ कर्मविचारहेतुत्वो-पन्यासस्य प्रत्यनीकत्वादिति भावः। **न ह्यमङ्गलत्वप्रकृतानपेक्षत्वाकात्स्न्यैः पूर्वपक्षोत्थान-मिति**; यद्यप्यमङ्गलत्वादिना पूर्वपक्षेण मङ्गलत्वादीनां हेतुतया परामर्शः संभवति, मङ्गल-त्वादेस्तत्पूर्वपक्षिभिरनभ्युपेतत्वात्, उभयसंप्रतिपन्नस्यैव हेतूकरणीयत्वात्; तथापि क्षित्या-दिषु सकर्तृकत्वसाधने सावयवत्वसाधितस्य कार्यत्वस्य प्रसाध्याङ्गकस्य हेतुत्ववत् प्रसा-ध्याङ्गकानां मङ्गलत्वादीनां हेतुत्वं संभवतीति भावः। **प्रश्नवाक्यगतप्रश्नस्त्विति**; नन्वथ-शब्दोपस्थापितत्वेन प्रश्नस्यातःशब्दपरामर्शयोग्यत्वात् कुतो नातःशब्देन परामर्शः? न च तस्यासिद्धत्वात् न हेतुतया परामर्श इति वाच्यम्; न हि हेतुतया परामर्शदशायां हेतुतया परामृष्टव्यस्य तादात्विकसिद्धत्वमपेक्षितम्, 'भाविनो वर्षात् फलम्' इत्यादिप्रयोगदर्शनात्, 'प्रश्नेनार्थो ज्ञायते किम्?' इति प्रश्नवाक्य एव प्रश्नस्य तृतीयया हेतुत्वदर्शनात्। अन्यत्र

व्यावृत्तिः । कर्मज्ञानस्यैव पूर्ववृत्तत्वं कथम् ? अनन्तस्थिरफलापातप्रतीतिश्च कथमिति शङ्कायामधीतेत्यादिपदेन तदुपपादनम् । सशिरस्कवेदशब्देन कृत्स्नाध्ययनस्य विहितत्वं व्याख्यानपौर्वापर्यहेतुभूतव्याख्येयपौर्वापर्यनियमो भागद्वयस्यैकप्रबन्धत्वं च सूच्यते । साङ्गशब्देनानन्तस्थिरफलापातप्रतीतिजनकत्वे हेतुर्दर्शितः । "कृष्णपक्षे तथाङ्गानि"

"उपनीय तु यः शिष्यं वेदमध्यापयेद् द्विजः ।
सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते ॥"

इत्यादिवचनान्यधीतसाङ्गसशिरस्कवेदस्येत्यत्राभिप्रेतानि । एवमधीतेत्यादिषष्ठ्यन्तविशेषणद्वयेन ब्रह्मजिज्ञासापदसामर्थ्यानुगृहीताथातःशब्दोपस्थापितोऽधिकारिविशेषः प्रदर्शितो भवति । सम्यगधिगतकर्मा सांसारिकफलनिर्विण्णोऽनन्तस्थिरफलाकाङ्क्षी हि शास्त्रमधिकरोति । **अनन्तस्थिरफलब्रह्मजिज्ञासेति** ; अनन्तस्थिरफलरूपस्य ब्रह्मणो जिज्ञासेत्यर्थः । अनन्तस्थिरफलत्वस्य जिज्ञासाविशेषणत्वे जिज्ञासायास्तथात्वमागमोत्थविवेकादिजन्यज्ञानद्वारेणेति द्रष्टव्यम् । **अनन्तरभाविनी** इतिपदेनाथातःशब्दफलितं हेतोः शास्त्रान्तरनैरपेक्ष्यं विवक्षितम् । कर्मविचारानन्तरं ब्रह्मविचारस्य कर्तव्यत्वे कर्मणामल्पास्थिरफलत्वनिर्णयसहितानन्तस्थिरफलापातप्रतीतिरित्ययं विशिष्टो हेतुः, अतःशब्देन वृत्तस्य कर्मविचारस्य हेतुतयोक्तत्वात् ; कर्मविचारस्य साङ्गाध्ययनजन्यानन्तस्थिरफलापातप्रतीतिपूर्वकत्वादावृत्तिविधानादिभिः कर्मणामल्पास्थिरफलत्वावगमहेतुत्वाच्च । अयं विशिष्टो हेतुः अधिगताल्पास्थिरफलकेवलकर्मज्ञानतया संजातमोक्षाभिलाषस्येत्यनेनोक्तः । अत्राधिगतेति पदेन कर्मणः फलद्वारा हानाय ज्ञातव्यत्वं कण्ठोक्तम् । स्वरूपेणोपादानाय ज्ञातव्यत्वमपि कर्मविचारपूर्ववृत्तत्वे हेतुः ; अपेक्षितकर्मस्वरूपज्ञानं केवलकर्मणामल्पास्थिरफलत्वज्ञानं च कर्ममीमांसावसेयमिति हि वक्ष्यते । तत्र स्वरूपेणोपादेयताप्रतीतिरनन्तस्थिरफलापातप्रतीत्यन्तर्भूता । उपायत्वादितिकर्तव्यताविशेषैः सहैव ह्यनन्तस्थिरफलापातप्रतीतिरिति विशिष्टहेत्वन्तर्भाव उपरितनग्रन्थाविरोधश्च । ननु कर्मविचारो ब्रह्मविचारस्य निरपेक्षहेतुश्चेत् कृतकर्मविचारैः सर्वैरपि ब्रह्म विचार्येतेति स्वर्गार्थिकर्मानुष्ठानाभावप्रसङ्गः; नैवम्, अश्रुतमीमांसत्वेऽप्युपाध्यायादिवचनाद्येऽनुतिष्ठन्ति तेषां स्वर्गार्थानुष्ठानाविरोधात् । श्रुत्वापि ये स्वर्गार्थिनः तेषामदृष्टवैगुण्यादसमीचीनव्याख्यानश्रवणमूलस्यामुमुक्षुत्वस्य संभवाच्च । साङ्गाध्ययनं कर्मविचारपूर्ववृत्तं चेत्, अधीतसाङ्गवेदैः सर्वैरपि कर्म विचार्येत ; न च तथा क्रियते ; वेदेऽधीतेऽप्यश्रुतकर्ममीमांसा हि बहवो दृश्यन्ते ।

तेषां कर्मविचारानधिगतिरदृष्टदेशकालादिवैगुण्यात्, न तु साङ्गाध्ययनस्य पूर्ववृत्तत्वाभावादिति चेत्; तदिहापि तुल्यम्। तथा साधनचतुष्टयादिलाभेऽप्यनधिगतब्रह्मविचारानेकपुरुषदर्शनात्साधनचतुष्टयादेर्ब्रह्मविचारं प्रति नियमेन हेतुत्वं कथमिति परिचोदिते तत्पूर्ववृत्तवादिभिरप्यदृष्टादिवैगुण्याददोष इति परिहर्तव्यम्। तदिहापि तुल्यम्। दुष्परिहरदूषणान्तरसद्भावस्तेषां वैषम्यम्। तस्माद्घटनिष्पत्तेः कुलालादिवद्ब्रह्मविचारस्य कर्मविचारः पूर्वभावित्वेन नियतः। दृष्टादृष्टप्रतिबन्धकविरहितस्य पुंसः समीचीनः कर्मविचारो ब्रह्मविचारसामग्रीति न कश्चिद्दोषः। एवमथातःशब्दार्थो निरूपितः।

## भावप्रकाशिका

**पूर्वाचार्यशब्दोऽपीति**। पूर्वाचार्यसुरक्षितामिति श्लोकस्थपूर्वाचार्यशब्दोऽपीत्यर्थः। **विस्तीर्णा संचिक्षिपुरित्यनेनेति;** भवदीयस्य शारीरकव्याख्यानस्य कथं सांप्रदायिकत्वम्? मूलानुपलम्भात्; न च टङ्कद्रमिडादिभाष्यग्रन्थ एव मूलमिति वाच्यम्, तस्यापि सांप्रदायिकत्वे प्रमाणाभावादिति शङ्कापरिहारोऽप्यर्थात्सूच्यत इति भावः। भाष्यव्याख्याने प्रवृत्तस्याचार्यस्य भाष्यानन्तर्गतश्लोकव्याख्यानमनुचितमित्यभिप्रायेणाशङ्कते—**ननु सूत्रार्थ इत्यादिना**। **मङ्गलाचरणमिति;** अखिलेत्यादि श्लोकद्वयमित्यर्थः। **अविघ्नपरिसमाप्त्याद्यर्थतयेति;** आदिशब्देन विषयप्रयोजनाधिकारिणः कथ्यन्ते। **तदन्तर्भाव्येवेति;** महाभाष्ये पस्पशाह्निकवदिति भावः। **प्रस्तोतव्यत्वमुच्यत इति चेदिति;** यथा "त्वामस्मि वच्मि विदुषां समवायोऽत्र तिष्ठति" इत्यत्र वचनीत्युक्त्या उच्यमानस्यार्थस्य उपदेश्यत्वमवसीयते, एवमारभ्यत इत्यर्थेनाथेत्यनेनारम्भयोग्यत्वमुच्यत इत्यर्थः स्यादिति शङ्काभिप्रायः। **उपदेशाज्ञापनपरत्वाभावादिति;** प्रस्तोतव्यत्वमित्यत्र तव्यप्रत्ययस्य "प्रैषातिसर्ग" इतिसूत्रविहितप्रैषार्थककृत्यप्रत्ययत्वासंभवात् "अर्हे कृत्यतृचश्च" इत्यर्हार्थेविहितकृत्यप्रत्ययत्वं वाच्यमित्यर्थः। **योग्यत्वमशाब्दमिति;** ननु प्रस्तोतव्यत्वस्य वाच्यत्वमभ्युपगम्य कथं योग्यत्वस्य शाब्दत्वं प्रत्याख्यायते? "अर्हे कृत्यतृचश्च" इत्यनुशासनेन प्रस्तावार्हत्वस्यापि प्रस्तोतव्यशब्दार्थत्वात्। न च प्रस्तोतव्यत्वस्यापि वाच्यत्वं नाभ्युपगतमिति वाच्यम्, तदानीमपीत्यपिशब्देन तदभ्युपेत्यैव प्रवृत्तेरिति चेत्--न; तदानीमपीत्यपिशब्देन न वाच्यत्वमभ्युपेतम्, अपितु तत्पदप्रयोज्यप्रतीतिविषयत्वमात्रं प्रस्तोतव्यत्वस्याभ्युपेतम्।

नयसूत्राणि च विरुद्धार्थव्युदसनपराणि। प्रश्नवाक्यगतप्रश्नस्तु तस्मिन्नेव वाक्ये हेतुतया परामर्शानर्ह एव ; 'किं ब्रह्मजिज्ञासा कर्तव्या' इति वाक्येऽपरिसमाप्ते कथं किंशब्दार्थो हेतुतया परामृश्येत। अतोऽतःशब्दपरामर्शयोग्यार्थश्चेदथशब्दोऽभ्युपगम्यते, तदाधिकाराद्यर्थत्वं न घटते। यदि ब्रह्मजिज्ञासापदसामर्थ्याक्षिप्तस्य पूर्ववृत्तत्वेन तत्तद्व्याख्यात्रभिमतस्य वस्तुनोऽतःशब्देन परामर्श इष्येत, तदानीं जिज्ञासानुपयोगिनस्तदाक्षेप्यत्वायोगात् उपयोग्यर्थ एव तदाक्षेप्य इति तत्परामर्शिनातःशब्देन जिज्ञासोपयोगितया तत्पूर्वभाव्यर्थविशेषोपस्थापनादथशब्दस्य स्वारसिकानन्तर्यपरत्वे संभवत्यस्वरसविफलार्थान्तरस्वीकारो न घटते। ततश्चातःशब्दवत् ब्रह्मजिज्ञासापदसामर्थ्यमप्यधिकाराद्यर्थपरत्वनिवारकं स्यात्। एवमर्थान्तराणामनुपपन्नतामर्थतो दर्शयन्नानन्तर्यार्थित्वमथशब्दस्योपपादयति—**अत्रेति**। 'अथशब्द आनन्तर्ये' इति प्रतिज्ञा। तदुपपादकम् 'अत्र अयं भवति' इति पदत्रयम्। तत्र 'भवति' इति पदेनानन्तर्ये स्वारस्यं सूच्यते। स्वारस्यापवादिकां पूर्ववृत्ताप्रतिपत्तिं परिहरति—**अत्रेति**। अत्र ; वेदस्योत्तरभागविचाररूपब्रह्ममीमांसारम्भसूत्र इत्यर्थः। ब्रह्मजिज्ञासापदसामर्थ्यात् पूर्वभागविचाररूपवृत्तविशेष आक्षिप्त इत्यभिप्रायः। हेत्वन्तरमभिप्रयन्नाह--**अयमिति**। अयमथशब्दः; "अथ शब्दानुशासनम्" "अथ योगानु-शासनम्" इत्यादिसूत्रान्तर्गताथशब्दव्यावृत्त इत्यर्थः। अतःशब्दशिरस्क इत्युक्तं भवति। वेदान्तसारे ह्ययमर्थः कण्ठोक्तः। प्रकृतपरामर्शिनातःशब्देन पूर्ववृत्तसामान्यमभिहितमित्यभिप्रायः। एवं समभिव्याहृतोभयपदस्वारस्यात् सामान्यतोऽभिहितं विशेषत आक्षिप्तं च पूर्ववृत्तं सिद्धमिति वृत्तविशेषाप्रतिपत्तिरूपस्य स्वारस्यापवादकस्याभावादथशब्द आनन्तर्यार्थ एवेति वाक्यार्थः। एवमथशब्दस्योत्तरभागविचारारम्भसूत्रगतत्वम्, अतःशब्दशिरस्कत्वम्, आनन्तर्ये स्वारस्यं च दर्शयद्भिरानन्तर्योपपादकैः 'अत्र अयं भवति' इति पदैरेवास्मिन् सूत्रेऽर्थान्तराणां गत्यन्तराभावस्वीकार्याणामनादरणीयत्वं फलितम्। अतःशब्दं व्याचष्टे— **अतःशब्दो वृत्तस्य हेतुभाव इति**। वृत्तस्येति प्रकृत्यर्थ उक्तः; हेतुभाव इति प्रत्ययार्थः। इयं प्रतिज्ञा। 'अत्र अयं भवति' इत्यनुषक्तं पदत्रयमुपपादकम्। प्रकृतिप्रत्यययोरुक्तार्थपरत्वेन प्रसिद्धिप्राचुर्यं भवतिना दर्शितम्। अत्रेत्यस्य पूर्ववदर्थः। अनेन वृत्तविशेषः तस्य हेतुभावार्हत्वं चाक्षिप्तम्। तदर्हत्वं चानन्तरमेव व्यक्तं भविष्यति। अयम् ; आनन्तर्यस्वरसाथशब्दपूर्वकः। अनेन वृत्तसामान्यमाक्षिप्तम्। नन्वथशब्दार्थनिर्ण-

योऽतःशब्दार्थनिर्णयसापेक्षः, अतःशब्दार्थनिर्णयश्चाथशब्दार्थनिर्णयसापेक्ष इत्यन्योन्याश्रयः। नैवम्; अथशब्दस्यानन्तर्ये स्वारस्यं हि नातःशब्दार्थनिर्णयसापेक्षम्; अतःशब्दस्य वृत्तहेतुभावपरत्वस्वारस्यं च नाथशब्दार्थनिर्णयसापेक्षम्। अथशब्द आनन्तर्यपरः, स्वस्वारस्यात् समभिव्याहृतपदान्तरस्वारस्याच्च। अतःशब्दोऽपि वृत्तस्य हेतुभावपरः, स्वस्वारस्यात् समभिव्याहृतपदान्तरस्वारस्याच्चेति भवत्ययंशब्दाभ्यां दर्शितं भवति। इमे चाभ्युच्चययुक्ती, अत्रपदाभिप्रेतब्रह्मजिज्ञासापदसामर्थ्यादेव पदद्वयस्योक्तार्थपरत्वसिद्धेः। अतः स्वपरपदस्वारस्याद्ब्रह्मजिज्ञासापदसामर्थ्याच्चाथातःशब्दौ यथोक्तार्थपराविति न दोषः। अथातःशब्दयोरन्यतरेणालमिति चेत्——न; अथशब्दस्यानन्तरकालमुपस्थापयतो वर्तिष्यमाणब्रह्मजिज्ञासाविशेषणतया अतःशब्दस्य वृत्तहेतुभावपरतया चापर्यायत्वात्, प्रतिज्ञाहेतुरूपेण पदयोर्भिन्नप्रयोजनत्वाच्च। ब्रह्मजिज्ञासा कर्तव्येति हि प्रतिज्ञेति—चेत् न; ब्रह्मजिज्ञासेति धर्मनिर्देशः; अथेति साध्यधर्मोक्तिः; न कर्तव्यतामात्रं साध्यधर्मः, अपि त्वानन्तर्यविशिष्टं कर्तव्यत्वम्। एवमथातःपदयोः प्रतिज्ञाहेत्वर्थत्वेन विभागः "अथातो धर्मजिज्ञासा" इत्यत्रापि समानः। एवमर्थभेदस्याविवक्षितत्वेन हि "अथ योगानुशासनम्" "अथ शब्दानुशासनम्" इत्यादिष्वतःशब्दस्याप्रयोगः। ननु ब्रह्मजिज्ञासापदसामर्थ्याक्षिप्ततया बुद्धिस्थस्य कर्मविचारस्य हेतुभावोऽतःशब्दावगन्तव्य इति किमथशब्देन? नैवम्, आनन्तर्योक्तिमुखेन तस्य हेतोः शास्त्रान्तरश्रवणव्यवधाननैरपेक्ष्यद्योतनार्थत्वादथशब्दस्य; ततश्च वेदान्तश्रवणात्पूर्वं शास्त्रान्तरश्रवणेन विना संपादयितुमशक्यत्वाच्छास्त्रान्तराणां चानवसरग्रस्तत्वाच्च शास्त्रान्तरसापेक्षाणां नित्यानित्यवस्तुविवेकादीनां पूर्ववृत्तत्वव्युदासः फलितः स्यात्। ननु——न यत्किंचिदतीतं पूर्ववृत्तत्वेन वक्तव्यम्, अतिप्रसङ्गात्। अतो वर्तिष्यमाणोपयुक्तमेव पूर्ववृत्तमथशब्दोपस्थापितमिति तस्य हेतुत्वमपि शास्त्रान्तरश्रवणनैरपेक्ष्यवत्तैव वस्तुसामर्थ्येन सिद्धमिति किमतःशब्देन? नैवम्, अथशब्दाक्षिप्तहेत्वसिद्धिशङ्कापरिहारार्थत्वादतःशब्दस्य। हेतुश्च विशिष्टः। तस्य विशेषणांशविशेष्यांशयोरसिद्धिशङ्कातत्परिहारप्रकारौ सूत्रकाराभिप्रेतौ परस्ताद्दर्शयिष्येते इति प्रयोजनवत्तरं पदद्वयम्। अत्रेतिपदसूचितब्रह्मजिज्ञासापदसामर्थ्यसिद्धं वृत्तं वर्तिष्यमाणं तयोर्हेतुहेतुमद्भावं च विवृण्वन् उक्तमानन्तर्यमुपपादयति —**अधीतेति**। कर्मज्ञानशब्देन वृत्तमुक्तम्। ब्रह्मजिज्ञासापदेन वर्तिष्यमाणमुक्तम्। अल्पास्थिरफलानन्तस्थिरफलशब्दाभ्यां हेतुहेतुमद्भावो दर्शितः। केवलशब्देन ब्रह्मज्ञानपूर्वककर्म-

प्रश्नशब्दस्य प्रश्नसामान्यपरतया क्रियमाणप्रश्नादन्य एव प्रश्नस्तृतीयया हेतुत्वेन परामृश्यत इति वक्तुं शक्यत्वादिति चेत्—न ; अथकिंशब्दादौ प्रश्नस्य प्रयोक्तृधर्मत्वेन सूचने सत्यपि वाक्यार्थान्वयित्वाभावात् 'हा हन्त' इत्यादौ विषादवत्-न तु प्रश्नादिशब्दवत् प्रश्नस्य वाच्यत्वमित्यत्र तात्पर्यात्। **भवतीति पदेनेति** ; केचित्तु अथशब्द इत्यनेनैव स्वस्वारस्यं सूच्यत इति वदन्ति । **इत्यादिसूत्रान्तरेति**; "अथशब्दानुशासनम्" इत्यादौ सूत्रत्वोक्तिरौपचारिकीति द्रष्टव्यम् । **अथशब्दस्यानन्तर्ये स्वारस्यं हीति** । अस्मिन्प्रयोगे तदर्थकत्वस्य सापेक्षत्वेऽपि स्वारस्यमात्रस्य न सापेक्षत्वमिति भावः । यथा गुरुभार्गवावित्यादिषु परस्परसाहचर्यात् ग्रहयोरेव प्रतीतिः, नाचार्यपरशुरामयोः ; यथा च रामकृष्णाविति बलकेशवयोरेव प्रतीतिः, नतु दाशरथ्यर्जुनयोः; एवमिहापीतरेतरसाहचर्यादर्थनिर्णायकत्वेऽपि न दोष इति परिहारान्तरं द्रष्टव्यम् । **इमे चाभ्युच्चययुक्ती इति**; इमे अथातःशब्दस्वारस्ये । **अत्रपदाभिप्रेतेति**; ब्रह्मजिज्ञासापदाक्षिप्तपूर्ववृत्तसापेक्षत्वादिति भावः । नन्वथातःशब्दयोरन्यतरेणालमित्यस्य कोऽभिप्रायः? किमेकाकारप्रतीति जनकत्वादिति ? उत 'भूतले घटो घटवत् भूतलम्' इतिवत् प्रयोजनैक्यादिति वेति विकल्पं हृदि निधाय जिज्ञासाविशेष्यकोत्तरकालकर्तव्यताप्रकारकज्ञानजनकस्य अथशब्दस्य पूर्ववृत्तविशेष्यकहेतुत्वप्रकारकज्ञानजनकस्य चातःशब्दस्य नैकाकारप्रतीतिजनकत्वमिति प्रथमपक्षं दूषयति— **अथशब्दस्यानन्तरकालमुपस्थापयत इत्यादिना** । द्वितीयं दूषयति—**प्रतिज्ञाहेतुरूपेणेति** । **न कर्तव्यतामात्रं साध्यधर्म इति** । ब्रह्मजिज्ञासा विचारितकर्मभिः पुरुषैरनुष्ठेया, कर्मणामल्पास्थिरफलत्वप्रतीतिसहितानन्तस्थिरफलप्रतीतेर्विचारितकर्मसु पुरुषेषु संभवादिति प्रदर्शनं ह्युचितम्। ततश्च विचारितकर्मत्वरूपपुरुषविशेषणप्रतिपत्त्यर्थमथशब्दोऽपेक्षितः ; तस्मिंश्च सत्युक्तार्थो लभ्यत इति भावः । **शास्त्रान्तरश्रवणेन विना संपादयितुमशक्यत्वादिति** ; नित्यानित्यवस्तुविवेकादीनामिति शेषः । **अथशब्दाक्षिप्तेति**; अथशब्दाक्षिप्तकर्मविचाराक्षिप्तस्य विशिष्टहेतोरसिद्धिशङ्कापरिहारार्थत्वादित्यर्थः । अधिगताल्पास्थिरफलकेवलकर्मज्ञानतयेति भाष्यस्यायमर्थः—अधिगतं प्राप्तम् अल्पास्थिरफलं केवलकर्मेति ज्ञानं यस्य सोऽधिगताल्पास्थिरफलकेवलकर्मज्ञानः, तत्त्वेनेति । **उपनीय तु यश्शिष्यमिति** ; ननु श्रोत्रियोपाध्यायगुर्वादिनामविधानवत् तत्प्रकरणस्थमिदं वाक्यमुपनीयाध्यापयितुराचार्यनामविधानपरमिति ग्रन्थकृतैव वक्ष्यमाणत्वात् कथमस्य वाक्यस्य साङ्गसशिरस्कवेदाध्ययनकर्तव्यतायां प्रमाणतयोपन्यास इति चेत्—मैवम् ; "कार्यकालं संज्ञा-

परिभाषम् ” इति न्यायेनास्य वाक्यस्य ‘ आचार्यवान् भवेत् ’ इति ’ विधिवाक्यैकवाक्यतया प्रामाण्यसंभवात् ; ततश्च कंचिद्गुरुमुपेत्य तस्य सकाशात् सकल्पं सरहस्यं च वेदं स्वीकुर्वीतेति हि तस्य वाक्यस्यार्थ इति भावः । गुरुमताभिप्रायेण वा बोध्यम् ; गुरुमते हि ‘ सकल्पं सरहस्यं वेदमध्यापयेदाचार्यकामः ’ इति श्रुत्युन्नायकत्वादस्य वाक्यस्याध्यापनविधिप्रयुक्तवेदाध्ययनवत् कल्परहस्याध्ययनस्यापि सिद्धत्वोपपत्तेः । **आगमोत्थेति** ; विचारसहकृतवाक्यजन्यमागमोत्थम् ; विवेकविमोकादिजन्यं तु ध्यानादिरूपम् । ‘कर्मविचारस्य हेतुतयोक्तत्वात्’ इत्यनन्तरं ‘सिद्धः’ इति शेषः । सिद्धिप्रकारः कथमित्याशङ्क्य कारणतया कार्यतया च सिद्धिरित्याह—**कर्मविचारस्येत्यादिना**। **आवृत्तिविधानादिभिरिति**; यदि चातुर्मास्यादीनामक्षयफलत्वं तदा पुनस्तदनुष्ठानवैयर्थ्यात् प्रत्यब्दं चातुर्मास्याद्यावृत्तिविधानं व्यर्थं स्यादिति भावः । ननु—आवृत्तिविधानस्य न कर्मणामल्पास्थिरफलत्वावगमहेतुत्वम्, “आवृत्तिरसकृदुपदेशात्” इत्यधिकरणे “आ प्रयाणात्तत्रापि हि दृष्टम्” इत्यधिकरणे च ज्ञानस्याप्यावृत्तिप्रतिपादनेन तत्फलस्य मोक्षस्याप्यनित्यत्वप्रसङ्गात्। यद्याप्रयाणमहरहरावृत्तिविशिष्टस्यैव ज्ञानस्य मोक्षः फलं, तदात्रापि तथास्तु; यदि ‘ प्रतिवसन्तं सोमयागस्य पञ्चाब्दपर्यन्तं पञ्चदशाब्दपर्यन्तं प्रत्यब्दं वा चातुर्मास्यानाम् ’ इति विहितावृत्तिवैशिष्ट्येन फलजनकत्वाभ्युपगमे तत्तदावृत्तितारतम्यात्फलतारतम्यं स्यादित्युच्यते, तदा ज्ञानावृत्तेरप्याप्रयाणमनुवर्तनीयायाः प्रयाणकालस्याव्यवस्थितत्वात्तारतम्येन फलतारतम्यं स्यादिति तुल्यम् । नच “कर्मण्यारम्भभाव्यत्वात् कृषिवत् प्रत्यारम्भं फलानि स्युः” इत्येकादशाध्यायाधिकरणे कर्मणां कृषिन्यायेन प्रत्यारम्भं फलभेदव्युत्पादनादनित्यफलत्वमिति वाच्यम् , आवृत्तिवैशिष्ट्येन येषां कर्मणां फलजनकत्वं तदतिरिक्तविषयत्वात्तस्य । अवश्यं च तथाभ्युपगन्तव्यम् ; इतरथा दाक्षायणयज्ञे फलभेदः स्यात् । न च “ फलस्य कर्मनिष्पत्तेस्तेषां लोकवत् परिमाणतो विशेषः स्यात् ” इत्यर्थवादाधिकरणसूत्रे बह्वल्पाङ्गकर्मगुरुलघुभावानुसारेण फलतारतम्यस्योक्तत्वात् “ हिरण्यदा अमृतत्वं भजन्ते” “अपाम सोममममृता अभूम” “अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतम्” इत्यादिनामृतत्वसाधनतयोक्तानां हिरण्यदानसोमयागचातुर्मास्यानां तुल्यत्वावगत्या अल्पास्थिरफलत्वं सिध्येदिति शङ्कनीयम् ; “ विकल्पोऽविशिष्टफलत्वात् ” इत्यधिकरणे बह्वल्पगुणविद्यानां प्रपत्तेश्च गुरुलघुभावे सत्यप्येकरूपमुक्तिफलतायाा वक्ष्यमाणत्वात् तद्वदेव कर्मण्युपपत्तेः । ननु उपासनानामाप्रयाणमावृत्तिविशिष्ट-

तया फलसाधनत्वं बह्वल्पगुणकोपासनानां प्रपत्तेश्च विकल्पेन साधनत्वं च तृतीये वक्ष्यत इति ब्रह्मविचारारम्भदशायां वक्ष्यमाणन्यायापरिज्ञानादावृत्तिविधानादिमात्रेण कर्मणामल्पास्थिरफलत्वं ज्ञायत इति चेत्; सत्यमनेन ज्ञायते; तथापि वक्ष्यमाणविरोधादावृत्तिविधानादियुक्तेराभासत्वात् तन्मूला कर्मफलानित्यत्वबुद्धिरप्याभासीभवेत्। किंच, आरम्भदशायामपि वक्ष्यमाणार्थानां श्रुतशास्त्रेभ्योऽवगतिसंभवात् तादृशवक्ष्यमाणन्यायावगतिमतां पुरुषाणां कर्मणामल्पास्थिरफलत्वावगत्यभावेन ब्रह्मविचारे प्रवृत्त्यभावप्रसङ्गात्। किंच, अवहननवद्विचारस्य दृष्टार्थत्वेन यावत्फलोदयमावर्तनीयतया पुनर्विचारारम्भदशायां "विकल्पोऽविशिष्टफलत्वात्" इति तृतीयाध्यायसूत्रन्यायावगतिसंभवात्। एतेन "ज्योतिष्टोमेन स्वर्गकामो यजेत" इति स्वर्गार्थत्वेन विहितस्य सोमयागस्योत्तरवेद्या विकल्पितमग्न्याधारस्थण्डिलरूपाग्निमाश्रित्य "श्येनचितं चिन्वीत स्वर्गकामः" इति स्वर्गार्थश्येनाकृतिरूपगुणविधानसामर्थ्येन तद्गुणयुक्तसोमयागजन्यस्वर्गात्केवलतज्जन्यस्वर्गस्य न्यूनतावश्यंभावात् अल्पास्थिरफलत्वावगमः सिध्यतीत्यपि शङ्का परास्ता। "एकस्मै वा अन्ये यज्ञक्रतवः कामायाह्रियन्ते सर्वेभ्यो ज्योतिष्टोमः" इति सर्वफलार्थतया विहितस्य सोमयागस्य "यो वृष्टिकामो योऽन्नाद्यकामो यः स्वर्गकामः स सौभरेण स्तुवीत" इति फलत्रयसाधनतया विहितस्य सौभरस्य तत्तत्फलविशेषार्थप्रयोगे "हीषिति वृष्टिकामाय निधनं कुर्यात् ऊर्गित्यन्नाद्यकामाय ऊ इति स्वर्गकामाय" इति निधनविशेषव्यवस्थावत् स्वर्गार्थसोमयागप्रयोगे गुणविशेषव्यवस्थेत्युपपत्तेः। न च "अपाम सोमममृता अभूम" "अक्षय्यं ह वै" इत्यादिमन्त्रार्थवादवर्णितानां फलत्वाभावनियमः, सूक्तवाकमन्त्राम्नातानामायुरादीनां रात्रिसत्राम्नातायाः प्रतिष्ठायाश्च फलत्वदर्शनात्। न च सोमयागस्य विध्युद्देशे फलश्रवणान्मन्त्रोक्तफलं न ग्राह्यमिति वाच्यम्, विध्युद्देशश्रुत एव स्वर्गे नित्यत्वरूपविशेषणस्य "सप्तर्षीणां सुकृतां यत्र लोकस्तत्रेमं यज्ञं यजमानं च धेहि" इति मन्त्रेण लोकविशेषभोग्यत्वस्यैव समर्पणोपपत्तेः; "दिवि ज्योतिरजरमारभेताम्" इत्यैष्टिक एव मन्त्रान्तरे पत्नीयजमानाभ्यां प्राप्यस्य फलस्य नित्यत्वोक्तेश्च; "फलवत्तां दर्शयति" इति पत्न्यधिकरणसूत्रे विशिष्यास्य मन्त्रस्य फलसमर्पकतायाः प्रदर्शितत्वात्—इति चेत्; उच्यते-यत्तावदुक्तं ज्ञानस्याप्यावृत्तिश्रवणादिति; तन्न, ज्ञानस्यासाधनत्वात् ध्यानस्यैव साधनत्वात् तस्य चावृत्तिविशिष्टत्वात्। यद्यपि "अप्रयाणात्" इत्यत्र ध्यानस्याप्यावृत्तिरुक्ता, तथापि "प्रायणान्तमोंकारमभिध्यायीत" इति प्रायणान्तमनुष्ठितस्यैव ध्यानस्य

मोक्षसाधनत्वात् कर्मणि तादृशावृत्तिविशिष्टस्य कर्मणो मुक्तिसाधनत्वप्रतिपादकवाक्यादर्शनात्; "स खल्वेवं वर्तयन् यावदायुषम्" इत्यस्य ध्यानविषयत्वात्; कर्मसु तु पञ्चाब्दपञ्चदशाब्दाद्यावृत्तितारतम्यात् फलभेदस्यावश्यंभावात्। न हि ध्यानादावीदृशमावृत्तितारतम्यमस्ति, प्रायणान्तावृत्तस्यैव साधनत्वात्; न हि प्रायणान्तावृत्ति साधनं कस्यचित् शीघ्रमासीदित्येतावता फललाघवं कल्पयितुमुचितम्; तथाहि सति कस्यचिद् दृढाङ्गस्य सहकारिपौष्कल्यवतः किंचित् कर्म शीघ्रं निर्वृत्तमिति तत्र फललाघवं कल्प्येत; न हि सेतुदर्शनं कस्यचित् रोगपीडादिकमन्तरेण निष्पन्नमित्यतादृशापेक्षया फलवैषम्यं कल्प्यते। उपसंहार्यगुणाल्पभूयस्त्वादिकमपि न फलवैषम्यकल्पकम्, यथाकथंचिदाप्रयाणं निरन्तरकर्तव्यत्वाविशेषेणानुष्ठाने सौकर्यदौष्कर्यासंभवात्। तस्मादावृत्तितारतम्येन फलतारतम्यस्यावश्याभ्युपेयत्वात् मुक्तौ च तदभावान्मुक्तेरन्यदेव कर्मणः फलं वाच्यम्। किंच अनेकजन्मानुष्ठितनित्यनैमित्तिककर्मनिर्मलीकृतान्तःकरणसंपाद्यायाः शान्त्याद्यङ्गिकाया भक्तेः सर्वतो गरीयस्त्वेन तत्साध्यमुक्तेः कर्मसाध्यत्वे गुरुतरभक्तिरूपसाधनविधेर्महाविश्वासानुबद्धप्रपत्तिविधेश्चाननुष्ठानलक्षणाप्रामाण्यप्रसङ्गात् न कर्मणां भक्तिप्रपत्तिसाध्यमोक्षफलकत्वमिति कर्मफलानित्यत्वनिश्चयः कृतकर्मविचाराणां सुलभ इत्यावृत्तिविधानादिभिरित्यस्य ग्रन्थस्याभिप्रायः। **कर्मणः फलद्वारा हानायेति**; फलद्वारा हानं फलस्यानित्यत्वज्ञानमिति यावत्। ज्ञातव्यत्वं विचार्यत्वमित्यर्थः। कर्मविचारस्य कर्मफलानित्यत्वज्ञानफलकत्वं कण्ठोक्तमित्यर्थः। **स्वरूपेणोपादानायेति**; तृतीयाध्यायकरिष्यमाणविचारापेक्षितकर्मस्वरूपपरिज्ञानायेत्यर्थः। एतेन—कर्मविचारस्य ब्रह्मविचारोपयोगदशायां कर्मज्ञानस्य हानोपादानोपयोगसमर्थनमसंगतम्; न हि हानोपादानयोर्विचारोपयोगोऽस्ति, येन तद्द्वारा कर्मविचारो ब्रह्मविचारोपयुक्तः स्यात्; उपादेयस्य नित्यनैमित्तिककर्मणो ध्यानाङ्गत्वेन विचाराङ्गत्वाभावात्; न च विचारे प्रवर्तमानस्यापि चित्तशुद्ध्यर्थं कर्मानुष्ठानमपेक्षितम्, काम्यानां च कर्मणां त्यागोऽपेक्षित इति वाच्यम्; तर्हि कर्मविचारानन्तरं किंचित्कालं कर्मानुष्ठाय विशुद्धचित्तो विचारे प्रवर्तेत इत्यव्यवधानेन प्रवृत्तिर्न स्यात्—इति शङ्का परास्ता; हानोपादानशब्दयोरनित्यत्वनित्यत्वद्वारा हेयत्वोपादेयत्वज्ञापनपरत्वात्। अत एव हि वक्ष्यति--स्वरूपेणोपादेयत्वप्रतीतेरनन्तस्थिरफलापातप्रतीत्यन्तर्भावादिति। ननु कर्मविचारात् कर्मणामल्पास्थिरफलत्वनिश्चयसद्भावेऽपि न हेयत्वनिश्चयः; उत्तरभागे अनन्तस्थिरफलनिश्चयाभावेन सर्वत्राप्यल्पास्थिरफलत्वसंभावनावतः पूर्वभागप्रतिपन्ने कर्मणि

हेयत्वनिश्चयानिष्पत्तेरिति चेत्——न; उत्कटकोटिकहेयत्वज्ञाननिष्पत्तिसंभवेनादोषात् । **ग्रन्थाविरोध इति**; अपेक्षितकर्मस्वरूपज्ञानं केवलकर्मणामल्पास्थिरफलत्वज्ञानं चेति प्रयोजनद्वयसूचकग्रन्थेन कर्मफलानित्यत्वज्ञानरूपैकप्रयोजनप्रदर्शकस्यास्य न विरोध इत्यर्थः । **कर्मानुष्ठानभावप्रसङ्ग इति**; अकृतकर्मविचाराणां त्वनुष्ठानौपयिकार्थनिश्चयाभावेनानुष्ठानाप्रसक्तेः अनुष्ठानस्य कृतकर्मविचारपुरुषविषयतया तेषां च ब्रह्मविचारप्रवृत्तत्वादनुष्ठानभावप्रसङ्ग इत्याक्षेपाभिप्रायः । **श्रुत्वापि ये स्वर्गार्थिन इति**; ननु कृतकर्मविचाराणां सर्वेषां ब्रह्मविचारे प्रवृत्ततया वैराग्यपादश्रवणेन स्वर्गार्थित्वमेव न स्यादित्याक्षिपन्तं प्रति नेदमुत्तरमिति चेत्—न ; श्रुत्वापि ये स्वर्गार्थिनो दृश्यन्ते तेषामिति तदर्थत्वात् । **ब्रह्मविचारसामग्रीति** ; कृतेऽपि ब्रह्मविचारे अदृष्टवैगुण्येनाशुद्धचित्ततया स्वर्गार्थिकर्मानुष्ठानसंभवादित्यपि द्रष्टव्यम् ।

## श्रुतप्रदीपिका

पूर्वाचार्यग्रन्थाः प्रवर्त्यन्ताम् ; किं ग्रन्थान्तरनिर्माणप्रयत्नगौरवेणेत्यत्राह—**भगवदिति** । पूर्वाचार्यशब्दोऽत्र विवृतः । शंकरादिभ्योऽपि ज्ञानाधिक्यपरो भगवच्छब्दः । द्रमिडाचार्यादिग्रन्थोऽतिसंक्षिप्तः । **तन्मतानुसारेण** ; न तु स्वोत्प्रेक्षया । **सूत्राक्षराणि** ; प्रकृतिप्रत्ययानुगुण्येन ; न तु यथाकथंचिद्योजयितव्यानीति भावः । व्याङ्भ्यामुपसर्गाभ्यामपेक्षितविस्तरानपेक्षितसंकोचौ विवक्षितौ । व्याख्येयं पदमुपादत्ते—**अथेति** । पूर्ववृत्ताप्रतिपत्तिरूपापवादेन प्रसिद्धिप्रकर्षस्याकिंचित्करतया संशयविपर्ययौ स्त इति तद्व्युदासार्थशब्दं व्याचष्टे—**अत्रेति** । **अथशब्द आनन्तर्य** इति प्रतिज्ञा । **भवतीति** स्वारस्यं सूचितम् । **अत्रायमिति** तदपवादपरिहारः । **अत्र**; वेदोत्तरभागार्थविचारारम्भे । अनेन पूर्वभागार्थविचारस्य वृत्तत्वमाक्षिप्तम् । एवं ब्रह्मजिज्ञासापदसामर्थ्यसूचिताम् "अथ शब्दानुशासनम्" इत्याद्यथशब्दादस्य व्यावृत्तिं सूचयता अथशब्देन अतःशब्दशिरस्कत्वं दर्शितम् । अनेन वृत्तसामान्यस्यातःपदेनाभिधानं ज्ञापितम्, एतच्छब्दस्य प्रकृतवाचितास्वारस्यात् । एवं वृत्तविशेषाक्षेपकतत्सामान्याभिधायकपदद्वयसमभिव्याहारलब्धमथशब्दस्यानन्तर्यपरत्वमित्यर्थादुक्तं भवति । "अतोऽथमौनम्" इत्यादिषु

प्रकृतिप्रत्यययोरनेकार्थसाधारण्यदर्शनादतःशब्दं व्याचष्टे—**अत** इति। 'अत्रायं भवति' इत्यनुषङ्गः। अत्रभवतिशब्दौ पूर्ववत्। अयम्; अथशब्दपूर्वकः; प्रकृतिप्रत्ययस्वारस्यात् अथशब्दस्वारस्यात् ब्रह्मजिज्ञासापदसामर्थ्याच्चेत्यर्थः। न च अथातःशब्दार्थनिर्णयस्यान्योन्यसापेक्षत्वादन्योन्याश्रयः शङ्क्यः, तयोरानन्तर्यवृत्तपरत्वस्वारस्यस्य व्युत्पत्त्यवगततयान्योन्यानपेक्षत्वात्। अत्रेत्यादिसूचितं वृत्तं वर्तिष्यमाणं तयोर्हेतुहेतुमद्भावं च विवृण्वन् वर्तिष्यमाणस्यानन्तर्यं च घटयति—**अधीतेति**। साङ्गशब्देनाध्ययनस्यापातप्रतीतिहेतुत्वं द्योतितम्; सशिरस्कशब्देन व्याख्यानपौर्वापर्यनिमित्तव्याख्येयपौर्वापर्यं भागद्वयस्यैकप्रबन्धत्वं कृत्स्नस्याध्ययनं च; कर्मज्ञानब्रह्मजिज्ञासापदाभ्यां वृत्तवर्तिष्यमाणे; केवलशब्देन ब्रह्मज्ञानवैधुर्यम्; अल्पास्थिरानन्तस्थिरशब्दाभ्यां हेतुहेतुमद्भावः; अनन्तरभाविनीति पदेन अथातःशब्दद्वयफलितं हेतुपौष्कल्यं च। तस्मिन् सति हि फलानन्तर्यम्। अनन्तस्थिरफलशब्दो ब्रह्मविशेषणम्; ब्रह्मजिज्ञासाया वा; तस्यास्तथात्वं सद्वारकम्।

## नयप्रकाशिका

ननु भगवद्बोधायनेत्यादिभाष्येण किमुच्यते? न च स्वग्रन्थप्रयोजनमिति वाच्यम्, पूर्वश्लोके प्रयोजनस्योक्तत्वात्। न चैतन्मतस्य मूलभूतबोधायनादिग्रन्थसद्भावे तैरेव वेदान्तार्थनिश्चयसिद्धेर्महाप्रयासात् ग्रन्थनिर्माणस्य न प्रयोजनसिद्धिरिति स्वग्रन्थप्रयोजनप्रदर्शनस्य कार्यत्वात् तद्ग्रन्थेन तत्प्रदर्श्यते; बोधायनग्रन्थस्यातिविस्तृतत्वात् द्रमिडाचार्यादिग्रन्थस्यातिसंकुचितार्थस्य दुर्ग्रहत्वात् सुग्रहत्वमेवास्मत्प्रवृत्तेः प्रयोजनमिति प्रदर्शनीयत्वमिति वाच्यम्; एवंविधप्रयोजनस्यापि पूर्वश्लोक एव सूचितत्वात्। पूर्वाचार्यसुरक्षितामित्यादिभिस्तदेव हि सूच्यते; स्पष्टपूर्वव्याख्यानसद्भावे निजाक्षरानीतत्वोक्तिर्व्यर्था स्यात्। निजाक्षरानयनं नाम स्पष्टीकरणम्। पूर्वग्रन्थैरेव स्पष्टत्वे किमर्थं तत्स्पष्टीकरणम्? अतस्तद्ग्रन्थो व्यर्थ इति चेत्—सत्यम्; तत्रोक्तार्थस्पष्टीकरणार्थत्वान्न दोषः। तत्र केवलं पूर्वाचार्यैरित्येतावन्मात्रमुक्तम्; पूर्वाचार्याः क इत्याकाङ्क्षा न पूर्णा; अत्र तु बोधायनशब्देन तत्पूर्तिः। पूर्वाचार्यशब्देनाप्तत्वेनोपादेयवचना द्रमिडभाष्यकारादयो विवक्षिताः। निजाक्षरानयनहेतुश्च न तच्छ्लोके व्यक्तः। पूर्वग्रन्थातिसंकोचातिविस्तृतत्वे हि तद्धेतुः। पाराशर्यवचःसुधात्वरूपणपरे श्लोके तद्व्यक्तीकरणमशक्यमिति भगवद्बोधायनेत्यादिग्रन्थेन तत् स्पष्टीक्रियते। प्रतिज्ञातव्याख्यानाय व्याख्येयसूत्रमुपादत्ते—**अथातो ब्रह्मजिज्ञासेति**। नन्व-

त्राथशब्दस्य मङ्गलारम्भार्थान्तराभिधानानन्तर्यात्मकचतुर्विधार्थपरत्वप्रसिद्धावप्यानन्तर्यार्थपरत्वमेव किमिति स्वीकृतमिति चेत्, तस्यैव 'अतो ब्रह्मजिज्ञासा' इति वाक्यार्थान्वयादिति ब्रूमः। तत्र हि जिज्ञासाशब्दस्य ज्ञानपरत्वमेवाभिप्रेतम्, इच्छाया इष्यमाणार्थप्राधान्यादत्र ज्ञानस्यैवेष्यमाणत्वात्। ननु जिज्ञासापदस्य मुख्यार्थस्वीकारे कानुपपत्तिरिति चेत्, इच्छाया अविधेयत्वमनुपादेयत्वं चेति ब्रूमः। ननु—ज्ञानस्यैव विधेयत्वे 'ब्रह्मज्ञानम्' इत्येव सूत्रं स्यात्; तथा च मात्राक्षरयोर्लाभः;

"लघूनि सूचितार्थानि स्वल्पाक्षरपदानि च।
सर्वतः सारभूतानि सूत्राण्याहुर्मनीषिणः॥"

इति हि सूत्रलक्षणम्; ज्ञानवाचकपदस्य प्रयुक्तत्वलाभश्च; न हि जिज्ञासापदस्य ज्ञानवाचकता; तत्परत्वं तु तस्य लक्षणया; लाक्षणिकार्थस्य न पदवाच्यत्वम् "[1]लक्षणा पदं मौनि" इति हि नीतिविदः। अतो ज्ञानस्य विधेयत्वे 'ब्रह्मज्ञानम्' इति सूत्रं स्यात्; न तु ब्रह्मजिज्ञासेति इति चेत्—न; ज्ञानस्य ज्ञेयैकनिरूपणीयत्वात् ज्ञेयस्य ब्रह्मणो वेदान्तैकवेद्यत्वाद्वेदान्तानां चाविचारितानामर्थाप्रत्यायकत्वात्तज्ज्ञानस्य विचारपूर्वकत्वस्यावश्यकत्वात् ब्रह्मजिज्ञासेत्येव प्रयोज्यत्वात्। तदुक्तं नीतिज्ञैः——

"ज्ञानप्रयोजना चेच्छा विचारोपक्रमात्मिका।
विचारपूर्वरूपत्वाज्जिज्ञासेत्यभिधीयते॥" इति।

एवं ज्ञानपरत्वे आनन्तर्यार्थस्यैव तत्रान्वयः। मङ्गलार्थपरत्वे हि 'अतः' इति पदार्थानन्वयः। ननु ब्रह्मज्ञानं मङ्गलमिति यतः, अतो ब्रह्मज्ञानं कार्यमित्यन्वयः स्यादिति चेत्—न; अमङ्गल्यशङ्काभावात्; प्रशंसामात्रपरत्वं वा स्यात्। तथारम्भार्थस्यापि न वाक्यान्वयः; ज्ञानस्यानारभ्यत्वाच्च। पूर्वप्रकृतस्य कर्मविचारस्य विद्यमानत्वात् यद्यपि प्रकृतादर्थादर्थान्तराभिधानसंभवात्तत्परत्वसंभवः, अतःशब्दस्याप्यानन्तर्य इवोपपत्तिः; तथापि तस्यानन्तर्याद्व्यतिरेकादानन्तर्यपरत्वमेव स्वीकृतम्। अत एव हि 'अत्रायमथशब्दः' इति 'अत्रायम्' इति शब्दयोरुपादानम्। अन्यथा 'अथशब्द आनन्तर्ये' इत्येतावदेव स्यात्। कर्मज्ञानस्य पूर्ववृत्तत्वं हेतुत्वं चोत्तरत्र वक्ष्यते।

---

[1] 'लक्षणापदं मौनि' इत्येव मातृकासु पाठो दृश्यते। परं तु स्वरसतरेण केनचित्पाठान्तरेण भाव्यमित्युन्नीयते।

तत्त्वटीका

तथापि किमहर्दीपवदनुपकारकृतकरनिर्माणगौरवेण ? अनुच्छिन्नाः शुद्धाः प्राचीनव्याख्याः प्रवर्त्यन्ताम्; तत्राह—**भगवदिति**। "उत्पत्तिं प्रलयं चैव" इत्याद्युक्ताध्यात्मबोधातिशयपरोऽत्र भगवच्छब्दः; तेन शबरशंकरादिव्यावृतिः। विस्तीर्णत्वोक्तिरयतनैर्दुस्तरत्वमभिप्रैति। अत्र पूर्वाचार्या ब्रह्मनन्द्यादयः। तन्निबन्धनानामतिसंक्षेपाद्गहनत्वं सूचयति—**संचिक्षिपुरिति**; सूत्रस्थापितार्थपरैर्ग्रन्थैरित्याशयः। परोक्तेरनाप्तसंप्रदायत्वं व्यञ्जयितुमाह—**तन्मतानुसारेणेति**। "अल्पाक्षरमनल्पार्थम्" "लघूनि सूचितार्थानि स्वल्पाक्षरपदानि च" इति सूत्राणां बह्वर्थसूचकाल्पाक्षरतया व्याख्यापेक्षत्वायाह—**सूत्राक्षराणीति;** प्रकृतिप्रत्यययोरक्लेशमभिप्रेत्याक्षरशब्दः। तेन "सूत्राणि यथासंभवं द्रष्टव्यानि" इति परोक्तिरनास्थेया। उक्तं च भास्करैः—

"सूत्राभिप्रायसंवृत्या स्वाभिप्रायनिवेशनात्।
व्याख्यातं यैरिदं सूत्रं व्याख्येयं तन्निवृत्तये॥" इति।

अक्षरार्थमात्रं ब्रूमः; सूच्यं तु निःशेषदुर्वचम्; अक्षरशक्त्यतिरिक्तः स्फोटो न कल्प्य इत्यपि व्यङ्ग्यम्। **व्याख्यास्यन्ते** इत्यत्रोपसर्गाभ्यां धातुना चाद्यतनबुद्ध्यनुगुणमनतिसंकोचविस्तरत्वं स्पष्टोक्तिश्च व्यज्यते। यद्वा वैशिष्ट्यं प्राबल्यं च निपातद्वयार्थः। "पदच्छेदः पदार्थोक्तिः" इत्यादि च भाव्यम्। अखिलेत्यादेरेतदन्तस्य "सूत्रार्थो वर्ण्यते यत्र" इत्याद्युक्तं भाष्यलक्षणं तदर्थसंग्रहात्तादर्थ्याच्च सिद्धम्।

व्याख्यापेक्षत्वव्यक्त्यै सूत्रमुद्गृह्णाति—**अथेति**। नन्वत्र "अथातः" इति पिण्डितं रूपमव्युत्पत्तेः पृथगर्थसंभवादंशान्तरनैरर्थक्याच्च न युक्तम्। क्लिष्टगतिस्तु न गतिसद्भावे। अथशब्दस्यानन्तर्ये प्रसिद्धिः प्रदृष्टापि सोपयोगासाधारणवृत्तविशेषादृष्ट्यापोदिता। अत एव न प्रकृतार्थादर्थान्तरपरत्वम्; कल्पद्वयादृष्टेश्च। प्रश्नस्त्वनर्थकोऽनुत्तरश्च। कात्स्न्र्यमनपेक्षितवचनम्; एकदेशचिन्ता हि न शङ्कारूढा। तस्मादारम्भार्थकत्वं स्यात्; आरभते ह्यत्र सूत्रकारः। मङ्गलार्थकत्वं वा; स्मर्यते हि—

"ओंकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा।
कण्ठं भित्त्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ॥" इति।

तत्राह—**अत्र इति**। भवतिना अथशब्दस्य स्वारस्यानूक्तिः। 'अत्रायं' पदाभ्यामपवादापोहः। **अत्र;** वेदोत्तरांशविचार्यत्वार्थे सूत्रे। तेन यतः कुतश्चिद्वा भागान्तरसाधारणाद्वा कुतश्चिदानन्तर्योक्तेरानर्थक्यात् कर्मविचाररूपं वृत्तं विविनक्ति। **अयम्**; "अथातो धर्मजिज्ञासा" "अथातः क्रत्वर्थपुरुषार्थयोर्जिज्ञासा" इत्यादिष्विवातःशब्दोपेतः; एतच्छब्दो हि प्रस्तुते स्वरसः; विभक्तिश्चासौ हेतुत्वे। एवं सामान्यतः 'अतः' इत्यभिहिते ब्रह्मजिज्ञासया विशेषत आक्षिप्ते वृत्ते सत्यानन्तर्यस्वारस्यं नापोद्यते। 'अथातः' इति समुदितप्रयोगनिरपेक्षसामर्थ्यव्यक्त्यर्थोऽत्र 'अयं' शब्द इति केचित्। अत्रेत्यादिनैवार्थान्तराणामिहानन्वयः सूच्यते; तथाहि—मङ्गलार्थत्वं तावत्प्रतिक्षिपामः। तत् किमस्याविवक्षितार्थस्य संनिधिमात्रेण, तद्वाचकतया वा? नाद्यः, अबोधकस्य वाक्ये निबन्धायोगात्; श्रुतिप्रयोजनमात्रस्य मङ्गलस्य पदान्तरार्थेऽनन्वयाच्च, विवक्षितार्थान्तरस्यापि संनिध्युपजीवनोपपत्तेश्च। न द्वितीयः, द्योतकमात्रत्वात्। "अथ शब्दानुशासनम्" इत्यादावर्थं वदद्भिरप्यधिकृतमित्यादिपदमध्याहारेणोक्तम्, न त्वथशब्दवाच्यत्वमभिसंधाय। वाच्यत्वेऽप्यत्र मङ्गलस्य वक्तव्या संगतिः। मङ्गलोक्तेः प्रकृतौपयिकत्वेऽप्यनुनिष्पत्त्यैव तत्सिद्धिर्युक्तेत्युक्तम्।

मृदङ्गध्वनिनीतिं तु वक्ति माङ्गलिकस्मृतिः।
प्रयोक्तुः श्रोतुरप्येतौ मङ्गलप्रापकाविति॥ १९७॥

अन्यथा ब्रह्मशब्देनान्यपरत्वं भिन्नत्वं वाक्यस्य भवत्वित्यध्याहारश्च स्युः; अकृतकसर्वोत्तुङ्गमङ्गलतमतत्त्ववाचकत्वाद्ब्रह्मशब्दस्य। न चात्र हेतोः साध्यस्य वा मङ्गलत्वमनूद्यते विधीयते वा, नैरर्थक्यात्; न ह्यत्र तद्विरुद्धत्वाशङ्का, अनिषेधात्। न्यायसूत्राणि संशयनिरासार्थानि। ननु मङ्गलत्वं विचारस्य ख्याप्यताम्; अत एव तद्विधिरिति तत्सार्थता। तदपि मन्दम्; अत इति हेतुनैव नैराकाङ्क्ष्यात्, अधिकोक्तेरनुपयोगाच्च। आरम्भार्थत्वमप्ययुक्तम्; 'नारभ्यते' इति शङ्कानुत्थानात्, साध्यतया बुद्धस्यारम्भस्य कथनानर्थक्याच्च। न च जिज्ञासाया आरम्भयोग्यत्वमथशब्दो वक्ति द्योतयति वा, अव्युत्पत्तेः; 'आरब्धुम्' इति क्रियान्तरार्थक्रियानुपस्थानात्; अन्यथा समुच्चयादिद्योतकेष्वपि 'समुच्चेतुम्' इत्यादिविवक्षया योग्यपदान्वयप्रसङ्गात्। 'आरब्धव्या' इत्येव च पदमध्याहार्यम्; तदा किं तदर्थेनाथशब्देन? न चात्राध्याहारार्थद्योतनम्, साकाङ्क्षतयैव तत्सिद्धेः प्रसिद्धप्रहाणेन क्लिष्टग्रहणा-

योगाच्च। योगशब्दानुशासनयोरानन्तर्यमगत्या त्यक्तम्। अत्र तु न शास्त्रारम्भार्थतापि। अन्यो हि विचारः, अन्यदनुशासनम्। न च तस्यात्रोपादानम्। ननु ज्ञाप्यतया ब्रह्माधिक्रियताम्; मैवम्—उपसर्जनश्रवणविलम्बात्; व्याख्यानानुशासनशब्दाभावादेव जिज्ञासाशब्दस्य मीमांसापर्यायत्वाभावेन ज्ञाप्यतानुपस्थापनाच्च। अत एव विचारः कर्तव्यत्वेन बोध्यतयाधिक्रियत इत्यपि न वाच्यम्; विचारारम्भणीयत्वस्थापनेनैव सिद्धे पदान्तरवैयर्थ्यात्; अपेक्षिते सत्यनपेक्षितायोगात्; उभयोक्त्या गौरवाच्च। तस्मात् स्वारसिकमनपोदितमानन्तर्यमेवात्र स्थापितम्। अतःशब्दस्य प्रकृतिर्धीस्थे वर्तिष्यमाणेऽपि स्यात्; प्रत्ययश्च सार्वविभक्तिकः; "अतोऽथ मौनम्" इत्यादिष्वन्यार्थः; पञ्चम्यर्थोऽप्यनेकः; अतो नार्थविशेषसिद्धिरित्यत्राह—**अतःशब्द इति**। इहाप्यत्रायंभवतीनामनुषङ्गः, स्वारस्यात्। उत्तरपदसमभिव्याहारश्च प्राग्वत्। विचारितकर्मणां ब्रह्मविचारहेतुतया वक्ष्यमाणहेतुरनुपलम्भनिरस्तः; ब्रह्मविचारापेक्षया वर्तिष्यमाणस्य तु न तद्धेतुत्वम्; प्रयोजनमपि न स्वरूपेण हेतुः, मिथःसंश्रयात्। तदिच्छा तु वृत्तैव। प्रत्ययस्य च विभक्त्यन्तरार्थकत्वमपादानत्वादि च प्रकृतानुपयुक्तम्। अयमिति पदस्य स्वरूपमात्रमनुषज्यते। तेनाथशब्दयुक्तत्वमिह विवक्षितम्। न चैवं मिथःसंश्रयः; शब्दस्वारस्ययोः स्वतःसिद्धतया स्वरूपसिद्धौ मिथोऽनपेक्षणात्, सहकारित्वमात्रस्यैव मिथोऽपेक्ष्यत्वाच्च। अयमिति पदं वा नानुषञ्जनीयम्। नन्वथातःपदयोरन्यतरेणालम्; सूत्रं ह्येतत्; मैवम्, योजनाधिक्यात्; कर्मविचारव्यवधायकशास्त्रान्तरनैरपेक्ष्यद्योतनार्थत्वादथशब्दस्य; ब्रह्मविचार्यत्वहेतोरनन्यलभ्यप्रयोजनवत्त्वेनापातधीस्थस्य विशेषणविशेष्यांशासिद्धिव्युदासार्थत्वादतःशब्दस्य।

आनन्तर्येऽप्यहेतुत्वं हेतुत्वेऽपि विलम्बनम्।
दृष्टमिष्टं च तत्सार्थं द्वयं काण्डान्तरे यथा॥ १९८॥

एकं जिहासतस्त्वत्र द्वितीयं हेयमापतेत्।
स्वाधिकारं स्वहेतुं च विचारः स्वयमाक्षिपेत्॥ १९९॥

तस्मादारम्भसूत्रेऽस्मिन् धर्मचिन्तादिसूत्रवत्।
प्रायुङ्क्त प्रातिलोम्येन प्रतिज्ञादि त्रिकं पृथक्॥ २००॥

अत्र कीदृग्वृत्तम्? यन्नियमेनापेक्ष्यम्; कीदृक् च वर्तिष्यमाणम्? येन वृत्तविशेषाक्षेपः; तयोश्च पौर्वापर्येऽपि कथं कार्यकारणभावः? तत्सिद्धौ च तृणारणिमणिन्यायः

स्यात्। नियमेऽपि तत्त्वधीमुक्त्योरिव मा भूदानन्तर्यमित्यत्राह—**अधीतेति**। कर्म-ब्रह्मविचारौ वृत्तवर्तिष्यमाणौ। तयोरल्पास्थिरफलानन्तस्थिरफलशब्दाभ्यां संजातेत्यादिना च हेतुहेतुमद्भावव्यञ्जनम्। स्थिरास्थिरशब्दाविह नाशराहित्यतद्वत्त्वपरौ। कर्मज्ञानमिह निर्णयरूपम्। तस्याधिगतिः प्राप्तिः; "परीक्ष्य लोकान्" इत्यादिभिरल्पास्थिरफलतया-वगमो वा। अनुष्ठानद्वारा कर्मज्ञानस्य फलसंबन्धः। अल्पास्थिरफलत्वं कर्मविशेषणं वा। मोक्षविश्रान्तविद्याङ्गकर्मव्यावृत्त्यै केवलशब्दः। अनन्तस्थिरफलशब्दः कर्मधारयवृत्त्या ब्रह्म-विशेषणम्। बहुव्रीहितया वा परम्परया मोक्षहेतुभूतां जिज्ञासां विशिनष्टि। समित्युप-सर्गेण हेतुनिरपेक्षमानन्तर्यं च सूच्यते। सांख्यादिशीलनजन्या दुःखदृष्टिमात्रजन्या वा मुमुक्षा हि समीचीं ब्रह्मचिन्तां न सूते। कर्ममात्रेऽनन्तफलदुराशायां निरस्तायां निवृत्त-तत्प्रतिबन्धतया व्युत्पत्तिभूयस्त्वोपनिपतितधीवृद्ध्या च तीव्रतमे मोक्षाभिलाषे सामग्री-दशापन्ने ब्रह्मविचारविलम्बो न स्यादित्याशयः।

विघ्नान्तरविहीने तु स्यादानन्तर्यमत्र नः।
अतो नातिप्रसक्तिः स्यात्तथान्यैरपि संमतेः॥ २०१॥

अधीतेत्यादिना मुमुक्षोत्तम्भकमतान्तरशीलनानवसरज्ञापनम्। जिज्ञासोत्पादक-फलापातधीवृद्ध्यै वेदमात्रनियतव्युत्पत्तिविशेषसिद्ध्यै वा "निष्कारणः षडङ्गो वेदोऽध्येयः" इत्यादिसिद्धसाङ्गत्वोक्तिः। "अङ्गग्रहणं विचारप्रयोजकस्य प्रयोजनालोचनस्य सि-द्ध्यर्थम्" इति तूलिका। फलाधिक्याद्विशेषं गृह्णता सशिरस्कशब्देनाध्ययनविधौ स्वा-ध्यायशब्दस्य नियतक्रमभागद्वयविषयत्वं तद्विचारार्थायास्त्रिकाण्ड्या ऐकशास्त्र्यं क्रमश्च सूच्यते। न ह्यध्ययनविध्यनालीढं शिरः, येन न विचार्यं स्यादिति भावः। वेदशब्द इह पुरुषार्थतदुपायादिबोधनार्हत्वं व्यनक्ति। तत एव विचारेच्छाजनकापातधीसिद्धिः; षष्ठ्यन्तपदाभ्यामधिकारिनिष्कर्षः। यदुक्तं कैश्चित्कर्मसूत्रारम्भे—

"प्रसिद्धोऽप्यथशब्दादेः किं पदार्थोऽत्र वर्णितः।
प्रदर्शनार्थमित्येके केचिन्नानार्थवादिनः॥
समुदायादवच्छिद्य भवदासेन कल्पितात्।
शक्तितोऽवयवस्यैव वर्णयन्त्यष्टमादिवत्॥"

इति, तदिह नातीव पेशलम्। प्रसिद्धापवादशङ्कायां पदद्वयव्याख्यानस्यावतारितत्वात्।

## मूलभावप्रकाशिका

भगवद्बोधायनवृत्तिसंग्रहात्मकटङ्कद्रमिडादिपूर्वाचार्यग्रन्थमूलकत्वेन स्वभाष्यस्यातथाभूतशंकरभाष्यादिभ्यो वैलक्षण्यप्रदर्शनमुखेन स्वकृतिसाफल्यं प्रदर्शयन् चिकीर्षितं प्रतिजानीते-**भगवद्बोधायनेति**। **विस्तीर्णा**मित्यनेन बोधायनवृत्तेराधुनिकजनानुपयुक्तत्वं सूचितम्। **संचिक्षिपुरिति**; अनेन संक्षिप्ततयातिगहनेषु टङ्कद्रमिडादिपूर्वाचार्यग्रन्थेष्वपि न मन्दमतीनामाधुनिकानामधिकार इति सूचितं भवति। संभवदनेकार्थत्वादथशब्दं व्याचष्टे—**अत्रायमथशब्द इति**। अत्र; अस्मिन् ब्रह्मविचारकर्तव्यताविधायकसूत्र इत्यर्थः। अयमित्यनेन चातःशब्दसमभिव्याहृतत्वमुच्यते। अयं भावः—गोशब्दस्य किरणाद्यनेकार्थसत्त्वेऽपि सास्नादिमत्पिण्ड इव अथशब्दस्यारम्भाद्यनेकार्थसत्त्वेऽप्यानन्तर्ये प्रसिद्धिप्राचुर्यं दुरपह्नवम्। तच्च नियतपूर्ववृत्तासंभवरूपबाधकसत्त्वेऽपोद्यते; यथा 'आदित्यस्य गावः प्रकाशन्ते' इत्यादावादित्यसमभिव्याहारबलात् प्रसिद्धार्थत्यागः। न चात्र नियतपूर्ववृत्तासंभवः, अधीतसाङ्गसशिरस्केत्यादिना ब्रह्मजिज्ञासापदसमभिव्याहारलब्धार्थस्यानुपदमेव प्रदर्शयिष्यमाणत्वात्; पूर्ववृत्तहेतुत्वप्रत्यायकातःशब्दबलादपि पूर्ववृत्तप्रतीतेश्च; अथशब्दस्य कर्मविचारानन्तर्याभिधानमुखेन कर्मफलानित्यत्वप्रतीतिरूपाधिकारिविशेषणसिद्धिप्रदर्शनमुखेन ब्रह्मविचाराधिकारिसद्भावसमर्थनपरत्वे संभवति निष्प्रयोजनाधिकाराद्यर्थत्वासंभवाच्च। अधिकारो हि प्रारम्भः। 'ब्रह्मजिज्ञासा प्रारभ्यते' इत्युक्तिमन्तरेणापि प्रारम्भस्य ज्ञायमानतया प्रारम्भार्थकत्वस्य व्यर्थत्वात्। न च 'प्रारभ्यते' इत्युक्त्या ब्रह्मविचारस्य प्रारम्भयोग्यताप्रतिपादनमुखेन विचाराधिकारसिद्धिराक्षिप्यत इति प्रारम्भार्थकत्वस्य न व्यर्थत्वमिति वाच्यम्, एतादृशकुसृष्टिमन्तरेण प्रसिद्धानन्तर्यार्थाश्रयणेनाधिकारिसमर्थनपरत्वसंभवे आरम्भार्थत्वस्यायुक्तत्वात्। "अथ योगानुशासनम्" "अथ शब्दानुशासनम्" इत्यादौ तु नियतपूर्ववृत्ताप्रतीतेरारम्भार्थकत्वमाश्रितम्। न च मङ्गलार्थकत्वं शक्यम्,

> "ओंकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा।
> कण्ठं भित्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ॥"

इत्योङ्कारतुल्यतया शङ्खस्वनादिवदथशब्दस्य श्रूयमाणस्योच्यमानस्य वा मङ्गल-

प्रयोजनकत्वेऽपि मङ्गलाभिधायित्वासंभवात्; माङ्गलिकशब्दस्य "तदस्य प्रयोजनम्" इति सूत्रविहितठक्प्रत्ययान्तत्वात् आनन्तर्याद्यभिधानेऽपि मङ्गलप्रयोजनकत्वस्य संभवाच्च; मङ्गलाभिधायकत्वेऽप्यथशब्दार्थस्य मङ्गलस्य जिज्ञासां प्रति कर्तृत्वकरण-त्वादिनान्वयासंभवात्; न्यायव्युत्पादनसूत्रे 'मङ्गलरूपा ब्रह्मजिज्ञासा' इति स्तुतेरयुक्त-त्वाच्च। 'अथैवं मन्यसे' इत्यादौ अथशब्दस्य पक्षान्तरपरिग्रहे दृष्टत्वेऽपि प्रकृते पूर्वं कस्यचित् पक्षस्यानुपन्यस्तत्वान्न तदर्थत्वं युक्तम्। अतोऽथशब्दस्य सप्रयोजनप्रसिद्धा-नन्तर्यार्थत्वमेव युक्तमिति। 'एतदुक्तं भवति' इत्यत्र एतच्छब्दस्य वक्ष्यमाणार्थे सर्व-विभक्त्यर्थवाचिनस्तसेश्च 'इतः' इत्यादौ पञ्चम्यर्थव्यतिरिक्तेऽपि प्रयोगदर्शनात् संशयविपर्ययौ मा भूतामित्यतःशब्दं व्याचष्टे-**अतःशब्दो वृत्तस्य हेतुभाव इति**। 'अत्रायम्' इति पदमनु-षञ्जनीयम्। अत्रेत्यस्य ब्रह्मजिज्ञासासूत्र इत्यर्थः। अयमित्यस्याथशब्दसमभिव्याहृतत्वमर्थः। अयं भावः—एतच्छब्दस्य प्रकृतार्थत्वं तसेश्च हेत्वर्थकत्वं प्रसिद्धम्। न चात्र तत्त्यागे हेतुरस्ति; प्रत्युत पूर्ववृत्ताक्षेपकब्रह्मजिज्ञासाथशब्दाभ्यां समभिव्याहृतस्यातःशब्दस्य पूर्ववृत्तहेतुभावार्थक-त्वस्यैव युक्तत्वात्। ननु अथातःशब्दार्थनिर्णययोरन्योन्यसापेक्षत्वादन्योन्याश्रय इति चेत्—न; यथा 'गुरुभार्गवौ' इत्यादिषु परस्परसाहचर्यात् ग्रहयोरेव प्रतीतिः, नाचार्यपरशुरामयोः; यथा च 'रामकृष्णौ' इति बलकेशवयोरेव प्रतीतिः, न तु दाशरथ्यर्जुनयोः; एवमिहापि इतरेतरसाह-चर्यादर्थनिर्णायकत्वेऽप्यदोषः। ननु यस्यानन्तर्यप्रतियोगित्वं तस्य हेतुत्वमपि सिद्धमित्य-तःशब्देन तद्धेतुत्वाभिधानं मुधेति चेत्—न; कर्मविचारस्यानन्तर्यप्रतियोगित्वसंभवेऽपि न ब्रह्म-विचारहेतुत्वं संभवति; कर्मफलानित्यत्वप्रतीतिसहितानन्तस्थिरफलापातप्रतीतिविशि-ष्टरूपब्रह्मविचाराधिकारिविशेषणीभूतकर्मफलानित्यत्वप्रतीतिद्वारा हि कर्मविचारस्य ब्रह्म-विचारोपयोगो वक्तव्यः; स च न संभवति, षोडशलक्षण्यां मीमांसायां क्वाप्य-धिकरणे कर्मफलानित्यत्वसमर्थनाभावेन "अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति" "अपाम सोमममृता अभूम" "हिरण्यदा अमृतत्वं भजन्ते" इत्यादि-मन्त्रार्थवादप्रतिपन्नकर्मफलनित्यत्वस्यानपोद्यत्वात्। ननु चातुर्मास्यानामक्षयफलत्वे पुनस्त-दनुष्ठानवैयर्थ्यात् प्रत्यब्दं चातुर्मास्यविधानमनर्थकं स्यादिति चेत्—न; आवृत्तिविधानस्य कर्मणामल्पास्थिरफलत्वहेतुत्वाभावात्; "आवृत्तिरसकृदुपदेशात्" इत्यधिकरणे "आ प्रयाणात्तत्रापि हि दृष्टम्" इत्यधिकरणेच च ज्ञानस्याप्यावृत्तिप्रतिपादनेन

तत्फलस्याप्यनित्यत्वप्रसङ्गात् । यद्याप्रयाणमहरहरावृत्तिविशिष्टस्यैव ज्ञानस्य मोक्षः फलं, तदात्रापि तथास्तु । यदि 'प्रतिवसन्तं सोमयागस्य पञ्चाब्दपर्यन्तं वा पञ्चदशाब्दपर्यन्तं वा प्रत्यब्दं वा चातुर्मास्यानाम्' इति विहितावृत्तिवैशिष्ट्येन फलजनकत्वाभ्युपगमे तत्तदावृत्तितारतम्यात्फलतारतम्यं स्यादित्युच्येत; तदा ज्ञानावृत्तेरपि आप्रयाणमनुष्ठेयायाः प्रयाणकालस्याव्यवस्थितत्वात् तत्तारतम्येन फलतारतम्यं स्यादिति तुल्यम् । न च "कर्मण्यारम्भभाव्यत्वात् कृषिवत् प्रत्यारम्भं फलानि स्युः" इत्येकादशाध्यायाधिकरणे कर्मणां कृषिन्यायेन प्रत्यारम्भं फलभेदव्युत्पादनादनित्यं फलमिति वाच्यम्; आवृत्तिवैशिष्ट्येन येषां कर्मणां फलजनकत्वं तदतिरिक्तविषयत्वात्तस्य । अवश्यं तथाभ्युपगन्तव्यम् । इतरथा दाक्षायणयज्ञे फलभेदः स्यात् । न च "फलस्य कर्मनिष्पत्तेस्तेषां लोकवत्परिमाणतो विशेषः स्यात्" इत्यर्थवादाधिकरणसूत्रे बह्वल्पाङ्गकर्मगुरुलघुभावानुसारेण फलतारतम्यस्योक्तत्वात् "हिरण्यदा अमृतत्वं भजन्ते" "अपाम सोममृता अभूम" अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतम्" इत्यादिनामृतत्वसाधनतयोक्तानां हिरण्यदानसोमपानचातुर्मास्यानां तुल्यत्वावगत्याल्पास्थिरफलत्वं सिध्येदिति शङ्कनीयम्, "विकल्पोऽविशिष्टफलत्वात्" इत्यधिकरणे बह्वल्पगुणविद्यानां प्रपत्तेश्च गुरुलघुभावे सत्यप्येकरूपमुक्तिफलताया वक्ष्यमाणत्वात् तद्वदेव कर्मण्युपपत्तेः । ननु उपासनानामाप्रयाणमावृत्तिविशिष्टतया फलसाधनत्वं तृतीयाध्याये वक्ष्यत इति ब्रह्मविचारारम्भदशायां वक्ष्यमाणन्यायापरिज्ञानादावृत्तिविधानादिमात्रेण कर्मणामल्पास्थिरफलत्वं ज्ञायत इति चेत्—सत्यमनेन ज्ञायते; तथापि वक्ष्यमाणविरोधादावृत्तिविधानादियुक्तेराभासत्वात् तन्मूला कर्मफलानित्यत्वप्रतीतिरप्याभासी-भवेत् । किंचारम्भदशायामपि वक्ष्यमाणार्थानां श्रुतशास्त्रेभ्योऽवगतिसंभवात् तादृशवक्ष्यमाणन्यायावगतिमतां पुरुषाणां कर्मणामल्पास्थिरफलत्वावगत्यभावेन ब्रह्मविचारे प्रवृत्त्यभावप्रसङ्गात् । किंच अवहननवत् विचारस्य दृष्टार्थत्वेन यावत्फलोदयमावर्तनीयतया पुनर्विचारारम्भदशायां "विकल्पोऽविशिष्टफलत्वात्" इति तृतीयाध्यायन्यायावगतिसंभवात् । एतेन "स्वर्गकामो यजेत" इति स्वर्गार्थत्वेन विहितस्य सोमयागस्य उत्तरवेद्या विकल्पितमग्न्याधारस्थण्डिलरूपाग्निमाश्रित्य "श्येनचितं चिन्वीत स्वर्गकामः" इति स्वर्गार्थश्येनाकृतिरूपगुणविधानसामर्थ्येन तद्गुणयुक्तसोमयागजन्यस्वर्गात् केवलतज्जन्यस्वर्गस्य न्यूनतावश्यंभावात् अल्पास्थिरफलत्वावगमः सिध्यतीत्यपि शङ्का परास्ता । "एकस्मै वा अन्ये यज्ञक्रतवः

कामायाह्रियन्ते सर्वेभ्यो ज्योतिष्टोमः" इति सर्वफलार्थतया विहितस्य सोमयागस्य "यो वृष्टिकामो योऽन्नाद्यकामो यः स्वर्गकामः स सौभरेण स्तुवीत" इति फलत्रयसाधनतया विहितस्य सौभरस्य तत्तत्फलविशेषार्थप्रयोगे "हीषिति वृष्टिकामाय निधनं कुर्यादूर्गित्यन्नाद्यकामाय ऊ इति स्वर्गकामाय" इति निधनविशेषव्यवस्थावत् स्वर्गार्थिसोमयागप्रयोगे गुणविशेषव्यवस्थेत्युपपत्तेः। न च "अपाम सोमममृता अभूम" "अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति" इत्यादिमन्त्रार्थवादवर्णितानां फलत्वाभावनियमः, सूक्तवाकमन्त्राम्नातानामायुरादीनां रात्रिसत्रार्थवादाम्नातायाः प्रतिष्ठायाश्च फलत्वदर्शनात्। न च सोमयागस्य विध्युद्देशे फलश्रवणान्मन्त्रोक्तफलं न ग्राह्यमिति वाच्यम्, विध्युद्देशश्रुत एव स्वर्गे नित्यत्वरूपविशेषणस्य "सप्तर्षीणां सुकृतां यत्र लोकस्तत्रेमं यज्ञं यजमानं च धेहि" इति मन्त्रेण लोकविशेषभोग्यत्वस्येव समर्पणोपपत्तेः। "दिवि ज्योतिरजरमारभेताम्" इति ऐष्टिक एव मन्त्रान्तरे पत्नीयजमानाभ्यां प्राप्यस्य फलस्य नित्यत्वोक्तेश्च। "फलवत्तां दर्शयति" इति पत्न्यधिकरणसूत्रे विशिष्यास्य मन्त्रस्य फलसमर्पकतायाः प्रदर्शितत्वाच्चेति। अतः कर्मविचारस्य कर्मणामल्पास्थिरफलत्वावगतिहेतुत्वासंभवान्न ब्रह्मविचारं प्रति हेतुत्वसंभव इतीमामाशङ्कां निर्वर्तयितुमतःशब्दः। अयं भावः—यत्तावदुक्तम् ज्ञानस्याप्यावृत्तिश्रवणादिति; तन्न, ज्ञानस्यासाधनत्वात् ध्यानस्यैव साधनत्वात् तस्य चावृत्तिविशिष्टरूपत्वात्। यद्यपि "आ प्रयाणात्" इत्यत्र ध्यानस्याप्यावृत्तिरुक्ता, तथापि "प्रायणान्तमोंकारमभिध्यायीत" इति प्रायणान्तमनुष्ठितस्यैव ध्यानस्य मोक्षसाधनत्वात् कर्मणि तादृशावृत्तिविशिष्टस्य कर्मणो मुक्तिसाधनत्वप्रतिपादनवाक्यादर्शनात्; "स खल्वेवं वर्तयन् यावदायुषम्" इत्यस्य ध्यानविषयत्वात् कर्मसु पञ्चाब्दपञ्चदशाब्दाद्यावृत्तितारतम्यात् फलभेदस्यावश्यंभावात्। न हि ध्याने ईदृशमावृत्तितारतम्यमस्ति, प्रायणान्तावृत्तस्यैव साधनत्वात्। न हि प्रायणान्तावृत्तं साधनं कस्यचित् शीघ्रफलमासीदित्येतावता फललाघवं कल्पयितुमुचितम्; तथाहि सति कस्यचिद् दृढाङ्गस्य सहकारिपौष्कल्यवतः किंचित्कर्म शीघ्रं निर्वृत्तमिति तत्र फललाघवं कल्प्येत; न हि सेतुदर्शनं कस्यचिच्चोरपीडादिकमन्तरेण निष्पन्नमित्यतादृशापेक्षया फलवैषम्यं कल्प्यते। उपसंहार्यगुणाल्पत्वभूयस्त्वादिकमपि न फलवैषम्यकल्पकम्, यथाकथंचिदाप्रयाणनिरन्तरकर्तव्यत्वाविशेषेणानुष्ठाने सौकर्यदौष्कर्यासंभवात्। तस्मादावृत्तितारतम्येन फलतारतम्यस्यावश्याभ्युपेयत्वात् मुक्तौ तदभावात् मुक्तेरन्यदेव

कर्मणः फलं वाच्यम् । किंच अनेकजन्मानुष्ठितनित्यनैमित्तिककर्मनिर्मलीकृतान्तः-करणसंपाद्यायाः शान्त्याद्यङ्गिकाया भक्तेः सर्वतो गरीयस्त्वेन तत्साध्यमुक्तेः कर्मसाध्यत्वे गुरुतरभक्तिरूपसाधनविधेः महाविश्वासानुबद्धप्रपत्तिविधेश्चाननुष्ठानलक्षणाप्रामाण्यप्रसङ्गात् न कर्मणां भक्तिप्रपत्तिसाध्यमोक्षफलकत्वमिति कर्मफलानित्यत्वनिश्चयः संभवत्येवेति । एवंविधन्यायालोचनसनाथात् "तद्यथेह कर्मचितो लोकः क्षीयत एवमेवामुत्र पुण्यचितो लोकः क्षीयते" इति वाक्यात्कर्मफलानित्यत्वनिश्चय इति कर्मविचारस्य ब्रह्मविचारहेतुत्वं संभवतीति । कृतकर्मविचाराणां सर्वेषां वैराग्याभावो दुष्कृतप्रतिबन्धवशाद् द्रष्टव्यः । अथातः-शब्दयोरुक्तार्थपरत्वं पूर्ववृत्तसंभवेनोपपादयति—**अतीतेति** ; प्रथमतः साङ्गवेदाध्ययनं, ततो व्याकरणाध्ययनमहिम्नानन्तफलापातप्रतीतिः, ततः पूर्वभागविचारः, ततः कर्मफलानित्यत्वप्रतीतिः, तत ऐहिकामुष्मिकफलभोगविरागः, ततो नित्यत्वेन प्रतिपन्ने मोक्षेऽभिलाषः, ततस्तत्साधनब्रह्मविचार इति क्रमः "प्रथमं तावत्" इत्याद्युत्तरभाष्ये स्पष्टीकरिष्यते । एवं च साङ्गसशिरस्कस्वाध्यायाध्ययनानन्तरभाव्यापातप्रतीतिसमनन्तरभाविकर्मविचारोत्तरभाविनित्यानित्यविवेकाधीनमुमुक्षानन्तरभाविब्रह्मविचारे नियतपूर्ववृत्तासंभवः कथं स्यात्? येनाथातःशब्दयोः प्रसिद्धार्थत्यागः स्यादिति भावः । अल्पास्थिरफलं केवलं कर्मेति ज्ञानमधिगतं प्राप्तं येन सः, अधिगताल्पास्थिरफलकेवलकर्मज्ञानः ; तस्य भावस्तत्ता ; तयेत्यर्थः । कर्मणः कैवल्यं च ब्रह्मविद्याङ्गत्वराहित्यम् ; "यो वा एतदक्षरं गार्ग्यविदित्वास्मिन् लोके जुहोति यजते तपस्तप्यते बहूनि वर्षाण्यन्तवदेवास्य तद्भवति" इति श्रुत्यर्थो विवक्षितः ।

### श्रीभाष्यम्

ब्रह्मणो जिज्ञासा ब्रह्मजिज्ञासा । ब्रह्मण इति कर्मणि षष्ठी, "कर्तृकर्मणोः कृति" इति विशेषविधानात् । यद्यपि संबन्धसामान्यपरिग्रहेऽपि जिज्ञासायाः कर्मापेक्षत्वेन कर्मार्थत्वसिद्धिः, तथाप्याक्षेपतः प्राप्तादाभिधानिकस्यैव ग्राह्यत्वात् कर्मणि षष्ठी गृह्यते । न च "प्रतिपदविधाना च षष्ठी न समस्यते" इति कर्मणि

षष्ठ्याः समासनिषेधः शङ्कनीयः; "कृद्योगा च षष्ठी समस्यते" इति प्रतिप्रसवसंभवात्। ब्रह्मशब्देन स्वभावतो निरस्तनिखिलदोषोऽनवधिकातिशयासंख्येयकल्याणगुणगणः पुरुषोत्तमोऽभिधीयते। सर्वत्र बृहत्त्वगुणयोगेन हि ब्रह्मशब्दः। बृहत्त्वं च स्वरूपेण गुणैश्च यत्रानवधिकातिशयं सोऽस्य मुख्योऽर्थः। स च सर्वेश्वर एव। अतो ब्रह्मशब्दस्तत्रैव मुख्यवृत्तः। तस्मादन्यत्र तद्गुणलेशयोगादौपचारिकः, अनेकार्थकल्पनायोगात्; भगवच्छब्दवत्। तापत्रयातुरैरमृतत्वाय स एव जिज्ञास्यः। अतः सर्वेश्वर एव जिज्ञासाकर्मभूतं ब्रह्म।

### श्रुतप्रकाशिका

अथ ब्रह्मजिज्ञासापदार्थं विवक्षुस्तदेकपद्यस्य समासनिबन्धनत्वात् प्रथमं समासार्थं निरूपयति—**ब्रह्मण इत्यादिना**। कर्मत्वकरणत्वादिसंबन्धविशेषेष्वितरविभक्तयः "कर्मणि द्वितीया" इत्यादिभिः सूत्रैर्विहिताः; "षष्ठी शेषे" इति सूत्रेण संबन्धसामान्ये षष्ठी विहिता। अत्र तस्याः सामान्यविषयत्वमाशङ्क्य कर्मविषयत्वं निश्चीयते। तत्र सामान्येन समासस्यानेकविभक्तिसाधारणत्वाद्विभक्त्यन्तरशङ्काव्यावृत्त्यर्थमिह तेषामनुपपत्तिमभिप्रयन् पदं विगृह्णाति—**ब्रह्मणो जिज्ञासेति**। चतुर्थीपरिग्रहे प्रयोजनत्वसिद्धावपि प्रकृतिविकारभावाभावे चतुर्थिसमासायोगात्तदपरिग्रहः। "सप्तमी" इति योगविभागात् 'ब्रह्मणि जिज्ञासा' इति समासेऽपि ब्रह्मणो विषयत्वमात्रं स्यात् ,न तु प्रयोजनत्वमिति सप्तम्यपरिग्रहः। 'शङ्कुलयाखण्डः' इतिवत् तृतीयासमासे विषयत्वप्रयोजनत्वे न सिध्यत इत्यभिप्रायः। ब्रह्मण इति शब्दरूपस्य षष्ठीपञ्चमीसाधारण्यात् षष्ठ्याश्चानेकार्थत्वात् तन्निर्णयार्थमाह—**ब्रह्मण इतीति**। कुत इत्यत्राह—**कर्तृकर्मणोरिति**। षष्ठ्याः कर्तृकर्मसाधारण्येऽपि जिज्ञासाकर्तृत्वं तापत्रयातुरस्यैव; ब्रह्मणस्तु कर्मत्वमित्यभिप्रायेण ब्रह्मण इति कर्मणि षष्ठीत्युक्तम्। कर्मणि षष्ठीस्वीकारे ब्रह्मणो विषयत्वप्रयोजनत्वे सिध्येताम्। ननु तर्हि कथं 'यद्यपि' इत्यादेः संबन्धसामान्यपरिग्रहशङ्काविषयस्य भाष्यस्योत्थानं युज्यते? उच्यते—संबन्धसामान्यस्वीकारेऽपि जिज्ञासापदसामर्थ्याद्ब्रह्मणः कर्मत्वसिद्धेः, परंपरया संबन्धिनामुपायोपासकप्रतिबन्धादीनामपि जिज्ञा-

स्यत्वसिद्धेः, प्रतिपदविहितषष्ठ्याः समासनिषेधाच्च । तत्र सामर्थ्यात् षष्ठ्याः कर्मार्थित्वसिद्धिं ब्रह्मानुबन्धिनामपि जिज्ञास्यत्वसिद्धिं च शङ्कते—**यद्यपीति** । 'संबन्धसामान्यपरिग्रहे' इत्यत्र परिणा ब्रह्मानुबन्धिनामपि जिज्ञास्यत्वसिद्धिः सूच्यते । परितो ग्रहणेन हि परितः स्थितानामपि ग्राह्यत्वं लभ्यते । अत एव ह्युत्तरत्र गृह्यत इत्युक्तम्, न तु परिगृह्यत इति । तदुभयं परिहरति—**तथापीति** । अत्रायमर्थः—प्रधानस्य ब्रह्मणोऽप्रधानानामन्येषां च कर्मत्वस्याक्षेपसिद्धत्वादपि प्रधानकर्मत्वस्याभिधानिकत्वमितरेषां प्रधानसंबन्धादाकाङ्क्षावशाच्च कर्मत्वस्य सामर्थ्यसिद्धत्वं च स्वीकर्तुं युक्तमिति । अतः प्रतिपदविहिता षष्ठी ग्राह्या, विलम्बितधीहेतोः शीघ्रधीहेतुर्बलीयानिति न्यायात् । षष्ठ्याः संबन्धसामान्यविवक्षायां हि कर्मत्वधीर्विलम्बिता स्यात्; कृद्योगषष्ठीविवक्षायां तु शीघ्रभाविनी । ननु कर्तृकर्मणोरुभयोरप्यर्थयोः सूत्रप्रतिपन्नत्वाद्विलम्बिता कर्मधीरिति चेत्—न; कर्तुर्जिज्ञासोरधिगतकर्मणः प्रतिपन्नत्वात्कर्मार्थित्वमेव हि प्रथमतरं धियमधिरोहेत् । समासनिषेधमाशङ्क्य परिहरति—**न चेति** । चः शङ्कासमुच्चये । प्रतिप्रसवोऽपवादापवादः । 'सर्पिषो ज्ञानम्' इत्यादिप्रयोगेषु "ज्ञोऽविदर्थस्य करणे" इति सूत्रविहितायां षष्ठ्यां समासनिषेधस्य सावकाशत्वम्; 'सर्पिषा प्रवृत्तिः' इति हि तस्य वाक्यस्यार्थः । यद्यपि ज्ञानपदं कृदन्तम्; तथापि 'सर्पिषः' इति षष्ठी न कृद्योगविहिता, 'सर्पिषो जानीते' इति तिङन्तपदान्वयार्हत्वात् धातोर्विभक्तेश्च प्रवृत्तितत्करणार्थत्वाच्च । न हि तत्सर्वं कृद्योगविहितत्वे सिध्यति । अतो नात्र प्रतिप्रसवप्राप्तिरिति निषेधस्य सावकाशत्वम् । ननु—नेयं षष्ठी व्याख्येया, सूत्रे अप्रयुक्तत्वात्; प्रयुक्त एव हि शब्दो बोधकः, न त्वप्रयुक्तः; बोधकशब्द एव हि व्याख्येयः । अप्रयुक्तापि स्मृता विभक्तिर्बोधिकेति सा व्याख्येयेति चेत्; न; तत्स्मरणेन विनाप्यर्थप्रतिपत्तेः । अर्थप्रतिपत्तिश्च प्रातिपदिकेन लक्षणया; लक्षणा च योग्यतादिना । अतोऽनुशासनेन तद्व्याख्यानमयुक्तम् । उच्यते—अप्रयुक्तविभक्त्यर्थस्य प्रातिपदिकेन लक्षणा हि समासः । अत्र लक्ष्यार्थोपलक्षणतया विभक्तिरनुप्रविष्टा । अतो लक्ष्यार्थविशेषनिर्णयाय विग्रहवाक्यस्था षष्ठी व्याख्येया । तर्हि नानुशासनेन सा व्याख्येया; लाक्षणिकार्थो हि योग्यतादिनावसीयते; न हि 'गङ्गायां घोषः' इत्यत्रानुशासनवशात् कूलं लक्ष्यते; अपितु योग्यतादिनैवेति । नैवम्, सर्वासु लक्षणासु योग्यतादिनैवार्थनिर्णयनियमाभावात् । स तु नियमः प्रातिपदिकेन प्रातिपदिकान्तरार्थलक्षणायाम्; प्रातिपदिकेन विभक्त्यर्थलक्ष-

णायां त्वेतद्विभक्त्यर्थो लक्ष्यः, न विभक्त्यन्तरार्थ इति हि नियमो भवति; स च शब्दानुशासनाधीन इति तदनुरोधेन तन्निरूपणं युक्तम्। तत्र संबन्धसामान्यं लक्षयित्वा तेन कर्मत्वस्याक्षेपादपि प्रथमत एव कर्मत्वस्यैव लक्षणा शब्दानुशासनानुमता युक्ता। अतः समस्तपदलक्ष्यार्थविशेषनिर्णयायानुशासनानुरोधेन लक्ष्यार्थोपलक्षणभूता विग्रहवाक्यस्था षष्ठी व्याख्येयेति। यद्वा लुप्तविभक्तिकशब्देन विभक्त्यर्थबोधनं मुख्यं स्यात्; संबन्धिनो हि लक्षणा दृष्टा, न संबन्धमात्रस्य; विभक्त्यर्थश्च स्वयं संबन्धरूपः। न च संबन्धस्य संबन्धान्तरानपेक्षत्वेन स्वस्मिन् संबन्धकार्यकरत्वाल्लक्षणा संभवतीति वाच्यम्, संबन्धस्य स्वपरनिर्वाहकत्वानभिज्ञानामपि विभक्त्यर्थप्रतीतेः। न हि संबन्धः स्वसत्तया लक्षणाहेतुः, किंतु ज्ञायमानतयैव; न चेदतिप्रसङ्गात्। एवं लक्षणानुपपत्त्या प्रयोगस्यानन्यथासिद्धत्वात्समस्तशब्देन विभक्त्यर्थबोधनं मुख्यम्; अमुख्यत्वे वा का नः क्षतिः? ननु विग्रहवाक्येऽपि कथं कर्मत्वमाभिधानिकम्? प्रयुज्यमानापि ह्युपपदविभक्तिर्निरर्थिका; तद्विधानं 'दाराः कलत्रम्' इतिवत्प्रयोगसाधुत्वाय; अर्थस्त्वर्थसामर्थ्याक्षिप्तः; अत एव हि कारकविभक्तेरुपपदविभक्तिदौर्बल्यम्; समासे त्वप्रयुक्ताया उपपदविभक्तेः कथंतरां कर्माभिधायकत्वमिति। उच्यते—आभिधानिकत्ववत् कृदन्तपदप्रयोगेण शीघ्रधीविषयत्वसाम्यादाभिधानिकत्वोक्तिः। पदान्तरश्रवणापेक्षामात्रान्नाक्षेपादिवद्विलम्बाधिक्यम्। सामान्यषष्ठीपक्षे संबन्धसामान्यं प्रतिपद्य जिज्ञासाशब्दार्थगतसकर्मकत्वस्वभावालोचनयार्थविशेषावगमादपि कृदन्तश्रवणमात्रभुवः कर्मत्वधियः शीघ्रत्वादिति कश्चित्परिहारः। "कर्मणि द्वितीया" इतिवत् "कर्तृकर्मणोः कृति" इति सप्तम्यन्तनिर्दिष्टयोः कर्तृकर्मणोरभिधेयत्वमनुशासनस्वारस्यानुगुणमिति भाष्यकाराभिप्रेतः परिहार इति संप्रदायः। कारकविभक्तेरुपपदविभक्तिवैषम्यं पदान्तरयोगविहितत्वरूपमस्त्येव। न च पदान्तरयोगावगम्यत्वमाभिधानिकत्वविरोधि, तस्य क्वचिन्मुख्यार्थव्यवस्थापकत्वदृष्टेः; यथा—'आदित्यस्य गावः प्रकाशयन्ति' इत्यादिषु। न हि तत्रादित्यादिपदान्तरयोगेन गोशब्दस्य किरणपरत्वं लाक्षणिकम्। पदान्तरपरामर्शसापेक्षत्वेन विलम्बितधीहेतुरुपपदविभक्तिः; कारकविभक्तिस्तु तन्निरपेक्षत्वाच्छीघ्रधीहेतुरिति प्राबल्यदौर्बल्यविभाग एव, न तु सार्थकत्वनिरर्थकत्वाभ्यां वैषम्यम्। विभक्त्यश्रवणादमुख्यत्वं तु परिहृतम्। एवं समासान्तर्गतविभक्त्यर्थे निरूपिते समस्तयोः पदयोः प्रथमं ब्रह्मशब्दं याचष्टे—ब्रह्मशब्देन चेति। ब्रह्मशब्दस्य प्रधानाद्यर्वाचीनार्थान्तरेषु प्रयोगदर्शनादि-

*

तरव्याख्यातृभिरीश्वरातिरिक्तवस्तुपरत्वेन व्याख्यातत्वाद्देवतान्तरपरत्वस्य कैश्चिदभ्युपगमाच्च तद्व्यावृत्त्यर्थं ‘ ब्रह्मशब्देन पुरुषोत्तमोऽभिधीयते’ इति प्रतिजानीते । पुरुषोत्तमशब्दस्य रूढ्या ब्रह्मशब्दस्य देवतान्तरपरत्वादिव्युदासः । अवयवशक्त्या बद्धमुक्तावस्थचेतनवैलक्षण्यमुक्तम् । स्वेतरवैलक्षण्यमात्रं तृणादेरप्यस्तीति तद्व्यावृत्त्यर्थं ‘स्वभावतः’ इत्यादिना विशेषणद्वयेन वैलक्षण्यं विशिनष्टि । इदं च विशेषणद्वयं शब्दशक्तेरर्थसामर्थ्याच्च ब्रह्मशब्दस्य पुरुषोत्तमपरत्वप्रतिपादनोपयोगितयोक्तम् ; न तु प्रवृत्तिनिमित्ततया; गुणतोऽपि बृहत्त्वे सति शब्दशक्त्यसंकोचसिद्धेः, मुमुक्षोरशेषदोषनिवृत्तिनिरतिशयानन्दप्राप्तिहेतुत्वाच्च । वाद्यन्तरोक्तस्याविद्यादिदोषान्वयस्य निर्गुणत्वस्य च व्यावृत्त्यर्थम् , उपाध्युपहितब्रह्मस्वरूपस्यैव कर्मवश्यत्वदुःखित्वादिव्यावृत्त्यर्थम् ; ज्ञानादिशक्तियोग एवास्य स्वाभाविकः सार्वज्ञ्यनिरतिशयानन्दादियोगस्तु कादाचित्क इति मतस्य च व्यावृत्त्यर्थमिदं विशेषणद्वयमुक्तम् । निरस्तकतिपयदोषत्वं निरस्तनिखिलदोषत्वं च केषांचित् बद्धानां मुक्तानां नित्यानामप्यस्तीति तद्व्यावृत्त्यर्थं ‘स्वभावतो निरस्तनिखिलदोषः’ इत्युक्तम् ; नित्यसिद्धानामपि भगवन्नित्यसंकल्पाधीनं हि नित्यनिर्दोषत्वम् । ‘स्वभावतः’ इत्युत्तरत्राप्यनुषङ्गः; तेन गुणानामविद्याकल्पितत्वपक्षव्यावृत्तिः । “ते ये शतम्” इत्यत्र पूर्वपूर्वगुणेभ्य उत्तरोत्तरगुणानामतिशयः सावधिक इति तद्व्यावृत्त्यर्थमनवधिकातिशयशब्दः ; तत्र हि ब्रह्मगुणातिशयस्य वाङ्मनसागोचरतयानवधिकत्वमुक्तम् ; सत्यसंकल्पत्वान्तर्भूता वशित्वादिगुणा इति हि वक्ष्यते । अतः कस्मिंश्चिद्गुणे तद्विधाभेदरूपतया गुणानां बहूनामन्तर्भावाभिप्रायो गणशब्दः । नन्वनवधिकातिशयशब्दस्य गुणविशेषणत्वे गणशब्दसामानाधिकरण्याभावाद्बहुव्रीहिर्न स्यात् ; गणविशेषणत्वमप्ययुक्तम् ; गुणस्वरूपस्य ह्यनवधिकातिशयत्वं, न तु गणस्वरूपस्य । नैवम् ; गण एव विशेष्य इति बहुव्रीहिसिद्धिः । तथाप्यर्थवशाद्गणान्तर्भूतैकैकगुणव्यक्तेरनवधिकातिशयत्वं फलितं स्यात् ; यथा—‘ एषा परिषदभिजनवती श्रुतशीलशालिनी’ इत्यत्र श्रुतशीलादीनां परिषद्विशेषणत्वे प्रतीतेऽपि तदन्तर्भूतानामेव श्रुताद्यन्वयः न तु समूहस्य, ततो निर्गतानां श्रुताद्यभावप्रसङ्गात् । असंख्येयत्वमपि गणविशेषणं युक्तम् ; गणासंख्येयत्वे गुणासंख्येयत्वं कैमुत्यसिद्धम् । अनवधिकातिशयशब्देन नित्यसिद्धव्यावृत्तिश्च, तद्गुणानां जगद्व्यापारानानुगुणत्वेन भगवद्गुणापेक्षया सातिशयत्वात् ; तेषामीश्वरतद्गुणविभूतिसाक्षात्कारस्यात्यन्तानुकूलस्य निरवधिकातिशयत्वेऽपि तादृशासंख्येयगुणाभावात्तद्व्यावृत्तिः । अनुषक्तेन ‘ स्वभावतः’ इति पदेन वा नित्यसिद्धव्यावृत्तिः; तेषां तादृश-

गुणकत्वं हि भगवन्नित्येच्छाधीनम् । स्वरूपेणानवधिकातिशयत्वाभावाच्च नित्यसिद्धव्यावृत्तिः; ते ह्यणुस्वरूपाः । अत्र स्वरूपस्याप्यनवधिकातिशयत्वं गर्भितम्; विभुत्वस्यापि गुणान्तर्भावात्, "बृहत्त्वं च स्वरूपेण गुणैश्च" इत्युपपादकग्रन्थोक्तेः । **अभिधीयते**; मुख्यवृत्त्या बोध्यते । अस्मिन् ग्रन्थे "येनाक्षरं पुरुषं वेद सत्यम्" इति श्रुतिश्चैतत्सूत्रार्थानुवादिन्यनुसंहिता भवति; तत्र हि "प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्" इति पुरुषपर्यायतया ब्रह्मशब्दः प्रयुक्तः । एवं प्रतिज्ञातमर्थं शब्दसामर्थ्यात् प्रथममुपपादयति— **सर्वत्रेत्यादिना** । तत्रार्थान्तरेषु ब्रह्मशब्दप्रयोगस्यान्यथासिद्धिं विवक्षुस्तदुपयुक्तं गुणयोगं दर्शयति—**सर्वत्रेति** । सर्वत्र; ब्रह्मशब्दप्रयोगविषयेषु सर्वेषु, बृहत्त्वगुणयोगोऽस्तीत्यर्थः । पुरुषोत्तमे गौणत्वमन्यत्र मुख्यत्वं च किं न स्यादित्यत्राह—**बृहत्त्वं चेति** । बृहत्त्वगुणमात्रयोगिषु सर्वेषु ब्रह्मशब्दप्रयोगाभावात् स्वरूपतो गुणतश्चानवधिकातिशयबृहत्त्वं प्रवृत्तिनिमित्तमित्यर्थः । ननु "बृहति बृंहयति तस्मादुच्यते परं ब्रह्म" "बृहत्त्वाद्बृंहणत्वाच्च तद्ब्रह्मेत्यभिधीयते" इति श्रुतिस्मृतिभ्यां बृहत्त्वे बृंहणत्वे च प्रवृत्तिनिमित्ततयावगते कथमिह बृहत्त्वमात्रं निमित्तमुच्यते? गुणतो बृहत्त्वे बृंहणत्वस्यान्तर्गतत्वादिति ब्रूमः । "स चानन्त्याय कल्पते" इति श्रुतिप्रसिद्धसकलसंकोचनिवृत्तिपूर्वकनिरवधिकज्ञानविकासरूपानन्त्यावहत्वं हि बृंहणत्वम्; तद्धि सकलहेयप्रत्यनीकत्वक्षान्तिकारुण्यादिमोक्षप्रदत्वौपयिकगुणगणवत्त्वम्; अत एव हि "स्वभावतो निरस्तनिखिलदोषः" इत्यादिकं प्रतिज्ञावाक्येऽभिहितम् । ननु स्वरूपतो बृहत्त्वमेव निमित्तमस्तु; किं गुणैरिति चेत्—न; ब्रह्मगुणादेरपि स्वरूपेण बृहत्त्वाद्ब्रह्मशब्दवाच्यत्वप्रसङ्गात् । तर्हि गुणतो बृहत्त्वमेवास्तु निमित्तमिति चेत्—न; शब्दशक्तेरसंकोचस्य स्वतः प्राप्तत्वात्; स्वरूपेण च बृहत्त्वसद्भावात्; "सत्यं ज्ञानमनन्तं ब्रह्म" "इति हि श्रुतिः । गुणतो बृहत्त्वं नाम सद्वारकबृहत्त्वम्; गुणद्वारा हि तत् । स्वरूपेण गुणैश्च निरतिशयबृहत्त्ववद्वस्तु पुरुषोत्तमादन्यदपि स्यात्, अन्यदेव वा स्यादित्यत्राह—**स चेति** । चः शङ्कानिवृत्तौ । सर्वेश्वरशब्देनैवकारेण च "तमीश्वराणां परमं महेश्वरम्", न तत्समश्चाभ्यधिकश्च दृश्यते" इति वाक्ययुगलार्थो विवक्षितः । ततः किमित्यत्राह—**अत इति** । अतः; अनवधिकातिशयबृहति ब्रह्मशब्दस्य मुख्यत्वात् सर्वेश्वरस्यैव तादृशबृहत्त्वगुणयोगित्वाच्चेत्यर्थः । कथं तत्रैव मुख्यवृत्तः? अन्यत्रापि ब्रह्मशब्दः प्रयुज्यत इत्यत्राह—**तस्मादिति** । तस्मात्; बृहत्त्वगुणयोगित्वात् । सर्वत्र मुख्यः कुतो न

स्यादित्यत्राह—**अनेकार्थेति** । परब्रह्मणोऽन्यत्र प्रयोगस्यान्यथासिद्धत्वान्न तत्र शक्तिकल्पनम्, "अनन्यथासिद्धः प्रयोगः शक्तिं कल्पयति" इति न्यायादित्यर्थः । अनेकशक्तिकल्पनं गौणत्वं वा न स्यात्, बृहत्त्वगुणयोगिसर्वव्यक्तिष्वेकयैव शक्त्या मुख्यत्वसंभवादित्यत्राह—**भगवच्छब्दवदिति** । तथा च श्रीमति वैष्णवे पुराणे भगवच्छब्दं प्रकृत्योक्तम् ।

"तत्र पूज्यपदार्थोक्तिपरिभाषासमन्वितः ।
शब्दोऽयं नोपचारेण ह्यन्यत्र ह्युपचारतः ॥"

इति । अनेन प्रस्तुतचोद्यस्य कः परिहार उक्तो भवति? उच्यते—बृहतिधातोर्मनिन्प्रत्ययान्तत्वेन निष्पन्नस्य ब्रह्मशब्दस्य प्रधानादिषु दृश्यमानः प्रयोगो नावयवशक्तिनिबन्धनः, तथाहि सति बृहन्महच्छब्दादिवदापेक्षिकबृहत्त्वयोगिषु सर्ववस्तुषु प्रयोगः स्यात्; न च तथा प्रयुज्यते; त्रसरेणुमपि हि ततोऽणिष्ठतयाभिमतद्रव्यान्तरापेक्षया महिमगुणशालीति वदन्ति । न च त्र्यणुकादिषु ब्रह्मशब्दप्रयोगः । एवं सर्वत्र प्रयोगादर्शनात् पङ्कजशब्दव्यवस्थापककुमुदादिव्यावृत्ततामरसानुवृत्तपद्मत्वजातिवत् ब्रह्मशब्दप्रयोगविषयपञ्चषव्यक्त्यनुवृत्तान्यव्यावृत्ताकारादर्शनादनेकशक्तिकल्पने प्राप्ते, अनन्यथासिद्धस्य प्रयोगस्य शक्तिकल्पकत्वात् ब्रह्मशब्दप्रयोगविषयेष्वन्येषु च बृहत्त्वगुणलेशयोगेन प्रयोगस्यान्यथासिद्धत्वाच्च नानेकशक्तिकल्पनं युक्तम् । तस्मात्पुरुषोत्तम एव प्रवृत्तिनिमित्तपौष्कल्यवति मुख्यत्वम्, अन्यत्रौपचारिकत्वं च; औपचारिकस्तु प्रयोगः संकोचसह इष्टः, न तु सार्वत्रिकः इति । तमिमं न्यायमभिप्रेत्य भगवच्छब्दस्य पुरुषोत्तम एव मुख्यत्वमन्यत्रामुख्यत्वं च भगवता पराशरेणोक्तम्; तथाहि—ज्ञानादिमात्रं वा निरङ्कुशज्ञानादिकं वा भगवच्छब्दप्रवृत्तिनिमित्तम्; आद्ये पिपीलिकादावपि भगवच्छब्दः प्रयुज्येत; द्वितीये तु सर्वत्र निरवधिकज्ञानाद्यभावात् प्रवृत्तिनिमित्तासिद्धेर्नैकशक्त्या सर्वत्र मुख्यत्वम्; अनेकशक्तिकल्पनं चायुक्तं, प्रयोगान्यथासिद्धेरिति भगवत्पराशराभिप्रायः । ननु

"उत्पत्तिं प्रलयं चैव भूतानामागतिं गतिम् ।
वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति ॥"

इति ग्रन्थोक्तेष्वौपचारिकभगवच्छब्दप्रयोगयोग्येषु यदलौकिकार्थसाक्षात्कारित्वमस्ति तदेव

प्रवृत्तिनिमित्तीकृत्य भगवच्छब्दः सर्वत्र मुख्यः स्यात् ; नैवम् ; अलौकिकार्थसाक्षात्करणमात्रस्य प्रयोगविषयव्यावृत्तत्वाभावात् । न हि समाधिपर्यन्तयोगकाष्ठानिष्ठेषु केशिध्वजखाण्डिक्यप्रह्लादादिषु भगवच्छब्दः प्रयुज्यते । किं च प्रत्यक्षमूलव्युत्पत्त्या गवादिशब्दानामिवागममूलव्युत्पत्त्या समग्रषाड्गुण्यादिमत्त्येव तस्य मुख्यत्वावगमात् ।

" ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेषतः ।
भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः ॥ "

इति निर्दोषत्वपर्यन्तानां ज्ञानादीनां प्रवृत्तिनिमित्ततया वाच्यत्वमुच्यते; निर्दोषत्वं च निमित्ततया वाच्यत्वेनोच्यते, अन्यथा तदुक्तिवैयर्थ्यात् । न ह्यवाच्यं सर्वं निषेध्यम् ; अनुक्त्यैव ह्यवाच्यत्वं सिध्यति । न च ज्ञानशक्त्यादिष्वेकैकस्य प्रवृत्तिनिमित्तत्वम् ; किंतु ज्ञानादिसमुदायस्यैव; अन्यथा "अशेषतः" इति पदवैयर्थ्यात् । " ऐश्वर्यस्य समग्रस्य" इत्युक्तत्वात् गवादिष्वतिप्रसङ्गभयाच्च प्रकर्षविशेषवतां ज्ञानादीनां समुदायस्यैव प्रवृत्तिनिमित्तत्वमुक्तमित्यभ्युपेत्यम् । एवं न्यायसिद्धार्थस्यागमसिद्धोऽर्थो भाष्ये दृष्टान्तीकृतः—'भगवच्छब्दवत्' इति । तथा च भगवता पाराशर्येण—" परं जैमिनिर्मुख्यत्वात् " " स्याच्चैकस्य ब्रह्मशब्दवत् " इत्यादिसूत्रेषु ब्रह्मशब्दस्य भगवत्येव मुख्यत्वमुत्तरत्रोक्तम् । अतो यथोक्त एवार्थः । तथा च स्पष्टीकृतं श्रीमति गारुडे पुराणे—

" वेदे भूरिप्रयोगाच्च गुणयोगाच्च शार्ङ्गिणि ।
तस्मिन्नेव ब्रह्मशब्दो मुख्यवृत्तो महामुने ॥ "

इत्यारभ्य

" यस्मिन् प्रयुज्यमाने तु गुणयोगः सुपुष्कलः ।
तत्रैव मुख्यवृत्तोऽयमन्यत्र ह्युपचारतः ॥ "

इति । एवं शब्दसामर्थ्यमुपपादितम् । अथ ब्रह्मशब्दस्यानेकार्थमुख्यवृत्तत्वेऽप्येतत्सूत्रस्थस्य तस्यार्थस्वाभाव्यात्पुरुषोत्तमपरत्वमुच्यते—**तापत्रयातुरैरिति** । 'स एवामृतत्वाय' इति पदैः " तमेवं विद्वानमृत इह भवति । नान्यः पन्थाः " इत्यादिश्रुत्यर्थो विवक्षितः ; अत एव हि 'पुरुषोत्तमोऽभिधीयते' इत्युक्तम् । श्रुतेरपि पूर्वोक्तहेयप्रत्यनीकत्वकल्याणगुणाकरत्वविशिष्ट एव तापत्रयातुरैरुपास्यः, न तु तेष्वन्यतम इति भावः । न हि कारागारनिगलित एव तन्मोचनार्थिभिरभ्यर्थनीयः । तथा च वैष्णवे पुराणे निर्दोषकल्याणगुणाक-

रस्यैव मुमुक्षूपास्यत्वमुक्तम्—"स सर्वभूतप्रकृतिं विकारान्" "समस्तकल्याण-गुणात्मकोऽसौ" इत्यादिना "अज्ञानमतोऽन्यदुक्तम्" इत्यन्तेन । ब्रह्मशब्दव्याख्यां निगमयति—**अत इति** । निर्दोषमङ्गलगुणकस्य सर्वेश्वरस्यैव तापत्रयातुरैर्जिज्ञास्यत्वादत्र तापत्रयातुरजिज्ञास्यतयोक्तं ब्रह्म सर्वेश्वर एवेत्यर्थः । यद्वा—**अतः** ; उक्तशब्दसामर्थ्यात् अर्थसामर्थ्याच्चेत्यर्थः । ननु ब्रह्मशब्दोऽव्युत्पन्नो व्युत्पन्नो वा भगवति मुख्यः ; अव्युत्पन्नत्वे बोधकत्वविरहिणस्तस्य न क्वचिन्मुख्यत्वम् ; नापि व्युत्पन्नः स मुख्यः, अलौकिकेऽर्थे व्युत्पत्त्यसंभवात् ; कथमप्रतीते व्यवहाराविषये बुद्धिपूर्विका यादृच्छिकी च व्युत्पत्तिः संभवति ? उच्यते—यथा कामिनीचन्दनभवनादिषु प्रयोगेण सुखविषयतया व्युत्पन्नस्य स्वर्गशब्दस्य "यस्मिन्नोष्णम्" इत्याद्यर्थवादपदसमभिव्याहारेणालौकिकसुखविशेषविषयतया व्युत्पत्तिः, यथा लोके क्वचिदव्युत्पन्नत्वेऽपि यूपाहवनीयस्फ्यकपालचषालचात्वालादिशब्दानां वाक्यान्तरपदान्तरसमभिव्याहारात्तत्तदर्थविषयतया व्युत्पत्तिः ; एवं ब्रह्मात्मेश्वरादिशब्दानां च लोके केषुचिदर्थेषु प्रयोगात् व्युत्पत्तौ सत्यामसत्यामपि "यतो वा इमानि भूतानि जायन्ते" "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यादिप्रसिद्धार्थवाक्यान्तरपदान्तरसमभिव्याहारादलौकिकपरमात्मविषयत्वव्युत्पत्तिरुपपद्यते । अतो ब्रह्मशब्दस्योक्तरीत्या भगवत्येव मुख्यत्वं युक्तम् ।

## भावप्रकाशिका

**कर्मत्वकरणत्वादिसंबन्धविशेषेष्विति ;** नन्वेतद्वाक्यपर्यालोचनायां षष्ठ्यर्थभूतसंबन्धसामान्यावान्तरविशेषरूपत्वं कर्मत्वकरणत्वादेः प्रतीयते ; न च तद् युज्यते वक्तुम्, "षष्ठी शेषे" इति कर्माद्यतिरिक्ते प्रातिपदिकार्थव्यतिरेके षष्ठ्या अनुशिष्टत्वेन द्वितीयातृतीयार्थयोः सामान्यविशेषभावाभाववत् द्वितीयार्थस्य षष्ठ्यर्थस्य च सामान्यविशेषभावाभावात् ।

"संबन्धः कारकेभ्योऽन्यः क्रियाकारकपूर्वकः ।
श्रुतायामश्रुतायां वा क्रियायां सोऽभिधीयते ॥"

इति हरिणोक्तत्वेन 'नटस्य शृणोति' 'माषाणामश्नीयात्' 'अनुकरोति भगवतो नारायणस्य' इत्यादावपि कर्मत्वाद्यतिरिक्तस्य क्रियाकारकसंबन्धपूर्वकस्य शेषशेषिभावादि-

लक्षणस्य संबन्धस्य सत्त्वादिति चेत्—न; 'माषाणामश्नायात्' इत्यादौ कर्मत्वाद्यतिरिक्तकल्पने प्रमाणाभावात्, द्वितीयादीनां षष्ठ्यपवादतया विधानाभ्युपगमेन सामान्यविशेषभावनियमोपपत्तेः। **इतरा विभक्तयो विहिता इति;** यद्यपि "कर्तृकर्मणोः कृति" इति षष्ठ्यपि विहिता, तथापि कर्मादिषु संबन्धविशेषेष्वेवेतरविभक्तयो विहिताः; षष्ठी तु संबन्धसामान्ये विशेषेऽपि विहितेत्येवकारमपिशब्दं चाध्याहृत्य योजना कार्या। **परिणा ब्रह्मानुबन्धिनामिति;** ननु 'संबन्धसामान्यपरिग्रहे' इत्यत्र परिणा संबन्धसामान्यपरितःस्थितानां तदनुबन्धिनामेव ग्रहणं स्यात्, न तु ब्रह्मानुबन्धिनाम्; न हि 'ब्रह्मपरिग्रहे' इति पठ्यते, येन ब्रह्मानुबन्धिनः परिणा प्रतीयेरन्; अत एवोत्तरत्र 'षष्ठी गृह्यते' इत्युक्तं न तु परीत्यपि; 'कर्मणि षष्ठी परिगृह्यते' इत्युक्तेऽपि न ब्रह्मानुबन्धिनां ग्रहणं सिध्येत्; अपितु षष्ठ्यनुबन्धिनामेवेति चेत्—न; ब्रह्मानुबन्धिनामपि परंपरया संबन्धसामान्यानुबन्धित्वस्य कथंचित्संभवादित्यभिप्रायात्। **प्रधानसंबन्धादिति;** यथा 'राजासौ निर्गतः' इत्युक्ते सपरिवारस्य निर्गमनं प्रतीयते तद्वदिति भावः। **समासनिषेधस्य सावकाशत्वमिति;** "कृद्योगलक्षणा च षष्ठी समस्यते" इति प्रतिप्रसवानन्तरुद्धोऽवकाश इत्यर्थः। ननु "कर्मणि च" इति समासनिषेधः कस्मान्न भवतीति चेत्—न; तस्य "उभयप्राप्तौ कर्मणि" इति सूत्रविहितषष्ठीविषयत्वात्; यथा 'आश्चर्यो गवां दोहोऽशिक्षितेन गोपालेन' इति। एतदभिप्रेत्योक्तं भगवता भाष्यकृता—"कर्तृकर्मणोः कृति" इति। **यद्यपि ज्ञानपदं कृदन्तमिति;** ततश्च प्रतिप्रसवावरुद्धत्वान्नावकाश इति भावः। **सर्पिषो जानीत इति तिङन्तपदान्वयार्हत्वादिति;** तिङन्तयोग इवेयमपि शेषलक्षणा षष्ठीत्यर्थः। न च शेषषष्ठीत्वे "ज्ञोऽविदर्थस्य" इति विधानवैयर्थ्यं शङ्कनीयम्, समासनिषेधार्थत्वात्पुनर्विधानस्य; षष्ठी श्रूयत एव न लुप्यत इति; लोपश्च समासे। उक्तं च हरिणा—

> "साधनैर्व्यपदिष्टे च श्रूयमाणक्रिये पुनः।
> प्रोक्ता प्रतिपदं षष्ठी समासस्य निवृत्तये॥" इति।

**धातोर्विभक्तेश्च प्रवृत्तितत्करणार्थत्वादिति;** ततश्च सर्पिषः कर्तृकर्मान्यतरत्वाभावात् न कृद्योगलक्षणा षष्ठीति भावः। यद्यपि "ज्ञोऽविदर्थस्य करणे" इति षष्ठ्याः शेषषष्ठीत्वेन न करणत्वमर्थः, तथापि करणस्य शेषतया विवक्षितस्यार्थत्वात् कर्तृकर्मान्य-

तरार्थत्वाभावान्न कृद्योगलक्षणषष्ठीसंभव इत्यत्र तात्पर्यम्। ननु धातोः प्रवृत्त्यर्थकत्व-कथनमनुपयुक्तमिति चेत्—न; ज्ञाधातोर्ज्ञानार्थत्वे सकर्मकत्वात् कर्मसंभावनाप्यस्ति, प्रवृत्त्यर्थत्वे तु सापि नास्तीति प्रदर्शनार्थत्वात्। **ननु नेयं षष्ठीति ;** ननु सूत्रकृता प्रयुक्तत्वाभावेऽपि स्वप्रयुक्तत्वात् स्वप्रयुक्तव्याख्यानस्य च भाष्यलक्षणत्वान्न तद्व्याख्याने दोषः ; इतरग्रन्थेष्वपि ' शक्तिः सामर्थ्यं कारणत्वमिति यावत् ' इति पर्यायतया स्वप्रयुक्तमपि शब्दं यावत्परप्रतीति व्याकुर्वाणा दृश्यन्त इति सर्वजनीनमेतत् ; अतः समासव्याख्यानाय स्वप्रयुक्तविग्रहवाक्यगतायाः षष्ठ्याः संदिग्धार्थाया व्याकरणकोशादिनार्थे कथनीये विभक्तिविषये कोशादेरभावात् व्याकरणेनैव व्याख्यानं युक्तमिति चेत्—मैवम् ; समासपदव्याख्यानं विग्रहेणैव कर्तव्यमिति नियमा-भावेन ' ब्रह्मजिज्ञासा—ब्रह्मकर्मकजिज्ञासा कर्तव्या ; ब्रह्मशब्दो ब्रह्मकर्मकपरः ' इत्येव व्याख्यायताम् ; किमिति संदिग्धार्थकव्याख्यानसापेक्षविग्रहवाक्योपन्यासेनेति तात्पर्यात्। **विभक्त्यर्थस्य प्रातिपदिकेन लक्षणा हि समास इति ;** इदं तु कर्मधारयभिन्नलुप्त-विभक्तिकतत्पुरुषाव्ययीभावविशेषविषयं द्रष्टव्यम्। **लक्ष्यार्थविशेषनिर्णयायेति ;** ' अस्या विभक्तेरयमर्थोऽनेन प्रातिपदिकेन लक्ष्यते ' इति प्रतिपादनायेत्यर्थः। ननु ' नानु-शासन–'इत्यस्याः शङ्कायाः कथमुत्थानम्? विभक्तेर्व्याख्येयत्वे सिद्धे कोशादीनां तद्विषय उदासीनत्वादनुशासनेन व्याख्यानमुचितम्। ततश्चास्या विभक्तेरयमर्थ इति निर्णये सति योग्यतावशेन कर्मत्वरूपोऽर्थो लक्ष्यत इति निर्णयाय युक्तमेव विभक्त्यर्थकथनम्। अत एव हि " न गङ्गायां घोषः " इत्युत्तरवाक्यमपि न युक्तम् ; न ह्यत्र लक्षकपदस्य लक्ष्येऽनुशासनमुपन्यस्यते ; किंतु योग्यतादिवशेन लक्षणीयस्य कर्मत्वस्य विभक्त्यर्थत्व-कथनायानुशासनमुपन्यस्यते। अत एव " स तु नियमः प्रातिपदिकेन प्रातिपदिकान्त-रार्थलक्षणायामेव " इति परिहारग्रन्थोऽपि न युक्तः, ब्रह्मणः कर्मत्वकर्तृत्वादीनां मध्ये कर्मत्वस्यैव लक्षणीयत्वाय योग्यतादिप्रतिसंधानस्येहाप्यपेक्षितत्वादिति चेत्—न ; अन-भिज्ञो भवान् वाक्यार्थस्य ; न ह्यत्र " कर्तृकर्मणोः कृति " इत्यनुशासनबलेन षष्ठीव्या-ख्यानमसंगतमिति चोद्यते, येनायमुपालम्भः स्यात् ; किंतु " कृद्योगलक्षणा षष्ठी समस्यते " इत्यनेन कृद्योगलक्षणषष्ठ्यन्तपदस्य लुप्तायां विभक्तौ तदर्थे लक्षणायाः साधुत्वा-न्वाख्यानपरेण व्याख्यानं किमर्थं क्रियते? न हि गङ्गापदस्य तीरे लक्षणया प्रयोगे

साधुत्वमस्तीत्यत्रानुशासनमपेक्षितमित्याक्षेपस्य क्वचिदर्थविशेषलक्षणया प्रयोगस्य साधुत्वमनुशासनसापेक्षमिति परिहारस्य च संभवेनादोषात् । ननु लुप्तविभक्त्यर्थस्य लुप्तविभक्तिकशब्दमुख्यार्थत्वे निषादस्थपत्यधिकरणविरोधः, षष्ठीतत्पुरुषे लक्षणाया अप्रसक्तेरित्यरुचेराह—**अमुख्यत्वे वा का नः क्षतिरिति** । ननु पदान्तरयोगविहितविभक्तेरर्थसद्भावे "नमस्करोति देवान्" इत्यत्र नमःशब्दयोगनिमित्तचतुर्थ्यपेक्षया कर्मणि द्वितीयायाः प्राबल्यं न स्यादित्याशङ्क्याह—**कारकविभक्तेरिति । पदान्तरयोगविहितत्वरूपमस्त्येवेति** ; ननु "कर्तृकर्मणोः" इति विहितस्य कृदन्तपदयोगनिमित्तत्वेऽपि न कारकविभक्तित्वक्षतिः, तत्र शाब्दिकानां कारकषष्ठीत्वस्य व्यवहारात्; अत एव "गतिकारकोपपदात् कृत्" इति कारकस्वरो भवति ; इतरथा स न प्राप्नुयादिति चेत्—सत्यम् ; अस्त्येव कारकविभक्तित्वम् ; उपपदयोगनिमित्ततयोपपदविभक्तित्वमप्यस्ति ; तस्याश्चोपपदयोगनिरपेक्षकारकविभक्त्यपेक्षया दौर्बल्यमप्यनुभवसिद्धम्, 'घटं करोति' इत्यत्रेव 'घटस्य कृतिः' इत्यत्र कर्मत्वस्य शीघ्रप्रतीत्यभावात् । न चैवं "कर्तृकर्मणोः कृति" इति षष्ठ्या उपपदविभक्तित्वे षष्ठीं बाधित्वा द्वितीया प्राप्नोतीति वाच्यम्, तद्विषय एवारभ्यमाणत्वेन तदपवादत्वात् । न चैवं 'कन्याया अलंकर्ता' इत्यादौ कृद्योगषष्ठ्या अप्युपपदविभक्तित्वाविशेषात् अलंयोगनिमित्तचतुर्थीबाधकत्वं न स्यादिति वाच्यम्, परत्वेन बाधकत्वोपपत्तेः । कर्मणि षष्ठ्या अपि कारकविशेषविहितत्वेन कारकविभक्तित्वस्याप्यभ्युपेतत्वेनालंपदयोगनिमित्तविभक्तेः केवलोपपदविभक्त्वेन तद्बाधकत्वोपपत्तेश्च । **पदान्तरपरामर्शसापेक्षत्वेनेति** ; उक्तं च—"सूक्तवाके च कालविधिः परार्थत्वात्" इत्यत्र तृतीये "सूक्तवाकेन प्रस्तरं प्रहरति" इत्यत्र सूक्तवाकेनेति तृतीया इत्थंभूतलक्षणे भविष्यतीति पूर्वपक्षे सर्वत्र क्रियाकारकसंबन्धस्यान्तरङ्गत्वात् सूक्तवाकस्य प्रस्तरप्रहरणक्रियायां कारकत्वेन संबन्धो वक्तुमुचितः ; इत्थंभूतलक्षणाश्रयणे तु न कारकत्वेन संबन्धः सिध्येत् ; न च लक्षणक्रियायां करणत्वेनान्वयो युक्तः, सूक्तवाकेन लक्षितं प्रस्तरमिति लक्षणक्रियाया वाचकपदाभावेन तद्वाचकपदान्तरसापेक्षत्वात् ; तस्मान्नेत्थंभूतलक्षणे तृतीया ; अपितु करणे तृतीयैवेत्युक्तरीत्या उपपदविभक्तेः कारकविभक्त्यपेक्षया दुर्बलत्वादिति । **अमुख्यत्वं तु परिहृतमिति** ; का नः क्षतिरिति परिहृतमित्यर्थः । **पुरुषोत्तमशब्दस्य रूढ्येति** ; यद्यपि यौगिकार्थ-

*

स्यातिप्रसक्तौ समुदायशक्तिलक्षणरूढ्यभ्युपगमः ; न तु शचीपतिवाक्पतिश्रीवत्सवक्षः-प्रभृतिषु प्रोद्गात्रहीनधार्यादिशब्देष्विव रूढिरभ्युपगन्तव्या; तथापि पुरुषोत्तमशब्दस्य नारायणपर्यायतया पाठात् समानप्रवृत्तिनिमित्तत्वमभ्युपगम्योक्तं द्रष्टव्यम्। **चेतनवैलक्षण्य-मुक्तमिति** ; यद्यप्युत्तमशब्दस्योद्गतार्थवाच्युपसर्गात् ससाधनक्रियावचनात्तमप्प्रत्यये निष्पन्नस्य न वैलक्षण्यमात्रमर्थः; अव्युत्पत्तिपक्षेऽपि न वैलक्षण्यमर्थः, वैलक्षण्यमात्रेणोत्त-मशब्दप्रयोगाभावात् ; अत एव "स्वेतरवैलक्षण्यं तृणादेरप्यस्ति" इति ग्रन्थोऽपि न युक्तः ; तथापि "अक्षरादपि चोत्तमः" इति प्रमाणानुसारेण पञ्चमीसमासस्य वा "सप्तमी" इति योगविभागात् सप्तमीसमासस्य वा आश्रयणीयतया "यतश्च निर्धा-रणम्" "पञ्चमी विभक्ते" इति सूत्राभ्यामेव पञ्चमीसप्तम्योर्विधेयत्वेन निर्धारणस्यावश्य-कत्वान्निर्धारणस्य च वैलक्षण्यापरपर्यायपृथक्करणवाचित्वाद्वैलक्षण्यमर्थ इत्येतदभिप्रेत्यै-तदुक्तमिति द्रष्टव्यम्। **प्रतिपादनोपयोगितयेति** ; पुरुषोत्तमस्य निर्दोषत्वकल्याणगुणाकर-त्वाश्रयतया निरतिशयबृहत्त्वरूपप्रवृत्तिनिमित्तं संभवतीति प्रतिपादनार्थमित्यर्थः। **न तु प्रवृत्तिनिमित्ततयेति** ; ततश्च ब्रह्मशब्दस्य बृहत्त्वव्यतिरिक्तं स्वभावतो निरस्त-दोषत्वमपि प्रवृत्तिनिमित्तान्तरमिति न भ्रमितव्यमिति भावः। अर्थसामर्थ्यमाह—**मुमुक्षो-रशेषदोषेति**। **वाङ्मनसागोचरतयानवधिकत्वमुक्तमिति** ; ननु ब्रह्मगुणानां सर्वाति-शायितया अतिशयस्य सर्वावधिकत्वेन कथमनवधिकत्वम्? इन्द्राद्यानन्दातिशयो हि मनुष्या-नन्दावधिकः, ब्रह्मानन्दातिशयो हि मनुष्यादिप्रजापत्यन्तसर्वानन्दावधिकः ; अत एव सर्वेषा-मवधित्वात् सर्वेभ्योऽतिशयित इत्यवध्यर्थः पञ्चमीति चेत्—न; अवधिशब्दस्येयत्तार्थक-त्वात्; ततश्च ब्रह्मानन्दातिशयोऽपरिच्छिन्न इत्यर्थः। यद्वा स्वसमानाधिकरणापकर्षावधि-शून्यत्वमेवानवधिकत्वम् ; स्वशब्देनोत्कर्षः परामृश्यते; इन्द्रानन्दादिगतस्य देवाद्यानन्दा-पेक्षयातिशयस्य बृहस्पत्यानन्दावधिकापकर्षसमानाधिकरणतया स्वसमानाधिकरणापकर्षा-वधिमत्त्वम् ; ईश्वरगुणनिष्ठोत्कर्षस्य तु स्वसमानाधिकरणापकर्षाभावेन तादृशावधिशून्यत्व-मिति विशेषात्। अथवा इतरेषामतिशयस्य देवमनुष्याद्यवधिसापेक्षत्वेन सावधिकत्वम्। ईश्वर-विषये तु उपपदादिनिरपेक्षतया 'अतिशयितः' इति प्रत्ययप्रयोगयोर्दर्शनात् तद्गतातिशयस्या-वधिप्रतीत्यधीनप्रतीतिकत्वाभावेन निरवधिकत्वम् ; अत एव 'अयोध्येश्वरः, मिथिलेश्वरः' इतीतरैश्वर्यस्य निर्देशः, ईश्वरविषये तु मर्यादोपन्यासमन्तरेण 'ईश्वरः' इत्येव प्रतीतिप्र-

योगौ। अत एव "शब्दादेव प्रमितः" इत्यत्र ईशानपदस्यैव निरपेक्षस्य परमात्मप्रतिपादकत्वं, न तु प्रतिसंबन्धिसापेक्षस्येति श्रुतित्वमुपपादितम्।

"मुख्यस्य निर्विशेषेण शब्दोऽन्येषां विशेषतः।
इति वेदविदः प्राहुः शब्दतत्त्वार्थवेदिनः॥"

इत्यभियुक्तोक्तेश्च। **अन्तर्भावाभिप्रायो गणशब्द इति**; एकस्यैव सत्यसंकल्पत्वादेर्गुणगणत्वे सत्येव तस्य वक्ष्यमाणरीत्या तद्विशेषणभूतमसंख्येयत्वमुपपद्यते; इतरथा सर्वेषां गुणानां गण एक एव स्यादित्यसंख्येयत्वविशेषणमनन्वितं स्यात्। इदं च "नन्वनवधिकातिशयशब्दस्य गणविशेषणत्वे" इत्यादिग्रन्थेनाक्षेपसमाधानाभ्यां व्यवस्थाप्यमानमनवधिकातिशयत्वस्यासंख्येयत्वस्य च कल्याणगुणगणविशेषणत्वं सिद्धवत्कृत्योक्तमिति द्रष्टव्यम्। **सामानाधिकरण्याभावाद्बहुव्रीहिर्न स्यादिति**; "समानाधिकरणानां बहुव्रीहिरिष्यते" इत्यनुशासनादिति भावः। **तदन्तर्गतानामेवेति**; अत्र दृष्टान्तदार्ष्टान्तिकयोरयं विशेषः—दृष्टान्ते श्रुतशीलादिकं समूहिगतमेव; दार्ष्टान्तिके त्वनवधिकातिशयत्वं श्रुत्यर्थाभ्यामुभयान्वितं प्रतीयत इति। **ततो निर्गतानामिति**; इदमुपलक्षणम्; श्रुतशीलादेः समूहान्वयित्वे तदन्तर्गतानां समूहिनां श्रुताद्यभावप्रसङ्ग इत्यपि द्रष्टव्यम्। **श्रुताद्यभावप्रसङ्गादिति**; श्रुताद्यन्वयप्रतीतिर्न स्यादित्यर्थः। **भगवद्गुणापेक्षया सातिशयत्वादिति**; भगवद्गुणापेक्षया निकृष्टत्वादित्यर्थः। **प्रतिज्ञातमर्थं शब्दसामर्थ्यादिति**; बृहतिधातोर्निष्पन्नस्य ब्रह्मशब्दस्य बृहत्त्वगुणयोगनिमित्तकतया प्रवृत्तिनिमित्तपौष्कल्यं यत्र तत्रैव मुख्यवृत्तत्वमित्युपपादयतीति भाष्यार्थ इति भावः। व्याख्यान्तरमाह—**तत्रार्थान्तरेष्विति। ब्रह्मशब्दप्रयोगविषयेषु सर्वेष्विति**; पुरुषोत्तमव्यतिरिक्तेष्विति शेषः। **बृहत्त्वगुणयोगोऽस्तीत्यर्थ इति**; अतस्तत्र गौण इत्येतावत्पर्यन्तो वाक्यार्थः। अत एव पुरुषोत्तमे गौणत्वम्, अन्यत्र मुख्यत्वं च किं न स्यादित्याक्षेपग्रन्थसामञ्जस्यम्; अन्यथा "सर्वत्र बृहत्त्वगुणयोगेन हि" इति वाक्येनैव पुरुषोत्तमे मुख्यत्वप्रतिपादनस्यान्यत्र गौणत्वप्रतिपादनस्य च पर्यवसिततया पुरुषोत्तमे गौणत्वमित्याक्षेपग्रन्थासामञ्जस्यात्; 'ततः किम्?' इत्येवोत्तरग्रन्थस्यावतरणीयत्वात्। अस्मिन्पक्षे "सर्वत्र बृहत्त्वगुणयोगेन हि ब्रह्मशब्दः" इति भाष्यस्य पूर्वग्रन्थशेषत्वम्; पूर्वस्मिंस्तु पक्षे उत्तरग्रन्थशेषत्वम्। अत एव 'सर्वत्रेत्यादिना' इत्यादिशब्देनोपादानं कृतम्। यद्वा ततः किमित्येवावतारिका; 'ततः

किम् ?' इत्यस्य हि तावता कथं तव पुरुषोत्तम एव मुख्यवृत्त्याभिधीयत इति प्रतिज्ञातार्थसिद्धिः ? विपरीतं किं न स्यात् ? इति ह्यभिप्रेतोऽर्थः । स एवार्थः पुरुषोत्तमे गौणत्वमित्यादिग्रन्थेनोच्यत इति न दोषः, नापि व्याख्याद्वयाश्रयणमिति द्रष्टव्यम् । **ब्रह्मगुणादेरपीति**, "बृहत्त्वाद्बृंहणत्वाच्च" इति प्रमाणानुसारेण द्वयमपि प्रवृत्तिनिमित्तमित्यभ्युपगमेन ब्रह्मगुणादौ नातिप्रसङ्गः । अवश्यं च तथाभ्युपगन्तव्यम् ; इतरथा ब्रह्मगुणादावतिप्रसङ्गस्य तादवस्थ्यात्, प्रवृत्तिनिमित्तस्य सत्त्वात् । न हि लाक्षादिरञ्जकद्रव्येण रक्तस्य स्वतश्च रक्तत्वाश्रयस्य जपाकुसुमादेरेवासंकोचात् रक्तपदवाच्यत्वं, न तु केवलजपाकुसुमादेरित्यस्ति ; न वा पर्वताश्रयस्यैव पर्वतस्य पर्वतशब्दवाच्यत्वं, न तु पर्वतानाधारपर्वतस्य, तस्य स्वरूपतः पर्वतत्वाश्रयत्वेऽपि धर्मतः पर्वतत्वानाश्रयत्वादित्यस्तीति चेत्—न; "कस्मादुच्यते ब्रह्म" इति "बृहन्तो ह्यस्मिन् गुणाः" इति प्रमाणानुसारात् बृहद्गुणकत्वमेव प्रवृत्तिनिमित्तम् ; स्वरूपबृहत्त्वबृंहणत्वे अपि तत्रैवान्तर्गते इत्यत्रैव तात्पर्यात् । यद्वा गुणतो बृहत्त्वमित्यस्य न गुणगतबृहत्त्वमित्यर्थः, किं तु बृहद्गुणकत्वकृतः स्वरूपनिष्ठ एव माहात्म्यविशेषो ज्यायस्त्वरूपः; अतः सर्वतो ज्यायस्त्वं बृहत्त्वम् ; तदेव ब्रह्मशब्दप्रवृत्तिनिमित्तमिति भावः । **शब्दशक्तेरसंकोचस्येति** ; ननु द्वयोरपि प्रवृत्तिनिमित्तत्वाभ्युपगम एव ब्रह्मशब्दशक्तेः संकोचः, गुणतो बृहत्त्वस्य ब्रह्मगुणादिव्यावर्तकत्वादिति चेत्—न; न ह्यत्र शब्दशक्तेरित्यत्र ब्रह्मशब्दशक्तेरित्यर्थः ; अपितु "बृहन्तो ह्यस्मिन् गुणाः" इति ब्रह्मशब्दप्रवृत्तिनिमित्तप्रतिपादकवाक्यगतगुणशब्दशक्तेरित्यर्थः । यद्वा ब्रह्मवत् प्रवृत्तिनिमित्तस्यापि शक्यत्वात् तत्र बृहत्त्वविशेषरूपप्रवृत्तिनिमित्तस्यैव शक्यत्वमित्युक्तेः संकोचप्रसङ्ग इत्यर्थः । न च द्वयोरपि शक्यत्वे शक्यव्यक्तिसंकोचप्रसङ्गः, प्रयोगाभावेन व्यक्तिसंकोचस्य प्रागेव सिद्धत्वेनैतदधीनत्वाभावात् । **तस्मात् ब्रह्मण इति** ; ननु तस्मादित्यस्य सर्वेश्वरादित्यर्थो वक्तुमुचितः, 'ब्रह्मशब्दस्तत्रैव मुख्यवृत्तः' इति पूर्ववाक्ये तत्रैवेति तच्छब्देन सर्वेश्वरस्यैव निर्दिष्टत्वात् ; तत्र ब्रह्मणः परामर्शे अप्रसक्तप्रतिषेधापत्तेः, न हि ब्रह्मशब्दस्याब्रह्मणि मुख्यवृत्तत्वं प्रसक्तम्, येन तन्निषेधः सफलः स्यादिति चेत् ; उच्यते—तस्मादित्यस्य ब्रह्मण इति नार्थकथनम्, अपितु शेषपूरणम् । अयमभिप्रायः—स्वरूपेण गुणैश्चानवधिकातिशयशालिनः सर्वेश्वरस्य ब्रह्मत्वं सिद्धम् ; इतः परं तस्मादपि ब्रह्मणोऽन्योऽपि ब्रह्मपदमुख्यार्थ इति स्वीकारे अनेकार्थत्वं स्यादिति । केचित्तु—ब्रह्मणः ; निरवधिकबृहत्त्वशालिन इत्यर्थः;

पूर्ववाक्ये 'तत्रैव' इत्यत्र तच्छब्देनापि निरतिशयबृहत्त्वशाल्येव परामृश्यते, न तु सर्वेश्वरः। तथा "तद्गुणलेशयोगात्" इत्युत्तरत्रापि बृहत्त्वगुणलेशयोगादित्येवार्थ इत्याहुः। अस्मिन्पक्षे "स च सर्वेश्वर एव; अतो ब्रह्मशब्दस्तत्रैव मुख्यवृत्तः" इत्ययमंशो व्यर्थः। नन्वितरत्र प्रयोगस्यौपचारिकत्वे स प्रयोगः सार्वत्रिकः किं न स्यादित्याशङ्क्य औपचारिकस्यापर्यनुयोज्यत्वान्न सार्वत्रिक इत्याह—**औपचारिकस्त्विति**। ननु

"एकदेशेऽपि यो दृष्टः शब्दो जातिनिबन्धनः।
तदत्यागान्न तस्यास्ति निमित्तान्तरगामिता॥"

इति बर्हिराज्याधिकरणन्यायेनाव्यभिचारात् बृहत्त्वस्यैव प्रवृत्तिनिमित्तत्वे नानेकशक्तिकल्पनागौणत्वादिदोषः; त्र्यणुकादिषु ब्रह्मशब्दाप्रयोगस्य बृहच्छब्दाप्रयोगवदसंस्कृततृणादिष्वार्याणां बर्हिःशब्दाप्रयोगवच्चोपपत्तिः; "परं जैमिनिर्मुख्यत्वात्" "स्याच्चैकस्य ब्रह्मशब्दवत्" इत्यादौ ब्रह्मशब्दस्य परमात्मनि मुख्यत्वव्यवहारस्तु ब्रह्मगतबृहत्त्वस्यावधिप्रतीत्यधीनप्रतीतिकत्वाभावेनावधिप्रतीत्यधीनप्रतीतिकेतरबृहत्त्वापेक्षया शीघ्रधीस्थत्वात् "मुख्यस्य निर्विशेषेण शब्दोऽन्येषां विशेषतः" इति न्यायेनोपपद्यते। न हि नरेश्वरशब्दः स्वभार्यापुत्रादिस्वामिनि प्रयुज्यते, न वा केवलेश्वरशब्दः पृथिवीश्वरादावपि प्रयुज्यत इत्येतावता स्वामित्वं प्रवृत्तिनिमित्तमपहाय निरङ्कुशेश्वरत्वमेव तस्य प्रवृत्तिनिमित्तमिति शक्यते वक्तुमिति चेत्— मैवम्; तथाहि सति गोशब्दस्यापि 'गच्छति' इति व्युत्पत्त्या "गमेर्डोः" इति व्युत्पन्नतया गन्तृत्वमेव प्रवृत्तिनिमित्तम्, इतरत्राप्रयोगस्तु बर्हिराज्यादिशब्देष्विवोपपन्नो न तस्य गन्तृविशेषे रूढिं कल्पयतीति स्यात्। यदि च नियमेनेतरत्राप्रयोगेण विशिष्य सास्नादिमति रूढिं कल्पयित्वा इतरस्यावाच्यत्वं कल्प्यते, तत्प्रकृतेऽपि समानमिति दिक्। केचित्तु—बृहत्त्वस्य प्रवृत्तिनिमित्तत्वमभ्युपगम्य तत्पौष्कल्यस्यैव भगवति समर्थनात् बृहत्त्वमेव प्रवृत्तिनिमित्तम्; न हि प्रवृत्तिनिमित्तपौष्कल्यं प्रवृत्तिनिमित्तम्; ततश्च नावयवार्थव्यतिरिक्तरूढ्यर्थस्वीकारः सिद्धान्तिसंमत इति वदन्ति। **औपचारिकभगवच्छब्दप्रयोगयोग्येष्विति**; ननु "स वाच्यो भगवानिति" इति वाच्यत्वेनोक्तानां वसिष्ठादीनां कथमौपचारिकभगवच्छब्दप्रयोगयोग्यत्वकथनमिति चेत्— न; त्वद्रीत्या औपचारिकभगवच्छब्दप्रयोगयोग्यानामित्यर्थः। ननु खाण्डिक्यादिषु सार्वत्रिकभगवच्छब्दप्रयोगाभावो न स्व-

ध्यवसाय इत्यस्वरसादाह—**किं च प्रत्यक्षमूलेति । आगममूलव्युत्पत्त्येति** ; ननु "उत्पत्तिं प्रलयं च" इत्ययमप्यागमो भवत्येवेति तन्मूलया व्युत्पत्त्या वसिष्ठादिष्वपि मुख्यत्वं किं न स्यात् ? "ज्ञानशक्तिबलैश्वर्य" इति श्लोकेऽपि "अशेषतः" इति सर्वेषामपि प्रवृत्तिनिमित्तत्वमुच्यते, न तु मिलितानाम् ; तथाहि सति 'वाच्यानि' इति बहुवचनं न स्यात् । अत एव ज्ञानादिषु षट्सु प्रवृत्तिनिमित्तेषु कथितेषु 'अत्यल्पमिदमुच्यते' इति पर्यालोच्य "विना हेयैर्गुणादिभिः" इति ज्ञानादिभिन्नानामपि हेयव्यतिरिक्तानां शुभानां गुणानां सर्वेषां प्रवृत्तिनिमित्तत्वमुच्यते, "यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा" इतिवदिति चेत्—न ;

"भगवानिति शब्दोऽयं तथा पुरुष इत्यपि ।
निरुपाधी च वर्तेते वासुदेवे सनातने ॥"

इत्याद्युपबृंहणानुगुण्यात् केवलस्य भगवच्छब्दस्यान्यत्राप्रयोगाच्चेति भावः । **अत एव हि पुरुषोत्तमोऽभिधीयत इत्युक्तमिति** ; यद्यपि "तमेवं विद्वान्" इति वाक्ये पूर्वत्र "वेदाहमेतं पुरुषम्" इति महान् पुरुष एव प्रस्तुतो न पुरुषोत्तमः, तथापि तयोरेकार्थपर्यवसानमभिप्रेत्योक्तमिति द्रष्टव्यम् । "अतः सर्वेश्वर एव जिज्ञासाकर्मभूतं ब्रह्म" इति वाक्यगतस्यातःशब्दस्य तापत्रयातुरजिज्ञास्यत्वरूपार्थसामर्थ्यमात्रेण संकोचकल्पने प्रमाणाभावादाह—**यद्वा अत इति** । 'अतः' इति व्याख्येयं पदम् । **अव्युत्पन्नोव्युत्पन्नो वा भगवति मुख्य इति** । गृहीतसंगतिक इत्यर्थः । मुख्यया वृत्त्या भगवत्प्रतिपादक इत्यर्थः । **बुद्धिपूर्विकेति** ; बुद्धिपूर्विका व्युत्पत्तिर्मातापित्रादिभिरङ्गुलिनिर्देशपूर्वकमम्बातातमातुलादिषु यत्र व्युत्पत्तिर्ग्राह्यते तत्र ; याहच्छिकव्युत्पत्तिस्तु 'घटमानय' इति वाक्यश्रवणात् प्रयोज्यप्रवृत्तिमुपलभ्य यत्र व्युत्पत्तिर्गृह्यते तत्रेति द्रष्टव्यम् । इदं चाधिकरणनिरूपणे स्पष्टं भविष्यति । **यूपाहवनीयेति** ; अत्र कपालशब्दः संपातायातः, तस्य लौकिकत्वात् ।

## श्रुतप्रदीपिका

अथैकपद्यहेतुभूतसमासार्थं निरूपयन् विभक्त्यन्तरव्यावृत्त्यर्थं व्यस्य निर्दिशति—**ब्रह्मण इति** । पञ्चमीमर्थान्तरशङ्कां च व्यपनुदन्नाह—**ब्रह्मण इतीति** । कुत इत्यत आह—**कर्तृकर्मणोः कृतीति** । कर्मत्वे सति विषयत्वं प्रयोजनत्वं च सिध्येदिति

भावः । सामान्यविध्यपेक्षया प्रतिपदविधेर्बलीयस्त्वेऽपि प्रतिपदे समासनिषेधात् परंपरासंबन्धस्यापि संबन्धसामान्यान्तर्भावेन ब्रह्मानुबन्धिनामुपायादीनामपि जिज्ञास्यत्वसिद्धेः सामर्थ्यात् ब्रह्मणः कर्मत्वाक्षेपाच्च सामान्यपरत्वमाशङ्क्याह—**यद्यपीति** । 'परिग्रहेऽपि' इत्यत्र परिणा अनुबन्धिनां जिज्ञास्यतासिद्धिर्द्योतिता । **कर्मार्थत्वासिद्धिः**; षष्ठ्या इति शेषः । **आभिधानिकस्यैव ग्राह्यत्वादिति**; उपपदविभक्तिरपि कारकविभक्तिवत् "कर्मणि द्वितीया" इत्यादिवत् "कर्तृकर्मणोः कृति" इत्यादिशब्दानुशासनस्वारस्यादर्थवतीति भाष्यकाराभिप्रायः । एवकारेण विलम्बितधीहेत्वपेक्षया शीघ्रधीहेतोर्बलीयस्त्वमभिप्रेतम् । प्रधानस्याप्रधानानां च कर्मत्वाक्षेपादपि प्रधानस्याभिधानिकत्वमितरेषामाक्षिप्तत्वं च युक्तमित्यर्थः । समासनिषेधमाशङ्क्य परिहरति—**न चेति** । प्रतिप्रसवोऽपवादापवादः । अप्रयुक्तविभक्तेरनभिधायकत्वेऽप्यनुशासनाधीनलक्ष्यार्थविशेषनिर्णयाय षष्ठी व्याख्याता । प्रातिपदिकेन विभक्त्यर्थलक्षणायां तु न केवलं योग्यतादि कारणम्, अनुशासनं चापेक्षितमिति तदनुसारेण व्याख्यातम् । अथ समस्तयोः पदयोः प्रथममनेकार्थसाधारण्येन प्रसिद्धेः परैरन्यथा व्याख्यातत्वाच्च संशयविपर्ययौ स्त इति तद्व्युदासाय व्याचष्टे—**ब्रह्मेति** । "परीत्य लोकान्" इति श्रुत्यनुसारेण पुरुषोत्तम इत्युक्तम् । स्वेतरचिदचिद्विलक्षणत्वं तच्छब्दार्थः । स्वेतरान्यत्वं तृणादेरप्यस्तीति तद्व्यावृत्त्यर्थमुभयलिङ्गत्वेन वैलक्षण्यमाह—**स्वभावत इत्यादिना** । **निखिलेति** बद्धादिव्युदासः । **स्वभावत इति** मुक्तव्यावृत्तिः । सावधिकातिशयनित्यव्युदासायानवधिकातिशयशब्दः । प्रत्येकं तादृशा गुणा असंख्येयाः । एकस्य गुणस्य विधाभेदरूपगुणपुञ्जाभिप्रायो गणशब्दः । सत्यसंकल्पत्वान्तर्भूता हि वशित्वादयः । **अभिधीयते**; मुख्यवृत्त्या बोध्यते । शब्दसामर्थ्यादर्थसामर्थ्यवशाच्च भगवत्परत्वं वक्तुं प्रथमं शब्दसामर्थ्यमुपपिपादयिषुरन्यत्र गौणत्वं हृदि निधाय ब्रह्मशब्दस्य गुणयोगतः प्रवृत्तत्वमाह—**सर्वत्रेति** । सर्वत्र प्रयोगेषु विषयेषु । ततः किमित्यत्राह—**बृहत्त्वं चेति** । अन्यस्यापि किं न स्यादित्यत्राह—**स चेति** । चः शङ्कानिवृत्तौ । कथमेवकारः ? अन्यत्रापि हि प्रयुज्यत इत्यत्राह—**तस्मादिति** । सर्वेषां मुख्यत्वं किं न स्यादित्यत्राह—**अनेकेति** । अनन्यथासिद्धप्रयोगो हि शक्तिकल्पकः । अत्र त्वन्यथासिद्ध इति भावः । नात्रानेकशक्तिक्लृप्तिप्रसङ्गः ; न चान्यत्रामुख्यत्वम् ; एकयैवावयवशक्त्या सर्वत्र मुख्यत्वादित्य-

## श्रुतप्रदीपिका

**आह—भगवदिति** । पङ्कजशब्दस्योत्पलादिव्यावृत्ततामरसानुवृत्तपद्मत्ववत् प्रयोगविषयानुगततदविषयव्यावृत्तप्रवृत्तिनिमित्ताभावेनानेकशक्तिकल्पने प्राप्ते प्रयोगस्यान्यथासिद्धत्वात् पुष्कलप्रवृत्तिनिमित्त एव विषये मुख्योऽन्यत्रामुख्यश्च यथा भगवच्छब्दो निर्णीतस्तथा ब्रह्मशब्दोऽपीत्यर्थः । अथार्थसामर्थ्यमुपपादयति—**तापेति** । न हि कारागृहनिगलितो निगलान्मोचनाय याच्यः ; किंतु यच्छासनान्निगलनं तन्निवृत्तौ स एवेत्यभिप्रयन्ती "तमेवम्" इत्यादिश्रुतिरनुस्त्रियते । निगमयति—**अत इति** ; अतः शब्दवशादर्थवशाच्चेत्यर्थः ।

## नयप्रकाशिका

'ब्रह्मणो जिज्ञासा' इत्यारभ्य 'विधीयते' इत्यन्तेन भाष्येण ब्रह्मणो ज्ञानं प्रति प्राधान्यं प्रसाध्यते । तच्च ब्रह्मण ईप्सिततमत्वप्रसाधनद्वारा कर्मत्वप्रसाधनात् ; ईप्सिततमं हि कर्म भवति, "कर्तुरीप्सिततमं कर्म" इति स्मृतेः । ईप्सिततमत्वमेव हि प्रधानत्वम् । ननु—तत्र च 'यद्यपि संबन्धसामान्य' इत्यादिभाष्ये ब्रह्मेतिशब्दस्य कर्मार्थत्वेन कर्मत्वस्याभिधेयत्वमभिमतमिति प्रतीयते ; तदनुपपन्नम्, समासान्तर्गतविभक्त्यर्थस्यानभिधेयत्वात् ; तच्च तत्र विभक्तेरश्रवणात् । विभक्त्यर्थबुद्धिस्तु तत्र लक्षणया प्रातिपतिकादेव । संबन्धानुपपत्तिर्हि लक्षणाबीजम् । असमस्तपदेषु विभक्तिदर्शनात् समासे तदश्रवणात् प्रातिपदिकस्य विभक्त्यर्थलक्षकत्वमुपपन्नम् । अतोऽनभिधेयत्वसाम्यादाक्षिप्तकर्मत्वपक्षादितरपक्षस्य न वैषम्यम् इति चेत्—न ; तत्र 'आभिधानिकस्य' इति पदस्य कर्मत्वस्य शाब्दत्वमात्रपरत्वात् । लाक्षणिकार्थस्यापि शाब्दत्वमस्ति, शब्दादेव तदर्थप्रतीतेः । लाक्षणिकेतरपदानां तु लक्ष्यार्थान्वितस्वार्थाभिधायकत्वं हि लोके 'वटे गावः' इत्यादौ दृश्यते । लक्ष्यार्थस्य वाच्यत्वं तु नास्ति, तद्वाचकशब्दाभावात् । आक्षिप्यमाणकर्मत्वस्य तु न शब्दार्थत्वम् ; संबन्धमात्रपरषष्ठीसमासाश्रयणे वाक्येनान्वितार्थपरिज्ञाननिश्चये जिज्ञासार्थसामर्थ्याद्धि तस्य कर्मत्वेन संबन्धः । "अनन्यलभ्यः शब्दार्थः, यस्त्वार्थो न स चोदना" इति हि प्रसिद्धिः । ननु विभक्तीनामनेकत्वेऽपि समासे प्रतिनियतविभक्त्यर्थस्वीकारहेतुः क इति चेत्, तत्रान्वययोग्यतानुरूपाणिनिस्मृतिरेवेति ब्रूमः । स्मर्यते हि

समासे विभक्तिस्तल्लोपश्च। अतस्तद्भाष्यं युक्तम्। ननु—ब्रह्मशब्दस्य परमात्मनि मुख्यत्वमन्यत्र गौणत्वं च भाष्य उक्तम्; तदयुक्तम्, ब्रह्मशब्दवाच्यानां सर्वेषां बृहत्त्वादिगुणयोगाविशेषेऽपि परमात्मन एव मुख्यार्थत्वमित्यत्र प्रमाणाभावात्। न च परमात्मनो बृहत्त्वातिशयान्मुख्यार्थत्वमिति वाच्यम्; क्लृप्तशक्तिप्रतियोगित्वस्यैव मुख्यत्वप्रयोजकत्वेन बाहुल्यादेरप्रयोजकत्वात्। न हि 'वह्निर्माणवकः' इत्यादौ पैङ्गल्यशुद्ध्यादिगुणातिशययोगेऽपि माणवकस्याग्निशब्दमुख्यार्थत्वम्। अग्न्यादिशब्दस्य ज्वलनाद्यर्थपरत्वनिश्चये हि माणवकादेर्गौणार्थत्वनिश्चयः; इह गुणयोगाविशेषान्न कस्यचिन्मुख्यत्वनिश्चय इति चेत्—न; ब्रह्मशब्दस्य तावदेकत्र वाचकत्वशक्तेः कल्प्यत्वात्; बृहदादिशब्दस्य हि निरतिशयबृहत्त्वादिपरत्वस्यैव युक्तत्वात्। बृहदिति पदस्य बृहत्त्वादिपरत्वेन व्युत्पन्नस्य सावधिकबृहत्त्वपरत्वे प्रमाणाभावान्निरतिशय एव शक्तिः। बृहदित्युक्ते निरवधिकबृहत्त्वमेव प्रथमं प्रतीयते। आपेक्षिकबृहत्त्वप्रतीतिस्तु प्रमाणान्तरत इति सा गौणी। ब्रह्मशब्दस्यापि निरतिशयबृहत्त्वादिगुणयोगी मुख्योऽर्थः। जीवादौ च तच्छब्दप्रयोगे तस्य निरवधिकबृहत्वाद्यभावस्य प्रमाणान्तरतः सिद्धेर्बृहत्त्वादिसादृश्यलेशमात्रात्तच्छब्दप्रवृत्तिः। एवं चैकस्य ब्रह्मशब्दस्यानेकशक्तिकल्पनाभावलाभश्च, गौणमुख्याधिकरणनयात्। तथाहि--"अर्थाभिधान" इत्यत्रदर्शपूर्णमासयोः "बर्हिर्देवसदनं दामि" इत्यादिलिङ्गविनियोज्या मन्त्रा मुख्ये गौणे च विनियुज्यन्ते, उत मुख्य एवेति; तदुपोद्घाततया गौणी नाम वृत्ति र्नास्ति, उत अस्तीति संशयः। 'अग्निर्माणवकः' इत्युक्तेरग्निशब्दश्रवणानन्तरं पैङ्गल्याद्यर्थप्रतीतेरन्वयव्यतिरेकाभ्यामग्न्यादिशब्दस्य पैङ्गल्यादिष्वपि शक्त्यवगमादविशेषाच्च गौणीनाम वृत्तिर्नास्तीति पूर्वः पक्षः। क्लृप्तशक्त्या मुख्यार्थसादृश्यनिमित्ततया पैङ्गल्यादेर्माणवकेऽग्निशब्दप्रयोगस्योपपत्तेः शक्त्यन्तरकल्पनायां प्रमाणाभावात् गौणी वृत्तिरप्यस्तीति सिद्धान्तः। एवं स्थिते गौणमुख्ययोरुभयोः शाब्दत्वाविशेषादुभयत्र तन्मन्त्रा इति पूर्वपक्षः। प्रथमावगतमुख्यविनियोगादेव मन्त्राम्नानस्य चरितार्थत्वात् व्यवहितगौणविनियोगे प्रमाणाभावान्मुख्य एवेति राद्धान्त इति। तापत्रयातुरैरिति भाष्येण च मुमुक्षोर्जीवस्य न ज्ञेयत्वेनान्वययोग्यत्वम्, किंतु परमात्मन एवेत्युच्यते। अतो ब्रह्मशब्दे परमात्मन एव वाच्यत्वकल्पनं नान्येषाम्। अक्षादिशब्दानां त्वगत्यानेकः शक्तिकल्पना।

"वेदे भूरिप्रयोगाच्च गुणयोगाच्च शार्ङ्गिणि ।
तस्मिन्नेव ब्रह्मशब्दो मुख्यवृत्तो महामुने ॥
यस्मिन्प्रयुज्यमाने तु गुणयोगः सुपुष्कलः ।
तत्रैव मुख्यवृत्तोऽयमन्यत्र ह्युपचारतः ॥"

इत्यादिस्मृतिस्तु न्यायसिद्धार्थकथनमात्रपरा ; न तु मुख्यार्थविशेषनिश्चयप्रतिपादनपरा ; मुख्यत्वादेः स्मृत्यनियाम्यत्वात् । अत एव हि गुणयोगादित्यादिहेतुनिर्देशः । तथा

"तत्र पूज्यपदार्थोक्तिपरिभाषासमन्वितः ।
शब्दोऽयं नोपचारेण ह्यन्यत्र ह्युपचारतः ॥"

इति स्मृतिरपि भगवच्छब्दस्य परमात्मनि मुख्यवृत्तत्वनियमपरा । पूर्वत्र भगवच्छब्दस्यावयवशः समुदायेन चार्थमुक्त्वा परमात्मनि मुख्यवृत्तत्वाभिधानात् तादृशार्थयोगित्वस्य परमात्मन एव संभवादन्यत्रासंभवात् भगवच्छब्दवाच्यत्वमिति न्यायसिद्धपरत्वमेव । **अतः सर्वेश्वरो जिज्ञासाकर्मभूतमिति**; यतः स्वभावतो हेयप्रत्यनीकतादिगुणयोगी परमात्मैव ब्रह्मशब्दार्थः, अत ईप्सिततमत्वेन ज्ञानं प्रति कर्मभूत इत्यर्थः ।

**तत्त्वटीका**

तृतीयपदेऽपि वृत्तेरनेकधा संभवे विशेषव्यक्त्यै विगृह्णाति—**ब्रह्मणो जिज्ञासेति** । अत्र हि व्यासस्तावन्न घटते, जिज्ञासानन्वयात् ; अत एव न कर्मधारयः, सामानाधिकरण्यार्हत्वेऽपि विशेषणविशेष्यव्यत्यासात्, विवक्षितानुपयोगाच्च । द्वितीया तु कृद्योगापोदिता । ब्रह्मणः सर्वहेतुतया तृतीयासमाससम्भवेऽपि विषयाद्युक्तिर्वृत्तविशेषाक्षेपश्च न स्यात् । तादर्थ्ये चतुर्थ्यास्त्विह समासः प्रतिषिद्धः, "तादर्थ्यसमासे प्रकृतिविकृतिग्रहणं कर्तव्यम्" इति कात्यायनोक्तेः । आहुश्च—

"प्रकृत्या विकृतिर्यस्माच्चतुर्थ्यन्ता समस्यते ।
तादर्थ्ये यूपदार्वादौ तेनास्मिन्न समासता ॥" इति ।

तथा न संप्रदानत्वमपि, ब्रह्मणः संप्रदानत्वाभावात् । सप्तमीसमासेऽपि विषयत्वमात्रं

सिध्येदिति भावः। तदिह पञ्चमीमर्थान्तरशङ्कां च वारयति—**ब्रह्मण इति कर्मणि षष्ठीति**। उक्तं ह्याचार्यैः,

"असूत्रस्थापि षष्ठीयं समासग्राह्यभावतः।
विभक्त्यर्थस्य सांनिध्याद्व्याख्यातुमिह युज्यते॥" इति।

अपादानादिः पञ्चम्यर्थो वाक्यानन्वितः, अध्याहारसापेक्षश्च। प्राधान्येन कर्तृत्वानुपपत्तिः "तद्विजिज्ञासस्व" इत्यादिकमनुसरता 'ब्रह्मणः' इत्यनेनैव सूचिता। न हि मुख्यं ब्रह्म स्वमन्यद्वा जिज्ञासेत, स्वतः सर्वदर्शित्वात्। उक्तं च न्यायतत्त्वे—"यो वेत्ति युगपत् सर्वं प्रत्यक्षेण सदा स्वतः" इति। किंचिज्ज्ञस्तु कर्ता न वक्तव्यः, अधीतवेदस्य तदर्थं निर्णिनीषोरादितः प्रभृत्यनुवृत्तेः। कर्मत्वोक्तावीप्सिततमतया प्राधान्येन विषयत्वं प्रयोजनत्वं च सिध्येत्। अतः सदपि स्वस्वामिभावाद्यत्र न वक्तव्यमिति भावः। तथाप्यस्तु सामान्यतः प्राप्ता शैषिकी षष्ठी; विशेषस्त्वौचित्यलब्धेरवाच्य इत्यत्राह—**कर्तृकर्मणोरिति**। संबन्धविशेषेऽपि षष्ठीविधौ सिद्धे साकाङ्क्षसूत्रोक्तात् निराकाङ्क्षसूत्रोक्तं युक्तम्। तत्र विशेषयोर्विधिसाम्येऽपि कर्तुः सकर्मकाकर्मकसाधारण्यात् इह च कर्त्रर्थत्वायोगात् असाधारणाकाङ्क्षिततमकर्मोपस्थापनमुचितमिति भावः। ननु किमर्थलभ्ये शब्दव्यापारेण? न चैवं प्रतिपदानुशासनवैयर्थ्यम्, तस्य कर्मादिविवक्षायामपि द्वितीयानिषेधेन षष्ठीसाधुत्वे तात्पर्यात्; अतो विशेषविधिर्न शैषिकषष्ठीमपवदेत्। तद्ग्रहे च व्यवहितसंबन्धस्यापि तदन्तःस्थितेर्ब्रह्मानुबन्धिनामुपायादीनामपि जिज्ञासासंबन्धात् तत्कर्मत्वस्य चार्थसिद्धेः कृत्स्नशारीरकार्थविचार्यत्वसूचनमधिकं प्रयोजनमित्यत्राह—**यद्यपीति**। **परिग्रहः**, परितो ग्रहः सानुबन्धग्रहणम्; उत्तरग्रन्थे तु गृह्यते इत्युक्त्या अनुबन्धिसंबन्धस्याशाब्दत्वमात्रमभिप्रेतम्। **कर्मापेक्षत्वेन**; सकर्मकतया प्रथमं कर्माकाङ्क्षाजननस्वाभाव्यात्। कर्मार्थत्वसिद्धिर्नाम कर्तृत्वव्युदासेन षष्ठ्याः कर्माख्यविशेषेऽर्थतः पर्यवसानम्। परप्रत्यायनार्थे प्रयोगे विलम्बितधीहेतुर्न ग्राह्य इत्यभिप्रायेणाह—**तथापीति**। न ह्यत्रार्थलभ्ये शक्तिक्लृप्तिः, किं त्वाक्षेप्याद्वरं क्लृप्तशक्तिकशब्दोक्तमित्युच्यते। ननु 'आक्षेपतः' इत्युक्तमयुक्तम्, आकृत्यधिकरणनीत्या सामान्यशक्तेः विशेषपर्यन्तत्वस्य वक्ष्यमाणत्वात्। मैवम्; सा हि विशेषमात्रमुपादत्ते, न कर्मत्वादिकम्; न हि गोशब्दशक्तिर्विशेषतः खण्डत्वादि गृह्णाति। न चात्राभिधानिकग्रहेऽप्यनुबन्धित्याग इति भ्रमितव्यम्, सामान्यतो धीस्थानुबन्धिविष-

यत्वात् सर्वत्र जिज्ञासायाः । एवमप्याक्षेपः स्वीकृत इति चेत्; सत्यम्; अन्यतरकर्मत्वस्यापि शाब्दत्वमुभयकर्मत्वाक्षेपाद्वरम्, किमुत प्रधानांशकर्मत्वस्याक्षेपात्; एवकारः शीघ्रधीहेतोर्बलीयस्त्वं व्यनक्ति। कथं ब्रह्मणः कर्मत्वं शाब्दम्? "धातोः कर्मणः समानकर्तृकादिच्छायां वा" इति ज्ञानस्यैव कर्मत्वात्; मैवम्—सन्नन्तत्वेऽपि प्रकृत्यनुसारेण सकर्मकत्वाकर्मकत्वविभागः। अत एव हि प्रकृत्यर्थकर्मापेक्षया "कर्तृकर्मणोः" इत्यनुशिष्टिः, "धर्मो जिज्ञासितव्यः" इत्यादौ च धर्मादेरभिहितकर्मत्वम्। ननु तथापि नाभिधानिकत्वम्, उपपदविभक्तेरर्थाभावात्। प्रयोगमात्रात् तस्याः सार्थत्वे गाव्यादावपि प्रसक्तेः। न च तत्र शक्तिरस्ति।

न शब्दशक्तिर्गाव्यादौ गोपदं स्मार्यते ततः।
बुद्धिस्थेनैव तेनाथ गोजातिः प्रतिबुध्यते ॥ २०२ ॥

आप्तप्रयोगस्त्वनर्थकत्वेऽपि साधुत्वात् स्यात्; अन्यत्रापि तथा दृष्टेः संमतेश्च। अनुशिष्टिश्च तावद्विशेषव्यक्त्यर्था। तत्तदर्थधियस्त्वन्यथा सिद्धेः, अन्यलभ्ये शक्तेरकल्प्यत्वात्, गत्यन्तराच्च बहुशक्तिकल्पनायोगान्न शक्तिरौपयिकी। तन्न; यथा "कर्तृकरणयोः" इत्यादिवशात् कारकविभक्तिः सार्था अनेकार्था च, तथा "कर्तृकर्मणोः कृति" इत्यादिबलात् उपपदविभक्तिरपि; अन्यथातिप्रसङ्गात्। कारकविभक्तेरुपपदविभक्तिदौर्बल्यं तु पदान्तरविमर्शसापेक्षतामात्रात्। तथापि न शक्तिभङ्गः। पदान्तरसंनिधिरत्र शक्तिं व्यनक्ति, न त्वाधत्ते; यथा नानार्थगवादिशब्देषु। यद्वा अत्रानाभिधानिकत्वेऽपि [1]विशेषानुशासनानुमतवृत्तिविशेषवद्विभक्तिसिद्धस्य शाब्दसमत्वं व्यञ्जयितुमाभिधानिकत्वोक्तिः। कर्मत्वस्य सूत्राभिधानसिद्धत्वमाभिधानिकशब्देन प्रतीयते; उपपदस्वरूपविमर्शस्य पदबोध्यविमर्शादविलम्बितत्वाच्च। ननु न विग्रहवदिह समस्ते विभक्तिरस्ति, येनाभिदध्याल्लक्षयेद्वा। न चाप्रयुक्तापि स्मृताभिधत्ताम्, प्रयोगस्यापि तद्धीमात्रार्थत्वादिति वाच्यम्; समासतोऽर्थबुद्धौ विभक्तिस्मरणनियमे मानाभावात्, सर्वत्र च लक्षणाद्युच्छेदप्रसङ्गात्। षष्ठ्या चाभिधानमिति तद्भिदा। तदेवमभिधायकाभावे कर्मत्वस्य कथमाभिधानिकत्वं तत्समत्वं वा?

---

१. विशेषानुशासनं 'कृद्योगा च षष्ठी समस्यते' इति, तदनुमतो वृत्तिविशेषः समासरूपः, तद्वती विभक्तिः षष्ठीविभक्तिः, तत्सिद्धस्येत्यर्थः।

मैत्रं संबन्धसामान्ये कर्मत्वे वा समीहिते ।
विभक्तिलोपात्सोढव्या प्रकृत्यैव हि लक्षणा ॥ २०३ ॥

अथानुशासनाधीननिरूढलक्षणाया अभिधानसमत्वाच्छाब्दत्वमिति मतम्, कर्मार्थत्वेऽपि समम् । एवं तु केचित्—व्यासे समासे च सविभक्तिकाविभक्तिकशब्दयोः दधिदध्यशब्दन्यायेन सैव शक्तिः; अतो लुप्तविभक्तिकयापि प्रकृत्या संबन्धो न लक्ष्यः; वाच्यसंबन्धिनि वस्त्वन्तरे वृत्तिर्हि लक्षणा; न च संबन्धः संबन्धी । कर्मत्वादिश्च संबन्धः । एवं स्वपरनिर्वाहकतया संबन्धफलसिद्धावपि तथा विवेकरहितानामप्यत्र प्रकृत्या विभक्त्यर्थधीर्दृष्टा । सन्नपि चाजानतः संबन्धो न लक्षणाहेतुः, अतिप्रसङ्गात् । अतः प्रयोगस्यानन्यथासिद्धेरन्यथासिद्धिशङ्कायाश्चानुशासनेनोपरोधाद्विभक्त्यर्थः समासेऽप्यभिधेयः । एवं विभक्तिव्यतिरिक्तलोपेष्वपि नीतिः । ननु निषादस्थपतिशब्दे विभक्त्यर्थलक्षणादोषापनुत्त्यै षष्ठीसमासस्त्यज्यते; तत्कथमाभिधानिकत्वम्? तन्मुख्यत्वे तु क्लृप्तकल्प्यविरोधे क्लृप्तस्यैव ग्राह्यत्वान्नान्यत्राधिकारक्लृप्तिः । मैवम्—

"सामानाधिकरण्यस्य प्राग्वैयधिकरण्यतः ।
अविलम्बितधीयोगात् प्राबल्यं प्रतिपादितम् ॥"

इति न्यायेन शैघ्र्याच्छाब्दव्यवहारः । अथानुशासनस्वारस्यादर्थः, तर्हि यथानिर्णये तु नादरः, अर्थाविरोधादिति । उपपदविभक्तावुक्तमिदं समासेऽपि भाव्यम् ।

सोऽयं वैभववादो वा परमार्थोक्तिरेव वा ।
आभिधानिकतोक्तिस्तु युक्ता धीशैघ्र्यबोधनात् ॥ २०४ ॥

एवं कर्मणि षष्ठ्यामनौचित्यं निरस्तम्; तत्र समासनिषेधशङ्कामपि निरस्यति—**न चेति** । 'कर्मणि षष्ठ्याः' इत्यनेन साधारणः [1]प्रतिपदविधानाशब्दः संकोचार्ह इति सूच्यते । "ज्ञोऽविदर्थस्य करणे" इत्याद्यनुशिष्टायामेव समासापवादः । अवेदनार्थस्य

---

१. "का पुनः षष्ठी प्रतिपदविधाना, का च कृद्योगा? सर्वा षष्ठी प्रतिपदविधाना शेषलक्षणां वर्जयित्वा । 'कर्तृकर्मणोः कृति' इति तु या षष्ठी सा कृद्योगा।" इति महाभाष्यम् । "साक्षाद्धातुकारकविशेषोपादानेन विधानात् प्रतिपदविधानेत्यर्थः । कृच्छब्दोपादानेन तु या विहिता सैव कृद्योगेत्युच्यते" इति कैयटः ।

जानातेः कृद्योगः कचित्सन्नपि तत्र करणषष्ठ्या नापेक्ष्यः ; "सर्पिषो जानीते" इत्युदाहरणात्[1]। निषेधस्य संकोचमाह—**कृद्योगेति**। प्रतिप्रसवोऽपवादनिरासः, तस्य सद्भावात्[2]; न केवलं प्रयोगदृष्ट्येति भावः। एवमैकपद्यहेतुः समासः प्रथमं व्याख्यातः। तत्राद्यप्रकृत्यंशस्य यौगिकार्थनिमित्तत्वश्रुतेरन्यत्रापि यथादृष्टि मुख्यत्वशङ्कां, निर्विशेषचिन्मात्रभोक्तृभोग्यनियन्तृसमष्टितदंशिसन्मात्रादिपरेष्टार्थं, स्वेष्टे चोपचारवृत्तिं क्षिपन् सर्वतः परिबृढत्वाय बृहत्त्वबृंहणत्वे चानवच्छिन्ने विवृंणोति—**ब्रह्मशब्देन चेति**। चस्त्वर्थः शङ्कानिरासे। 'स्वभावतः' इत्यादिना परकल्पितैः सदोषत्वनिर्गुणत्वावाच्यत्वावेद्यत्वैरजिज्ञास्यत्वप्रसङ्गोऽपास्तः। निरस्तनिखिलदोषत्वं च बृंहणत्वोपयुक्तो बृहत्त्वविशेषः। गुणादिविधिनिषेधयोरुत्सर्गापवादादिनीतिविषयत्वं विशेषणद्वयेन व्यञ्जितम्।

विशेषविधिबाधेन तदन्यार्थत्वकल्पनात्।
सामान्यवृत्तिसंकोचं वरं नीतिविदो विदुः ॥ २०५ ॥

परपक्षे तु मिथ्यात्वसत्यत्वविवादेऽपि निरस्यत्वेनाभिमतानां दोषाणामारोपत उपाध्यवच्छेदतः स्वाभाविकांशतो वा परब्रह्माश्रयत्वात् तत एव सार्वज्ञ्यादिभङ्गाच्च जिज्ञास्यत्वायोगः श्रुत्यादिकोपश्च स्यादिति भावः। स्वरूपतो नामान्तरभजनार्हावस्थावन्तोऽचित्पदार्थाः, तदभावेऽपि क्लेशादिमन्तो बद्धाः, कतिपयक्लेशादिरहिता मुमुक्षवः, तदत्यन्तोच्छेदवन्तो मुक्ताः, तदत्यन्ताभाववत्त्वेऽपि पराधीनतथात्वा नित्याश्च बुद्ध्यवतारक्रमेण 'निरस्तनिखिलदोषः' इत्यादिमुखेन प्रथमे विशेषणे व्यवच्छेद्याः। तत्र 'स्वभावतः' इति पदेनानादित्वविवक्षायां मुक्ता अनन्याधीनत्वविवक्षायां नित्याश्च व्यावर्त्यन्ते। द्वितीयेऽपि ते सर्वे। अन्यासंभाव्यगुणविधेर्नित्या एव वा ; तेषां ज्ञानादेर्ब्रह्मसाम्येऽपि हि पराधीनत्वं सिद्धम् ; शक्तिस्तु ततो न्यूना। वक्ष्यति च सत्यादिवाक्यानन्तपदव्याख्याने—"सातिशयस्वरूपगुणा नित्या व्यावृत्ताः" इति। न हि ते विश्वव्यापिनः, नापि सर्वशरीरिणः। अतिशयशब्देन धातूक्ता वृद्धिरतिशायनमिति व्यञ्जितम्। अनवधिकविशेषणेन शतगुणितोत्तरक्रम-

---

१. 'सर्पिषो जानीते' इत्यत्र करणषष्ठीसिद्ध्यर्थं "ज्ञोऽविदर्थस्य करणे" इत्यत्र कृद्योगो न निमित्ततयापेक्ष्यत इत्यर्थः।

२. अनेन 'प्रतिप्रसवसद्भावात्' इति मूलपाठ आचार्याभिमत इति गम्यते।

प्रदर्शितनिरतिशयदशाशिरस्कत्वोक्तिः । 'ईश्वरस्य ज्ञानानन्दादिगुणयोगः कादाचित्कः, तच्छक्तिस्तु नित्या' इति पक्षः 'स्वभावतः' इति पदानुषङ्गात् प्रतिक्षिप्तः । ज्ञानाद्येकैक-गुणविततिरूपावान्तरगुणवर्गख्यापनाय गणशब्दः । उक्तं च षाड्गुण्यविवेके—

"तवानन्तगुणस्यापि षडेव प्रथमे गुणाः ।
यैस्त्वयेव जगत्कुक्षावन्येऽप्यन्तर्निवेशिताः ॥" इति ।

अनवधिकातिशयशब्दोऽत्र गणं विशिंषन् प्रत्येकमतिशयपरश्रुत्या 'विदुषी परिषत्' इति न्यायाच्चार्थतो गुणान् विशिनष्टि ; अन्यथा अन्यपदार्थासिद्धिः ; सत्यां गतौ व्यधि-करणबहुव्रीह्ययोगः । "शैलजन्मा" इत्यादिष्वगत्या तत्स्वीकारः । एतत्सूत्रसंवादिन्या "परीक्ष्य" इत्यादिश्रुत्या ब्रह्मपुरुषशब्दोक्तजिज्ञास्यनिष्कर्षं, सर्वोपनिषदां पुंसूक्तैकार्थ्यम्, ईश्वरस्याध्यस्ततत्त्वब्रह्मांशत्वासंभवम्, ईदृशस्य गीतानिरुक्त्या प्रकृत्यादेर्देवतान्तरेभ्योऽपि विशेषव्यक्तिं चाभिप्रेत्याह—**पुरुषोत्तम इति** । अवधारणमिह ग्राह्यम् ।

यद्यप्यत्र समानाधिकरणसमासे पौर्वापर्यव्यत्ययः, निर्धारणे तु षष्ठ्या न समासः ; तथापि "द्वाविमौ पुरुषौ" इत्यारभ्य "उत्तमः पुरुषस्त्वन्यः" इत्यधमप्रतियोगित्वो-क्त्या संबन्धिशब्दतया समासः स्यात् ; "अक्षरादपि चोत्तमः" इत्यनेन पञ्चमीसमासो वा सूच्यते । योगविभागस्तु यथाप्रयोगमिष्टः ; अत एव सप्तमी निर्धारणेऽपि समस्यते । नागोत्तमादिशब्दाश्चैवं शाब्दैर्निर्व्यूढाः । "रूढ्या तु कामं पुरुषोत्तमोऽस्तु" इति वदन् श्रुत्यादिबाध्यः, "अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः" इति सर्वविदुक्तेः । **अभिधीयते** ; मुख्यवृत्त्या विषयीक्रियते । एतेन तदेकनाम्नो ब्रह्मशब्दस्य तत्रैव लक्षणा-मिच्छन्तो निरस्ताः ; रूढिविषये क्वचिल्लक्षणां वदन्तश्च निरस्ताः ।

ननु गवादिशब्दवज्जातिद्वारा, पाचकादिशब्दवत्क्रियाद्वारा, डित्थादिवद्यदृच्छया वान्यत्रापि मुख्यता स्यादित्यत्राह—**सर्वत्रेति** । प्रकृत्यादिष्विव ब्रह्मशब्दस्थलेष्वित्यर्थः । तेषु मिथो विषमेषु तदन्यव्यावृत्ता जातिः क्रिया वा न दृष्टा । बृंहणत्वं तु बृहत्त्वापेक्षम् । अतस्तन्निमित्तत्वे गौरवम् । बृहत्त्वं च किंचित्तत्र तत्र प्रकृतं विवक्षितं च । ब्रह्मशब्दवृत्ति-द्वारा तन्निरुपाधिकवृद्धिरूपधात्वर्थप्रसिद्धिश्च नोपेक्ष्या ; अतः संभवद्वृत्त्यन्तरे न यदृच्छा-पीति भावः । हिः प्रसिद्धौ हेतौ वा । तर्हि बृहच्छब्दवदरौ बृहत्त्वमात्रनिमित्तः स्यात् ;

नेत्याह—**बृहत्त्वमिति**। सर्वतो बृहत्त्वमसंकोचात् स्वरूपतो गुणतश्चेत्युच्यते; तेन परिच्छिन्नस्वरूपाणां गुणबृहत्त्वरहितस्य गुणादेश्च व्यवच्छेदः। 'अस्य' इत्यनेन बृहच्छब्दाद्यावृत्तिर्दर्शिता। न ह्यसौ 'इत इदं ब्रह्म' इत्यवधिनिर्देशं तरतमप्प्रयोगं च सहते। "सर्वं खल्विदं ब्रह्म" "सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत्" "त्रयं यदा विन्दते ब्रह्ममेतत्" इत्यादिष्वन्येषां तच्छरीरतया 'देवोऽहम्' इत्यादिवत् सामानाधिकरण्यम्; न तु तत्तद्वस्तुषु ब्रह्मशब्दप्रयोगः। त्रैविध्योक्तिश्च प्रेरितृत्ववैशिष्ट्यं भोक्तृभोग्यवैशिष्ट्यं चापेक्ष्य। "नारायण परं ब्रह्म" इत्यत्र 'परम्' इति विशेषणं त्वौपचारिकव्यावृत्त्यर्थम्। अतो बृहत्त्वमात्रं नास्य निमित्तमिति भावः। प्रयोगनियत्या तत्र तत्र काष्ठाप्राप्तबृहत्त्वं स्यादित्यत्राह—**स च इति**। अपरिच्छिन्नबृहत्त्वाश्रय इति यावत्। **सर्वेश्वर इति** समाधिकदरिद्रत्वादिश्रुतिव्यञ्जनी समाख्या; "अजः सर्वेश्वरः" इति तन्नामपाठात्। एकस्यैव सर्वनियमनादिरूपं निरतिशयबृहत्त्वं शास्त्रोक्तम्; तदन्येषां तु तादधीन्यात्तत्त्वं तादृत्त्वमपि नास्तीत्यवधारणाभिप्रायः। अन्यत्र निमित्तासंभवान्नैमित्तिकासंभवस्य फलितत्वमाह—**अत इति**। कथं तत्तद्वाचकत्वाभावे संबन्धगुणयोगयोश्च सर्वत्र संभवे क्वचित्प्रकृत्यादिषु नियतप्रयोग इत्याह—**तस्मादिति**। अयं भावः—न ह्यत्र संबन्धमात्राल्लक्षणा; न च किंचित्साम्याद्गौणी वृत्तिः; किं तु तद्गुणो निरतिशयबृहत्त्वं, तल्लेशोऽपि लोकोत्तरबृहत्त्वं, तन्निबन्धनोपचारनियमान्नातिप्रसङ्गः। प्रयुञ्जते च यथेष्टं स्तुतिनिन्दाभिप्रायेण मुख्यासन्ने तद्गुणप्रकर्षयोगिनि च तच्छब्दं नामतयेति। ननु मुख्ये लभ्ये नोपचारः; न चावयवशक्तित्वाद्ब्रह्मशब्दस्यैकत्राप्यन्या शक्तिर्न कल्प्या,, किमुतानेकत्रेति वाच्यम्; तादृशस्यापि प्रयोगनियत्यै रूढेः कल्प्यत्वात्; पङ्कजादिषु पद्मत्वादिवच्चैकं नियामकं न दृष्टम्; अतो यावत्प्रयोगं शक्तिर्भेद्येत्यत्राह—**अनेकेति**। क्लृप्तशक्तेः शब्दस्य प्रयोगविमर्शे हि प्रथमं मुख्यानुसारः। शक्तिपरीक्षायां त्वेकविषये शक्त्या प्रयोगान्तरान्यथासिद्धौ न शक्त्यन्तरं कल्प्यम्; गौरवात्; अन्यथोपचार एव लुप्येत। अस्ति चासाविति गौणमुख्याधिकरणे स्थापितम्। क्वचित्तु अगत्या अनेकशक्तिक्लृप्तिरित्याशयः।

नैघण्टुकैस्त्वनादृत्य शब्दनिष्कर्षणं गिराम्।
प्रयोगप्रौढिशिक्षार्थं पठ्यतेऽनेकनामता ॥ २०६ ॥

यदत्र नियामकतयोक्तं लोकोत्तरबृहत्त्वं तेनैवैकेन निमित्तेनान्येष्वपि मुख्यत्वं स्यात्; अन्यथा विपरिवर्तः किं न स्यादित्यत्र दत्तोत्तरत्वमभिप्रयन्,

"प्रत्यक्षेऽपि विसंवादो येषां कः स्वयमुत्तरम् ।
तेभ्यो दद्यादिति ज्ञात्वा वृद्धानां मतमब्रवीत् ॥"

इति न्यायात् पुराणोक्तीर्निदर्शयति–**भगवच्छब्दवदिति**। तत्र "शुद्धे महाविभूत्याख्ये" इत्यादिना "अन्यत्र ह्युपचारतः" इत्यन्तेन यौगिकार्थपौष्कल्यवत्त्येव मुख्यत्वमुक्तम् ।

पुराणान्तरेऽपि—

"भगवानिति शब्दोऽयं तथा पुरुष इत्यपि ।
निरुपाधी च वर्तेते वासुदेवे सनातने ॥" इति ।

दार्ष्टान्तिकमपि गारुडे स्थापितम्—

"वेदे भूरिप्रयोगाच्च गुणयोगाच्च शार्ङ्गिणि ।
तस्मिन्नेव ब्रह्मशब्दो मुख्यवृत्तो महामुने ॥"

इत्यारभ्य

"यस्मिन्प्रयुज्यमाने तु गुणयोगः सुपुष्कलः ।
तत्रैव मुख्यवृत्तोऽयमन्यत्र ह्युपचारतः ॥" इति ।

अस्त्वेकत्रैवास्य शक्तिः; अस्मिन् सूत्रे भेदकाभावादमुख्यत्वं किं न स्यादित्यत्र

"नास्ति भेषजमन्यत्र नारायणरसायनात् ।"
"वासुदेवं परित्यज्य योऽन्यं देवमुपासते ।
तृषितो जाह्नवीतीरे कूपं खनति दुर्मतिः ॥"

इत्यादिप्रमाणगत्या प्रत्याह—**तापेति**। न ह्यत्र मुख्यस्य बाधः; भगवतः स्वतन्त्रस्वामित्वात्। अस्वतन्त्रस्यान्यस्य चायमर्थःसिद्धः; "जुष्टं यदा पश्यत्यन्यमीशम्" इत्यादिभिः सोपबृंहणैः परोपास्तेरेव तापत्रयनिवर्तकत्वोक्तेः। स एव "मन्तव्योऽन्वेष्टव्य" इति विचार्यत्वेन श्रुत इति भावः। "अनेकार्थत्वेऽपि ब्रह्मशब्दस्यास्मिन् प्रयोगेऽसावेवार्थ इत्याह" इति विवरणं त्वन्वारोहेऽपि विशेषदार्ढ्यपरम्; जातिगुणादिनिमित्तत्वबहुरूढत्वपक्षेष्वपि हि समभिव्याहृतपदान्तरादेरर्थविशेषः सिध्येत्। यद्वा मुख्यामुख्ययोस्तन्त्रेणानेकार्थत्वानूक्तिः। अमृतशब्देनैवकारेण च "तमेवं विद्वानमृतः" इति "तमेव विदित्वा" इति च वाक्यद्वयसूचनात् द्वयोरविरोधः ख्यापितः। ननु

प्रत्यगात्मन्यपि "सोऽन्वेष्टव्यः" इत्यादिदर्शनात् "नात्मा श्रुतेः" इत्यादौ तस्यापि निरूपयिष्यमाणत्वाच्च 'स एव' इत्यवधारणमिहाशक्यम्; तदिदं निगमनमुखेन व्युदस्यति—**अत इति**; शब्दशक्त्या प्रस्तुतार्थस्वाभाव्याच्चेत्यर्थः। तदुभयं सर्वेश्वर इत्यादिपदद्वयाभिप्रेतम्। **जिज्ञासाकर्मभूतं** जिज्ञासया प्राप्तुमिष्टतममित्यर्थः। प्रधानतया ह्यत्र जिज्ञास्यः परः। तद्भक्त्यारोहायाहंग्रहोपास्तौ विशेषणतया बोद्धुं च स्वात्मापि चिन्त्यः। प्रजापतिवाक्यादिषु च प्रत्यगात्मज्ञानं प्रकृतपरविद्यार्थतयैवोच्यत इति वक्ष्यते।

## मूलभावप्रकाशिका

अथातःशब्दौ व्याख्याय ब्रह्मजिज्ञासापदं व्याचष्टे—**ब्रह्मणो जिज्ञासा ब्रह्मजिज्ञासेति**। षष्ठ्या अनेकार्थसंभवादाह—**ब्रह्मण इति कर्मणि षष्ठीति**। नन्वेवं "कर्मणि च" इति सूत्रेण कर्मणि षष्ठ्याः समासनिषेधादत्र समासो न स्यादित्याशङ्क्याह—**कर्तृकर्मणोः कृतीति विशेषविधानादिति**। अयं भावः—"उभयप्राप्तौ कर्मणि" इति सूत्रविहितषष्ठीविषयोऽयंनिषेधः; यथा 'आश्चर्यो गवां दोहोऽशिक्षितेन गोपालेन' इति; इतरथा "कर्तरि च" इति सूत्रानर्थक्यप्रसङ्गादिति वैयाकरणैरुक्तम्। नात्र कर्तृकर्मणोरुभयोर्विवक्षाविषयता। अतः "उभयप्राप्तौ" इत्यस्य नायं विषयः। अतः "कर्मणि च" इति समासप्रतिषेधस्य नायं विषय इति। शेषे षष्ठीस्वीकारेऽपि सकर्मकजिज्ञासासामर्थ्यादेव ब्रह्मणः कर्मत्वसिद्धेर्ब्रह्मानुबन्ध्युपासनादिजिज्ञासानामपि ब्रह्मजिज्ञासापदेन ग्रहणसंभवाच्च किमनेन समासप्रतिषेधप्रसक्तिविषयेण कर्मणि षष्ठ्याश्रयणेनेति शङ्कते—**यद्यपीति**। **आक्षेपत इति**; प्रतीतिगौरवात् प्रधानभूतब्रह्मविचारप्रतिज्ञयैव तदनुबन्धिविचारस्याप्यर्थतः प्रतिज्ञातत्वसंभवान्न तदर्थमपि संबन्धसामान्यपरिग्रह इति भावः। प्रकारान्तरेण षष्ठीसमासनिषेधमाशङ्क्य परिहरति—**न च प्रतिपदविधानेति**। "षष्ठी शेषे" इति सूत्रविहितषष्ठीव्यतिरिक्तषष्ठ्याः सर्वस्या अपि प्रतिपदविधानत्वादिति भावः। **प्रतिप्रसवसंभवादिति**; प्रतिप्रसवोऽपवादापवादः। अयं भावः—"ज्ञोऽविदर्थस्य करणे" इत्यादिसूत्रविहितषष्ठीविषय एव समासनिषेधः। तत्र हि "शेषे" इत्यनुवृत्तेः शेषत्वेन विवक्षितेषु करणादिषु "षष्ठी शेषे" इति सूत्रविषयेष्वेव पुनः षष्ठीविधानस्य षष्ठीलोपाभावप्रत्यायनमुखेन समासनिषेधकत्वात् "ज्ञोऽविदर्थस्य करणे" इत्यादिसूत्रविहितशेषषष्ठीविषयः समासनिषेधः। "कर्तृकर्मणोः कृति" इति सूत्रे "शेषे"

इत्यननुवृत्त्या अप्राप्तषष्ठीविधायकत्वेन विभक्तिलोपाभावज्ञापकत्वाभावेन समासनिषेधाप्रसक्तिरिति । न च आबन्तस्य जिज्ञासाशब्दस्य कथं कृदन्तत्वमिति शङ्क्यम्, "अ प्रत्ययात्" इति सूत्रविहितकृत्संज्ञकाप्रत्ययस्य आपश्च स्थाने भवत एकादेशस्यान्तादिवद्भावेन कृत्संज्ञकत्वस्यापि संभवेन जिज्ञासाशब्दस्य कृदन्तत्वात् । "इदं ब्रह्म याति" "तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते" इत्यादौ ब्रह्मशब्दस्य जीवप्रकृत्यादावपि प्रयोगदर्शनात् तद्व्यावृत्त्यर्थं ब्रह्मशब्दं व्याचष्टे—**ब्रह्मशब्देनेति । पुरुषोत्तम इति ;**

"यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥"

इति भगवतैव स्वस्मिन् पुरुषोत्तमत्वस्य गीतत्वात् पुरुषोत्तमोऽभिधीयत इत्यर्थः । तस्य ब्रह्मशब्दाभिधेयत्वे हेतुं विशेषणद्वयेन प्रदर्शयति—**स्वभावत** इति । 'स्वभावतः' इत्येतत् विशेषणद्वयस्यापि समानम् । निरस्ता निखिला दोषा येनेति स्वाश्रितज्ञानसंकोचलक्षणदोषनिरासकत्वं तदर्थः । ज्ञानविकासलक्षणानन्त्यहेतुत्वं फलितार्थः । ततश्च बृंहणत्वं भवति । 'अनवधिकातिशय' इत्यनेन गुणतो बृहत्त्वमुक्तम् । विभुत्वस्यापि गुणान्तर्भावात् स्वरूपतो बृहत्त्वमप्यर्थादुक्तं भवति । एवं च बृहत्त्वबृंहणत्वे ब्रह्मशब्दस्य प्रवृत्तिनिमित्ते दर्शिते भवतः ।

"तेजोबलैश्वर्यमहावबोधसुवीर्यशक्त्यादिगुणैकराशिः ।
परः पराणां सकला न यत्र क्लेशादयः सन्ति परावरेशे ॥"

इति भगवता पराशरेण पुरुषोत्तम एव निर्दोषत्वकल्याणगुणाकरत्वयोराम्नानात् तस्यैव ब्रह्मत्वमिति भावः । यद्यपि बृंहणत्वमपि गुणतो बृहत्त्वेऽन्तर्भवति, तथापि "बृहत्त्वाद् बृंहणत्वाच्च" इत्यादिस्मृत्यनुसारादादरातिशयद्योतनाय गोबलीवर्दन्यायेन पृथगुक्तमिति द्रष्टव्यम् । ननु 'पुरुषोत्तम एवाभिधीयते' इत्ययुक्तम्, ब्रह्मशब्दस्येतरत्रापि प्रयोगदर्शनादक्षादिवन्नानार्थत्वस्यैव वक्तव्यत्वादित्यत्राह—**सर्वत्रेति** । बृहतेर्धातोर्मनिन्प्रत्यये निष्पन्नस्य ब्रह्मशब्दस्य बृहत्त्वं यौगिकार्थः । ततश्च क्लृप्तयोगवशेनैव जीवप्रकृत्यादिप्रयोगसंभवे, अनेकरूढिकल्पनायोगादिति भावः । नन्वेवं जीवादेरपि बृहत्त्वाविशेषात् 'पुरुषोत्तम एवाभिधीयते' इति कथमित्यत्राह—**बृहत्त्वं चेति** । लोके हि 'समर्थः' इत्युक्ते प्रकरणोपपदादिसंकोचकाभावे सर्वसामर्थ्यं प्रतीयते । एवमिहाप्यसंकोचस्य स्वतः प्राप्तत्वात्

प्रकरणोपपदादिसंकोचकाभावादसंकोचेन सर्वविधं बृहत्त्वं प्रतीयते । अतः प्रवृत्तिनिमित्त-पौष्कल्यात् पुरुषोत्तम एव ब्रह्मशब्दस्य मुख्यार्थः, व्यापिबृहत्त्वस्यात्यागे ब्रह्मशब्दगत-बृहत्त्वशक्तेरसंकोचात् । मुख्यत्वं च शीघ्रप्रतीतिकत्वम् । मुखमिव प्रादुर्भवतीति हि मुख्यशब्दव्युत्पत्तिः । उक्तं च श्रीमति गारुडे पुराणे—

"वेदे भूरिप्रयोगाच्च गुणयोगाच्च शार्ङ्गिणि ।
तस्मिन्नेव ब्रह्मशब्दो मुख्यवृत्तो महामुने ॥"

इत्यारभ्य

"यस्मिन्प्रयुज्यमाने तु गुणयोगः सुपुष्कलः ।
तत्रैव मुख्यवृत्तोऽयमन्यत्र ह्युपचारतः ॥"

इति । **औपचारिक इति**; बृहत्त्वशक्तिसंकोचादिति भावः; विलम्बेन प्रत्यायक इत्यर्थः । केचित्तु बृहत्त्वमात्रं न ब्रह्मशब्दप्रवृत्तिनिमित्तम्; अपितु निरतिशयबृहत्त्वम्; ततश्च जीवादिकेषु प्रवृत्तिनिमित्ताभावात् माणवके सिंहशब्दवत् तेषु ब्रह्मशब्दो गौण इत्याहुः । न च प्रकृत्यादिष्विव घटादावप्यौपचारिकः प्रयोगः किं न स्यादिति वाच्यम्, औपचारिक-प्रयोगस्यापर्यनुयोज्यत्वात् । **अनेकार्थकल्पनायोगादिति**; अक्षादिशब्देषु त्वगत्या तत्कल्पनमिति भावः । **भगवच्छब्दवदिति**;

"एवमेव महान् शब्दो मैत्रेय भगवानिति ।
परमब्रह्मभूतस्य वासुदेवस्य नान्यगः ॥
तत्र पूज्यपदार्थोक्तिपरिभाषासमन्वितः ।
शब्दोऽयं नोपचारेण ह्यन्यत्र ह्युपचारतः ॥"

इति श्रीविष्णुपुराणोक्तेरिति भावः । जिज्ञासापदसामर्थ्यादपि ब्रह्मशब्दस्य पुरुषोत्तम एवार्थ इत्याह—**तापत्रयातुरैरिति**; "तमेवं विद्वानमृत इह भवति" "नान्यः पन्था विद्यतेऽय-नाय" इति श्रुत्यर्थोऽत्र विवक्षितः । उपसंहरति—**अत इति** ।

श्रीमते रामानुजाय नमः ।

श्रीवरदनारायणभट्टारकविरचितं

# वेदान्तन्यायसुदर्शनम् ।

विश्वं जगद्वपुर्यस्य तमुदारगुणं हरिम् ।
निर्मलाविह्वलानन्तानन्दामृतनिधिं भजे ॥ १ ॥

यस्तूदास्त समस्तदेवदितिजैर्दर्पान्मृथेऽधः कृतै-
र्भूयो योद्धुममी मया विसदृशा इत्येव तं लीलया ।
यो लङ्केशमकम्पयत्कपिकुलैरुल्लोलकोलाहलैः
कल्लोलाकुलसागरस्य दमकं तं राघवेन्द्रं स्तुमः ॥ २ ॥

येनोदग्रनिसर्गसर्गचिदचिज्जाताधिराज्यश्रियः
श्रीनाथस्य बलिष्ठदुष्टदमने शार्ङ्गासिचक्रादिवत् ।
स्वीयस्वामिविनिह्नवव्यसनिदुर्वादिप्रक्लृप्तान्यथा-
भावाभावकरायुधायितमयं जीयान्मुनिर्लक्ष्मणः ॥ ३ ॥

ये लक्ष्मणार्यपादाब्जसेवानिष्णातमानसाः ।
तत्पादयुग्मरुक्माब्जपरागाणुत्वमाप्नुयाम् ॥ ४ ॥

अहं लक्ष्मणमिश्रान्तेवासिक्रमसमागतम् ।
हृदि वेदान्तभाष्यार्थं ज्ञापयिष्याम्यनूक्तिभिः ॥ ५ ॥

## अथातो ब्रह्मजिज्ञासा ॥

अस्य शास्त्रस्य विषयो ब्रह्म । तन्निर्णयः फलम् । अत्र सर्वात्मत्वबोधकब्रह्मशब्देन विशेषणं, ब्रह्म स्वरूपरूपगुणविभवचेष्टितविशिष्टमिति ज्ञापनार्थं ; तस्य सर्वात्मत्वेनात्रत्यार्थान्तरचिन्तानां तच्चिन्तात्वानतिक्रमणज्ञापनार्थं च । पुरुषैरर्थ्यानि सर्वस्वरूपाणि यदात्मकानि तस्य ब्रह्मणो जिज्ञासा कर्तव्येत्यर्थः । अनेन प्रतिपाद्यप्रतिपादकभावलक्षणः संबन्ध इत्यर्थादुक्तं भवति ।

ज्ञायमाने तु वेदान्तैः करणैः परमात्मनि ।
इमामुत्तरमीमांसामितिकर्तव्यतां विदुः ॥ ६ ॥

वेदस्य निरपेक्षत्वलक्षणप्रामाण्ये सत्यपि प्रतिपत्तृमतिमान्द्यापराधनिमित्तसंशयविपर्ययापनोदनमनया क्रियत इति न तस्य भङ्गः ।

समन्वयोऽविरोधश्च साधनं च फलं तथा ।
चत्वारोऽर्थाश्चतुर्णां स्युरध्यायानां क्रमान्विताः ॥ ७ ॥
व्युदस्याविषयत्वान्यविषयत्वे समन्वयः ।
वाक्यानां ब्रह्मणि प्राच्याध्यायेनेह प्रदर्श्यते ॥ ८ ॥
आद्यपादे चतुःसूत्र्या शास्त्रारम्भस्य सिद्धये ।
उपोद्घाततयैवैषां विषयत्वं दृढीकृतम् ॥ ९ ॥
व्युत्पत्त्यभावःप्रतिपत्तिदौस्थ्यमन्येन सिद्धत्वमथाफलत्वम् ।
एतानि वै सूत्रचतुष्टयेनानारम्भमूलानि निराकृतानि ॥ १० ॥
आभिधानिकमेवान्यविषयत्वं व्युदस्यते ।
प्रथमं प्रथमे पादे लिङ्गादिकमथ त्रिषु ॥ ११ ॥

तत्र प्रथमाधिकरणेन शब्दानां सिद्धार्थे शक्त्यभावेन वेदान्तवाक्यानां परिनिष्पन्नब्रह्मावबोधकत्वासंभवात् शास्त्रस्यानारम्भणीयत्वमाशङ्क्य तत्रापि व्युत्पत्तिसंभवप्रदर्शनेन तदारम्भणीयतोच्यते । तत्र तावदयं संशयः---किं ब्रह्ममीमांसा आरम्भणीया, उत अनारम्भणीयेति । तदर्थमिदं विचार्यते--किं वेदान्तवाक्यानां परिनिष्पन्नब्रह्मावबोधजननसामर्थ्यमस्ति, नेति ; तदर्थं च किं कारकादिगुणान्विते कार्यरूप एवार्थे शब्दशक्तिः, उत विशेषणयोग्येतरान्वितार्थे इति ; तदर्थं च पुनः किं वृद्धव्यवहारेण शब्दशक्तिग्रहणं कार्यार्थवाक्येष्वेव, उत सिद्धार्थवाक्येष्वपि ; यदा कार्यवाक्येष्वेव तदा सिद्धार्थे शब्दानां व्युत्पत्त्यभावात् तदनुसारेण शब्दानां कार्यार्थ एव शक्तिरिति नियमात् कारकादिगुणान्वितकार्यरूपार्थबोधकतयोपनिषद्वाक्यानां ब्रह्मावबोधजननसामर्थ्यासंभवात् तन्निर्णयहेतुभूतब्रह्ममीमांसानारम्भणीया स्यात् ; यदा पुनः सिद्धवाक्यार्थेष्वपि व्युत्पत्तिसंभवः, तदा तदनुसारेण योग्येतरान्वितार्थे शब्दशक्तिरिति वेदान्तवचसां ब्रह्मावबोधजननसामर्थ्यसंभवात् मीमांसारम्भणीया स्यात् । ननु संस्कारकर्मताधीयते स्वाध्यायस्य ; तत्र ईप्सितार्थबोधकत्वे जपाद्यालम्बनत्वे च स्वरूपेण जपाद्यर्थत्वं शक्त्यार्थावबोधकत्वमिति रूपभेदाद्विरोधः—न ; यथाग्नेर्दाहभासयोरेकेनैव रूपेणानेकार्थत्वेऽपि न विनियुक्तविनियोगविरोधः, तथात्रापीत्यर्थः ।

विषं भुङ्क्ष्वादिवाक्यानामन्यार्थवचनत्वतः ।
उक्तान्यपरता वेदे जपाद्यर्थे न सा भवेत् ॥ १२ ॥

'विषं भुङ्क्ष्व' इत्यादिवाक्यानां निन्दितगृहभोजननिवृत्त्याद्यर्थत्वेनार्थाभिधानशक्तेः पर्यवसितत्वान्न विषभोजने तात्पर्यमित्यन्यार्थवचनत्वलक्षणान्यपरतोक्ता ; इह तु वेदे स्वरूपमात्रेण जपाद्यर्थत्वेऽप्यर्थावबोधकत्वशक्तेरक्षतत्वात् नान्यपरताशङ्केत्यर्थः ।

अतो रूपद्वयेनैव भजतीत्याह सार्थताम् ।
विवक्षितार्थतां नातिक्रामेद्वेद इति स्थितिः ॥ १३ ॥

येषां मते अध्ययनमर्थकर्म, तैर्विधेरधिकारापेक्षायां तदर्थमर्थावबोधः स्वीक्रियते । येषामिदं संस्कारकर्म, तन्मते संस्कृतस्य स्वाध्यायस्योपयोगापेक्षायां तदर्थं तत्स्वीकारः । पूर्वोक्तविरोधपरिहारौ चोभयेषामपि समानौ । अनर्थकेषु 'हुं फट्' इत्येवमादिषु चाधिकारानवाप्त्युपयोगानवाप्तितः सर्वाः समानाः । इयान्विशेषः—अर्थकर्मपक्षे "स्वाध्यायोऽध्येतव्यः" इति श्रूयमाणस्वाध्यायकर्मत्वपरित्यागो वृथैव स्वीकरणीय इति । स्वाध्यायकर्मत्वपक्षे ब्राह्मणाधिकारबृहस्पतिसवादिषु राजन्यवैश्ययोः, राजसूये ब्राह्मणवैश्ययोः, वैश्यस्तोमे राजन्यस्य ? वैश्यस्य चाधिकाराभावात् तत्तद्वेदभागेषु तयोः संस्कारवैयर्थ्यम् । जपादेरर्थकर्मत्वात् तस्य च सर्वेषां सर्वस्वाध्यायव्यापित्वाच्च जपाद्यर्थं तत्रापि तयोः संस्कारसंभव इति चेत्—तन्न ; धारणजपयज्ञादावपि "स्वाध्यायोऽध्येतव्यः" "स्वाध्यायमधीयीत" इति स्वाध्यायस्य कर्मत्वावगमात् । आद्याध्ययनवत् जपाध्ययनादेरपि संस्कारकर्मता इष्यते चेत् , तदा

आद्यं तु सर्वस्वाध्यायानुपयोगादसंगतिः ।
सर्वत्र कर्मताबाधः स्वाध्यायस्य प्रसज्यते ॥ १४ ॥
तेन संस्कार आद्यं स्यादपरे त्वर्थकर्मणि ।
आर्थवादिकमेवात्र फलं स्याद्रात्रिसत्रवत् ॥ १५ ॥
अत्रानीप्सितकर्मत्वं स्वाध्यायस्येष्यते बुधैः ।
आद्ये त्वीप्सितकर्मत्वं तदर्था च क्रिया मता ॥ १६ ॥

जपादेरपि संस्कारकर्मत्वे सर्वसंस्कारसंस्कार्यस्वाध्यायस्यार्थावबोध एक एव भाव्युपयोगः स्यात् । तस्य चानधिकृतकर्मभागे 'हुं फट्' आदिषु च वैयर्थ्यात् सर्वाण्यध्ययनान्यर्थकर्मा-

णि स्युः। तदा स्वाध्यायस्य कर्मताभङ्गः स्यात्। तस्माद्यदाध्ययनमेकमेव संस्कारः। तत्संस्कृतस्य स्वाध्यायस्यावघातादिसंस्कृतव्रीहीणां होम इव जपादौ विनियोगः। जपादिश्च सर्वेषां सर्वस्य स्वाध्यायस्य भाव्युपयोगः। अर्थावबोधस्तु यथाधिकारमाद्याध्ययने। एवं वाक्यार्थावबोधः स्वाध्यायेन यत्कर्तुं शक्यते तदर्थं संस्कुर्यादिति। न च स्विष्टकृदादिवत् आश्रयित्वेनोभयार्थत्ववर्णना, कल्पनागौरवप्रसङ्गात्। तस्मात् संस्कारकर्मैवाध्ययनम्। ततश्च

साङ्गाध्ययननिर्वृत्तौ सत्यामापाततः किल।
ज्ञायते ब्रह्म कर्मापि पुरुषार्थतया नृणाम्॥ १७॥

असंदिग्धाविपर्यस्तज्ञानोपादित्सया स्वयम्।
तद्विचारेऽधिकुर्वीत श्रेयोऽर्थी गुरुसेवया॥ १८॥

रत्नशैलशृङ्गस्यापातप्रतीतौ तदर्थिनस्तत्र निर्णये स्वयं प्रवृत्तिवत् निखिलपुरुषार्थाकरवेदार्थापातप्रतीतौ सत्यां पुरुषस्य फलरागत एव तद्विचारे प्रवृत्तिसंभवात् नाध्ययनविधौ पर्यवसानं कल्पयित्वा विचारस्य तत्प्रयुक्तताप्रयास इत्यभिप्रायः। अध्ययनानन्तरं "वेदमधीत्य स्नायात्" इति स्थित्या स्नायादिति तदनादरे कृतेऽपि फलरागत एव गुरुकुले पुनश्च स्थितिं कल्पयति। स्थित्यन्तरप्रयुक्तिप्रसङ्ग इति चेत्, तर्हि स्थितिं धारयतीत्युपशाम्यतु भवान्। स्थितिसद्भावेऽपि स्थितेरध्ययनप्रवृत्तत्वाकारापगमेन सकलब्रह्मचर्यधर्मनिवृत्तेः स्नातकत्वोपपत्तिः।

अक्षरग्रहणोपायनियमार्थे ह्ययं विधिः।
तद्ग्रहावधि तत्कर्मस्थितिरित्यब्रवीत्स्मृतिः॥ १९॥

अधीताद्वेदतः पश्चादर्थज्ञानं स्वतो भवेत्।
तत्तु नाध्ययनं नापि धर्माणां च प्रयोजकम्॥ २०॥

कृतादरमपि यावद्विचारकालमनधिकुर्वाणा विचारितकर्माणमेवाग्निहोत्रादिविधयोऽप्यधिकुर्वन्ति। ततः पूर्वमविद्वत्त्वेनानधिकारित्वात्। "दशमेऽहन्यादधीत" इत्यादिकं तु पूर्वमेव विचारितकर्मपुरुषविषयं भवति। अविचारयतः पुनरध्ययनवैयर्थ्यं भवति, प्रत्यवायश्च स्यात्।

" अधीत्य वेदान् साङ्गांस्तु विचारं य उपेक्षते ।
स्वप्रयासं च विस्मृत्य प्रभ्रष्टः स्यात्प्रयोजनात् ॥ " इति ।
विचार्य सर्वकर्माणि मुमुक्षुश्चेदिह व्रजेत् ।
अमुमुक्षुस्तु तत्रैव पर्यवस्यन् प्रवर्तते ॥ २१ ॥
अङ्गत्वेनान्वितानीह कर्माणि ब्रह्मदर्शने ।
ऐकशास्त्र्यमतः सिद्धं कर्मज्ञानाख्यकाण्डयोः ॥ २२ ॥

अङ्गशास्त्राणां प्रधानशास्त्रैरैकशास्त्र्यमिति य········देशपरवाक्यैः सर्वावबोधवत् ब्रह्मावबोधस्यापि शब्दशक्त्यैव जायमानत्वेन कर्मविधीनां तद्विधीनां तत्रान्वयाभावात् । अथाधिवेदाख्यैकप्रमाणेतिकर्तव्यताकमिति मन्तव्यम् , कर्ममीमांसाया, ऐकशास्त्र्यमप्येवमेव ; तत्रापि सर्वेषां कर्मविधीनां मुक्त्यैकशास्त्र्यसंभवात् ।

कर्मविज्ञानयोर्हेतुहेतुमद्भावसंगतेः ।
प्राग्भावः कर्मणः सिध्येत् पश्चाद्भावोऽपरस्य च ॥ २३ ॥
तयोश्च क्रमवत्त्वे च तद्विचारौ च तादृशौ ।
मुख्यक्रमनयादेव स्यातां सारस्वताङ्गवत् ॥ २४ ॥

यथा " सारस्वतौ भवत एतद्वै दैव्यं मिथुनम् " इत्यत्र युगलोत्पन्नयागद्वये कस्याङ्गानां प्राथम्यमित्यनिर्णये सरस्वतीयागस्य याज्यानुवाक्याभ्यां प्राथम्ये सिद्धे तच्छेषभूततद्विचारस्यैव प्राथम्यम् ।

विद्याकरत्वाद्विद्यैकविषयत्वाच्च तद्विदेः ।
सिद्धब्रह्मविचारोऽपि नान्यो विद्याविचारतः ॥ २५ ॥

अत एकशरीरत्वात् विद्युपश्लेषेण कर्मविद्याविचारयोर्मध्ये तदनुप्रवेशः ।

विचारः प्रमितेः शेषः सानुष्ठानोपयोगिनी ।
अतः प्रणाड्या संबन्धात् तत्क्रमस्तत्क्रमो मतः ॥ २६ ॥
व्याचक्षाणोऽथशब्दार्थं भाष्यकारो विचारयोः ।
श्रुतिन्यायानुसारेणावोचच्छारीरकं परम् ॥ २७ ॥
अल्पास्थिरफलं कर्म ज्ञात्वाथ ब्रह्मचिन्तनम् ।
इत्युक्तः श्रुतितो न्यायोऽप्युक्तः कर्माङ्गतोक्तितः[1] ॥ २८ ॥

---

१. अङ्गत्वसमर्थनाय न्यायोऽप्युक्त एवेत्यर्थः ।

ज्ञाते सातिशयार्थत्वे कर्मणां ज्ञानशेषता ।
सिध्येदिति तदर्थं वै श्रुत्या तादृक्त्वमादृतम् ॥ २९ ॥

कर्मणां निरतिशयपुरुषार्थहेतुत्वे समत्वेन तेषां ज्ञानशेषता व्याहन्येत । अतो ज्ञानाङ्गत्वसिध्यर्थमेव सातिशयार्थत्वपरीक्षा, नादृष्टार्थमित्यर्थः । तत्र पूर्वपक्षः—

कार्यवाक्ये प्रयोज्यस्य प्रवृत्तेर्दर्शनाच्छिशुः ।
एतत्कार्यावबो·················वापोद्वापतः पुनः ॥ ३० ॥
कालक्रमेण गृह्णीयादयमस्यार्थ इत्यपि ।
ज्ञातकार्याभिधाशक्तिः पदानां साहचर्यतः ॥ ३१ ॥
प्रत्ययार्थं प्रकृत्यर्थाज्ज्ञातुं शक्तास्तु केचन ।
सिद्धार्थबाधे * * ॥ ३२ ॥
* * नैवं शक्यं भवेच्छिशोः ।
न चानन्तविकासादिलिङ्गैरेवानुमाय ताम् ॥ ३३ ॥
तद्धेतुत्वं च शब्दानां गृह्णी * *

तस्मात्कार्यवाक्येष्वेव व्युत्पत्तिशक्त्या यथा 'वृक्षः' इत्येकपदोक्तावेकाकिनि वृक्षार्थे प्रवृत्त्यनन्वयेन व्युत्पित्सोरव्युत्पन्नतया 'वृक्षस्तिष्ठत्यविरलपर्णशाखापल्लवफलपुष्पाढ्यः' इत्युक्तेऽपि श्रोतुर्बोधमात्रपर्यवसायित्वेन प्रवृत्त्यनन्वयात् तदनन्तरदृश्यमानतदुपसर्पणादीनामार्थतया तदुक्तशब्दार्थत्वाभावेन तैः संबन्धग्रहणायोगात् तथाग्रहणेऽन्यथाग्रहणप्रसङ्गाच्च न व्युत्पत्तिसंभवः, तथा यथैकवाक्यार्थे व्युत्पत्त्यभावेनान्वितार्थ एव व्युत्पत्तिदर्शनाच्चान्वितार्थाभिधायित्वमेव शब्दानामिष्यते एवमेव केवलान्वितार्थेष्वपि व्युत्पत्त्यसंभवादितरान्वितकार्यार्थ एव व्युत्पत्तिदर्शनाच्च यथाव्युत्पत्ति बोधकत्वबलेन लोकवेदयोरितरान्वितकार्यमेव शब्दार्थ इत्यभ्युपगन्तुं न्याय्यम् ।

विशिष्टं कार्यमेवातो वाक्यस्यार्थोऽत्र केचन ।
विशेषणानि तत्कश्चित् शब्दा एवं प्रचक्षते ॥ ३५ ॥

इति स्थितः पूर्वपक्षः ।

राद्धान्तस्तु—

अस्यैवं बोधयेत्येवं चेष्टया प्रेरितेन तु ।
चेष्टाज्ञातोक्तशब्दार्थं चेष्टातो बुध्यते शिशुः ॥ ३६ ॥
अस्यैतज्ज्ञापनार्थं सोऽयं यातीत्यवगच्छतः ।
तेनोक्ते बोधके वाक्ये तस्मिन्नर्थे भवेच्च धीः ॥ ३७ ॥
विशेषनिष्ठमेवात्र सिद्धे संबन्धबोधनम् ।
तथैवानुमितेऽर्थेऽपि शक्यं भेदग्रहे सति ॥ ३८ ॥
अन्वयव्यतिरेकाभ्यां विशेषग्रहणं भवेत् ।
भूयोदर्शनतस्तच्च संभवेदिति निर्णयः ॥ ३९ ॥
व्युत्पत्तेर्लोकतस्तेन कार्ये सिद्धे च संभवात् ।
योग्येतरान्वितार्थेऽपि शब्दशक्तिरिति स्थितिः ॥ ४० ॥

'अपवरके दण्डः स्थितः इति देवदत्ताय ज्ञापय' इत्येवंपरया चेष्टया प्रेरितः पुरुषस्तदभिज्ञं परं प्रति 'अपवरके दण्डः स्थितः' इति शब्दं प्रयुङ्क्ते ; चेष्टयान्यो व्युत्पित्सुः प्रागेव निर्णीतबोध्यार्थः तज्ज्ञापने प्रयुक्तं शब्दं तथाविधार्थे बोधनशक्तिमत्त्वेनैवाध्यवस्यति ; अथवा येन केनचित्प्रकारेण 'एतज्ज्ञापनेऽयं प्रवृत्तः' इत्यवगच्छन् तदुक्तशब्दं तदर्थबोधनशक्तं निश्चिनोति ; प्रतिपत्तुर्बोधश्च मुखविकासादिभिरनुमीयते ; एवं निश्चित्य पुनरावापोद्वापाभ्यां प्रातिस्विकविशेषशक्तिं चाध्यवस्यति । प्रागेव निर्णीतबोध्यार्थत्वेन दृष्टगवानयनाद्यर्थेष्विव विशेषनिष्ठमेव संबन्धग्रहणम् । आनुमानिकहर्षादिहेतुभूतार्थेष्वपि येन केनचित् हेतुविशेषनिर्णयेनैव संबन्धग्रहणं सुशकमेव । सुखप्रसवादिकेऽपि 'पुत्रस्ते जातः' इति प्रयुज्यमानं वाक्यं पुनः पुनः ज्ञात्वा

अन्वयव्यतिरेकाभ्यां विशेषग्रहणं भवेत् ।
भूयोदर्शनतस्तच्च संभवेदिति निर्णयः ॥ ४१ ॥
व्युत्पत्तेर्लोकतस्तेन कार्ये सिद्धे च संभवात् ।
योग्येतरान्वितार्थेऽपि शब्दशक्तिरिति स्थितिः ॥ ४२ ॥

सहभाव्यर्थान्तरवाचित्वाशङ्कानिवृत्तिरेवमेव हि तस्माल्लौकिकव्युत्पत्तेः सिद्धकार्ययोरविशिष्टत्वात् योग्येतरान्वितार्थ एव शब्दशक्तिरिति यथोक्तप्रकारेण ब्रह्ममीमांसाप्यारम्भणीयेति । अत्र भाष्यारम्भे—**पाराशर्यवचःसुधामित्यादिश्लोके व्यपगतप्राणात्मसंजीविनी**मिति ;

प्राणो ज्ञानम् । विनष्टज्ञानानामात्मनां संजीविनीं ज्ञानरूपप्राणधारिणीम्[1] । **पूर्वाचार्यसुरक्षिताम्** ; पोषिताम् । बहूनां मतिव्याघातेन दूरस्थिताम् ; अन्यत्र बहूनां व्याघातेन दुःसाधनानुष्ठानेन दूरस्थिताम् । आनीतां तु निजाक्षरैरिति कथममृतश्लेषः? उच्यते—"चत्वारि चाक्षराणि" इति सोमरूपस्यामृतस्याक्षरैः सहानीतत्वं श्रूयते । तेषां च सोमराजप्रतिपादकगायत्र्यन्तर्गतत्वेन निजाक्षरत्वम्; अतोऽमृतश्लेषसिद्धिः । **अतःशब्दो वृत्तस्य हेतुभावे** इत्यत्र वेदाध्ययनकर्मविचारयोरुभयोरपि वृत्तत्वेन हेतुभावो विवक्षितः । **अधीतसाङ्गेत्यादिना** तथैवोपपादनात् । सिद्धार्थेऽपि च शब्दानां व्युत्पत्तिसंभवात् अधीताद्वेदतो धर्मवत् ब्रह्मणोऽप्यापाततः प्रतीयमानत्वात् विचारमन्तरेण तन्निर्णयासंभवात् ब्रह्मविचारः कर्तव्य इत्युक्तन्यायेन कर्मणां ब्रह्मविद्याहेतुत्वेन कर्मविचारानन्तरं ब्रह्मविचार इति च शारीरकमीमांसाया आरभ्यत्वे अधीतात् वेदात् ब्रह्मापातावबोधनं हेतुः ।

कर्मणामुपयोगश्च विचारानन्तरोद्भवे ।
अन्यथा कर्मणामेव वृत्तानां हेतुता मता ॥ ४३ ॥
आनन्तर्यप्रसिद्धिः स्यान्न शास्त्रारभ्यतामितिः ।
सिद्धे व्युत्पत्त्यभावेन नारभ्यं शास्त्रमित्ययम् ॥ ४४ ॥
पक्षो बाध्योऽत्र तत्रापि व्युत्पत्तिस्थापनेन हि ।
हेतू सूत्रेण वक्तव्यौ शास्त्रारभ्यत्वसंभवे ॥ ४५ ॥
आनन्तर्ये च सिद्धे व्युत्पत्तिः कर्माङ्गता च तौ ।
उपासनात्मके ज्ञाने विनियुक्ताः शमादयः ॥ ४६ ॥
न वाक्यजन्यज्ञानेऽतो न तेषां पूर्ववृत्तता ।

"तस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वात्मन्येवात्मानं पश्येत्" "सर्वात्मानं पश्यति नैनं पाप्मा तरति" इत्यादि हि वाक्यम् । एवंविदितवाक्यार्थज्ञानम् । अत्रत्यब्रह्मापरोक्षज्ञाने हि शमदमादीनां विनियोगः ; न ते विचारेऽपेक्ष्याः । यत्र विनियोगः तत्रैवापेक्ष्याः । विना शमदमादीन् न भवतीति चेत् धर्मावबोधोऽप्येवं स्यादिति तत्राप्यपेक्षिताः । **अधिगताल्पास्थिरफलकेवलकर्मज्ञानेत्यत्र** केवलग्रहणं कर्मणामेव केवलानां ज्ञानाङ्गभावेनोपादेयत्वात् उक्तप्रकारे च तद्विचारस्य पूर्ववृत्त-

---

१. दायिनीम्

त्वज्ञापनार्थम् । हिशब्देन प्रसिध्या मुख्यक्रमन्यायं द्योतयति । तत एव ब्रह्म ज्ञातव्यम् इत्यत्र

वाक्यजा धीः क्रमाद्भक्तिरूपा मुक्तिप्रदायिनी ।
तदवस्थामपेक्ष्यैतां कर्मणां हेतुतोदिता ॥ ४७ ॥

न केवलवाक्यादिज्ञानापेक्षया; तस्य न्यायसहकृतवाक्येनैव जन्यत्वात् कर्मवाक्यज्ञानवत् । तथापि ज्ञातव्यमिति वाक्यजन्यज्ञानमेवोच्यते, तस्यैव विचारापेक्षत्वात् । वाक्यार्थज्ञानभक्तिरूपज्ञानयोरन्यत्वप्रदर्शनार्थमिह कथनम् । इह च **उपरितनभागावसेयस्य ब्रह्मज्ञानस्यानन्ताक्षयफलत्वात्** इति ब्रह्मज्ञानं विशेषेण निर्दिष्टम् । प्रथमं शब्दतो ज्ञातस्य पुनर्भक्त्यात्मना विवृद्धस्य ज्ञानस्य मोक्षसाधनत्वादिति कर्मज्ञानयोर्हेतुहेतुमत्त्वेन क्रमवत्त्वाद्विचारयोरपि स एव क्रम इति कर्मणो हेतुत्वमत्रोपदिश्यत इत्यर्थः ।

**श्रीभाष्यम्**

ज्ञातुमिच्छा जिज्ञासा । इच्छाया इष्यमाणप्रधानत्वादिष्यमाणं ज्ञानमिह विधीयते । मीमांसापूर्वभागज्ञातस्य कर्मणोऽल्पास्थिरफलत्वात् उपरितनभागावसेयस्य ब्रह्मज्ञानस्यानन्ताक्षयफलत्वाच्च पूर्वं वृत्तात्कर्मज्ञानादनन्तरं तत एव हेतोर्ब्रह्म ज्ञातव्यमित्युक्तं भवति । तदाह वृत्तिकारः—“ वृत्तात्कर्माधिगमादनन्तरं ब्रह्मविविदिषा ” इति । वक्ष्यति च कर्मब्रह्ममीमांसयोरैकशास्त्र्यम्—“ संहितमेतच्छारीरकं जैमिनीयेन षोडशलक्षणेनेति शास्त्रैकत्वसिद्धिः ” इति । अतः प्रतिपिपादयिषितार्थभेदेन षट्कभेदवदध्यायभेदवच्च पूर्वोत्तरमीमांसयोर्भेदः । मीमांसाशास्त्रम् “ अथातो धर्मजिज्ञासा ” इत्यारभ्य “ अनावृत्तिः शब्दादनावृत्तिः शब्दात् ” इत्येवमन्तं संगतिविशेषेण विशिष्टक्रमम् ।

**श्रुतप्रकाशिका**

अथ जिज्ञासाशब्दस्य व्याख्येयत्वस्फोरणाय प्रकृतिप्रत्ययविभागं दर्शयति—ज्ञातुमिच्छा जिज्ञासेति । विषयवैलक्षण्याधीनाया इच्छायाः कथं विधेयत्वमित्यत्राह—

**इच्छाया इति** । ज्ञानस्य विधानार्हतामाह—**इष्यमाणप्रधानत्वादिति** । सन्वाच्याया इच्छाया धात्वर्थः कर्म ; कर्मणश्च क्रिया शेषभूता, तत्सिध्यर्थत्वात्तस्याः; यथा यागीयव्रीह्यादेः प्रोक्षणादिः । कर्तुः क्रियया आप्तुमिष्टतमत्वं हि कर्मत्वम्' अतः प्रकृत्यर्थभूतज्ञानकर्मिकेच्छा तत्सिध्यर्था । अत इच्छाया इष्यमाणज्ञानप्रधानत्वादिष्यमाणं ज्ञानं विधेयमित्यर्थः । जिज्ञासायाः कर्तव्यत्वे प्रतीयमाने कथं ज्ञानस्य विधेयत्वम्? उच्यते—यथा "स्नात्वा भुञ्जीत, प्राङ्मुखो भुञ्जीत" इत्यत्र भुजिधातोर्विधिप्रत्ययान्तत्वात् भोजनस्य कर्तव्यत्वे प्रतीतेऽपि स्नानप्राङ्मुखत्वनियमयोरेव विधेस्तात्पर्यमित्यर्थस्वभावादभ्युपगम्यते—तयोरप्राप्तत्वात्; अप्राप्ते हि शास्त्रमर्थवत्; तत्र भोजनं चान्यतःप्राप्तमनूद्यते—एवमिच्छाया विधेयत्वासंभवात् तद्विषयभूतं विचारात्मकं ज्ञानमेव तात्पर्यतो विधीयते । "इष्यमाणं ज्ञानमिहाभिप्रेतम्" इति हि सारेऽभिहितम् । सन्नन्तनिर्देशश्च "निदिध्यासितव्यः" "विजिज्ञासितव्यः "तद्विजिज्ञासस्व" इत्यादिश्रुत्यनुसारेण क्रियते । श्रुतिश्चोपायदशाप्रभृति भगवज्ज्ञानस्य प्रीतिरूपत्वेनेच्छाविषयत्वात्तथा निर्दिशति । यद्वा 'ब्रह्मजिज्ञासा' इति सन्नन्तनिर्देशो विचारस्य रागप्राप्तत्वज्ञापनार्थः । एवमेव "धर्मजिज्ञासा" इत्यत्रापि । अत्र तर्करूपं ज्ञानं विधेयम्; तर्कानुगृहीतवाक्यजन्यप्रमितिरूपज्ञानं तु फलत्वान्न विधेयम् । प्रमितिरूपं ज्ञानं विधेयम्; तर्करूपं ज्ञानमार्थमित्यपि परैरुक्तमन्तर्णीतं विचारमाक्षिपतीति ततोऽपि प्रागुक्तपक्षः साधीयान् । वेदान्तार्थविचारात्मकन्यायनिबन्धरूपं तु शास्त्रं ब्रह्ममीमांसेति प्रसिद्धिः; प्रमितिश्च फलम् । अत एव हि "ब्रह्मविचारः कर्तव्यः" इति भाष्ये वक्ष्यते । सन्नन्तस्यास्य ज्ञाधातोर्ज्ञानसामान्यवाचिनो विशेषाकाङ्क्षायां समुचितविशेषपर्यवसानं हि न्याय्यम् । 'ब्रह्मणो जिज्ञासा कर्तव्या, न तु कपिलसुगताद्यभिमतानां प्रधानादितत्त्वानाम्' इति ज्ञातव्यविशेषनिर्णयपरमिदं सूत्रं व्याख्यातं यादवप्रकाशाचार्यैः; तद्व्यावृत्त्यर्थमिहशब्दः । इह; अस्मिन्नुपक्रमसूत्र इत्यर्थः । ब्रह्मणो जिज्ञास्यत्वमात्रे सिद्धे हि तस्यैव जिज्ञास्यत्वसिद्धिः; न चोभयं सूत्रप्रतिपाद्यम्, 'ब्रह्म जिज्ञास्यमेव' 'ब्रह्मैव जिज्ञास्यम्' इति; वाक्यभेदप्रसङ्गात् । ननु मुमुक्षुभिर्नियमेन ब्रह्मणो जिज्ञास्यत्वं तन्त्रान्तरसिद्धानां प्रधानादीनामजिज्ञास्यत्वेन विना न सिध्यतीति ब्रह्मजिज्ञास्यत्वसमर्थने प्रधानादेरजिज्ञास्यत्वसमर्थनमर्थादापततीति न वाक्यभेद इति चेत्—न; अधीतक्रमेण वेदार्थे निरूप्यमाणे

पूर्वभागविचारानन्तरमुत्तरभागविचारस्य प्रधानादिनिरासनिरपेक्षत्वात्। न ह्येकस्य प्रबन्धस्यैकदेशे निरूपिते तदेकदेशान्तरनिरूपणस्य प्रबन्धान्तरप्रमेयनिराससापेक्षता भवति। न हि पूर्वषट्के निरूपिते सति उत्तरषट्कनिरूपणं कपिलसुगतादिमतव्युदसनेन विना न संभवति। यदि वेदान्तार्थस्य श्रद्धाद्रढिम्ने तदितरपक्षनिरसनमपेक्षितमिह क्रियत इति मतम्; तदनुपपन्नम्, कृतकरत्वप्रसङ्गात्। एतदुक्तं भवति—इह प्रधानादीनामजिज्ञास्यत्वं किं वेदान्तानामतत्परत्वोपपादनेन समर्थ्यते? उत, कपिलसुगताद्यागमप्रामाण्यतत्प्रमेयदौस्थ्यप्रतिपादनेन समर्थ्यते? न प्रथमः; ईक्षत्यधिकरणादिभिर्वेदान्तवाक्यानामतत्परत्वस्य वक्ष्यमाणतयात्र वक्तव्यत्वाभावात्। न द्वितीयः; वेदविरुद्धस्मृतीनामप्रामाण्यस्य पूर्वमीमांसायामेव समर्थितत्वात्, सांख्यसौगताद्यभिमतप्रमेयदौस्थ्यस्य तर्कपादे प्रतिपादयिष्यमाणत्वात्। "विप्रतिषेधाच्चासमञ्जसम्" "इतरेषां चानुपलब्धेः" "एतेन योगः प्रत्युक्तः" "उदासीनानामपि चैवं सिद्धिः" "अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः" इत्यादिभिः सूत्रैस्तदुक्तमोक्षतदुपायनिरासस्यापि करिष्यमाणतयात्र वक्तव्यत्वाभावात्। किंच "एतेन सर्वे व्याख्याता व्याख्याताः" इत्यत्र "अनावृत्तिः शब्दादनावृत्तिः शब्दात्" इति शास्त्रान्ते च सूत्राभ्यासफलमनुक्तांशज्ञापनम्; अनुक्तांशश्च सांख्ययोगावगम्य इति वदतां मोक्षस्य सांख्ययोगसमुच्चयसापेक्षत्वं च प्रतिपादयतां सौगतादिवत् सांख्यादिनिरासेन शारीरकस्यैवारम्भणीयत्वप्रतिज्ञानमतीव व्याहतम्। सांख्ययोगयोर्विरुद्धांशाभिप्रायमनादरणीयत्वकथनमिति चेत्—न; विरुद्धांशानादरणीयत्वस्य विरोधाधिकरणन्यायसिद्धत्वादेव। अतो यादवप्रकाशकृतं सूत्रतात्पर्यवर्णनमनुपपन्नमितीहशब्दाभिप्रायः। **विधीयत इति**; अज्ञातज्ञापनं विधिरिह विवक्षितं न त्वप्रवृत्तप्रवर्तनम्, रागतः प्रवृत्तेर्वक्ष्यमाणत्वात्। रागतः प्रवृत्तस्यापि पूर्वपक्षयुक्त्यानारम्भणीयताबुद्धौ सत्यामारम्भणीयत्वज्ञापनं ह्यज्ञातज्ञापनम्। अतो 'विधीयते' इत्यस्य 'स्वयमेव प्रवर्तते' इति वक्ष्यमाणग्रन्थेनाविरोधः। इत्थं पदार्था व्याख्याताः। अथ सूत्रस्य वाक्यार्थमाह—**मीमांसेति**। अत्र **पूर्ववृत्तात्कर्मज्ञानादनन्तरं तत एव हेतोः** इति अथातःशब्दार्थ उक्तः। **ब्रह्म ज्ञातव्यमिति** ब्रह्मजिज्ञासापदार्थः। **ज्ञातव्यम्**; विचारयोग्यम्। **तत एव** इत्येवकारेण शास्त्रान्तराधिगमनैरपेक्ष्यमथशब्दफलितमभिप्रेतम्। **उक्तं भवतीति**; शब्दतोऽर्थतश्चेति भावः। कथमस्य सूत्रस्यायमर्थ इति शङ्कायां तदुपपादयति—**मीमांसेत्यादिना**। अथात इत्यादिपदानां यथोक्त एवार्थः।

कर्मब्रह्ममीमांसयोरैकशास्त्र्यात्। ऐकशास्त्र्यं च नियतपौर्वापर्यभागद्वयात्मकवेदाख्यप्रबन्धव्याख्यानरूपत्वादित्यर्थः। अत्र व्याख्येयस्य पूर्वापरभावेनावस्थितभागद्वयरूपत्वं तद्धेतुकं व्याख्यानस्य पौर्वापर्यविशेषविशिष्टभागद्वयरूपत्वं चोभयं पदयोजनायां वाक्ययोजनायां च वक्तव्यम्; तथापि ग्रन्थलाघवार्थं पदयोजनायामधीतसाङ्गसशिरस्कवेदस्येति व्याख्येयस्य नियतपौर्वापर्यभागद्वयरूपत्वमुक्तम्; अत्र तु वाक्ययोजनायां व्याख्यानस्य नियतपौर्वापर्यभागद्वयरूपतयैकशास्त्र्यमुक्तम्; उभयत्रोभयमनुसंधेयम्। भागशब्दाभ्यां मीमांसाद्वयस्यैकावयवित्वं सूचितम्। पूर्वोपरितनशब्दाभ्यां क्रमनियम उक्तः। कर्मब्रह्मशब्दाभ्यां वृत्तवर्तिष्यमाणकथनम्। अल्पास्थिरफलत्वानन्तस्थिरफलत्वाभ्यां तयोर्हेतुहेतुमद्भावोपपादनम्। मुक्त्युपायोपयोगितया कर्मणां स्वरूपेणोपादेयताप्रतीतिरनन्तस्थिरफलापातप्रतीत्यन्तर्भूता; अतः पृथगनुक्तिः। एवं क्रमविशेषविशिष्टैकव्याख्येयव्याख्यानरूपतया कर्मब्रह्ममीमांसयोरैकशास्त्र्यात् सूत्रस्य यथोक्त एवार्थ इत्यर्थः। पूर्वं प्रतिज्ञातं वृत्तिकारमतानुसारं वृत्तिग्रन्थेन संवादयति—**तदाहेति**। कर्माधिगमस्यैव पूर्ववृत्तत्वं न केवलं कण्ठोक्तम्; ऐकशास्त्र्योक्त्याक्षिप्तं चेत्यभिप्रयन्नाह—**वक्ष्यति चेति**। 'वृत्तात्' इत्यादिः 'संहितम्' इत्यादिश्च वृत्तिग्रन्थौ। शारीरकं ब्रह्ममीमांसा; जगच्छरीरकः परमात्मा शारीरः, "तस्यैष एव शारीर आत्मा" इति श्रुतेः; तद्विषयं शास्त्रं शारीरकमित्युच्यते। **षोडशलक्षणेन**; षोडशाध्यायेन। **संहितमिति**; नियतपौर्वापर्यैकव्याख्येयव्याख्यानरूपतया संगतमिति भावः। "अर्थैकत्वादेकं वाक्यम्" इति न्यायेन प्रतिपाद्यैक्याद्व्याख्येयस्य वेदस्यैकप्रबन्धत्वं भवेत्। तच्चोपपद्यते, पुरुषार्थपरत्वाद्वेदस्य; ब्रह्मपरत्वाद्वा; "सर्वे वेदा यत्पदमामनन्ति" "वेदैश्च सर्वैरहमेव वेद्यः" इति हि श्रुतिस्मृती। वेदार्थविचारस्यानुगतत्वान्मीमांसाया एकप्रबन्धत्वम्। अनेनैकशास्त्र्येण कर्माधिगमस्य पूर्ववृत्तत्वमाक्षिप्तम्। ननु यद्यैकशास्त्र्यं कर्मब्रह्मविचारयोः, तर्ह्युपक्रमे साधारणोऽर्थः प्रतिज्ञायेत—'अथातो वेदार्थजिज्ञासा' इति। न चैवं प्रतिज्ञातम्; किंतु पूर्वभागसाधारण एव प्रतिज्ञातः—"अथातो धर्मजिज्ञासा" इति। अत्र ब्रूमः—"अथातो ब्रह्मजिज्ञासा" इत्येवोभयभागसाधारणार्थप्रतिज्ञा। कर्मविचारस्तु ब्रह्ममीमांसातृतीयलक्षणचतुर्थपादे संगतः। ब्रह्मविचारान्तर्भावेऽपि पृथक्करणमुपपद्यते; यथा निग्रहान्तर्भूतच्छलजात्योराह्निकभेदेन पृथगुक्तिः; यथा च निग्रहान्तर्भूतहेत्वाभासानामध्यायभेदेन पृथगुक्तिः। पृथक्करणं च बहुग्रन्थप्रतिपाद्यत्वात्। तत्र च पूर्व-

भावित्वमुपजीव्योपजीवकभावादिवक्ष्यमाणहेतुनिबन्धनम्। एतदुक्तं भवति—अर्थक्रमात् ब्रह्ममीमांसातृतीयलक्षणचतुर्थपादेन कर्मविचारः संगतः; प्रतिपत्तिसौकर्यलक्षणक्रमात्तु कर्मविचारस्य पूर्वभाव इति। एवं वा साधर्म्यवैधर्म्यसमयोर्जात्योः कथनेन यथा प्रतिधर्मसमोभयानुयायिन्यर्थसिद्धा, एवं भागद्वयासाधारणार्थप्रतिज्ञाद्वये कृते साधारणार्थप्रतिज्ञानमार्थं स्यात्। साधारणार्थे प्रतिज्ञातेऽप्यसाधारणार्थस्तु पृथगेव प्रतिज्ञातव्यः। धर्मजिज्ञासायां प्रतिज्ञातायामपि "अथातः शेषलक्षणम्" "अथातः क्रत्वर्थपुरुषार्थयोर्जिज्ञासा" इत्यादौ ह्यसाधारणार्थप्रतिज्ञा कृता। अतो भागद्वयासाधारणार्थप्रतिज्ञानेन तदनुगतसाधारणार्थप्रतिज्ञानमार्थं स्यादिति प्रथमम् "अथातो धर्मजिज्ञासा" इति प्रतिज्ञातं, न तु 'वेदार्थजिज्ञासा' इति। अथवा "अथातो धर्मजिज्ञासा" इत्येव साधारणप्रतिज्ञा। अलौकिकश्रेयःसाधनं हि धर्मः, तदनुयायि प्रतिपाद्यम्। धर्मश्च साध्यसिद्धभेदेन द्विविधः। सिद्धरूपे वस्तुनि धर्मशब्दप्रयोगो महाभारते दृष्टः; यथा—

"ये च वेदविदो विप्रा ये चाध्यात्मविदो जनाः।
ते वदन्ति महात्मानं कृष्णं धर्मं सनातनम्॥"

इति। तथाभियुक्तैश्चालौकिकत्वे सति श्रेयःसाधनत्वं धर्मशब्दप्रवृत्तिनिमित्तं मन्यमानैः सिद्धरूपेऽर्थे धर्मशब्दः प्रयुक्तः—

"द्रव्यक्रियागुणादीनां धर्मत्वं स्थापयिष्यते।
तेषामैन्द्रियकत्वेऽपि न ताद्रूप्येण धर्मता॥"

इत्यादौ। तत्र द्रव्यादिसद्भावेपि क्रियाप्राधान्यात् साध्यधर्मपरः पूर्वभागः; उपासनतदङ्गसद्भावेऽपि ब्रह्मप्रधानत्वात् सिद्धधर्मपर ऊर्ध्वभागः। अत उभयभागविचारसाधारणी प्रथमप्रतिज्ञा। तत्र धर्मशब्दस्य साध्यधर्मविषयतया प्रसिद्धिप्राचुर्येण बुद्धिस्थत्वात्, पूर्वभागप्रतिपन्नत्वेन प्राथम्यात्, धर्मजिज्ञासापदेनैव तन्त्रेणार्थतो वा प्रतिज्ञातत्वोपपत्तेश्च तल्लक्षणमुक्तं चोदनासूत्रे। सिद्धरूपधर्मविशेषस्य च साधारणप्रतिज्ञयैवार्थतः प्रतिज्ञातत्वेऽपि तस्य बहुग्रन्थव्यवधानात् शब्दाबोध्यत्वशङ्कापरिजिहीर्षया च पुनः प्रतिज्ञा कृता। तस्य लक्षणमुक्तं जन्मादिसूत्र इति युक्तमैकशास्त्र्यम्। ननु पूर्वभागस्य साध्यधर्मप्रधानतोक्तिरुदाहृतवचनेन विरुध्यते; तत्र पूर्वभागेऽपि सिद्धरूपस्य परस्य कर्माराध्यतया प्रधानप्रतिपाद्यत्वावगमात्। तस्मिन्वचने वेदविच्छब्दो हि पूर्वभागाभिज्ञपरः, गोबलीवर्दनयात्,

"विष्णुनामा स वेदेषु वेदान्तेषु च गीयते" इत्यनेनैकार्थ्याच्च । न च गुणभावेन कर्मणां प्रतिपाद्यत्वमित्यविरोधः; प्राधान्येन प्रतिपाद्यत्वस्य जैमिनेरभिमतत्वात्, भवद्भिरपि तथोक्तत्वाच्च । सत्यम्; वस्तुतः प्राधान्यं परमात्मन एव, यथा राज्ञस्तात्पर्यगोचरत्वलक्षणम्; शाब्दं प्राधान्यं तु कर्मण एव, यथा राजपुरुषस्य; तच्चातिरस्कृतम्, तत्र तस्य परमात्माराधनरूपत्वानवगमात् । न च तदवगमोऽवश्यं संपाद्यः । अन्तवत्स्वर्गादिफलदत्वे कर्मणां परदेवताज्ञाननैरपेक्ष्यं हि श्रुतिस्मृतिभ्यामवगम्यते "यो ह वा एतदक्षरं गार्ग्यविदित्वास्मिन् लोके जुहोति यजते तपस्तप्यते बहूनि वर्षसहस्राण्यन्तवदेवास्य तद्भवति" इति,

"अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च ।
न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते ॥"

इति च । अतस्तन्नैरपेक्ष्यलक्षणमपि प्राधान्यमस्ति कर्मणः । अतः पूर्वभागे कर्मणः प्रागवगतं प्राधान्यं पश्चादवगन्तव्यं परमात्माराधनरूपत्वं चाविरुद्धम् । अतः प्रतिज्ञोपपत्तेः शास्त्रैक्यं युक्तम् । यद्यपि कर्मब्रह्ममीमांसयोरैकशास्त्र्यमविवक्षितं जैमिनिना, तथापि तदङ्गीकृत्य तदेकशास्त्रतया बादरायणेन ब्रह्मसूत्रप्रणयनं युक्तम् । यतः,

अतदर्थतया क्लृप्तमपि योग्यमपेक्षितम् ।
तादर्थ्यमर्हति ग्रामे कल्प्ये पूर्वतटाकवत् ॥

विवक्षितत्वसंभवश्च दर्शितः । अतः शास्त्रैक्यं युक्तम् । नन्विदमयुक्तमैकशास्त्र्यम्, शारीरकशब्दसूचितात् प्रधानप्रतिपाद्यभेदात्, जैमिनीयशब्दसूचितात् कर्तृभेदात्, तदुभयफलितात् प्रयोजनभेदात्, अर्थविरोधाच्चेत्याशङ्कां परिहरति—**अतः प्रतिपिपादयिषितेति । अतः**; वृत्तिकारोक्तादेकव्याख्येयव्याख्यानरूपत्वसंबन्धादित्यर्थः । षट्कभेदः पूर्वमीमांसायामध्यायभेदस्तत्रोत्तरत्र च निदर्शनार्थमुक्तौ; अर्थभेदाभावे ह्येकं षट्कमेकोऽध्यायो वा स्यात् । अत एकान्वयित्वे सिद्धे सत्यवान्तरार्थभेदो न महावाक्यैकत्वविरोधी, यथा पदार्थभेदो वाक्यार्थैकत्वाविरोधीति भावः । अनेन प्रतिपाद्यभेदः परिहृतः । प्रयोजनभेदश्चार्थात्परिहृतः; षट्कद्वयचिन्तितप्रकृतिविकृतिप्रयोजनभेदस्य शास्त्रभेदकत्वाभावात् । अनेन वृत्तिग्रन्थगतषोडशलक्षणशब्दतात्पर्यं च दर्शितम् । पूर्वोत्तरमीमांसाशब्देन जैमिनीयशारीरकशब्दौ च विवृतौ । प्रतिपिपादयिषितशब्देनार्थविरोधः

परिहृतः। प्रतिपादयितुमिष्टं हि प्रतिपिपादयिषितम्। स च तात्पर्यविषयोऽर्थः। विरुद्धतया प्रतीयमानेषु देवतानिरासादिषु न तात्पर्यमित्यभिप्रायः। नन्वेवं कथमभिधीयते—"आम्नायस्य क्रियार्थत्वात्" इति? सिद्धपरवाक्यानां तच्छेषत्वं हि सूत्रकारेण कण्ठोक्तम्; तच्च विरुध्यत एव; अतः शास्त्रभेद इति। नैवम्; "पदे जुहोति" "आहवनीये जुहोति" "न हिंस्यात्सर्वा भूतानि" "पशुमालभेत" इतिवत्, शास्त्रान्तरे "कर्मण्यण्" "आतोऽनुपसर्गे कः" इतिवच्चोत्सर्गापवादन्यायेन शास्त्रैक्याविरोधात्। सामान्येन सिद्धपरवाक्यानां क्रियाशेषत्वेऽभिहिते सिद्धपरवाक्यविशेषस्य किं विधिशेषत्वं न वेति विचार्य स्वयंपुरुषार्थविरहिणामेव सिद्धपराणां क्रियाशेषत्वं स्वयंपुरुषार्थपर्यवसायिनां तु सिद्धपरवाक्यानां न तच्छेषत्वमिति हि निर्णेतुं युक्तम्; यथा होमस्य सामान्येनाहवनीये प्राप्तत्वेऽपि होमविशेषस्य पदे कर्तव्यत्वनिश्चयः, यथा च सामान्यतो हिंसानिषेधेऽपि हिंसाविशेषस्य कर्तव्यतोक्तिः, यथा च सामान्येन कर्मण्युपपदे धातोरणि प्राप्तेऽप्याकारान्ताद्धातोः कप्रत्ययविधिः; न च तत्र शास्त्रभेदः; तद्वत्। देवतानिराकरणे च न तात्पर्यम्, अश्रुतवेदान्तानां कर्मण्यश्रद्धानिवारणाय कर्मप्राधान्यपरत्वात्तस्य; "न हि निन्दा निन्द्यं निन्दितुं प्रवर्तते, अपितु निन्दितादितरत् प्रशंसितुम्" इति हि न्यायविदः। यद्वा वेदप्रामाण्यकर्मावश्यकर्तव्यतातात्पर्यातिशयात् तत्प्रतिपक्षनिराचिकीर्षया अन्वारुह्य वादो देवतानिरासोक्तिः स्यात्; अभिमततरार्थानादरेणापि हि विपक्षव्युदासो दृश्यते; यथा—

"अभीष्टार्थव्ययेनापि जयति क्षेत्रहारिणम्।
लब्धक्षेत्रैर्न दुष्प्रापः स्यादर्थ इति निश्चयात्॥"

एवमभिमततरेश्वराद्यनादरेणापि वेदप्रामाण्यादिसमर्थने पश्चादभिमतसिद्धिरयत्नलभ्येति जैमिनेरभिप्रायः। तत्सिद्धिप्रकारश्च तदुक्तरात्रिसत्रन्यायाद्यधीन इत्युत्तरत्र व्यक्तीभविष्यति। न च तत्सिद्धिमभ्युपगच्छतस्तदनादरवादव्याघातः; तस्यान्वारुह्य कृतत्वात्। कथमन्वारुह्यवादत्वनिश्चयः? उच्यते—"संपत्तेरिति जैमिनिः" "परं जैमिनिर्मुख्यत्वात्" "ब्राह्मेण जैमिनिः" इत्यादिब्रह्मसूत्रैरेव जैमिनेर्ब्रह्मस्वरूपतद्गुणतदुपासनतत्फलाद्यभ्युपगमस्य प्रतिपन्नत्वात्; महाभारते च हयशिरउपाख्यानादिषु भगवद्व्यासोपदेशलब्धपरमात्मतत्त्वज्ञानतावगमाच्चेति। अतो विरुद्धार्थे तात्पर्याभावान्नार्थविरोधः। नन्वर्थविरोधो दुष्परिहरः;

तथाहि—-विशेषातिदेशनिरूपणपरेऽष्टमेऽध्याये विकृतिषु प्रकृतिधर्मातिदेशे कर्तव्ये सति कस्मिन्कर्मणि कस्य कर्मणो धर्मातिदेशः प्राप्त इत्यपेक्षायां यस्य कर्मणो येन कर्मणा द्रव्यसाम्यं देवतासाम्यं वा भवति, तस्मिंस्तद्धर्मोऽतिदेष्टव्य इति स्थितम्। तत्र यस्य केनचिद्द्रव्यसाम्यं केनचिद्देवतासाम्यं च भवति तस्मिन् द्रव्यसाम्यवत एव कर्मणो धर्मातिदेशः, न तु देवतासाम्यवत इति द्रव्यप्राधान्यमुक्तं जैमिनिना "द्रव्यदेवतासाम्ये द्रव्यं बलीयः" इति। न च द्रव्यप्राधान्योक्तेरतिवादत्वम्, अनुष्ठानविरोधात्, द्रव्यप्राधान्येन ह्यनुष्ठानं दृश्यते। अतो द्रव्यप्राधान्यमुक्तं वदतो जैमिनेर्देवतानिरासे तात्पर्यमस्तीति। अत्रोच्यते—नात्र द्रव्यदेवतयोः सद्भावासद्भावाभ्यां प्राधान्याप्राधान्ये विवक्षिते; अपि तु विलम्बिताविलम्बितप्रवृत्तिप्रमाणविषयताधीने। द्रव्यं ह्यविलम्बितप्रत्यक्षगम्यम्; देवता तु विलम्बितशास्त्रगम्या। विलम्बाविलम्बावेव हि श्रुतिलिङ्गादिषु प्रत्यक्षानुमानादिषु च पूर्वोत्तरप्राबल्यदौर्बल्यहेतू। ननु हविष्ट्वं शास्त्रैकगम्यमिति न द्रव्यस्यापि प्राधान्यमिति चेत्—नैवम्; चरुपुरोडाशादिकद्रव्यं हि प्रत्यक्षम्; हविष्ट्वाख्यधर्ममात्रमेव तत्र शास्त्रगम्यम्। देवतायास्तु स्वरूपं श्रेयःसाधनत्वादिधर्मश्चोभयमपि शास्त्रगम्यम्। अतः स्वरूपतो धर्मतश्च विलम्बितमानगम्यत्वाद्देवताया अप्राधान्यम्। धर्ममात्रस्य शास्त्रगम्यत्वेऽपि धर्म्यंशेनाविलम्बितमानगम्यत्वाद्धविषः प्राधान्यम्। अतः प्राधान्याप्राधान्ययोः प्रमाणद्वारकत्वेन स्वरूपासद्भावे तात्पर्यं नास्तीति देवतानिरासोक्तिरन्यपरा। एवमर्थान्तराण्यप्यविरोधेन नेतुं शक्यानीति नार्थविरोधः। ननु ब्रह्मसूत्रैरेव जैमिनिपक्षमनूद्य प्रतिक्षेपादर्थविरोधो दुष्परिहरः; तथाहि—"फलमत उपपत्तेः" इत्यत्रेश्वरस्य फलप्रदत्वोक्त्या "धर्मं जैमिनिः" इति धर्मस्य फलप्रदत्वमनूद्य प्रतिक्षिप्तम्, न श्रुतत्वोपपत्तिभ्याम्; कालान्तरभाविफलसाधनत्वे जैमिन्यभिहिते ताभ्यामेवात्र फलसाधनविशेषसिद्धेरुक्तत्वात्। ननु शेषत्वात्पुरुषार्थवादः यथा "अन्यार्थं तु जैमिनिः" इत्यत्र वेदान्तोदितात्मज्ञानस्य कर्मशेषतयात्मनां कर्मशेषत्वोक्तिः "अधिकोपदेशात्" इति सिद्धान्तेन विरुध्यते। न च विकल्पेन निर्वाहः संभवति, वस्तुनि विकल्पायोगात्। न च जैमिनिना परमतमुपन्यस्तमिति वाच्यम्, जैमिनिमतत्वेन सिद्धान्तिना प्रतिक्षेपायोगात्। नैवम्; विपक्षनिरासार्थस्य जैमिनेरन्वारुह्य वादस्य तथोपन्यासप्रतिक्षेपोपपत्तेः। अन्यथा "परं जैमिनिः" इत्यादिसूत्राणां मिथो विरोधो भारतोक्तिविरोधश्च। जैमिनेरन्वारुह्य वादमजानतां तु तदुक्ते तत्त्वबुद्धिः स्यादिति तन्निवा-

रणाय ब्रह्मसूत्रे तदुपन्यासनिरासौ कृतौ। अत एव "परामर्शं जैमिनिः" इत्यत्र नैष्ठिकाद्याश्रमप्रतिक्षेपोऽपि परिहृतः; "तद्भूतस्य" इत्यत्र नैष्ठिकाद्याश्रमभ्रंशस्य जैमिन्यनभिमतत्वाभिधानात्; न ह्याश्रमानभिमतौ तद्भ्रंशानभिमतिसंभवः। अतो वीतरागव्यतिरिक्तानामग्निहोत्रादिष्वश्रद्धानिवारणार्थं आश्रमान्तरप्रतिक्षेपः पूर्ववदन्वारुह्य वादः। स च पूर्वमीमांसायामसूत्रितः, तथाप्यौडुलोम्यादिमतवदनूद्य निरस्तः। न च मधुविद्यायां वस्वाद्यनधिकारोक्तिरधिकारोक्त्या विरुध्यत इति वाच्यम्, अनधिकारोक्तेर्वस्वादिदेवताभ्युपगमचिह्नत्वेन शास्त्रैक्याविरुद्धतया तदुद्घाटनवैयर्थ्यात्। "भावं जैमिनिः" इति सूत्रोक्ताश्च पक्षाः शास्त्रैक्याविरुद्धाः, कर्मविचारे तेषामसमर्थनादिति न तत्पर्यनुयोगावकाशः। तस्मान्नार्थविरोधः। कर्तृभेदपरिहारस्तु प्रसिद्धत्वान्न कण्ठोक्तः; अतएव चशब्दसूचितो वा। धूर्तस्वामिकपर्दिकर्तृकस्याप्यापस्तम्बीयसूत्रव्याख्यानस्य व्याख्येयैक्यादेकप्रबन्धत्वं हि दृष्टम्। पाणिनीयसूत्रपूर्वोत्तरवृत्त्योश्च वामनजयादित्यकर्तृकयोर्व्याख्येयैक्यादेकव्याख्यानत्वं दृष्टम्। तस्मादुपपन्नमैकशास्त्र्यम्। अस्त्वैकशास्त्र्यम्; कथं पौर्वापर्यनियमः? इत्याशङ्कां परिहरन् वृत्तिग्रन्थस्थं संहितमिति पदं विवृणोति—**मीमांसेति**। क्रमविशेषान्वितमैकशास्त्र्यं संहितमित्यनेनाभिप्रेतम्। 'आरभ्य, एवमन्तम्' इति पौर्वापर्यनियम उक्तः। **संगतिविशेषेणेति**; अत्रामी संगतिविशेषा अभिप्रेताः—पाठक्रमः, चेतनानां त्रिवर्गे प्रथमप्रावण्यसंभवरूपोऽर्थस्वभावः, औपनिषदेष्वङ्गाङ्गिभावप्रतिपादकवाक्येषु यज्ञादिकर्मणः पदार्थत्वेन संबन्धः, कासुचिद्विद्यासु यज्ञतदुपकरणादीनां दृष्टिविशेषणत्वोक्तिः, कर्मब्रह्मविद्ययोर्दृष्टान्तदार्ष्टान्तिकभावः, विद्याकर्मणोरुत्पाद्योत्पादकभावात्तच्छेषभूतविचारयोस्तत्क्रमभाक्त्वोपपत्तिः, व्याख्यानभूतमीमांसायां चोत्तरभागस्य पूर्वभागोक्तन्यायसापेक्षत्वं चेति। एवं पौर्वापर्यनियामकसंगतिविशेषेण विशिष्टक्रमं क्रमविशेषवदित्यर्थः। ननु भवतु वेदप्रामाण्यसिद्धये प्रथमाध्यायस्य पूर्वभावित्वम्; द्वितीयाध्यायात्पूर्वं ब्रह्मविचारः किं न स्यादिति चेत्—न; तत्र तत्रोक्तैः संगतिविशेषैः षोडशलक्षणानुपूर्वीसिद्धेस्तदनन्तरप्राप्तत्वाद्ब्रह्मविचारस्येत्यभिप्रेत्य संगतिविशेषेण विशिष्टक्रममित्युक्तम्।

### भावप्रकाशिका

**कर्मणश्च क्रिया शेषभूतेति**; ननु प्रधानस्य विधेयत्वे "व्रीहीन्प्रोक्षति" इत्यादौ व्रीह्यादीनां विधेयत्वप्रसङ्गात् प्रत्युत प्रधानत्वस्यानुवाद्यत्वानुबन्धिनो विधेयत्व-

विरोधाच्च "व्रीहिभिर्यजेत" "अरुणया क्रीणाति" इत्यादौ गुणस्यैव विधेयत्वदर्शनाच्च कथमेतदिति चेत्; उच्यते—इच्छाया विषयसौन्दर्याधीनत्वेन पुरुषेच्छाधीनकृतिसाध्यत्वाभावेऽपीष्यमाणज्ञानस्येच्छाधीनकृतिसाध्यतया पुरुषतन्त्रत्वेन विधेयत्वसंभवादिति तदर्थात्। केचित्तु 'प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थस्यैव प्राधान्यम्' इति न्यायस्यौपगवादौ सामान्यतो दृष्टत्वेऽपि 'अश्वेन जिगमिषति' 'असिना जिघांसति' इत्यादौ सन्वाच्येच्छापेक्षया प्रकृत्यर्थस्यैव स्वतन्त्रोपस्थितत्वलक्षणस्य शब्दतः प्राधान्यस्य समभिव्याहृतपदार्थान्तरान्वयस्य च दर्शनात्, "ब्रह्मजिज्ञासा" इत्यत्र प्रकृत्यर्थज्ञानस्यैवाध्याहृतकर्तव्यपदान्वयसंभव इति भाष्याभिप्रायं वर्णयन्ति। **प्रमितिरूपं ज्ञानमिति**; अत्र उद्दिश्येति शेषः; तथाचायमत्रान्वयः—प्रमितिरूपं ज्ञानमुद्दिश्य आक्षिप्तं तर्करूपं ज्ञानं मनोव्यापारविशेषरूपं विधेयमिति परैरुक्तमिति। यद्वा, विधेयं शाब्दमित्यर्थः, उत्तरत्र तर्करूपं ज्ञानमार्थमित्युक्तेः। आर्थिके च विचारेऽध्याहृतकर्तव्यत्वान्वयः; "श्रौतस्तु मुमुक्षानन्तरं ब्रह्मज्ञानेच्छा भवितुं युक्तेत्येष एव" इति कल्पतरूक्तेः। **पूर्वोक्तः साधीयानिति**; प्रकृतिप्रत्ययार्थाक्षिप्तस्य विधेयत्वापेक्षया प्रकृत्यर्थविधेयत्वस्य युक्तत्वादिति भावः। **प्रधानादिनिरासनिरपेक्षत्वादिति**; प्रधानादिनिरासमुखेन प्रधानादिजिज्ञास्यत्वनिरासनिरपेक्षत्वादित्यर्थः; ततश्च विचारानपेक्षितं प्रधानादिनिरासमुखेन जिज्ञास्यत्वनिरसनं सूत्रकृतो विफलमिति भावः। भाष्ये **वृत्तात्कर्मज्ञानादनन्तरमिति**; अनन्तरशब्दस्य पश्चाच्छब्दपर्यायतया दिक्शब्दत्वमङ्गीकृत्य पञ्चमीनिर्देश इति द्रष्टव्यम्। **तद्विषयं शास्त्रं शारीरकमित्युच्यत इति**; शारीरं कायतीति शारीरकम्; कै शब्दे "आतोऽनुपसर्गे कः" इति के रूपम्। **मीमांसाया एकप्रबन्धत्वमिति**; यद्येवं वेदोपकाररूपैकप्रयोजनसमर्थत्वेनार्थैक्यात् व्याकरणज्योतिषादीनां तत्प्रयोजने निष्पाद्ये परस्पराकाङ्क्षाया अपि सत्त्वादेकाङ्गत्वप्रसङ्गः; न च तेषामङ्गत्वेनैक्यमिष्टमिति वाच्यम्, तर्हीहापि मीमांसात्वेनैक्यं स्यात्, न तु शास्त्रैक्यमिति चेत्—न; तथा सतीदृशप्रतिबन्द्या पूर्वोत्तरषट्कयोरपि शास्त्रभेदप्रसङ्गात्। न च तत्र विषयप्रयोजनाधिकारिणामेकत्वात् "अथातो धर्मजिज्ञासा" इति प्रतिज्ञायाः साधारण्याच्चैकत्वमिति वाच्यम्, अत्रापि वेदार्थरूपविषयस्य तज्ज्ञानरूपप्रयोजनस्य तत्कामस्य चाधिकारिण एकत्वाद्विचारद्वयानुगतसाधारणप्रतिज्ञाया उपपादयिष्यमाणत्वाच्च। ननु "अथातो ब्रह्मजिज्ञासा" इति साधारणप्रति-

ज्ञेत्ययुक्तम् ; तथा सत्यथशब्दस्य कर्मविचारानन्तर्यार्थकत्वं न स्यादिति 'वृद्धिमिच्छतो मूलहान्यापत्तिः' इति न्यायापातः । न हि कर्मविचारानन्तर्यं विंशतिलक्षण्या मीमांसायाः संभवति ; अपितु चतुर्लक्षण्या एवेत्यस्वरसादाह—**एवं वेति । प्रतिधर्मसमोभयानुयायिनीति** ; साधर्म्यसमरूपोभयजात्यनुयायिनी प्रतिधर्मसमजातिप्रतिज्ञा अर्थसिद्धेत्यर्थः । प्रतिधर्मसमा जातिर्द्विधा—साधर्म्यसमा वैधर्म्यसमा चेति ; तत्र "साधर्म्यवैधर्म्योत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यप्राप्त्यप्राप्तिप्रसङ्गप्रतिदृष्टान्तानुत्पत्तिसंशयप्रकरणहेत्वर्थापत्त्यविशेषोपपत्त्यनुपलब्धिनित्यानित्यकार्यसमाः" इति जातीनां विभागोद्देशसूत्रेण विशेषयोरेवोद्देशः कृतः । अनन्तरं "साधर्म्यवैधर्म्याभ्यामुपसंहारे तद्धर्मविपर्ययोपपत्तेः साधर्म्यवैधर्म्यसमौ" इति लक्षणसूत्रं च विशेषयोरेवेति भावः । ननु वेदाध्ययनानन्तरमर्थविचारो न कर्तव्यः, अविवक्षितार्थकत्वादिति सर्ववेदार्थानुगतपूर्वपक्षनिरासाय 'अथातो वेदार्थजिज्ञासा' इति सूत्रे कर्तव्ये मन्दप्रयोजना विशेषप्रतिज्ञा अयुक्ता; साधर्म्यवैधर्म्यसमजातिस्थले तु सामान्यप्रतिज्ञायाः शिष्यबुद्धिसमाधानमात्रार्थत्वेन निरसनीयपूर्वपक्षाभावेनार्थत्वेऽप्यदोष इत्यस्वरसादाह—**अथातो धर्मजिज्ञासेत्येवेति । अलौकिकश्रेयःसाधनमिति** ; वेदैकगम्यश्रेयःसाधनताकत्वमित्यर्थः । नन्वेवं श्येनादेरपि धर्मत्वप्रसङ्गः ; न च बलवदनिष्टाजनकत्वेन विशेषणात् तद्व्यावृत्तिरिति वाच्यम्, तथा सति परमात्मनः सर्वकारणत्वेनाधर्मत्वप्रसङ्गादिति चेत्—मैवम् ; तथाहि सति ज्योतिष्टोमादेर्धर्मत्वं न स्यात्, "सर्वेभ्यो ज्योतिष्टोमः" इति तस्य सर्वफलसाधनत्वेन तद्द्वारा बलवदनिष्टजनकत्वात् । वैरिविपत्तिफलकप्रयोगे तस्य धर्मत्वाभाव इष्ट एव ; वैरिविपत्त्यादिफलकप्रयोगानवच्छिन्नस्यैव ज्योतिष्टोमस्य धर्मत्वमिति चेत् ; तथा सति ब्रह्मणोऽननुष्ठेयपदार्थतया बलवदनिष्टानुबन्धिप्रयोगानवच्छिन्नत्वे सत्यलौकिकश्रेयःसाधनत्वस्यैव ब्रह्मण्यपि संभवात् "धर्मजिज्ञासा" इत्येव साधारणप्रतिज्ञेति भावः । नन्विन्द्रियगम्यानां तेषां कथं धर्मत्वमित्याशङ्क्याह—**तेषामैन्द्रियकत्वेऽपीति । तादूप्येणेति** ; ऐन्द्रियकत्वरूपेणेत्यर्थः । ननु धर्मशब्दस्य साधारण्यमभ्युपेत्य धर्मद्वयविचारः प्रतिज्ञायत इति वदता नैकस्यापि बुद्धिस्थत्वं वक्तुं शक्यम् ; अतश्चोदनासूत्रे साध्यधर्मस्यैव लक्षणकथने नैतन्नियामकमित्यस्वरसादाह—**पूर्वभागप्रतिपन्नत्वेनेति ।** विशेषप्रतिज्ञाया अप्यावश्यकत्वमभिप्रेत्याह—**तन्त्रेण वार्थतो वेति । शब्दबोध्यत्वशङ्कापरि-**

**जिहीर्षयेति** ; सिद्धव्युत्पत्तिसमर्थनार्थमिति भावः । **तस्य परमात्माराधनरूपत्वानवगमादिति** ; न च राजपुरुषस्य राजपुरुषपदाद्राजप्रेष्यत्वरूपपारतन्त्र्यप्रतीतावपि यथा न शाब्दप्राधान्यविरोधः पुरुषस्य विशेष्यतया प्रतीतेः, एवं परमात्माराधनरूपत्वप्रतीतावपि कर्मणो विशेष्यतया भानान्न शाब्दप्राधान्यविरोध इति वाच्यम् ; अत्र शाब्दप्राधान्यमित्यस्यान्योपसर्जनतया अप्रतीयमानत्वमित्यर्थात् । न च राजपुरुषे तन्नास्तीति शङ्कनीयम्, वस्तुगत्या राजपुरुषस्य पुरुषपदात् प्रतीतिदशायां तदुपपत्तेः । केचित्तु 'युक्त्यन्तरमाह—परमात्माराधनरूपत्वानवगमादिति' इति वदन्ति । ननु "कृष्णं धर्मं सनातनम्" इत्यादौ धर्मशब्दप्रयोगस्य "प्रणम्रेषु महीपेषु प्रसादो मूर्तिमानयम्" इत्यस्य मूर्तिमत्त्वरूपप्रसिद्धप्रसादवैलक्षण्यविशिष्टप्रसादत्वारोप इव "रामो विग्रहवान् धर्मः" इत्यस्य विग्रहवत्त्वरूपप्रसिद्धधर्मवैलक्षण्यविशिष्टधर्मत्वारोप इव च सनातनत्वरूपप्रसिद्धधर्मवैलक्षण्यविशिष्टधर्मत्वारोपे तात्पर्येणोपपन्नस्य पौराणिकस्य "यमिन्द्रमाहुर्वरुणं यमाहुः" इत्यादिवाक्यतुल्यस्य वचनस्य "चोदनालक्षणोऽर्थो धर्मः" इति विचार्यधर्मशब्दार्थनिर्णयैकप्रयोजनकसूत्रवत् शब्दशक्तिनियामकत्वाभावः । अस्तु वा ब्रह्मसाधारण्यं, तथापि जैमिनिनोभयविधधर्मविचारस्य प्रतिज्ञातत्वे ब्रह्मसूत्राण्यपि तेनैव प्रणेतव्यानि स्युः ; न हि महर्षेर्विघ्नशङ्कोत्प्रेक्षितुं शक्यते ; स्वाचार्यस्य बादरायणस्य ब्रह्मसूत्रप्रणिनीषां दृष्ट्वोदासामासेति कल्पना तु न, प्रमाणाभावात् तादृशजनवादानुपलम्भाच्चेत्यस्वरसादाह—**यद्यपीति** । **अश्रुतवेदान्तानामिति** ; वाय्वादिदेवताप्रीत्यर्थं कर्मणोऽनुष्ठाने वाय्वादीनां नश्वरतया कर्मभिः प्रीतस्य वाय्वादेः फलप्रदानात् प्रागपि नाशसंभवेन निष्फलत्वबुद्ध्या अश्रुतवेदान्तानां कर्मण्यश्रद्धा जायेत ; श्रुतवेदान्तानां तु तत्तत्कर्माराध्यस्य तत्तद्देवतान्तर्यामिणः कर्मानुरूपफलप्रदस्य सकलकल्पानुयायित्वेन न तच्छङ्केति भावः । यद्वा—अश्रुतवेदान्तानाम् ; अपीति शेषः ; अविरक्तानामपि कर्मण्यश्रद्धा स्यादित्यर्थः ; अत एव वक्ष्यति—'वीतरागव्यतिरिक्तानामग्निहोत्रादिषु' इत्यादि । ननु महता यत्नेन देवताविग्रहादिकं निराकुर्वाणस्य तत्र तात्पर्याभावे देवताविग्रहं साधयतो बादरायणस्यापि 'न हि निन्दा'न्यायः कुतो नावतरेदित्यस्वरसादाह—**यद्वा वेदप्रामाण्यकर्मावश्यकर्तव्यतातात्पर्यातिशयादिति** । देवताविग्रहवत्त्वे "विरोधः कर्मणीति चेत्" इत्यादिदेवताधिकरणोक्तरीत्या वेदस्याप्रामाण्यं प्रसज्यते ; कर्मणश्च देवताप्रीत्यर्थतया देवतां प्रति गुणत्वे कर्मणः फलजनकत्वाभावेन कर्मण

आवश्यकत्वं किंचिद्धीयेतापि ; अतो वेदप्रामाण्यकर्मावश्यकत्वयोर्वृद्धादरातिशयेन जैमिनिना देवताविग्रहनिराकरणेऽल्पीयान् कटाक्षः पातितश्चेत् का क्षतिरिति भावः। **तदुक्तरात्रिसत्रेति ;** "ज्योतिर्गौरायुः" इत्युत्पन्नस्य रात्रिसत्रस्य फलाकाङ्क्षायां "प्रतितिष्ठन्ति ह वा य एता रात्रीरुपयन्ति" इत्यर्थवादसमर्पितप्रतिष्ठाया विपरिणामेन फलत्वमात्रकल्पनमेव ज्यायः, न तु विश्वजिन्न्यायेन स्वर्गस्वरूपमपि कल्पयित्वा तस्य फलत्वकल्पनमपीति चतुर्थे स्थितम्। ततश्च तेनैव न्यायेनार्थवादिकदेवताविग्रहादिष्वपि तात्पर्यमस्तीति भावः। **तस्मिंस्तद्धर्मोऽतिदेष्टव्य इति स्थितमिति ;** "यस्य लिङ्गमर्थसंयोगादभिधानवत्" इत्यष्टमाध्यायद्वितीयाधिकरण इति शेषः। **नात्र द्रव्यदेवतयोरिति ;** ननु "विप्रतिपत्तौ हविषा नियम्येत कर्मणस्तदुपाख्यत्वात्" इति सूत्रे यस्य यत्र द्रव्यदेवतासाम्ययोर्विप्रतिपत्तिरस्ति, यथा ऐन्द्रपुरोडाशे देवतासाम्यात् सान्नाय्यविध्यन्तः द्रव्यसाम्यात् पुरोडाशविध्यन्तश्च, तत्र द्रव्यसादृश्यमाश्रित्यैव नियमः प्रवर्तते ; कुतः ? कर्मणो हविष्युपलभ्यमानत्वात्, यागाख्यस्य कर्मणस्त्यागरूपस्य हविष्युपलभ्यमानत्वात् ; हविर्हि त्यज्यमानं दृश्यत इत्येवं द्रव्यस्यान्तरङ्गतया तत्सादृश्यमपेक्षितम्, शब्दार्थगतचोदनासादृश्यगवेषणायामन्तरङ्गसादृश्यस्यैवापेक्षितत्वात् ; ऐन्द्रपुरोडाशे आग्नेयविध्यन्त एव प्रवर्तते, न त्वैन्द्रसान्नाय्यविध्यन्त इति स्थितम् ; न तु द्रव्यदेवतयोः प्रत्यक्षत्वाप्रत्यक्षत्वाभ्यामिति चेत्—अस्त्वेवम् ; तस्याप्यर्थस्योक्तार्थाविरुद्धत्वेन ग्राह्यत्वात्। **विपक्षनिरासार्थस्येति ;** वेदाप्रामाण्यादिनिरासार्थस्येत्यर्थः। **द्वितीयात्पूर्वं ब्रह्मविचारः किं न स्यादिति ;** ननु प्रथमलक्षणार्थप्रामाण्यस्योपजीव्यत्वमिव भेदादिलक्षणोक्तस्य शब्दान्तरादेः श्रुतिलिङ्गादेश्चोपजीव्यत्वमविशिष्टमिति कथमयमाक्षेपः ? नन्वस्मिन् शास्त्रे सर्ववेदान्तानां ब्रह्मणि समन्वयार्थमुपक्रमादीन्येव ज्ञातव्यानि, न श्रुतिलिङ्गादीनीति चेत् उपक्रमोन्मेषार्थं श्रुतिलिङ्गादीनामपेक्ष्यत्वात् ; न हि ब्रह्माभिधानश्रुत्यादिकमनुपलभ्य 'उपक्रमो ब्रह्मविषयः' इति निश्चेतुं शक्यम् ; न चैतावता श्रुतिलिङ्गादिकमेव समन्वयोपयोगि, नोपक्रमादिकमिति वक्तुं शक्यम् ; श्रुत्यादिष्वपि प्रकरणस्योपक्रमादितात्पर्यलिङ्गाधीनात्मज्ञानत्वात् ; साकाङ्क्षप्रधानवचनं हि प्रकरणम् ; प्राधान्यनिर्णयश्च तात्पर्यलिङ्गावसेयः। किंच येषु वाक्येषु ब्रह्माब्रह्मसमावेशः, तत्र ब्रह्मलिङ्गबलवत्त्वस्य तात्पर्यलिङ्गोपक्रमाद्यवसेयत्वात् श्रुतिलिङ्गादिकमुपक्रमादिकं चापेक्षितम्। न चो-

पक्रमादीनां श्रुतिलिङ्गादीनां चान्योन्याश्रयः; उपक्रमादीनां स्वरूपलाभार्थं श्रुतिलिङ्गाद्यपेक्षणं, बलाबलावधारणार्थमुपक्रमाद्यपेक्षणमिति विषयभेदेन परस्परापेक्षाया अदोषत्वात्। तस्मात् श्रुतिलिङ्गादिकमुपजीव्यमेवेति तदर्थं तृतीयाध्यायापेक्षाया अपि सत्त्वात् द्वितीयात्पूर्वमिति शङ्कायास्तत्परिहारस्य चानुत्थानमेव। ननु श्रुत्यादीनामुक्तरीत्योपजीव्यत्वेऽपि न तत्परिज्ञानार्थं पूर्वतन्त्रापेक्षा, इहैव "द्युभ्वाद्यायतनं स्वशब्दात्," "आकाशस्तल्लिङ्गात्" तच्चैकवाक्योपबन्धात् प्रकरणात्" इत्यादिसूत्रैः श्रुत्यादिस्वरूपावगमस्य "श्रुत्यादिबलीयस्त्वाच्च न बाधः" इत्यादिसूत्रे श्रुत्यादीनां पूर्वबलीयस्त्वावगमस्य च संभवात्। न हि तत्र श्रुत्यादीनां लक्षणमुक्तमस्ति। कचिद्वाक्यैक्यमात्रस्य लक्षणमुक्तम्— "अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात्" इति। यानि तु तद्व्याख्यातृभिरुक्तानि लक्षणानि तानि नोपयुज्यन्ते; तथाहि—"निरपेक्षो रवः श्रुतिः" इति श्रुतिलक्षणमुक्तम्; तत्सर्वत्राप्यसिद्धम्, शक्तिस्मरणादिसापेक्षत्वात्। पदान्तरसमभिव्याहारनिरपेक्षत्वं विवक्षितमिति चेत्—न; धूमवति पर्वते प्रयुक्तस्य 'सः' इति पदस्यानुमानव्यवधानसापेक्षत्वेऽपि पदान्तरसमभिव्याहारनिरपेक्षत्वेन लिङ्गसमर्पकस्यापि शब्दस्य लिङ्गिनि श्रुतित्वप्रसङ्गात्। "शब्दादेव प्रमितः" इत्यधिकरणे विषयवाक्ये "अङ्गुष्ठमात्रः पुरुषः" इत्यत्र ईशानश्रुतेरङ्गुष्ठप्रमितः परमात्मेति बोधने अङ्गुष्ठमात्रपदसमभिव्याहारसापेक्षत्वेन श्रुतित्वाभावप्रसङ्गाच्च। ननु परमात्मवाचिन ईशानशब्दस्याङ्गुष्ठमात्रपदसामानाधिकरण्यात् वस्तुतोऽङ्गुष्ठमात्रप्रमितपरत्वेन पर्यवस्यतो धर्मिमात्रज्ञापने नैरपेक्ष्यमस्ति, "व्रीहीन् प्रोक्षति" इत्यत्र क्रियेप्सिततमवाचिन्या द्वितीयाविभक्तेः प्रोक्षतिपदसामानाधिकरण्यात् प्रोक्षणत्वे पर्यवस्यतः क्रियामात्रस्य ज्ञापन इवेति चेत्—तर्हि "आकाशस्तल्लिङ्गात्" इत्यधिकरणविषयवाक्ये "आकाशो ह्येवैभ्यो ज्यायान्" इत्यत्र ज्यायःशब्दस्याकाशपदसमभिव्याहाराद्वस्तुत आकाशपरत्वेन पर्यवसितस्य धर्मिमात्रज्ञापने नैरपेक्ष्यमस्तीति तस्याप्याकाशस्य परमात्मत्वे साध्ये श्रुतित्वप्रसङ्गात्। तथा वस्तुसामर्थ्यरूपलिङ्गलक्षणमपि नोपयुज्यते "आनन्दमयोऽभ्यासात्" इति वर्ण्यमानानां निरतिशयानन्दादिब्रह्मासाधारणधर्मलिङ्गानां वस्तुसामर्थ्यरूपलिङ्गत्वाभावात् 'इतिकर्तव्यताकाङ्क्षा प्रकरणम्' इति पूर्वतन्त्रोक्तं प्रकरणं न ब्रह्मविचारोपयोगि, सिद्धरूपस्य ब्रह्मण इतिकर्तव्यताकाङ्क्षाविरहादिति स्पष्टमेव। स्थानस्य तु संनिधियथासंख्यलक्षणस्य संग्राहकमेकमनुगतं लक्षणं

पूर्वतन्त्रोक्तं न दृश्यते । 'समाख्या यौगिकी संज्ञा' इत्येतदपि न युक्तम्, पूर्वतन्त्रे होतृचमसादिसंज्ञाया इह शास्त्रे "स ब्रह्मविद्याम् सर्वविद्याप्रतिष्ठाम्" इत्यादिषु श्रुताया ब्रह्मविद्यादिसंज्ञायाश्च समाख्यात्वसंभवेऽपि आध्वर्यवौद्गात्रादिसंज्ञायाः प्रकृतिप्रत्ययसमुदायरूपत्वेन तदभिमतैकपदश्रुतिरूपतया समाख्यात्वासंभवात् । तस्मात् तत्रत्यानां श्रुतिलिङ्गादीनामिहानपेक्षितत्वात् न प्रमाणलक्षणातिरिक्तमपेक्षितमिति चेत्—तर्हि "अत एव च नित्यत्वम्" इति वेदप्रामाण्यस्य "तदुपर्यपि बादरायणः संभवात्" इति सूत्रेण मन्त्रार्थवादैर्देवतानां विग्रहवत्वस्य सिद्धया विद्याधिकारहेतुसामर्थ्यसंभवसाधकेन मन्त्रार्थवादप्रामाण्यस्य "शब्द इति चेन्नातः प्रभवात्" इति सूत्रेण स्मृत्यादिषु श्रुत्यनुमापकत्वप्रवृत्तिनिमित्तकानुमानशब्दप्रयोगवता स्मृत्यादिषु प्रामाण्यस्य च सिद्धेः प्रमाणलक्षणमपि नोपजीव्यं स्यात् । ननु पूर्वतन्त्रे पूर्वपक्षसिद्धान्ताभ्यां स्फुटं वेदादिप्रामाण्यसमर्थनमस्ति ; इह तु न स्फुटप्रतिपत्तिरिति चेत्, व्याख्यानतो विशेषप्रतिपत्तिसंभवात् ; उक्तं हि—"व्याख्यानतो विशेषप्रतिपत्तिर्न हि संदेहादलक्षणम्" इति, इति चेत्—सत्यम् ; उक्तरीत्या श्रुतिलिङ्गादिषु तत्रत्येषु च वैषम्यसद्भावेऽपि प्रामाण्ये वैषम्याभावेन तत्र कण्ठरवेण समर्थितप्रामाण्योपजीवनेऽपि श्रुत्यादेर्वैषम्यसद्भावेन द्वितीयात्पूर्वं ब्रह्मविचारः किं न स्यादित्याक्षेपः संभवतीति नानुपपत्तिरिति भावः ।

## श्रुतप्रदीपिका

प्रकृतिप्रत्ययविभागेन द्वितीयं पदं व्याचष्टे—**ज्ञातुमिति** । इच्छायाः कार्यत्वे प्रतीतेऽपि 'स्नात्वा भुञ्जीत' इतिवदप्राप्तेंऽशे विधिरित्यर्थः । सन्नन्तनिर्देशो विचारस्य रागप्राप्तत्वज्ञापनाय । तथाच "धर्मजिज्ञासा" इत्यत्रापि ज्ञानं विचाररूपं विधेयम् । विचार कर्तव्य इत्यन्यत्रोक्तेः । प्रमितिस्तु फलतया अर्थसिद्धा । मीमांसा हीयम् । इह—उपक्रमसूत्रे । अनेनास्य सूत्रस्य जिज्ञास्यविशेषपरत्वव्युदासः । आरम्भणीयत्वे सिद्धे हि जिज्ञास्यविशेषनिर्णयः । स चोत्तरत्र "ईक्षतेर्नाशब्दम्" इत्यारभ्य क्रियते । अथ वाक्यार्थं योजयति—**मीमांसेति** । पूर्ववृत्तादित्यादि प्रतिज्ञा । अन्यदुपपादकम् । पूर्वभागोपरितनभागशब्दाभ्यां व्याख्यानस्य क्रमनियमानन्वितभागाध्ययनात्मकत्वं दर्शितम् । तद्धेतुभूतं व्याख्येयस्य तथात्वं पूर्वं पदयोजनायामुक्तम् । उभयत्रोभयं वाच्यम् । ग्रन्थलाघवायैवमुक्तिः । तन्मतानुसारेणेति प्रतिज्ञां वृत्तिग्रन्थेन संवादयति—**तदाहेति** । कर्मचिन्तानन्तर्याक्षेपकर्मैक-

शास्त्र्यं च वृत्तौ दर्शयति—**वक्ष्यति चेति**। लक्षणमध्यायः। संहितमेकव्याख्येय-व्याख्यानरूपतया संबद्धमिति भावः। शारीरकं ब्रह्ममीमांसा; जगच्छरीरकब्रह्मविषय-त्वात्। **षोडशलक्षणेन**; षोडशाध्यायेन। शास्त्र्यैक्यप्रत्यनीकमर्थविरोधं प्रतिपाद्यभेदं प्रयोजन-भेदं कर्तृभेदं चाशङ्क्याह—**अत इति**। **अतः**; एकव्याख्येयव्याख्यानरूपतया प्रबन्धैक्य-सिद्धेः। **प्रतिपिपादयिषितः**; प्रतिपादयितुमिष्टः, तात्पर्यविषय इत्यर्थः। देवतानिराकरणादिकं देवताज्ञानानपेक्षफलप्रदत्वरूपकर्मप्राशस्त्याद्यर्थान्तरपरम्; न तु देवतानिरासादौ तात्पर्यम् "अन्यार्थं तु जैमिनिः" "परं जैमिनिर्मुख्यत्वात्" इत्यादौ जैमिनेर्ब्रह्माभ्युपगमदर्शनादिति भावः। द्रव्यदेवतासामान्ये द्रव्यबलीयस्त्वमपि प्रमाणद्वारा, न स्वरूपतः। द्रव्यस्वरूपं हि प्रत्यक्षं हविस्स्वरूपं, धर्म एव हि शास्त्रगम्यः, देवतायास्तु स्वरूपं फलप्रदत्वमपि शास्त्रैकगम्य-मित्याद्यनुसन्धेयम्। अतो विरुद्धार्थे तात्पर्याभावान्नार्थविरोधः। पूर्वोत्तरकाण्डाभिप्रायेण षट्कभेदवदध्यायभेदवदित्युक्तम्। अनेन प्रयोजनप्रतिपाद्यभेदौ परिहृतौ। षट्कद्वयचिन्तित-प्रकृतिविकृतिरूपार्थतत्फलभेदस्य शास्त्रभेदकत्वाभावात्। कर्तृभेदपरिहारस्तु स्फुटतया नोक्तः। अस्ति हि वैयाकरणपूर्वोत्तरवृत्त्यादौ कर्तृभेदः। अस्त्वैकशास्त्र्यम्; ब्रह्मचिन्ता पूर्वं किं न स्या-दित्यत्राह—**मीमांसेति**। संगतिविशेषाः वक्ष्यमाणाः—पाठक्रमः, चेतनानां त्रिवर्गे प्रथमं प्रावण्यरूपोऽर्थक्रमः, पदार्थवाक्यार्थभावः, दृष्टान्तदार्ष्टान्तिकभावः, उपजीव्योपजीवकभावश्च। एवं पौर्वापर्यनियामकसंगतिविशेषेण विशिष्टक्रमं क्रमविशेषवदित्यर्थः।

**नयप्रकाशिका**

जिज्ञासाशब्दभाष्यं तु प्रसङ्गात् पूर्वमेवार्थतो व्याख्यातम्। अत्र ज्ञानशब्दार्थस्य विधेयत्वं चोत्तरत्र वक्ष्यते, वेदार्थविचारस्य न विधेयत्वमिति च। ननु मीमांसापूर्वभागेत्यारभ्य भवतीत्यन्तं भाष्यं व्यर्थम्, अधीतसाङ्गेत्यादिभाष्येण गतार्थत्वात्। न च तत्रार्थ-संकोचात् मीमांसापूर्वभागेत्यादिभाष्येण सूत्रवाक्यार्थयोजनाव्याजेन तदर्थ एव विवृत इति वाच्यम्; एतद्भाष्येणैव परिपूर्णार्थसिद्धेस्तद्भाष्यस्य व्यर्थताप्रसङ्गात् इति चेत्—न; संकोच-विस्ताररूपेण सूत्रार्थविवरणस्य भाष्यस्वभावत्वात्;

" सूत्रार्थो वर्ण्यते यत्र वाक्यैः सूत्रानुकारिभिः।
स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः॥"

इति प्रसिद्धेः । स्वपदविवरणमपि वस्तुगत्या सूत्रार्थविवरणमेव । कर्मब्रह्मविचारयोर्वृत्तिकारोक्तपौर्वापर्यहेतुहेतुमद्भावयोरैकशास्त्र्यस्य चोपपादनं मीमांसाशास्त्रमित्यारभ्य पश्यतु भवानित्यन्तेन भाष्येण क्रियते । तत्र साध्यमर्थं सिद्धमिव कृत्वा ततः प्रतिपिपादयिषितेत्यादिभाष्येण पूर्वोत्तरमीमांसयोर्भेदेन व्यवहारगतिरुक्ता । **संगतिविशेषेण विशिष्टक्रममिति** ; संगतिर्येन हेतुना विशिष्यते स संगतिविशेषः ; तेन हेतुना विशिष्टक्रममित्यर्थः । विशिष्टपौर्वापर्यजिज्ञासोत्पत्तिहेतुवशादध्ययनादेः पौर्वापर्यक्रमः ।

**तत्त्वटीका**

सन्निहानिच्छार्थ इच्छार्थो वा? नाद्यः, "गुप्तिजिकिद्भ्यः सन्" इत्यादावपाठात् । न द्वितीयः, विचारे विवक्षिते तदिच्छाभिधानविरोधात् सूत्रलक्षणविरोधात् उपचारायोगाच्चेत्यत्राद्यमनभ्युपगत्यान्त्यं समर्थयितुं विगृह्णाति—**ज्ञातुमिति** । **ननु** प्रत्ययार्थप्रधाने जिज्ञासापदे ज्ञानस्य निमग्नत्वान्न विधेयत्वम् ; इच्छा तु न पुरुषतन्त्रा ; न च सा स्वज्ञानजन्या, विषयानुकूल्यधीनिघ्नतया तदभावे तदनुपपत्तेरप्रतीयमानत्वाच्चेत्यत्राह—**इच्छाया इति** । स्वविषयसिद्ध्यर्थतया इच्छारूपक्रियायाः प्रोक्षणादेरिव स्वकर्मप्रधानत्वं सिद्धम् । "धातोः कर्मणः" इत्यत्र च धात्वर्थस्य प्राधान्यमार्थं ग्राह्यम् ; अप्राप्तमेव विधेयम् ; अत इच्छावाचिना तत्संबन्धिविवक्षात्र न युक्तेति भावः । तर्हि ज्ञानमात्रं वाच्यम् ; किमजागलस्तनकल्पेन प्रत्ययेनेत्यत्र 'अधिकमधिकमर्थं सूचयति' इति नीत्या प्रत्युक्तिः—**इष्यमाणमिति** । संदिग्धसप्रयोजनविषयतया रागप्राप्तं विचाररूपं ज्ञानं नोपासनादिवद्वैधमिति सूचनात्सार्थकः सन्नित्याशयः । ज्ञानशब्दश्चात्रौचित्यात् उक्तविशेषपरः । रागविषयफलरूपज्ञानमुखेन विचाराक्षेपक्लप्तिस्तु न युक्ता, धीविलम्बात्, विवक्षितस्य च साक्षाद्वक्तुं शक्यत्वात् । **इह** ; मीमांसाख्यशास्त्रोत्तरभागारम्भे । एवमेव हि "अथातो धर्मजिज्ञासा" इत्यादिष्वपीति भावः । ननु रागप्राप्ते विचारे 'कथं विधीयते' इत्युक्तिः? नाप्यत्र गुर्वभिगमनादिनियमांशापेक्षया विध्युक्तिः ; न्यायानुपयोगात्, तादृशनियमनिषेधेन पूर्वपक्षानुत्थानाच्च ; मैवम्—रागप्राप्तस्याप्यनारभ्यत्वभ्रमे तन्निषेधपरत्वादत्र विधिशब्दस्य ।

जातापि हि विचारेच्छा पूर्वपक्षोक्तयुक्तितः ।
सीदन्त्युत्तभ्यते युक्त्या सिद्धे व्युत्पत्तिपूर्वया ॥ २०७ ॥

अत्र 'तापत्रय' इति ग्रन्थे यादवप्रकाशोक्तं पूर्ववृत्तान्तरं सांख्यादिविचारस्यानारम्यतास्थापनं च विवक्षितमिव प्रतिभाति; तद्व्युदस्यन् वाक्यार्थमाह—**मीमांसेति**। 'माङ् माने' इत्यत्र सन्नन्तत्वं निपात्य वा, 'मान पूजायाम्' इत्यत्र वा 'मान्बध' इत्यादिना अनिच्छासन्नन्तोऽयं शब्दः। "मानेर्जिज्ञासायाम्" इति वैयाकरणोक्तिस्त्वदूरविप्रकर्षात्; जिज्ञासाविशेषोत्थाप्ये हि पूजितविचारे तदनुबन्धिनि प्रशस्तन्याये वा वृद्धप्रयोगादस्य शक्तिनिष्कर्षः। आहुश्च—"मीमांसासंज्ञकस्तर्कः सर्वो वेदसमुद्भवः" इत्यादि। तादृशन्यायनिबन्धात्मनि तु शास्त्रे भाक्तो मीमांसाशब्दः। अतः पूर्वापरभागविभागेन ज्ञातत्वावसेयत्वोक्तिरविरुद्धा। अत्र [1]**पूर्ववृत्ता**दित्यादिना वाक्ययोजना। शिष्टं तत्रत्यहेत्वंशसमर्थनम्।

विचारक्रमनिर्देशः सौत्रस्तद्व्यक्तये त्विह।
शास्त्रैक्यतत्क्रमौ प्रोक्तौ सूत्रकाराभिसंहितौ॥ २०८॥

पूर्वभागोपरितनभागशब्दाभ्यां नियतक्रमव्याख्यानरूपप्रबन्धैक्यं व्यज्यते। तन्निदानं व्याख्येयस्य वेदस्य क्रमवत्त्वं पदयोजनायां सशिरस्कशब्देन दर्शितम्। पदवाक्यनिर्वाहयोस्तात्पर्यभेदादपुनरुक्तिः। **ज्ञातस्य**; निर्णीतस्य। **अवसेयस्य**; अबाधितापातधीस्थतया निर्णेतव्यस्य। **ब्रह्मज्ञानस्य**; ब्रह्मोपासनस्य। ब्रह्मस्वरूपमात्रविवक्षायामत्र ज्ञानशब्दाधिक्यात्, 'ज्ञातस्य कर्मणः' इत्येतत्समशीर्षतया साध्यविशेषग्रहणौचित्यात्, विचाररूपस्य निर्णयरूपस्य वा ज्ञानस्यावसेयत्वोक्त्ययोगात्, निर्दिश्यमानफलं प्रत्यचोदितत्वाच्च; तदिह समन्वयनीत्या स्वयमनन्ताक्षयफलत्वेन प्रधानतया ज्ञातव्यमपि ब्रह्म स्वोपासनस्यानन्ताक्षयफलसाधनत्वेन तद्विषयतयापि ज्ञातव्यमिति तदुपसर्जनतयोक्तिरपि सुसंगता। **ब्रह्म ज्ञात**व्यमित्यनेन तु तत्प्राधान्यं व्यज्यते। अत्र प्रयोजनवत्तयापातधीस्थत्वं विचार्यत्वे हेतुः। कर्मविचारात् पश्चाद्भावितस्य तु प्रतिबन्धशान्तौ तत्सापेक्षत्वमानन्तर्यस्य च तादृशापेक्षणीयान्तराभावः। अतः श्रुत्युक्तनिर्वेदपूर्तिपर्यन्तविचारविशेषाभिप्रायेण **तत एव** इत्युक्तम्। अवधारणमिह हेतुवैकल्यनिवृत्त्यर्थम्, सावधारणहेतुनिषेधायोगात्। केचित्तु "हेत्वन्तराद्ब्रह्मविचारेऽनावश्यकत्वशूद्राधिकारत्वयोः प्रसङ्गात् कर्मधीव्यतिरिक्तहेत्वनादरोपदेशोऽयम्" इत्याहुः। अत्र प्रधानप्रतिज्ञा तद्धेतुः प्रतिज्ञान्तरहेतुश्च नोक्तः स्यादिति

१. अनेन 'पूर्ववृत्तात्कर्मज्ञानादनन्तरम्' इति पाठ आचार्याभिमत इति प्रतीयते।

बह्वनौचित्यम्। आकाङ्क्षितहेतुपूर्वकसाध्यविशेषायोगव्यवच्छित्त्यैवार्थतो हेत्वन्तरादिनिरासस्तु युक्तः। **ज्ञातव्यम्**; विचार्यमित्यर्थः। 'विचारः कर्तव्यः' इति भाषिष्यते। अत्रार्हार्थे कृत्यप्रत्ययः। कर्मज्ञानादित्यत्रापि ज्ञानं विचारः। ब्रह्म ज्ञातव्यमित्युक्तं भवतीत्यनेन स्वारस्यं युक्तिं च सूचयता ब्रह्मैव ज्ञातव्यमिति वाक्यार्थं वदन्तः प्रत्युक्ताः। इदं हि सूत्रमविचार्यत्वनिरासार्थम्। ब्रह्मणो ज्ञातव्यत्वस्येतः पूर्वमसिद्धतया तदेव ज्ञातव्यमिति नियमो नोदेति। कथं च शब्दानां सिद्धपरत्वसंभवमसाधयित्वा सिद्धविशेषस्य विचार्यत्वोक्तिः? समन्वयसूत्रात् तत्साधनम्। साकाङ्क्षयोजना च न युक्ता। अत्र चोदनासूत्रवच्छब्दतोऽर्थतश्चायोगान्ययोगव्यवच्छेदौ वाक्यभेदाभावश्चेत्यप्ययुक्तम्, अनुपयुक्तप्रतिज्ञामात्रानुपपत्तेः; ब्रह्मश्रद्धावर्धकतयान्यनिषेधः प्रस्तुतोपयोगीति च मन्दम्; तत्प्रतिज्ञानेऽपि हेतुश्चात्रोह्यः; तदूहे तु ईक्षत्यधिकरणाद्यैस्तर्कपादान्तैः साधनप्राप्तैः कृतकरत्वं च स्यात्। किं च शारीरकेऽनुक्तांशस्य सांख्ययोगावगम्यत्वं वदद्भिः कथमिह तन्निषेधः प्रतिज्ञायते? वेदविरुद्धांशानादरणीयत्वं तु विरोधाधिकरणतः प्रागेव सिद्धम्; अतो 'ब्रह्म ज्ञातव्यमेव' इति योजना युक्तेति वृद्धाः। अनेन श्रोतव्यादिश्रुतिरनुसृता भवति। अत्र स्वोक्तौ पदार्थवाक्यर्थौ वृत्त्यापि द्रढयन् तन्मतानुसारे तत्कृतिसंवादं दर्शयति—**तदाहेति**। अनन्यथासिद्धपूर्वत्वविवक्षया कर्मविचारस्य हेतुत्वमपि वृत्त्यभिप्रेतम्। अधिगम्यतेऽनेनेति अधिगमोऽत्र विचारः। विविदिषोक्तिः जिज्ञासोक्तिवन्नेया। स्वोक्तसूत्रार्थसिद्ध्यै सूचितं शास्त्रैक्यमपि संवादयति—**वक्ष्यतीति**। व्याख्यास्यमानप्रदेशान्तरविषयतया भविष्यन्निर्देशः। ऐकशास्त्र्यमिह न केवलमेकविद्यास्थानत्वम्; किंतु ऐकप्रबन्ध्यमपीत्यभिप्रायेण संहितत्वोक्तिः। अधीतकृत्स्नवेदार्थरूपविचार्यैक्यसिद्धौ कर्मब्रह्मकाण्डयोः प्रत्येकमपूर्णार्थत्वेन परस्परसाकाङ्क्षत्वात् नष्टाश्वदग्धरथन्यायेन संघटितमित्यर्थः। इयं च वृत्तिः शास्त्रभेदभ्रमहेतून् तत्परिहारांश्च सूचयति; सर्वशरीरिगोचरत्वं दर्शयता शारीरकशब्देन विषयभेदज्ञापनात्। 'एतत्' इति प्रयोजनाधिकारिभेदयोरर्थविरोधस्फुरणस्य चाङ्गुल्यैव निर्देशात्। 'जैमिनीयेन' इति भेदशङ्काद्योतनम्। परिहारस्तु 'षोडशलक्षणेन' इति द्वादशाध्यायीचतुरध्यायीरूपकाण्डद्वयेन। अत्र

"कर्मदेवताब्रह्मगोचरा सा त्रिधोद्बभौ सूत्रकारतः।
जैमिनेर्मुनेः काशकृत्स्नतो बादरायणादित्यतः क्रमात्॥"

इति तत्त्वरत्नाकरोक्तेश्च वृत्तेश्च क्वचिदुपचारेणाविरोधो ग्राह्यः। 'षोडशलक्षणेन' इति प्रतिबन्दीमभिप्रयतावान्तरविषयादिभेदानां न प्रबन्धैक्यविरोधित्वमिति दर्शितम्। 'जैमिनीयेन' इत्यनेनैवार्थविरोधशङ्का सूत्रतात्पर्यानभिज्ञतयेति सूच्यते। सूचयिष्यति हि शारीरकार्थेषु बहुषु जैमिनेः संवादम्। व्यामोहशान्त्यै "धर्मं जैमिनिरत एव" इत्यादिषु क्वचिद्विसंवादोक्तितन्निरासौ। "परामर्शं जैमिनिः" इत्यादौ नैष्ठिकाद्याश्रमाभावो जैमिन्यसूत्रितोऽपि नूनं सकामानां गृहस्थधर्मवैमुख्यनिवारणार्थं कदाचिदुक्तोऽनूद्यापास्तः, अन्यथा "तद्भूतस्य तु नातद्भावो जैमिनेरपि" इत्यादौ नैष्ठिकाद्याश्रमप्रच्युतिनिषेधस्य जैमिनिसंवादोक्त्ययोगात्। "मध्वादिष्वसंभवादनधिकारं जैमिनिः" "भावं जैमिनिर्विकल्पामननात्" इत्यादिष्वपि न शास्त्रैक्यविरुद्धानूक्तिः, स्वोक्तव्याख्याभेदवत् स्वल्पान्यथोक्तेस्तदविरोधात्। संहितत्वोक्त्या तु कर्तृभेदाभेदयोर्यथादृष्टि प्रबन्धभेदाभेदानापादकत्वं ख्यापितम्। अर्थसंगतौ सत्यां ह्यन्यतराभिसंधेरुभयाभिसंधेर्वा संधायकत्वं युक्तम्।

ब्रह्मसंवाददार्ढ्येन प्रधानार्थाविरोधतः।
अप्रधानविरोधस्तु तात्पर्यादपनोद्यते ॥ २०९ ॥
परकल्पितसूत्रार्थविरुद्धांशव्यपोहतः।
शेषपूरणवद्वात्र संहितत्वोक्तिसंभवः ॥ २१० ॥

कुतस्तर्हि तद्भेदप्रथा? सति वा भेदे कथं च प्रबन्धैक्यम्? इत्यनवहितानुयोगे द्वितीयवृत्त्यभिप्रेतं व्यनक्ति—**अत इति**; सयुक्तिकसंप्रदायादित्यर्थः। प्रतिपिपादयिषितत्वोक्त्या कर्मकाण्डदेवताधिकरणादेर्देवतातत्त्वनिश्चयरहितानामपि कर्मप्राशस्त्यादिप्रतिपादनपरत्वेन विग्रहादिनिराकरणादौ तात्पर्याभावः सूच्यते। उक्तं ह्यागमप्रामाण्ये—"यथैव हि भगवतो जैमिनेः कर्मणः फलोपन्यासः कर्मश्रद्धासंवर्धनाय" इति। विवृतं चैतत् वेदार्थसंग्रहे—"अश्रुतवेदान्तानां कर्मण्यश्रद्धा मा भूदिति देवताधिकरणेऽतिवादाः कृताः" इति; अतिवादा अन्यपरोक्तयः; तावतापि बाह्योक्तानित्यसंयोगादिनिमित्तश्रुत्यप्रामाण्यशङ्कानिरासात् तत एव स्वाभीष्टसिद्धेरित्याशयः। अपि चैवं नवमाद्यपादे "फलदेवतयोश्च" "न चोदनातो हि ताद्गुण्यम्" इति प्रसक्तयोः फलदेवतयोर्मध्ये देवताविषयाणि "देवता वा प्रयोजयेत्" इत्यादीनि सूत्राणि यानि तानि व्याकुर्मः—देवतोद्देशेन देयं द्रव्यं देवता न प्रयोजयेत्; कुतः? कृष्यादिवत् फलसाधनभूतक्रियाया

एव प्रयोजकत्वोपपत्तेः; तत्राह—"देवता वा प्रयोजयेदतिथिवद्भोजनस्य तदर्थत्वात्" इति। वा शब्दः शङ्कानिवर्तकः; हविरुद्देश्या देवता फलार्थिनं स्वाराधने प्रयोजयेत्; कुतः? भोजनस्य तदर्थत्वात्; भोजनस्य हविषः तत्समर्पणस्य च तदर्थत्वात् तच्छेषत्वात्। संप्रदानभूता हि देवता प्रधानतया स्वार्थे द्रव्यतत्समर्पणे प्रयुङ्क्ते।

क्रियाप्रधानवाक्येषु न्यग्भूतापि हि देवता।
तत्तन्मन्त्रादिसामर्थ्यादार्थप्राधान्यशालिनी॥ २११॥

न च वाच्यं विग्रहादिपञ्चकायोगात्* न प्रयोक्त्री देवतेति, स्मृत्युपचारान्यार्थदर्शनैरबाधितैस्तत्सिद्धेः। अतो यथा विग्रहादिमानतिथिराराध्यः स्वार्थं स्वाभीष्टमुपचरणं प्रयुङ्क्ते तथा देवतापीति। "आर्थपत्याच्च"—अर्थ्यते प्राप्यत इत्यर्थः विभूतिः, अर्थ्यत इति वा; अतस्तदभावादनाराध्या अनीप्सितप्रदत्वादप्रयोजिकेति न शङ्कनीयम्; परा खलु देवता सर्वस्येष्टे; तन्नियुक्ता चापरा यथाधिकारं तत्तद्विभूतीनाम्। तथापि निरपेक्षा देवता न कुतश्चित् प्रीयेत, न कंचन प्रीणाति; अतः कथं प्रयोजिकेत्यत्राह— "ततश्च तेन संबन्धः"; ततः नैरपेक्ष्येऽपि नरदेवनीत्या दयौदार्यशालिन्याः परिचर्यमाणायाः प्रसेदुष्या देवताया एव हेतोः परिचरतां स्वाभीष्टफलेन संबन्धः स्मृत्युपचारादिभिरेवं सिद्ध इति पूर्वः पक्षः। राद्धान्तस्तु—"अपि वा शब्दपूर्वत्वाद्यज्ञकर्म प्रधानं स्यात्"; अत्र 'अपि वा' इति सार्धाङ्गीकारे पक्षव्यावर्तनम्। यद्यपि देवताया विग्रहादिपञ्चकं दुर्निषेधम्, द्रव्याद्यपेक्षया संप्रदानस्य प्राधान्यम्, यजेश्च देवताराधनवाचितया यागस्य तादर्थ्यम्, सिद्धपरवाक्येषु च परावरदेवतयोः स्वरूपादिकमनन्यार्थमामनामः; तथापि कर्तव्योपदेशेषु यज्ञादिरूपं कर्म स्वर्गादिफलसाधनतया चोदितत्वात् प्रधानं सत् साध्यतया बुद्ध्यारोहेण पुरुषं प्रवर्तयति; कृत्स्नं च देवतादि क्रियाशेषभूतम्। ननु फलप्रदाया देवताया आराध्यत्वेन प्राधान्यमनुशोश्रूयामहे; अत्राह—"गुणत्वे देवताश्रुतिः"; हविष्प्रदानं प्रति गुणीभूतां हि देवतामनुशृणुमः; मन्त्रार्थवादोपस्थापितं देवताप्रीतिरूपमपूर्वं चोदितस्य क्षणिकस्य कर्मणः कालान्तरभाविफलद्वारतयोपादीयेत; अतो वास्तवप्राधान्यशालिन्यपि देवता फलकामप्रवर्तकशाब्दप्राधान्यवत्क्रियागुणीभूता न

* टि॰ "विग्रहो हविरादानं युगपत्कर्मसंनिधिः।
प्रीतिः फलप्रदत्वं चेत्येतत्पञ्चकमुच्यते॥"

प्राधान्येन प्रयोजिकेति। अतिथेस्तर्हि कथं प्रयोजकत्वम्? इत्थमित्याह—"अतिथौ तत्प्रधानत्वमभावः कर्मणि स्यात्"; आतिथ्यं प्रत्यतिथेः प्रधानत्वं प्राप्तम्; अन्यथा हि तदर्थे कर्मणि प्रयोजकाभावात् तदभावः स्यात्। तत्सपर्याविधिरेव तत्प्रयोजक इति चेत् तत्र प्रीत्याह—"तस्य प्रीतिविधानत्वात्"; आतिथ्यकर्मणो हि अतिथिप्रीतिविधानतयैव चोदना।

क्रियाप्रवृत्तपुरुषसमाहूता तु देवता।
संनिधत्ते तदिष्टार्थं न ततस्तत्प्रयुक्तता ॥ २१२ ॥
अतिथिस्तु स्वयं प्राप्तः स्वाभीष्टं च प्रयोजयेत्।
तदिष्टानुविधानेन तत्सपर्यार्थचोदना ॥ २१३ ॥

अतः प्राप्ताप्राप्तविवेकादतिथिप्राधान्योक्तिरिति। यथा चातिथेर्विग्रहादिमत्त्वे तदुपचरणानुष्ठानस्य न कदाचित् क्षतिः प्रत्युत स्वरूपलाभ एव, एवं देवतायास्तद्वत्त्वेऽपि। न चात्र तत्प्रतिक्षेपसाफल्यं पश्यामः। गुणीभावसाधनेऽपि किं फलमिति चेत्, अनिर्धारितवास्तवप्राधान्यानामपि कर्मश्रद्धासंवर्धनमिति।

सूत्रेषु तावदेतेषु पूर्वपश्चिमपक्षयोः।
देवताविग्रहादेर्न प्रतिक्षेप्यत्वसूचनम् ॥ २१४ ॥
शाबरे पूर्वपक्षोक्तदेवताविग्रहादिषु।
स्वतः प्रामाण्यवेदिभ्यः स्वदते न निराकृतिः ॥ २१५ ॥
स्मृत्योपचारादन्यार्थदर्शनैश्च स्वभाषितम्।
न वाङ्मात्रेण निह्नोतुं शक्यते नास्तिकेतरैः ॥ २१६ ॥
अदर्शनकुतर्काभ्यां श्रुतार्थानामपह्नवे।
चार्वाकादिमतापत्त्या सर्वोपप्लवसंभवः ॥ २१७ ॥

---

१. मुद्रितेषु शाबरभाष्यशास्त्रदीपिकादिकोशेषु "प्रीतिप्रधानत्वात्" इति, तालपत्रस्थेषु मीमांसासूत्रपाठकोशेषु "प्रीति विधानत्वात्" इति, तत्त्वटीकाकोशेषु सर्वेषु "प्रतिविधानत्वात्" इति च पाठो दृश्यते। 'तदिष्टानुविधानेन' इत्युत्तरकारिकानुसारेण 'प्रीतिविधानत्वात्' इत्येष पाठ आदृतः।

श्रुतानां विग्रहादीनां कल्प्यतोक्तिश्च मोहजा ।
श्रुतशक्त्याद्यभावस्य कल्पने गौरवं तु वः ॥ २१८ ॥
क्षणिकस्य फलद्वारं किं भवेदिति चिन्तने ।
द्वारक्लृप्तेर्वरं ह्यत्र श्रुतद्वारपरिग्रहः ॥ २१९ ॥
देवतानां क्रियार्थत्वं कर्मणां च तदर्थता ।
मुखभेदेन सिद्धत्वान्न मिथो बाधमर्हतः ॥ २२० ॥
आदित्यादिमतीरङ्गे स्थापयन्बादरायणः ।
देवतानां प्रधानत्वमर्थसिद्धमसूत्रयत् ॥ २२१ ॥
नासिद्धदेवतारूपदृष्टिश्चान्यत्र युज्यते ।
न च सर्वत्र निर्बाधे कल्प्यो दृष्टिविधिक्रमः ॥ २२२ ॥
देवतानां तपश्चर्याद्युक्तिश्च न विरुध्यते ।
स्वाधिकेश्वरतोषार्थप्रवृत्तेरुपपत्तितः ॥ २२३ ॥
प्रशासितुश्च घृणया धर्मसंस्थापनार्थिनः ।
तत्तद्धर्मप्रवृत्तिः स्यात्कर्मवश्यानुकारिणः ॥ २२४ ॥
तिर्यक्स्थावरनिर्जीवतत्प्रतीकगुणक्रियाः ।
अभिमत्यनुबन्धेन देवतास्तदपि श्रुतम् ॥ २२५ ॥
हविर्भेदानुसारेण फलभेदप्रदायिता ।
प्रतिषिद्धैः प्रकोपश्च राजादिन्यायतो भवेत् ॥ २२६ ॥
यदि श्रुत्यनुसारेण स्वभावो हविरादिषु ।
तेनैव तत्तदाराध्यस्वभावस्वीक्रियोचिता ॥ २२७ ॥
मन्त्रार्थवादसिद्धेऽपि यत्र बाधा न दृश्यते ।
तन्मूला स्मृतिरप्यत्र न बाधार्हा स्वमूलवत् ॥ २२८ ॥
पर्याये च विशिष्टे च देवताभेदकल्पनम् ।
तत्तच्छब्दोपधानेन तदुद्देश्यत्वसिद्धये ॥ २२९ ॥
अविदित्वा स्वमन्दत्वं नास्तिकैरास्तिकेष्विह ।
यैरजल्प्यत मन्दत्वं शोच्यास्ते सूक्ष्मदर्शिभिः ॥ २३० ॥

द्रव्यदैवतसामान्ये बलीयो द्रव्यमित्यपि ।
प्रत्यक्षे च परोक्षे च प्रमाणप्रस्थितेर्वशात् ॥ २३१ ॥
द्रव्यस्याध्यक्षसिद्धस्य हविष्ट्वं शास्त्रगोचरः ।
देवतायाः स्वरूपं च धर्मत्वं चेति भेदतः ॥ २३२ ॥
प्रत्यक्षाद्युपजीवित्वाच्छास्त्रतो धीर्विलम्बिता ।
ततो हि परदौर्बल्यं श्रुतिलिङ्गादिकेष्वपि ॥ २३३ ॥
द्रव्यदैवतवैषम्यं न सत्यासत्यभावतः ।
दैवतं यदि मिथ्या स्यात्कथं भेदादिधर्मभाक् ॥ २३४ ॥
अर्थोपश्लिष्टशब्दात्मा शब्दमात्रात्मिकापि वा ।
यथाश्रुतगृहीता वा सत्यैव खलु देवता ॥ २३५ ॥
मणिमन्त्रौषधाद्यैश्च सिद्धिरुक्ताभ्युपेयते ।
जन्मसिद्धापि साधीता किं न देवेषु गृह्यते ॥ २३६ ॥
न वस्तुदेशान्तरयोर्देवदृष्टिविधानवत् ।
इह कल्पयितुं युक्तं स्वरूपविधिसौस्थ्यतः ॥ २३७ ॥
रात्रिसत्रादिनीत्या च विध्यपेक्षानुसारतः ।
फलदाः फलभूतत्वादपि सिध्यन्ति देवताः ॥ २३८ ॥
इत्थं प्राचीनया गत्या क्षिप्तं निर्दैवतं मतम् ।
शेषं तदुपरीत्यादिसूत्रभाष्ये भविष्यति ॥ २३९ ॥

द्रमिडभाष्यकारैरप्युक्तम्—"अञ्जसैव विश्वसृजो रूपम्" इत्यारभ्य "न ह्यरूपाया देवताया रूपमुपदिश्यते, यथाभूतवादि हि शास्त्रम्" इति। नन्वर्थवादानां विधिशेषत्वं पूर्वत्रोक्तम्; समन्वयाधिकरणे त्वन्यथा; तत्कथमविरोधः? इत्थम्—उत्सर्गापवादतः प्रवृत्तेः। दृष्टं चैतच्छास्त्रान्तरे काण्डान्तरे च। एवमन्यत्रापि कुदृष्टिकल्पितो विरोधः शमयितव्यः। **षट्कभेदवत्** इति कर्मकाण्डे प्रतिबन्दी, **अध्यायभेदवत्** इति तु काण्डत्रयेऽपि; चकारोऽत्रानुक्तपादादिभेदसमुच्चये। देवताकाण्डाच्छारीरकस्य पृथक्करणं च तत्पृथक्करणप्रतिबन्द्या निरूढम्। अथ भिन्नक्रमत्वभिन्नप्रबन्धत्वव्युदासं वृत्तिसिद्धं व्यनक्ति—**मीमांसाशास्त्रमिति**। **संगतिविशेषेण**; हेतुहेतुमद्भावादिना संबन्धेनेत्यर्थः;

स च "विंशतिलक्षण्यामेकप्रयोजनसाधनत्वेनैकप्रयत्नसाध्यत्वम्" इति विवरणम्। इदं चैकप्रबन्ध्यव्यक्त्यर्थम्। **विशिष्टक्रमम्**; नियतक्रमम्; न हि शास्त्रान्तरवदवसरमात्रादिह क्वापि क्रम इत्याशयः। तत्र विशेषः—

विचारात्पूर्वमेवात्र प्राप्तमध्ययनं विधेः।
अतोऽनधीतवेदस्य विचारः श्रुतिवारितः॥ २४०॥
क्रमो विंशतिलक्षण्या न वैधः किंतु यौक्तिकः।
अतो व्युत्क्रमचिन्तायामनौचित्यं प्रकाश्यते॥ २४१॥

'आरभ्य' इत्यनेन धर्मजिज्ञासासूत्रे कृत्स्नवेदार्थविचारप्रतिज्ञा सूच्यते, धर्मशब्देन सिद्धसाध्यपरावरकृत्स्नधृतिहेतुसंग्रहात्। कर्मभागमात्रप्रतिज्ञापि तत्रैव तन्त्रत आवृत्त्या वा सिध्येत्। तावतैव सारे कर्मविचारार्थत्वोक्तिः। भागद्वयप्रतिज्ञाभ्यां सामान्यप्रतिज्ञा गम्या; न्यायसूत्रे साधर्म्यवैधर्म्यसमोक्त्या प्रतिधर्मसमोन्नीतिवत्। तदेतत्सर्वं संगतिमालायामुक्तम्। न च वाच्यमाद्यप्रतिज्ञयैव कृत्स्नसिद्धौ किं भूयो विशेषप्रतिज्ञयेति, शङ्काविशेषोद्धारादिप्रयोजनवशात् प्राचीनाध्यायेष्विवात्रापि तदुपपत्तेः। न चायम् "अथातो धर्मजिज्ञासा" इत्यादिरप्रस्तुतार्थः; यथान्यत्र संगत्या क्रमनियतिस्तथात्रेति तात्पर्यात्। अत्र ह्यमानकस्यानिरूप्यतया प्रमाणलक्षणेन प्रथमेनाभावि। कार्त्स्न्येन वेदस्य प्रामाण्ये सिद्धे तदर्थेषु भेदाभावेऽङ्गत्वादेः सर्वस्यायोगात् मानचिन्तानन्तरं शास्त्रार्थभेदचिन्ता प्रावर्तिष्ट; शास्त्रभेदचिन्तेत्येके। तत्र शब्दान्तराभ्याससंख्यागुणप्रक्रियानामधेयैः सिद्धे भेदे श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्याभिः शेषलक्षणं प्रवृत्तम्। शेषाणामेव शेषिभिः प्रयोज्यत्वाय चतुर्थे क्रत्वर्थपुरुषार्थजिज्ञासा; विध्यपेक्षारूपोपादानचिन्तेति केचित्। प्रयुक्तेषु श्रुत्यर्थपाठप्रवृत्तिमुख्यकाण्डैः पञ्चमे क्रमोऽनुक्रान्तः। सक्रमे शास्त्रार्थे स्थापिते तत्प्रयोक्ता षष्ठे प्रोक्तः। एवमुपदिष्टप्रकृतिनिश्चये विकृतावतिदेशः सामान्यतः सप्तमे स्थापितः। अष्टमेऽपि तदनुबन्धिविशेषः। अतिदिष्टमन्त्रादीनां नवमे बहुविध ऊहः। अतिदेशप्राप्तेषु क्वचित्प्रयोजनाभावादन्यतो वा तल्लाभात्प्रतिषेधतो वा दशमे बाधः। उक्तेषु पृथक्प्रयुक्तिशक्तिमदुभयगोचरत्वे देशकालाद्यैक्ये चैकादशे तन्त्रम्। द्वादशेऽपि कस्मिंश्चित्प्रयोगमध्यपातिन्यन्यस्मिंस्तत्प्रयोगोपजीविनि प्रसङ्ग इति। तदिदं संजगृहुः—

“ धर्मधीमानभेदाङ्गप्रयुक्तिक्रमकर्तृभिः ।
सातिदेशविशेषोहबाधतन्त्रप्रसक्तिभिः ॥ ”

इति । एवं तर्किते कर्मणि संकर्षकाण्डे चतुर्लक्षण्या तत्तत्कर्माराध्यदेवतैव स्वरूपभेदगुणप्रकर्षैर्निरकृष्यत । तत्समाप्तौ च “अन्ते हरौ तद्दर्शनात्” “स विष्णुराह हि” “तं ब्रह्मेत्याचक्षते” इति विचारयिष्यमाणमुपचिक्षिप इति तत्त्ववृद्धाः । ततोऽन्तिमे काण्डे सद्वारकमद्वारकं च यथार्हं द्वादशलक्षण्युक्तसर्वधर्मसमाराध्यमनन्तरचतुर्लक्षण्यवधारितसर्वदेवतशरीरकं परं दैवतं परीचिक्षिषितम् । तत्र सर्वेषां कारणवाक्यानामयोगान्ययोगव्यवच्छेदेन ब्रह्मणि समन्वयः प्रथमेऽध्याये प्रतिपाद्यते ; तदुक्तं न्यायसुदर्शने—

“ व्युदस्याविषयत्वान्यविषयत्वे समन्वयः ।
वाक्यानां ब्रह्मणि प्राचाध्यायेनेह प्रदर्श्यते ॥ ”

इति । तत्र शङ्कितविरोधोद्धूननं द्वितीयेऽध्याये । ताभ्यां स्थापिते ब्रह्मण्युत्पत्तिक्रमात् तृतीयचतुर्थाभ्यां साधनफलशोधनमिति विंशत्यध्याय्या विशिष्टक्रमत्वं दिङ्मात्रम् । हन्तैवमत्र कथं षोडशकचतुष्कपौर्वापर्यम् ? व्युत्क्रमेऽपि हि न विरोधः ; वेदप्रामाण्यादिकं तूपजीव्यमपि यथास्थानं शारीरके निबन्द्धुं शक्यम् ; तावन्मात्रं वा संश्रुत्य ब्रह्मचिन्ता स्यात् ; मैवम् ; अस्ति ह्यनाद्यभ्यस्ते त्रिवर्गे कर्मकृत् प्रथममा दोषदर्शनादभिनिविशत इत्यर्थक्रमः ; उभयत्र परिमितापरिमितफलापातप्रतीत्यविशेषेऽपि “अर्के चेन्मधु विन्देत” इति न्यायात् कर्मसापेक्षविद्याप्रयासतो वरं तन्नैरपेक्ष्यनिर्धूतविकल्पतत्समफलकर्मचिन्ता प्रथममिति च ; यज्ञादिपदार्थसापेक्षश्च तदङ्गकवाक्यार्थधीबोधः । विद्याभेदेषु तत्र तत्र यज्ञतदवयवदृष्टिविधिविमर्शश्च दृष्टिविशेषणनिर्धारणापेक्षः । इष्टकचितादिदृष्टान्तधियश्च दार्ष्टान्तिकोपजीव्याः । कर्मब्रह्मप्रचुरस्वाध्यायभागस्यानादिसंप्रदायनियताध्ययनसंस्कारक्रमेण तद्विचारक्रमोऽपि युक्तः । स चात्र मुख्यक्रम एव ; कर्मोपासनारूपाङ्गाङ्ग्युत्पत्तिक्रमाच्च । तथा चोक्तं न्यायसुदर्शने—

“ कर्मविज्ञानयोर्हेतुहेतुमद्भावसंमतेः ।
प्राग्भावः कर्मणः सिध्येत् पश्चाद्भावोऽपरस्य च ॥

तयोश्च क्रमवत्त्वेन तद्विचारौ च तादृशौ ।
मुख्यक्रमनयादेव स्यातां सारस्वताङ्गवत् ॥

यथा 'सारस्वतौ भवत एतद्वै दैव्यं मिथुनम्' इत्यत्र युगलोत्पन्ने यागद्वये कस्याङ्गानां प्राथम्यमित्यनिर्णये सरस्वतीयागस्य याज्यानुवाक्याभ्यां प्राथम्ये सिद्धे तत्क्रमेण तदङ्गानामेव प्राथम्यमुक्तम्—'मुख्यक्रमेण वाङ्गानां तदर्थत्वात्' इति ।"

पूर्वकाण्डप्रसिद्धानां न्यायानामिह संग्रहात् ।
ब्रह्मकाण्डो वृथेत्येतत्प्राच्याध्यायेष्वपि स्मर ॥ २४२ ॥
व्युत्पादनमपूर्वाणामाक्षिप्य स्थापनं तथा ।
अपवादः क्वचिच्चेति सार्थत्वमिह च स्थितम् ॥ २४३ ॥

ननु यदि "अनावृत्तिः शब्दात्" इत्यन्ता मीमांसा तदा शारीरकस्य विरक्ताधिकारत्वस्वीकारात् तत्र निर्दोषानन्तफलनिश्चयाच्च न स्वर्गादिफलसाधनानुष्ठाता कश्चित्सिध्येत्; ततश्च काम्यविधीनामननुष्ठानलक्षणमप्रामाण्यं स्यात्; मैवम्; मोहाद्विभ्राद्वा यः कर्ममात्रं विचार्य विश्रान्तः, यश्च ख्यातिलाभपूजाप्रवचनादिमात्रकामस्त्रय्यन्तार्थं चिन्तयेत्, यो वा पश्चान्नियतिवशान्निवृत्तवैराग्यः, ते श्रुतशारीरका अपि प्रवृत्तिधर्मं न जह्युः ।

पण्डितोऽप्यातुरः कश्चिदपथ्येषु प्रवर्तते ।
निषिद्धेष्वपि किं नैवं काम्यं प्राज्ञेऽपि संभवेत् ॥ २४४ ॥
कथ्यन्ते च महान्तोऽपि कामादुभयभावनाः ।
क्रममुक्तिश्च केषांचित् तत एवाभिधीयते ॥ २४५ ॥

## मूलभावप्रकाशिका

जिज्ञासापदं व्याचष्टे—**ज्ञातुमिच्छेति** । **इष्यमाणेति**; 'प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थस्यैव प्राधान्यम्' इति न्यायस्य औपगवादौ सामान्यतो दृष्टत्वेऽपि 'अश्वेन जिगमिषति' 'असिना जिघांसति' इत्यादौ सन्वाच्येच्छापेक्षया प्रकृत्यर्थस्यैव स्वतन्त्रोपस्थितिकत्वलक्षणशाब्दप्राधान्यस्य समभिव्याहृतपदान्तरार्थान्वयस्य च दर्शनात् "ब्रह्मजिज्ञासा" इत्यत्र प्रकृत्यर्थज्ञानस्यैवाध्याहृतकर्तव्यपदार्थान्वयसंभव इति भावः । इदं चोपलक्षणम् ।

इच्छाया विषयसौन्दर्यलभ्यत्वेन पुरुषेच्छाधीनकृतिसाध्यत्वाभावात् इष्यमाणस्य तु ज्ञानस्येच्छाधीनकृतिसाध्यतया पुरुषतन्त्रत्वेन विधेयत्वसंभवादित्यपि द्रष्टव्यम् । **विधीयत इति**; कर्तव्यत्वेन ज्ञाप्यत इत्यर्थः । नात्राप्रवृत्तप्रवर्तनं विधिशब्दार्थः, रागत एव विचारे प्रवृत्तेर्वक्ष्यमाणत्वात् । न च तर्हि प्रबन्धकर्तव्यताप्रतिपादनवैफल्यम्, रागतः प्रवृत्तस्यापि पूर्वपक्षियुक्तिमूलानारम्भणीयताबुद्धिनिरासकत्वेन साफल्यादिति । एवं सौत्राणि पदानि व्याख्याय संकलय्य वाक्यार्थं दर्शयति—**मीमांसेति**; पूर्वभागावगतकर्मणामल्पास्थिरफलत्वप्रतीतेरित्यर्थः । **उपरितनेति**; "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसानाशकेन" इत्यादिवाक्यविहितयज्ञाद्यङ्गकस्येति भावः । **अनन्ताक्षयफलत्वादिति**; अनन्ताक्षयफलत्वप्रतीतेः संभवादिति भावः । विचारितकर्मणो हि पुंसोऽनन्तस्थिरफलकनित्यनैमित्तिकादिभेदभिन्नयज्ञाद्यङ्गकब्रह्मोपासनप्रतीतिः संभवतीति भावः । ततश्च कर्मविचारस्य कर्मफलानित्यत्वप्रतीतिरूपविशेषणे अनन्तस्थिरफलयज्ञाद्यङ्गकब्रह्मोपासनप्रतीतिरूपविशेष्ये चोपयोगः प्रदर्शितो भवति । ततश्च कर्मफलानित्यत्वप्रतीतिविशिष्टानन्तस्थिरफलापातप्रतीतिविशिष्टाधिकारिसिद्धिः कर्मविचाराधीनेति दर्शितं भवति । वक्ष्यति हि— "तत्र कर्मविधिस्वरूपे निरूपिते कर्मणामल्पास्थिरफलत्वं दृष्ट्वाध्ययनगृहीतस्वाध्यायैकदेशोपनिषद्वाक्येषु चामृतत्वरूपानन्तस्थिरफलापातप्रतीतेस्तन्निर्णयफलवेदान्तवाक्यविचाररूपशारीरकमीमांसायामधिकरोति" इति । **पूर्ववृत्तात्कर्मज्ञानादनन्तर**मित्यनेनाथशब्दार्थ उक्तः । **तत एव हेतो**रित्यनेनातःशब्दार्थ उक्तः । **ब्रह्म ज्ञातव्य**मित्यनेन ब्रह्मजिज्ञासापदार्थ उक्त इति द्रष्टव्यम् । उक्तार्थस्य सांप्रदायिकत्वं दर्शयति—**तदाहेति** । ननु ब्रह्मविचाराविनाभूतेषु कर्मविचाराद्प्यन्तरङ्गेषु सर्वसंप्रतिपन्नेषु मुमुक्षादिषु सत्स्वतथाभूतस्य कर्मविचारस्य पूर्ववृत्तत्वाश्रयणं किमर्थम्? प्रायेणाकृतकर्मविचाराणामेव पुंसां ब्रह्मविचारे प्रवृत्तिदर्शनात् "संजातमोक्षाभिलाषस्यानन्तस्थिरफलब्रह्मजिज्ञासा ह्यनन्तरभाविनी" इति मुमुक्षाया अव्यवहितनियतपूर्ववृत्तित्वस्य भाषितत्वाच्चेत्यस्वरसादाह—**वक्ष्यति चेति**; वृत्तिकार इति शेषः । **शारीरकमिति**; जगच्छरीरकः परमात्मा शारीरः, तं कायति प्रतिपादयतीति शारीरकं बादरायणप्रणीतं शास्त्रम्; 'कै गै शब्दे' इति हि धातुः । **षोडशलक्षणेनेति**; जैमिनिः प्रथमतो द्वादशाध्यायीं प्रणीय तत्राविचारितः कर्मविषयः कियानंशोऽस्तीत्यालोच्य संकर्षणाख्यां चतुरध्यायीं प्रणिनायेति प्रसिद्धिः । इतिर्हेतौ ।

यतः षोडशाध्यायेन कर्मविचारेण शारीरकं शास्त्रमेकव्याख्येयव्याख्यानतया साक्षात्परंपरया च परमात्मरूपैकार्थपर्यवसायितया संहितमित्यर्थः । ननु शास्त्रैक्ये 'कर्ममीमांसा' 'ब्रह्ममीमांसा' इति भेदेन व्यवहारः कथमित्याशङ्क्य सोपपत्तिकवृत्तिकारवचनात् "अथातो धर्मजिज्ञासा" इत्यारभ्य "अनावृत्तिः शब्दात्" इत्यन्तस्य कर्मविशेषनियामकसंगतिविशेषविशिष्टस्यैकत्वे स्थिते यथा कर्ममीमांसायामेव प्रतिपिपादयिषितार्थभेदेन षट्कभेदाध्यायभेदव्यवहारः, एवमेकस्मिन्नेव शास्त्रे प्रतिपिपादयिषितकर्मब्रह्मरूपार्थभेदेन मीमांसावान्तरभेदव्यवहारो न विरुध्यत इत्याह—**अत** इति ; सोपपत्तिकवृत्तिग्रन्थादित्यर्थः । **मीमांसाशास्त्रमिति** ; एकमिति शेषः । **विशिष्टक्रममिति**; विशिष्टः विशेषितः क्रमः यस्य तत्तथोक्तम्, क्रमविशेषवदित्यर्थः । न च व्यासजैमिनिरूपकर्तृभेदात् कर्मब्रह्ममीमांसयोर्भेदः शङ्कनीयः; वामनजयादित्यकर्तृकवृत्त्योरिवैकग्रन्थत्वोपपत्तेः । ननु कर्मब्रह्ममीमांसयोरैकशास्त्र्ये उपक्रमे साधारणप्रतिज्ञया भवितव्यमिति चेत् ; उच्यते—"अथातो धर्मजिज्ञासा" इत्येव साधारणप्रतिज्ञा, अलौकिकश्रेयःसाधनवाचिधर्मशब्दस्य परमात्मसाधारणत्वात् । नन्वेवं श्येनादेरपि धर्मत्वप्रसङ्गः; न च बलवदनिष्टजनकत्वेन तद्विशेषणात् तद्व्यावृत्तिरिति वाच्यम्, तथा सति परमात्मनः सर्वकारणत्वेनाधर्मत्वप्रसङ्गादिति चेत्—मैवम् ; तथा हि सति ज्योतिष्टोमादेर्न धर्मत्वं स्यात्, "सर्वेभ्यो ज्योतिष्टोमः" इति तस्य सर्वफलसाधनत्वेन वैरिविपत्तिसाधनत्वेन तद्द्वारा नरकलक्षणबलवदनिष्टजनकत्वात् । वैरिविपत्तिफलकप्रयोगे तस्य धर्मत्वाभाव इष्ट एव; वैरिविपत्त्यादिफलकप्रयोगानवच्छिन्नस्यैव ज्योतिष्टोमस्य धर्मत्वमिति चेत्, तथा सति ब्रह्मणोऽननुष्ठेयपदार्थतया बलवदनिष्टानुबन्धिप्रयोगानवच्छिन्नत्वे सत्यलौकिकश्रेयःसाधनत्वस्य ब्रह्मण्यपि संभवात् ।

"ये च वेदविदो विप्रा ये चाध्यात्मविदो जनाः ।
ते वदन्ति महात्मानं कृष्णं धर्मं सनातनम् ॥"

इति महाभारतोक्तेश्च । यदि च "प्रणयेग्र महीपेषु प्रसादो मूर्तिमानयम्" इत्यस्य मूर्तिमत्त्वरूपप्रसिद्धप्रसादवैलक्षण्यविशिष्टप्रसादत्वारोप इव "रामो विग्रहवान्धर्मः" इत्यस्य विग्रहवत्त्वरूपप्रसिद्धधर्मवैलक्षण्यविशिष्टधर्मत्वारोप इव च सनातनत्वरूपप्रसिद्धधर्मवैलक्षण्यविशिष्टधर्मत्वारोपतात्पर्येणोपपन्नस्य पौराणिकवचनस्य "यमिन्द्रमाहुर्वरुणं यमाहुः" इत्यादिवाक्यतुल्यस्य "चोदनालक्षणोऽर्थो धर्मः" इति विचार्यधर्मशब्दार्थनिर्णयैकप्रयो-

जनकसूत्रवत् शब्दशक्तिनियामकत्वाभावात्, धर्मशब्दस्य ब्रह्मसाधारण्येऽपि जैमिनिनोभयविधधर्मविचारस्य प्रतिज्ञातत्वे तेनैव ब्रह्मसूत्राणामपि प्रणेतव्यताप्रसङ्गाच्च---न हि महर्षेर्विभ्रमशङ्कोत्प्रेक्षितुं शक्यते ; न हि स्वाचार्यस्य ब्रह्मसूत्रप्रणिनीषां दृष्ट्वोदासामासेति कल्पनमुपपत्तिमदिति——नेदं युक्तमिति मन्यसे, तर्हि कर्मब्रह्ममीमांसयोरैकशास्त्र्यस्य जैमिन्यविवक्षितत्वेऽपि कर्ममीमांसायाः परमात्माराधनमीमांसात्वेन ब्रह्ममीमांसात्वेनैकशास्त्र्यसंभवं मन्यमानेन बादरायणेन तदेकशास्त्रतया ब्रह्मसूत्राणि प्रणीतानि ।

" अतदर्थतया क्लृप्तमपि योग्यमपेक्षितम् ।
तादर्थ्यमर्हति ग्रामे कल्प्ये पूर्वतटाकवत् ॥ "

इति न्यायादित्याश्रयणे दोषाभावात् । साधर्म्यसमवैधर्म्यसमोभयानुयायिप्रतिधर्मसमजातेः साधारणप्रतिज्ञाभावेऽपि साधर्म्यसमवैधर्म्यसमजात्योर्लक्षणपरीक्षाया न्यायशास्त्रे दर्शनेनेहापि साधारणप्रतिज्ञाया अनावश्यकत्वाच्च । यदि तत्र साधारणप्रतिज्ञाया अर्थसिद्धत्वं तर्हि प्रकृतेऽप्युभयभागसाधारणप्रतिज्ञाया अर्थसिद्धत्वमस्तीति न किंचिदपहीनम् । ननु " शेषत्वात्पुरुषार्थवादो यथान्येष्विति जैमिनिः " इति सूत्रे ब्रह्मणः कर्मकर्तृजीवाभिन्नतया ब्रह्मविद्यायाः कर्मकर्तृसंस्काररूपत्वेन " ब्रह्मविदाप्नोति परम् " इत्यादितत्फलश्रवणमर्थवाद इति जैमिनिमतं पूर्वपक्षीकृत्य " अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् " इति सूत्रेण ब्रह्मणः कर्तृभिन्नतया न तद्विद्यायाः कर्मकर्तृसंस्कारत्वम् ; अतः फलश्रवणं नार्थवाद इति समर्थितम् । तथा "परामर्शं जैमिनिरचोदनाच्चापवदति हि" इति सूत्रे "त्रयो धर्मस्कन्धाः" इति चतुर्णामाश्रमाणामनुवादमात्रं क्रियते; न तत्र विधिरस्ति ; " वीरहा वा एष देवानां योऽग्निमुद्वासयते" इति संन्यासापवाददर्शनात् ऊर्ध्वरेतसामाश्रमाणामप्रामाणिकत्वमिति जैमिनिमतं पूर्वपक्षीकृत्य " अनुष्ठेयं बादरायणः साम्यश्रुतेः " " विधिर्वा धारणवत् " इति सूत्राभ्यां गृहस्थाश्रमवदाश्रमान्तराणामपि प्रामाणिकत्वं समर्थितम् । एवं विरुद्धयोर्जैमिनिबादरायणशास्त्रयोः कथमैक्यमिति चेत्—न ; कर्ममीमांसाशास्त्रे क्वापि ब्रह्मसंन्यासापलापस्यादर्शनात् । " परं जैमिनिर्मुख्यत्वात् " " भावं जैमिनिर्विकल्पामननात् " " तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमात् " इत्यादौ जैमिनेरपि ब्रह्मसंन्यासाभ्युपगमस्यैवोपलम्भात् । महाभारते हयशिरउपाख्यानादिषु भगवद्व्यासोपदेशलब्धपरमात्मतत्त्वज्ञानवत्त्वेन प्रतिपादितस्य जैमिनेर्ब्रह्मसंन्यासप्रतिक्षेपकत्वासंभवाच्च ।

ननु तथापि जैमिनिना "आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां तस्मादनित्यमुच्यते" इति सूत्रेणार्थवादादीनामक्रियार्थत्वेनानर्थक्यं पूर्वपक्षीकृत्य "विधिना त्वेकवाक्यत्वात्" इति सूत्रेण विध्येकवाक्यतया क्रियार्थतयैव तेषामानर्थक्यं परिहृतम्; भगवता तु बादरायणेन "तत्तु समन्वयात्" इति सूत्रे अक्रियारूपे ब्रह्मणि वेदान्तानां प्रामाण्यमुपपादितमिति कथमनयोरविरोध इति चेत्—सत्यम्; जैमिनिना विधिव्यतिरिक्तानां क्रियार्थतयैव प्रामाण्यमुपपादितम्; बादरायणेन तु 'पिता ते सुखमास्ते' 'नायं सर्पः' इत्यादिवाक्यवत् तादात्विकहर्षभयनिवृत्तिहेतुतया स्वतः पुरुषार्थपर्यवसायिनि वेदान्तभागे तस्य नियमस्यापवादोऽभिप्रेतः। न ह्येतावता तयोरैकशास्त्र्यं हीयते। तथा सति "कर्मण्यण्" "आतोऽनुपसर्गे कः" इत्युत्सर्गापवादसूत्रयोरप्येकशास्त्रता न स्यात्। नन्वष्टमे "विप्रतिपत्तौ हविषा नियम्येत कर्मणस्तदुपाख्यत्वात्" इति सूत्रे ऐन्द्रपुरोडाशे पुरोडाशरूपहविःसामान्यादाग्नेयविध्यन्तः, न त्विन्द्ररूपदेवतासामान्यात् सांनाय्यविध्यन्तः, हविस्त्यागरूपकर्मणो हविष्युपलभ्यमानत्वात्; हविर्हि त्यज्यमानं दृश्यते; देवता त्वप्रत्यक्षैव परं यागोद्देश्येति प्रतिपाद्य यागस्य देवताराधनरूपत्वात् देवतैव प्रसन्ना फलदात्री प्रधानभूतेति तत्सामान्यं हविःसामान्यात् बलीय इति शङ्कानिराकरणार्थं सूत्रितं "गुणत्वेन देवताश्रुतिः" इति। बादरायणेन तु "फलमत उपपत्तेः" इति सूत्रेण परमात्माराधनरूपतया सर्वं कर्म परमात्मप्रधानकं तत्कर्माराधितात्परमात्मन एव फलं न कर्मण इति स्वमतमुक्त्वा "धर्मं जैमिनिरत एव" इति सूत्रेण कर्मैवापूर्वद्वारा फलदायकमिति जैमिनिमतं पूर्वपक्षतया निर्दिश्य "पूर्वं तु बादरायणो हेतुव्यपदेशात्" इति परमात्मैव सर्वकर्मफलदाता, "स एवैनं भूतिं गमयति" इत्यादिकर्मविधिवाक्यशेषेषु वाय्वादिरूपस्य परमात्मन एव फलहेतुत्वव्यपदेशात्; क्षणविनाशिनः कर्मणः फलजनने द्वाराकाङ्क्षायां वाक्यशेषार्पितां देवताप्रीतिमपहाय द्वारान्तरकल्पनायोगादिति जैमिनिमतप्रतिक्षेपयुक्तिप्रदर्शनेन स्वमतं निर्धारितम्। एवं परस्परविरुद्धयोः कथमैकशास्त्र्यमिति चेत्; उच्यते—"आग्नेयोऽष्टाकपालः" इत्युत्पत्तिवाक्ये देवतायास्तद्धितार्थद्रव्योपसर्जनतयैव प्रतीतेर्द्रव्यस्य शब्दतः प्रधानत्वेनावगमात् द्रव्यसायुज्यमेव ज्याय इति "गुणत्वेन देवताश्रुतिः" इति सूत्रकृतोक्तम्; न तु देवतायाः कर्मसमाराध्यत्वलक्षणं प्राधान्यं निराकृतम्। ऐन्द्रपुरोडाशे अवघातादीनां पुरो-

डाशधर्माणामिव सांनाय्यधर्माणां दोहादीनामसंभवात् न सांनाय्यविध्यन्तप्रवृत्तिरित्यपि युक्तिस्तत्राभिप्रेता । " धर्मं जैमिनिरत एव " इत्यत्रापि " ज्योतिष्टोमेन स्वर्गकामो यजेत " इत्यादिवाक्ये कर्मण इष्टसाधनत्वश्रवणात् कर्मणः फलहेतुत्वमात्रं जैमिनिनोक्तम् ; न तु स्वोक्तरात्रिसत्रन्यायसिद्धार्थवादप्रतिपन्नपरमात्मप्रीतिद्वारकत्वमपीत्येतावानेव सूत्राभिप्रायः; न तु परमात्मनः फलदातृत्वं निराकृतमित्येतावत्पर्यन्तमपि ; तथात्वे " साक्षादप्यविरोधं जैमिनिः" इति परमात्मन एवाग्नीन्द्रादिशब्दवाच्यतया सर्वकर्मसमाराध्यत्वं जैमिन्यभिमतमिति प्रतिपादनस्यासंगतत्वापातात् । अत एव " देवता वा प्रयोजयेत् " इति नावमिकाधिकरणे देवताविग्रहादिनिरासोऽपि नानुपपन्नः; देवताविग्रहस्वीकारे भिन्नदेशस्थितैर्बहुभिर्यजमानैर्युगपदाहूतानामग्नीन्द्रादीनां सर्वत्र संनिधानासंभवात् , विग्रहस्यानित्यत्वेन वैदिकशब्दानामनित्यार्थसंयोगप्रसङ्गात् , एकस्या एव देवतायाः पयसा प्रीतायाः पशुप्रदत्वं दध्ना प्रीताया इन्द्रियप्रदत्वमित्यादिव्यवस्थाया उपपत्तिशून्यत्वात्, कर्मणां च देवतापूजारूपत्वे स्थण्डिले प्रतिमादिष्वपि तत्पूजासंभवेन तत्कर्मादरे हेत्वभावात् , "हींकाराय स्वाहा" इत्यादौ चेष्टितानामदेवतात्वेनाराध्यत्वासंभवाच्च प्रसन्नाया देवतायाः फलप्रदत्वं न श्रद्धेयमिति मन्यमानानां मन्दधियां धियमनुसृत्यैव इन्द्रविरोचनयोः " य एषोऽक्षिणि पुरुषो दृश्यते " इति वाक्यजनितं प्रतिबिम्बात्मभ्रममनुसृत्यैवोदशरावब्राह्मणानन्तरम् " एष आत्मेति होवाच " इति प्रजापत्युपदेशवत् देवताविग्रहानभ्युपगमेनैव तच्छङ्कां पर्यहार्षीत् । न ह्येतावता शास्त्रैक्यं विहन्यते, प्रतिपिपादयिषितार्थविरोधाभावात् ; एकस्मिन्नेव ग्रन्थे शङ्कापरिहाराणां बहुविधानां प्रदेशभेदेन बहुलमुपलम्भात् । नन्वारम्भणाधिकरणे अवयवातिरिक्तमवयव्यन्तरं नास्तीत्युक्तम् ; " अग्निधर्मः प्रतीष्टकं संघातात् पौर्णमासीवत् " इति नावमिकाधिकरणे इष्टकातिरिक्तस्याग्निरूपस्यावयविनः सद्भावात् " हिरण्यशकलैरग्निं प्रोक्षति " इति विधीयमानं प्रोक्षणं न प्रतीष्टकं कर्तव्यम् , अपि त्विष्टकारब्धाग्नावित्युक्तम् । एवं सति विरोधः सिद्ध इति चेत्——न ; इष्टकास्वेकत्रावस्थाप्राप्तिसदसद्भावमात्रविचाररूपतया तस्याधिकरणस्यैकत्वाश्रयद्रव्यारम्भसदसद्भावविचाररूपत्वाभावात् दुष्परिहरविरोधानुपलम्भात् पूर्वोत्तरवेदभागयोरिव तद्व्याख्यानमीमांसयोरपि सिद्धमैक्यम् । नन्वस्तु शास्त्रैक्यम् ; तथाप्यव्यवहितपूर्ववर्तिषु मुमुक्षादिषु सत्सु व्यवहितानियतपूर्ववर्तिनः कर्मविचारस्याथशब्दनिर्दिष्टानन्तर्यप्रतियोगित्वाश्रयणं किमर्थमिति शङ्कायाः कः

प्रतिहारः कृतः स्यादिति चेत्; उच्यते—प्रमाणभेदलक्षणविचारशून्यानां शेषलक्षणोपयुक्तांशमात्रं विद्वद्भ्यः श्रुतवतामपि शेषलक्षणार्थजिज्ञासया शेषलक्षणारम्भदर्शनात् शेषलक्षणार्थजिज्ञासाव्यवहितनियतपूर्ववर्तिभेदविचारस्य "अथातः शेषलक्षणम्" इति सूत्रे अथशब्दनिर्दिष्टानन्तर्यप्रतियोगित्वाश्रयणं किमर्थमिति पर्यनुयोगस्यापि सुशकत्वात्; "अथानुमानं निरूप्यते" "अथातः क्रत्वर्थपुरुषार्थयोर्जिज्ञासा" इत्यादौ सर्वत्राप्यस्याक्षेपस्य सुलभत्वात्। यदि च पूर्ववृत्तस्योपयोगमात्रमभिप्रेतम्; पूर्वापरग्रन्थैकवाक्यताप्रयोजकाकाङ्क्षाजनकज्ञानविषयसंगतिप्रदर्शकाथशब्दनिर्दिष्टानन्तर्यप्रतियोगितया ग्रन्थकृतां व्यवहारोऽस्तीति मन्यसे, तर्हि प्रकृतेऽपि षोडशलक्षण्याः कर्मफलानित्यत्वानन्तस्थिरफलप्रतीतिद्वारोपयुक्तत्वात् पूर्वतन्त्रकृतप्रामाण्यादिविचाराणामुत्तरमीमांसायां प्रायेणापेक्षितत्वाच्च कर्मविचारस्याथशब्दनिर्दिष्टानन्तर्यप्रतियोगित्वाश्रयणे न काप्यनुपपत्तिरित्यलमतिचर्चया।

### न्यायसुदर्शनम्

जिज्ञासापदे धात्वर्थं प्रतीच्छा गुणत्वेनान्विता निर्णयात्मकज्ञानस्य विचारमाक्षिपन्ती तदर्था भवतीत्यर्थः। "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति" इत्यत्रापीच्छाया इष्यमाणप्रधानत्वात् वेदनकर्मणि विनियुज्यते; यथा 'असिना जिघांसति' 'अश्वेन जिगमिषति' इत्यादिष्वस्यश्वादेर्हननगमनाद्यर्थत्वम्, नेच्छाशेषत्वमित्यभिप्रायः।

### श्रीभाष्यम्

तथाहि—प्रथमं तावत् "स्वाध्यायोऽध्येतव्यः" इत्यध्ययनेनैव स्वाध्यायशब्दवाच्यवेदाख्याक्षरराशेर्ग्रहणं विधीयते। तच्चाध्ययनं किंरूपं कथं च कर्तव्यमित्यपेक्षायाम् "अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयेत्" इत्यनेन

"श्रावण्यां प्रौष्ठपद्यां वा उपाकृत्य यथाविधि।
युक्तश्छन्दांस्यधीयीत मासान् विप्रोऽर्धपञ्चमान्॥"

इत्यादिव्रतनियमविशेषोपदेशैश्चापेक्षितानि विधीयन्ते। एवं सत्सं-

**तानप्रसूतसदाचारनिष्ठात्मगुणोपेतवेदविदाचार्योपनीतस्य व्रतनियमविशेषयुक्तस्याचार्योच्चारणानूच्चारणरूपमक्षरराशिग्रहणफलमध्ययनमित्यवगम्यते ।**

### श्रुतप्रकाशिका

पूर्वोक्तस्य साङ्गसशिरस्काध्ययनस्य प्रमाणं दर्शयन् साधनचतुष्टयसंपादनस्यानवसरग्रस्ततां च दर्शयन् प्रतिज्ञातार्थत्रयमुपपादयितुमाह—**तथाहीति** । प्रतिज्ञातार्थत्रयोपपादनार्थमध्ययनविधिं निरूपयति—**प्रथमामिति** । ननु वेदप्रामाण्यसमर्थनमिव कर्मविचारसिद्धमध्ययनविधिनिरूपणं किं नोपजीव्यत इति चेत्—न ; अर्वाचीनव्याख्यातृभिरर्थज्ञानपर्यन्ततायास्तत्रोक्तत्वात् ; अक्षरराशिग्रहणपर्यन्तत्वं हि भगवद्बादरायणाभिमतम् ; "अध्ययनमात्रवतः" इति हि वक्ष्यते । अतस्तत्र वक्ष्यमाणोऽर्थः शास्त्रारम्भणीयत्वायात्र प्रतिपाद्यते । अध्ययनविधेरक्षरराशिग्रहणमात्रपर्यन्तत्वे निरूपिते शास्त्रस्यारम्भणीयत्वसिद्धिः ; कृत्स्नविषयत्वनिरूपणेनैकशास्त्र्यपौर्वापर्यनियमसिद्धिः । कथमक्षरराशिग्रहणमात्रपरत्वे आरम्भणीयत्वम् ? इत्थम्—अध्ययनविधेरर्थज्ञानपर्यन्तत्वे सत्यर्थज्ञानस्य "अधीत्य स्नायात्" आचार्यकुलाद्वेदमधीत्याभिसमावृत्य" इति यज्ञाद्यनुष्ठानशेषत्वेन विनियोगादुपनिषत्सिद्धस्य ब्रह्मज्ञानस्यापि कर्मशेषत्वापत्तेः, तस्य च ज्ञानस्य "आत्मा वा इदम्" "ब्रह्म वा इदम्" "अयमात्मा ब्रह्म" इति त्रय्यन्तस्थब्रह्मशब्दस्यात्मपर्यायत्वेनात्मविषयत्वादात्मज्ञानस्य व्रीह्यादिद्वारा प्रोक्षणादेरिवात्मद्वारा कर्मशेषत्वे सति द्वारभूतव्रीह्यादेरिव द्वारभूतात्मनश्च कर्मशेषत्वं स्यात् । न च समुद्रादिध्यानवदात्मज्ञानस्यादृष्टद्वारा कर्मशेषत्वात् समुद्रवदात्मा न कर्मशेष इति वाच्यम् ; कर्मशेषतयावक्लृप्तस्यात्मनो द्वारभावे संभवत्यदृष्टकल्पनायोगात् । समुद्रस्य तु क्रतूपकारकत्वासंभवेन ह्यदृष्टकल्पनम् । नन्वात्मनः फलप्रदतया शेषत्वमस्त्विति चेत्—न ; संप्रतिपन्नेनात्मनात्मज्ञानस्य कर्मशेषत्वे निरूढेऽप्यसंप्रतिपन्नात्मकल्पनायोगात् ; न हि जीवविलक्षण आत्मा संप्रतिपन्नः ; अतोऽनुष्ठानशेषभूत आत्मा कर्मसु कर्तृभूतो जीव एवेति वेदान्तानां जीवपरत्वेन तदतिरिक्तेश्वरे प्रमाणाभावादप्रामाणिकेश्वरविचाररूपं शास्त्रमनारम्भणीयमिति प्राप्नुयात् । अक्षरराशिग्रहणमात्रपर्यन्तत्वे त्वर्थज्ञानस्यानुष्ठानशेषत्वा-

भावेन कर्मसु कर्तृभूतजीवातिरिक्तात्मप्रतिपादनसंभवात् प्रामाणिकपरमात्मविचाररूपं शास्त्रमारम्भणीयं स्यादित्यतोऽध्ययनविधिर्निरूप्यते। तत्राध्ययनस्य सक्तुहोमवत् प्रधान-कर्मत्वं, स्वरूपेण विधेयत्वम्, अध्यापनविधिप्रयुक्तत्वम्, उपनयनस्याध्यापनाङ्गत्वं च प्राभाकराभिमतमनादृत्य अध्ययनस्यावघातवत् गुणकर्मत्वम्, नियमस्य विधेयत्वम्, अध्यय-नस्य स्वविधिप्रयुक्तत्वम्, उपनयनस्याध्ययनाङ्गत्वं चेति कौमारिलाभिमतमर्थचतुष्टयम्, उभयानभिमतमक्षरराशिग्रहणमात्रपर्यन्तत्वं च संग्रहेण प्रतिजानीते—**प्रथममिति**। **प्रथमं तावत्**; प्रथमत एव; "यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे" इति नैघण्टु-काः। प्राथम्यं शास्त्रान्तरश्रवणयोग्यावस्थापेक्षया पूर्वभावित्वम्; गर्भाष्टमोपनीतस्य ह्यध्ययनम्; ततः पूर्वं शास्त्रान्तरपरिश्रमानर्हत्वादध्ययनविधिपरतन्त्रस्य साङ्गाध्ययनानन्तरं कर्म-विचारावश्यंभावस्य स्वरससिद्धत्वाच्च साधनचतुष्टयादिपूर्ववृत्तान्तरनिष्पादनस्यानवसरग्रस्तत्वं 'प्रथमं तावत्' इत्यनेन फलितम्। लौकिकाक्षरराशिव्यावृत्त्यर्थो वेदाख्यशब्दः। वेदाख्यशब्देन कृत्स्नाध्ययनं च सूचितम्; न हि वेदान्तभागमात्रं स्वाध्यायशब्दवाच्यम्। 'अध्ययनेन' इति निर्देशेन गुणकर्मत्वं सूचितम्, भावार्थस्यान्यनिष्ठत्वप्रतीतेः। यदि प्रधानकर्मत्वमविवक्षिष्यत् तदा हि 'स्वाध्यायेनाध्ययनं संपाद्यम्' इति वचनव्यक्तिर-भविष्यत्। एवकारेण नियमविधित्वं द्योतितम्; न तु पुस्तकनिरीक्षणादिनेत्यर्थः। "स्वाध्यायोऽध्येतव्यः" इत्यध्ययनविधिवाक्योपादानेन स्वविधिप्रयुक्तत्वं सूचितम्; न हि "अध्यापयेत्" इति वाक्यमुपात्तम्। प्राथम्यवचनादध्ययनस्योपनयनाङ्गत्वं च फलितम्; शास्त्रान्तरपरिश्रमायोग्यगर्भाष्टमवर्षाभिप्रायेण हि प्राथम्यमुक्तम्। अध्ययन-स्य हि प्राथम्यम् "अष्टवर्षं ब्राह्मणमुपनयीत" इत्युपनयनविषयतयोक्तस्य कालस्योपनय-नद्वाराध्ययनशेषत्वे सत्येव ह्युपपद्यते। एवमर्थपञ्चकं संक्षेपेण प्रतिज्ञातं भवति। अस्मि-न्नध्ययनविधिवाक्येऽध्ययनस्य प्राथम्यं साङ्गत्वमुपनयनाङ्गकत्वं च न प्रतीतम्; "उपन-यीत तमध्यापयेत्" इति वाक्यान्तरेणाध्ययनस्याध्यापनविधिप्रयुक्तत्वमध्यापनस्योपनयना-ङ्गकत्वं च प्रतीयत इति शङ्कायामाह—**तच्चेति**। चः शङ्कानिवृत्तौ। **तत्**; "स्वाध्या-योऽध्येतव्यः" इति वाक्यप्रतिपादितमित्यर्थः।

"आद्ये त्वध्ययने नैव काचिदस्ति फलश्रुतिः।
धारणे जपयज्ञे च या साप्येवं निवारिता॥"

इति जपादेरप्यध्ययनशब्दवाच्यत्वात्तेषु प्रस्तुताध्ययनस्याद्याध्ययनत्वनिश्चयायाह—**किंरूपमिति;** किं सकृदुच्चारणरूपम्, आहोस्विदसकृदुच्चारणरूपम्, किं वा स्वतन्त्रोच्चारणरूपम्, उत परतन्त्रोच्चारणरूपमित्यर्थः। परतन्त्रासकृदुच्चारणरूपत्वे ह्याद्याध्ययनत्वसिद्धिः। **कथम्;** किमङ्गकमित्यर्थः। 'इत्यपेक्षायाम् अपेक्षितानि विधीयन्ते' इत्यन्वयः। प्राथम्यं परतन्त्रोच्चारणरूपत्वमुपनयनाङ्गकत्वं च दर्शयितुमाह—**अष्टवर्षमिति।** **अनेन** प्राथम्यं सिद्धम्; उपनयनद्वाराध्ययनशेषत्वात् कालस्य। "ब्राह्मणमुपनयीत" इति द्वितीयाश्रुत्या माणवकशेषत्वावगमादुपनयनस्य तद्गताध्ययनाङ्गत्वसिद्धिः; उपनयनस्याकर्त्रभिप्रायसूत्रविहितत्वाच्च नाध्यापनाङ्गत्वसिद्धिः; "अध्यापयेत्" इत्यनेन परतन्त्रोच्चारणरूपत्वसिद्धिः। "द्वादशाहेन प्रजाकामं याजयेत्" "अन्नाद्यकामं याजयेत्" "निषादस्थपतिं याजयेत्" इति प्रतिपन्नस्य याजनस्येवार्थार्जनार्थतया रागप्राप्तस्याध्यापनस्याविधेयत्वादध्यापनेऽधिकारिविशेषाश्रवणाच्चाध्ययनस्याध्यापयितृपूर्वकत्वमुच्यत इत्ययमध्ययनाङ्गविधिरिति भावः। उपाकर्मादिव्रतनियमाङ्गत्वं साङ्गत्वं च दर्शयितुमाह—**श्रावण्यामिति।** '**अर्धपञ्चमान्।** **इत्यादि**' इत्यादिशब्देनोपात्तैः

"अत ऊर्ध्वं तु छन्दांसि शुक्लेषु नियतः पठेत्।
वेदाङ्गानि च सर्वाणि कृष्णपक्षेषु संपठेत्॥"

इत्यादिवचनैरङ्गाध्ययनस्य कालो दर्शितः। व्रतमुपाकर्मकाण्डव्रतादि। नियमः "पद्यु वा एतत् श्मशानं यच्छूद्रस्तस्माच्छूद्रसमीपे नाध्येतव्यम्" इत्याद्युक्तदेशकालभक्ष्याभक्ष्यादिव्यवस्थारूपः। 'अध्यापयेदित्यनेन' 'व्रतनियमोपदेशैश्च' इति पृथङ्निर्देशः श्रुतित्वस्मृतित्वविभागाद्विप्रतिपन्नत्वसंप्रतिपन्नत्वविभागाच्च कृतः। उपाकर्मादिव्रतनियमवदुपनयनमप्यध्ययनाङ्गमिति भावः। किंरूपम्? कथं च कर्तव्यम्? इत्यपेक्षायामेभिरङ्गविधायकवाक्यैरपेक्षितानि विधीयन्त इत्यर्थः। ननु "अष्टवर्षं ब्राह्मणम्" इत्यत्रोपनयनस्याध्ययनाङ्गत्वमवगम्यत इत्युक्तम्; तदयुक्तम्; तस्योपनेयासत्तिद्वाराध्येतृसाकाङ्क्षाध्यापनाङ्गत्वं ह्यवगम्यते; "उपनीय तु यः शिष्यं वेदमध्यापयेद् द्विजः" इत्यादिस्मृतिवचनाच्च तदवगम्यते। उच्यते—"ब्राह्मणमुपनयीत" इत्यत्र द्वितीयाश्रुत्योपनयनस्य माणवकशेषत्वमवगम्यते। माणवकशेषमुपनयनम्; अध्ययनं च तद्गतम्; तत्रान्तरङ्गबहिरङ्गन्यायादुपनयनमध्ययनाङ्गमेव। ननु—

"उपनीय तु यः शिष्यं वेदमध्यापयेद् द्विजः ।
सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते ॥"

इति वचने क्त्वाश्रुत्योपनयनस्याध्यापनाङ्गत्वं युक्तम्; अन्तरङ्गत्वं हि वस्तुसामर्थ्यरूपं लिङ्गम्; ततः क्त्वाश्रुतिर्बलीयसीति चेत्—न; अन्तरङ्गत्वं हि प्रत्यक्षश्रुतिसिद्धम्; क्त्वाश्रुतिस्तु स्मृतिगता अनुवादवचनस्था च; अतोऽस्याः स्मृतिवचनस्थत्वान्मूलश्रुतिसापेक्षत्वम्; अनुवादरूपवचनगतत्वाद्विध्यन्तरसापेक्षत्वमिति विलम्बद्वयमस्ति; श्रुतिलिङ्गादिषु विलम्बितधाहेतुत्वं हि पारदौर्बल्यहेतुः; अतो विलम्बद्वयोपहता क्त्वाश्रुतिर्न बलीयसी। किंच श्रोत्रियोपाध्यायगुर्वादिनामविधानवत् तत्प्रकरणस्थमिदं वचनमुपनीयाध्यापयितुराचार्यनामविधानपरमिति न क्त्वाश्रुतिरुपनयनस्याध्यापनाङ्गत्वे प्रमाणं भवितुमर्हति। किं च "स्वरितञितः कर्त्रभिप्राये क्रियाफले" इत्यात्मनेपदे प्राप्तेऽपि "संमाननोत्सञ्जनाचार्यकरणज्ञानभृतिविगणनव्ययेषु नियः" इति पुनर्विधानस्याकर्त्रभिप्रायार्थत्वादुपनयनस्य नाध्यापनाङ्गत्वं युक्तम्; "अकर्त्रभिप्रायार्थोऽयमारम्भः" इति हि वृत्तिकारः। ननु कर्त्रभिप्रायत्वं कर्तर्येव फलस्याभिप्रेतत्वम्; तदवधारणनिषेधार्थं पुनर्विधानम्; अतः फलमुभयान्वयि; अतो माणवकद्वारेणाचार्यान्वय्युपनयनफलमित्यध्यापनाङ्गत्वं युक्तमिति चेत्—न; "अग्नीनादधीत" इत्यत्र कर्त्रभिप्रायसूत्रविहितेऽप्यात्मनेपदे फलस्योभयान्वयितया पुनर्विधानस्य नियमनिषेधार्थत्वाभावेन कर्त्रभिप्रायत्वमात्रनिषेधार्थत्वात्। अतो नाध्यापनाङ्गत्वम्। ननु कर्त्रभिप्रायशब्देन कर्तृव्यतिरिक्ते चेतने फलानन्वयो विवक्षितः; अतो न "अग्नीनादधीत" इति व्यभिचारः; पुनर्विधानस्य तन्निवारणार्थत्वे फलस्याचार्येऽप्यन्वयोपपत्तेरध्यापनाङ्गत्वमिति चेत्—न; "ऋत्विजो वृणीते" इत्यत्र "स्वरित—" इत्यादिसूत्रविहितेऽप्यात्मनेपदे फलस्य कर्तृव्यतिरिक्तचेतनान्वयदर्शनेन पुनर्विधानस्य नियमनिषेधार्थत्वाभावात्; अतः कर्त्रभिप्रायमात्रनिषेधार्थं पुनर्विधानमिति नाध्यापनाङ्गमुपनयनम्। ननु क्रियाफलं नाम क्रियानन्तरभावि फलम्; तस्य कर्तर्यन्वितत्वं कर्त्रभिप्रायत्वम्; अत आचार्यकस्योपनयनक्रियानन्तरभावित्वाभावादव्यवहितफलस्य कर्तृगतत्वाभावाच्चात्मनेपदस्याप्राप्तावव्यवहितफलस्याकर्त्रभिप्रायत्वेऽप्यात्मनेपदं "संमानन—" इत्यादि सूत्रेण विधीयते; अतोऽकर्त्रभिप्रायार्थत्वेऽपि व्यवहिताचार्यकनिष्पत्त्यर्थतयाध्यापनाङ्गत्वमुपनयनस्याविरुद्धमिति चेत्—मैवम्; "अग्नीनादधीत"

इत्यत्र "स्वरित—" इति विहितेऽप्यात्मनेपदे अग्निसंस्कारव्यवहितस्याहिताग्नित्वापत्तिरूपफलस्य कर्त्रन्वयित्वदर्शनात्। अतोऽकर्त्रभिप्रायार्थं "संमानन—" इत्यादि सूत्रं फलमात्रस्य कर्त्रन्वयनिवारणार्थम्। संस्कारविशिष्टोऽग्निः फलमित्याधानकर्तरि न व्यवहितफलान्वय इति चेत्, तर्ह्युपनयनसंस्कारविशिष्टमाणवकसिद्धिरेवाव्यवहितं फलमिति कर्त्रभिप्रायसूत्रेणैवात्मनेपदसिद्धेरकर्त्रभिप्रायसूत्रवैयर्थ्यं स्यात्। ननु यद्येवं व्यवहितमव्यवहितं वा फलमात्रमकर्त्रभिप्रायसूत्रेण निवार्यते तर्ह्युपनेतुः प्रवृत्तिर्नोपपद्यते; यतः "प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते" इति; मैवम्; उपनयनफलस्य माणवकान्वयित्वेऽपि "आचार्याय वरो देयः" इति विध्यन्तरप्राप्तदक्षिणाफललिप्सया प्रवृत्त्युपपत्तेः। न च तेनाकर्त्रभिप्रायत्वविरोधः, असाधारणफलानन्वयविषयत्वादकर्त्रभिप्रायसूत्रस्य। अव्यवहितक्रियाफलस्य कर्त्रभिमतत्वं कर्त्रभिप्रायत्वं, तदनभिमतत्वमकर्त्रभिप्रायत्वमित्यप्ययुक्तम्, क्रियाफलस्य कर्त्रनभिमतत्वव्याघातात्; आचार्यकनिष्पत्त्युपयोगिनो माणवकसंस्कारस्याचार्यानभिमतत्वानुपपत्तेः। अत उपनयनमध्येष्यमाणमाणवकासत्तिमुखेन नाध्यापनाङ्गम्; अपि त्वध्ययनाङ्गमेव। अध्ययनं च नाध्यापनविधिः प्रयुङ्क्ते। "अध्यापयेत्" इति तु "द्वादशाहेन प्रजाकामं याजयेत्" इत्यादिवदित्युक्तम्। यद्यपि "प्रजाकामम्, अन्नाद्यकामम्" इति वत् प्रयोज्यव्यापारस्याध्ययनस्याधिकारिविशेषणं फलं न श्रूयते, तथापि स्वाध्यायसिद्धिरधिकारिविशेषणं स्यात्; "स्वाध्यायोऽध्येतव्यः" इति स्वाध्यायस्याध्ययनसाध्यत्वावगमात्; यथा—"अग्नीनादधीत" इत्यत्राग्नीनामाधानसाध्यत्वावगमादग्निसिद्धिरधिकारिविशेषणं तद्वत्। न च स्वविधिप्रयुक्तत्वेऽध्ययनस्यानुष्ठात्रभावः; सन्ति हि प्रबुद्धाध्येतारः; तथाच भगवानापस्तम्बः—"तस्मिन्नभिजनविद्यासमुदेतं समाहितं संस्कर्तारमीप्सेत्" इति। तेषु परविधिप्रयुक्तत्वे सत्यध्ययनं नोपपद्यते। अप्रबुद्धविषये तु स्वतन्त्रस्याध्ययनविधेर्माणवकविषयत्वं ज्ञात्वा हितैषिणो माणवकमध्ययनादि कारयन्ति। अतः प्रबुद्धेष्वप्रबुद्धेषु च स्वविधिप्रयुक्तत्वमध्ययनस्य युक्तम्। परविधिप्रयुक्तत्वे नित्यस्याध्ययनस्य काम्यविधिप्रयुक्तत्वं स्यात्; ततश्चानुष्ठाननियमो न स्यात्। आचार्यककामो ह्यध्यापकः; तस्याचार्यककामनाया अभावेऽध्ययनासिद्धेः। अध्यापकबाहुल्यात्तत्सिद्धिरिति चेत्—न; अध्यापकेभ्योऽप्यध्येतृबाहुल्यदर्शनात्। आधानस्योत्तरक्रतुविधिप्रयुक्तत्वेऽपि न काम्य-

विधिमात्रप्रयुक्तत्वम्, "वसन्ते वसन्ते ज्योतिषा यजेत" "यावज्जीवमग्निहोत्रं जुहोति" इति नित्यविधिसद्भावादित्येवमाद्यनुसंधेयम्। अतो यथोक्त एवार्थः। अङ्गविध्युपेतेन प्रधानविधिनाङ्गस्वरूपमङ्गिस्वरूपं च कथं प्रतिपन्नमित्यत्राह— **एवमिति**। **एवम्**; अङ्गविधिभिः सह प्रधानविधौ निरूपित इत्यर्थः। **सत्संताने**त्यादिना "तस्मिन्नभिजनविद्या—" इत्यापस्तम्बवचनार्थोऽनुसंहितः। आत्मगुणा अक्रोधादयः; अनेन समाहितशब्दार्थ उक्तः। वेदविच्छब्देन विद्यासमुदेतशब्दार्थ उक्तः। **वेदविदाचार्योपनीतस्ये**त्याचार्यविशेषणमुपनयनद्वारा माणवकार्थम्; यथोपनयनस्याध्यापनाङ्गत्वे माणवकविशेषणमाचार्यार्थं तद्वदिति भावः। **व्रतनियमविशेषयुक्तस्य**; व्रतनियमविशेषवदाचार्यविशेषणमपि माणवकार्थमिति भावः। **आचार्योच्चारणानूच्चारणमिति** परतन्त्रोच्चारणरूपता दर्शिता। **अक्षरराशिग्रहणफलमिति** पदमसकृदावृत्तिरूपत्वस्याक्षेपकं दर्शयति; यथा "व्रीहीनवहन्ति" इत्यत्र दृष्टफलत्वस्याप्यपरित्याज्यत्वेनावहननस्य वैतुष्यपर्यन्तत्वादश्रुताप्यावृत्तिः सिद्धा, तद्वदत्रापि सामर्थ्यादावृत्तिः सिद्धा, दृष्टप्रयोजनापरित्यागेनैव नियमस्य विधेयत्वात्। 'आचार्योच्चारणानूच्चारणम्' इत्यनेन 'वेदविदाचार्योपनीतस्य' इत्यनेन चाध्ययनस्याध्यापयितृसापेक्षत्वेन परतन्त्रोच्चारणरूपत्वं, स्वविधिप्रयुक्तत्वम्, उपनयनाङ्गत्वं चोक्तम्। 'आचार्योच्चारणानूच्चारणमक्षरराशिग्रहणफलम्' इत्यनेन किंरूपमित्याकाङ्क्षा शमिता। 'वेदविदाचार्योपनीतस्य व्रतनियमविशेषयुक्तस्य' इत्यनेन कथं च कर्तव्यमित्यपेक्षा पूरिता। 'अक्षरराशिग्रहणफलम्' इत्यनेन स्वाध्यायग्रहणकामत्वमध्ययनाधिकारिविशेषणमित्यपि सूचितम्।

## भावप्रकाशिका

**आत्मज्ञानस्य व्रीह्यादिद्वारेति**; नन्वात्मनः कर्मशेषत्वे सत्येवात्मज्ञानस्यात्मद्वारा शेषत्वं स्यादिति वक्तुमुचितं, न तु व्यत्यासेन ज्ञानस्यात्मद्वारा शेषत्वे सत्यात्मनः शेषत्वं स्यादितीति चेत्—न; 'कर्मशेषत्वे' इति निमित्तसप्तमी "चर्मणि द्वीपिनं हन्ति" इतिवत्; सतीत्यस्य सामीचीन्यमर्थः; समीचीने आत्मद्वारा कर्मशेषत्वे आत्मनः कर्मशेषत्वमुपयुक्तं स्यादिति। शेषत्वस्य सामीचीन्यं नाम संनिपातित्वम्। ततश्चात्मज्ञानस्य कर्मशेषत्वे व्रीहिद्वारा प्रोक्षणस्येवात्मद्वारा संनिपातित्वलक्षणं समीचीनं शेषत्वं सिध्येदिति भावः। **आत्मनो द्वारभावे संभवतीति**; संस्कार्यतया द्वारभावसंभव

इत्यर्थः । **फलप्रदतया शेषत्वमस्त्विति चेदिति ;** न चैवं देवतायाः कर्मवत् फलप्रदत्वेन कर्मतुल्यकक्ष्यतया समप्राधान्यप्रसङ्ग इति वाच्यम् , भोक्तृत्वार्थानामपि श्मश्रुवपनादीनां यागतुल्यकक्ष्यत्वाभावेन यागाङ्गत्ववदुपपत्तेः 'फलप्रदतयाशेषत्वमस्ति' इति पाठेऽपि यागशेषिभूतभोक्तृत्वार्थानां श्मश्रुवपनादीनां यागार्थत्ववत् यागशेषिभूतपरमात्मार्थानामपि यागाङ्गत्वमविरुद्धमेवेति द्रष्टव्यम् । **न तु पुस्तकनिरीक्षणादिनेति ;** अर्थज्ञानेऽध्ययननियमो भाट्टैरुक्तः ; स त्वर्थज्ञानकामनाखण्डनेन प्रत्याख्यातो गुरुणा ; अस्मदभिमतेऽक्षरग्रहणार्थाध्ययननियमे स्वाधीनोच्चारणक्षमत्वलक्षणाक्षरग्रहणकामनासंभवादुपायान्तरसत्त्वेन व्यावर्त्यसंभवाच्च नियमविधित्वमप्रकम्प्यमिति भावः । **उपनयनद्वाराध्ययनशेषत्वे सतीति ;** न च प्रथमशब्दाभिप्रेतस्याष्टमवर्षस्याध्ययनं प्रत्यप्याधारतया नोपनयनद्वारा शेषत्वमिति वाच्यम् ,

"श्रावण्यां प्रौष्ठपद्यां वा उपाकृत्य यथाविधि ।
युक्तश्छन्दांस्यधीयीत मासान् विप्रोऽर्धपञ्चमान् ॥"

इत्यष्टमवर्षान्तर्गतिनियमशून्यकालविशेषे विहितस्य "द्वादशवर्षाण्येकवेदे ब्रह्मचर्यं चरेत् प्रतिद्वादश वा सर्वेषु" इत्यनेकसंवत्सरसाध्यस्याध्ययनस्याष्टमवर्षाङ्गकत्वासंभवेनोपनयनस्यैवाष्टमवर्षाङ्गकत्वं वक्तव्यमिति सिद्धम् । ततश्चोपनयनाङ्गभूतकालमध्ययनाङ्गतयोपचारतो निर्दिशन् भाष्यकारो ज्ञापयति उपनयनाध्ययनयोरङ्गाङ्गिभावोऽस्तीति । **उपनयनद्वाराध्ययनशेषत्वात् कालस्येति ;** अष्टमवर्षाङ्गकोपनयनाङ्गकस्याध्ययनस्य प्राथम्यं सिध्यतीति भावः । **अकर्त्रभिप्रायसूत्रविहितत्वाच्चेति ;** आत्मनेपदस्येति शेषः । अकर्त्रभिप्रायसूत्रं "संमानन—" इति सूत्रम् । **अध्ययनाङ्गविधिरिति ;** ननु उपनयनस्य दृष्टद्वारसंभवेऽदृष्टकल्पनाया अन्याय्यत्वादध्ययनं गुरूच्चारणानूच्चारणमेव, न स्वतन्त्रमित्यध्यापयितृपूर्वकत्वमाक्षेपसिद्धमित्यध्यापयितृपूर्वकत्वसिद्ध्यर्थमध्यापयितृपूर्वकत्वरूपमध्ययनाङ्गं नानेन वाक्येन विधेयमस्तीति कथमध्ययनाङ्गविधिरिति चेत्— न ; "अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयेत्" इत्यत्राध्यापनस्य रागप्राप्तत्वात् "याजयेत्" इत्यत्र यजनस्येवाध्ययनस्यैवानेन विधिना विधाने उपनयनस्य तत्समभिव्याहारात्तदङ्गत्वं सिध्येत् ; तदभावे तु "उपनयीत" इत्यनेनाध्ययनाङ्गतयोपनयनं विधीयत इत्यस्यापरिज्ञानाददृष्टार्थमुपनयनं विधीयत इति स्यात् ; ततश्च स्वतन्त्रमप्यध्ययनं

प्राप्नुयात् ; ततश्च "अध्यापयेत्" इत्येतदपेक्षितमिति भावः । यद्वा "ऐन्द्रवायवं गृह्णाति" इतिवाक्याक्षेपलभ्ययागविधायकस्य "सोमेन यजेत" इत्यस्य विधित्ववदुपनयनविध्याक्षेपलभ्याध्यापयितृपूर्वकत्वविधायकस्य "अध्यापयेत्" इत्यस्य विधित्वसंभवादिति भावः । यद्यपि "अध्यापयीत" इत्येव मीमांसकग्रन्थेषु लिख्यते, अत्र तु "अध्यापयेत्" इति श्रुतिर्लिख्यते ; तथापि "बुधयुधनशजनेङ्" इति सूत्रानुकूलत्वेनास्यैव पाठस्य सामीचीन्यम् । **क्त्वाश्रुत्योपनयनस्येति;** "वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत" इतिवत् क्त्वाश्रुत्या कर्त्रैक्यावगमात् तेन च प्रयोगैक्यावगमादङ्गाङ्गिभावः सिध्यतीति भावः । **अन्तरङ्गत्वं हि प्रत्यक्षश्रुतिसिद्धमिति;** उपनयनसंस्कारे माणवकगतत्वस्य प्रत्यक्षद्वितीयासिद्धत्वादध्ययनस्य तन्निष्ठत्वाच्च तत्संस्कार्यनिष्ठत्वमन्तरङ्गत्वं प्रत्यक्षश्रुतिसिद्धमिति भावः । **नाध्यापनाङ्गत्वं युक्तमिति;** अध्यापनाङ्गत्वे क्रियाफलस्य कर्तृगतत्वात् "स्वरितञितः" इत्येवात्मनेपदं सिद्धमितीदं व्यर्थं स्यादिति भावः । **तदवधारणनिषेधार्थमिति;** कर्तर्येवेति नियमेनाकर्तृगामिनि फले आत्मनेपदाप्राप्तौ तन्निवृत्तिः क्रियते ; आत्मनेपदं प्राप्यत इत्यर्थः । **ऋत्विजो वृणीत इत्यत्रेति;** अत्र केनचित् 'वृणीते' इति रूपं "वृङ् संभक्तौ" इत्यत एव ; नान्यस्मात्, ञितः श्नाविकरणपाठाभावात् ; तेन "स्वरित–" इतिसूत्राप्रवृत्तिरिष्टप्रसञ्जनमेवेत्युक्तम् ; तदसत् ; यद्यपि क्र्यादौ "वृञ् वरणे" इति धातुर्धातुवृत्तौ न पठितः, तथापि "वृ ग्न वृञ् वृतौ" इति कल्पद्रुमे पठितः[१] ; तस्यैवात्र विवक्षितत्वात् ; "वॄञ् वरणे" इति क्र्यादौ दीर्घान्तस्य पाठात् तत एव तस्य रूपस्य संभवाच्च । नन्वत्र "वृङ् संभक्तौ" इति धातुर्युज्यते; संभक्तिर्हि प्रार्थना; अत एव हि "अवद्यपण्यवर्याः" "एतिस्तुशास्वृ" "ईडवन्दवृशंसदुहां ण्यतः" इत्यादिषु वृत्तिकारादिभिरुदाहरणेषु ऋत्विग्विषये "वृङ् संभक्तौ" इत्येवोदाहृतम् ; अतः "स्वरितञितः" इतिसूत्राप्रसञ्जनमिष्टप्रसञ्जनमेवेति चेत्—सत्यम् ; संभक्तितात्पर्यमन्तरेण वरणतात्पर्येण प्रयुक्ते लौकिके प्रयोगे आत्मनेपदाभावप्रसङ्गस्यापादयितुं शक्यत्वात् ; ततः

---

(१) **वोपदेवकृते कविकल्पद्रुमे इदं पठ्यते । गकारनकारौ क्रमेण क्र्यादित्वस्वादित्वद्योतकौ, ञकारः फलस्यात्मगामित्वे आत्मनेपदस्य परगामित्वे परस्मैपदस्य च द्योतक इति तत्र संकेतः कृतः । वृतौ वरणेऽर्थे वृधातुः क्र्यादिः स्वादिश्च ञानुबन्धो भवतीति तदर्थः ।**

ऋत्विक्ष्वपि वरणेन निरोधनरूपफलसंभवादिति भावः[1]। **अग्निसंस्कारव्यवहितस्येति ;** अव्यवहितस्याग्निसंस्कारस्य कर्तृगतत्वाभावादात्मनेपदं न स्यादित्यर्थः। **आधानकर्तरि न व्यवहितफलान्वय इति ;** ततश्चाव्यवहितफलस्य कर्तृगामित्व एव "स्वरित–" इत्यादिसूत्रप्रवृत्तिः; अत्र चाव्यवहितं संस्कारविशिष्टाग्निरूपं फलमाधानकर्तृगतमेवेति "स्वरित–" इत्यादिनात्मनेपदमुपपद्यत इति भावः। **असाधारणफलानन्वयविषयत्वादिति ;** क्रियायाः फलं प्रधानभूतं चेत् कर्तृगामि भवति, यदर्थं क्रिया आरभ्यते तच्चेत् फलं कर्तुर्लकारवाच्यस्य भवति तदा आत्मनेपदमित्यर्थः। अत एव 'यजन्ति याजकाः' 'पचन्ति पाचकाः' इत्यत्र न भवति; तथापि न तदर्थः क्रियारम्भ इत्यदोषः। **यथा व्रीहीनवहन्तीत्यत्रेति ;** "क्रियाणामर्थशेषत्वात्प्रत्यक्षोऽतस्तन्निर्वृत्त्यापवर्गः स्यात्" इत्येकादशाध्यायाधिकरणे तथैव व्यवस्थापितत्वादिति भावः।

## श्रुतप्रदीपिका

ऐकशास्त्र्यकर्मविचारतदनन्तरभाविब्रह्मविचारापेक्षोपयोगित्वेन 'अधीतसाङ्गसशिरस्क' इति प्राक् प्रतिज्ञातसाङ्गकृत्स्नवेदाध्ययनकर्तव्यतायां प्रमाणतया स्वाध्यायविधिमुपन्यस्यन् तस्यार्थज्ञानपर्यन्तत्वनिमित्तां ब्रह्मविचारानारम्भशङ्कां वादिविप्रतिपत्तिनिमित्तसंशयं च व्युदस्यति—**तथाहीति**। विधेरक्षरग्रहणपर्यन्तत्वे सिद्धे ह्यारम्भणीयत्वसिद्धिः। अन्यथा "अधीत्य स्नायात्" इत्यर्थज्ञाने कर्मशेषतया विनियुक्ते सत्यवहन्तव्यव्रीहिवत् ज्ञातव्या-

---

(१) इदमप्यत्रावधेयम्—वृङ्वृञोरर्थभेदः संभक्तिवरणरूपः शब्दभेदात्प्रतीयते। संभक्तिः भजनं सेवेति व्याख्यातारः। वरणं च प्रार्थनेति प्रसिद्धिप्राचुर्यादवगम्यते। "ऋत्विजो वृणीते" इत्यत्र ऋत्विजां केवलं प्रार्थनैव, न तु महर्त्विजामिव मधुपर्कादिना भजनम्। अत एव शास्त्रदीपिकायां तृतीये "तत्रार्थात् कर्तृपरिमाणं स्यात्" इत्यत्र ऋत्विग्वरणं प्रस्तुत्य "किं पुनरिदं वरणम्? उक्तं प्रार्थनम्" इति स्पष्टमभिहितम्। तन्त्रशिखामणावपि दशमद्वितीयपादे "ऋत्विजो वृणीते" इति प्रस्तुत्य "कर्मकरवचनोऽयमृत्विक्शब्दः। कर्मकरता चाभ्यर्थनारूपवरणेन" इति व्यक्तमुक्तम्। तस्मात् "ऋत्विजो वृणीते" इत्यत्र वरणार्थको वृञ्धातुरेवाश्रयणीयः, न तु भजनार्थको वृङ् धातुः। "एतिस्तुशास्त्रु" इत्यादिसूत्रस्थकाशिका तु वेदार्थविचारैदंपर्यप्रवृत्ताभियुक्तप्रसिद्धेर्बलीयस्त्वादनादरणीया। वस्तुतः "वार्या ऋत्विजः" इत्यत्र तथात्वेऽपि "ऋत्विजो वृणीते" इत्यत्र वृञ आश्रयणे नैव विरोधः।

त्मनोऽपि कर्मशेषत्वात् "अयमात्मा ब्रह्म" इत्यात्मब्रह्मशब्दयोस्तुल्यार्थत्वाच्च कर्मसु कर्तृतयावकॢप्तजीवस्वरूपपरा वेदान्ता इति तदतिरिक्ताप्रामाणिकेश्वरविचाररूपशास्त्रस्यानारम्भणीयतापत्तेः। तत्र भाट्टाभिमतांश्चतुरोऽर्थान् गुरुकुमारिलानभिमतमेकं च संग्रहेण प्रतिजानीते—**प्रथममिति**। प्रथमं तावत्; प्रथमत एव। प्राथम्योक्त्या शास्त्रान्तरेण साधनचतुष्टयसिद्ध्ययोगः फलितः। शास्त्रान्तराधिगमायोग्यदशापेक्षया प्राथम्यम्; गर्भाष्टमोपनीतस्य ह्यध्ययनम्। अत एव "अष्टवर्षम्" इत्युक्तकालविशेषोऽप्युपनयनद्वाराध्ययनाङ्गमिति फलितम्। अनेनोपनयनस्याध्ययनाङ्गत्वं, स्वाध्यायविधिवाक्योपादानेनाध्ययनस्य स्वविधिप्रयुक्तत्वम्, 'अध्ययनेन' इति निर्देशेन संस्कारविधित्वम्, एवकारेण नियमविधित्वं च द्योत्यते। अक्षरराशिमात्रस्य स्वाध्यायशब्दवाच्यत्वव्युदासाय वेदाख्यशब्दः। वेदाख्येत्यनेन कृत्स्नाध्ययनस्य विहितत्वमप्यभिप्रेतम्। न हि वेदैकदेशः स्वाध्यायशब्दार्थः। नासावर्थावबोधपर्यन्तो विधिरित्यभिप्रायेणाक्षरराशिग्रहणमित्युक्तम्। विधेरक्षरग्रहणपर्यन्ततया "अधीत्य स्नायात्" इत्यत्रार्थज्ञानस्य कर्मशेषत्वाभावेन ज्ञातव्यात्मनोऽवहन्तव्यव्रीह्यादिवत् कर्मशेषत्वाभावेन कर्मसु कर्तुर्जीवादन्यस्मिन्प्रमाणसंभावनया तद्विलक्षणेश्वरविचाररूपशास्त्रमारम्भणीयमिति फलितमित्यभिप्रायः। अयं चार्थः "अध्ययनमात्रवतः" इति वक्ष्यमाणसूत्रार्थः प्रतिपत्तिसौकर्यायात्र दर्शितः। प्राथम्यं साङ्गत्वं च नात्र प्रतीतम्; अध्यापनविधिश्रवणात्; तत्प्रयुक्तता च प्रतीयत इति शङ्कायामाह—**तच्चेति**। चः शङ्कानिवृत्तौ। **किंरूपम्**; स्वतन्त्रोच्चारणरूपं परतन्त्रोच्चारणरूपं वा, सकृदुक्तिरूपम्, असकृदुक्तिरूपं वेत्यर्थः। **कथम्**? किमङ्गकम्? अष्टवर्षत्वमुपनयनद्वारा अध्ययनशेषम्। "द्वादशाहेन प्रजाकामं याजयेत्" इतिवदध्ययनश्रुतिः। न हि तत्र यजनं याजनविधिप्रयुक्तम्। अत्र "ब्राह्मणम्" इति द्वितीयाश्रुत्या माणवकशेषमुपनयनमन्तरङ्गत्वलिङ्गात् तद्गताध्ययनाङ्गम्। "उपनीय" इति क्त्वाश्रुतिस्तु विलम्बद्वयहता; सा हि स्मृतिरनुवादरूपा च। अतः श्रुतेर्लिङ्गं प्रबलम्। न च कर्त्रभिप्रायफलात्मनेपदवशादुपनयनमुपनेतृगताध्यापनाङ्गमिति वाच्यम्, अकर्त्रभिप्रायार्थेन "संमानन—" इत्यादिसूत्रेणात्मनेपदस्य विहितत्वात्। कर्तर्येव फलान्वयः कर्त्रभिप्रायत्वमिति तन्निवृत्तौ फलस्योभयान्वयसंभवेनोपनयनफलस्य गुरुगतत्वसंभवादध्यापनाङ्गत्वमिति शङ्का च निरस्ता, "अग्नीनादधीत" इत्यत्र "स्वरित—"

इत्यादिसूत्रेण विहितेऽप्यात्मनेपदे फलस्योभयान्वयदर्शनात् । अतः कर्त्रभिप्रायत्वं न कर्तर्येव फलान्वयः; किंतु फलस्य कर्त्रन्वयमात्रमिति तन्निवृत्तौ कर्तरि फलान्वयो न सिध्येदिति नाचार्ये फलान्वयः । न च चेतनद्वयानन्वयः कर्त्रभिप्रायत्वम् "ऋत्विजो वृणीते" इत्यत्र फलस्योभयत्रान्वयात् । न चाव्यवहितफलस्य कर्त्रन्वयः कर्त्रभिप्रायत्वमित्याचार्यकव्यवहितत्वादात्मनेपदाप्राप्तौ "संमानन—" इत्यादिसूत्रेण व्यवहितफलस्य कर्त्रन्वयेऽप्यात्मनेपदं विधीयत इति व्यवहिताचार्यकनिष्पत्त्यर्थतयोपनयनस्याध्यापनाङ्गत्वं कर्त्रभिप्रायत्वविरोधीति वाच्यम्, उत्तरक्रतुविधीन् प्रत्याधानस्येवाध्यापनं प्रत्यङ्गत्वाभावेऽप्युपनयनस्य तदुपकारकत्वमात्रेणाचार्यकनिष्पादकत्वोपपत्तेः । अत उपनयनफलं नाचार्यान्वयीति न तदध्यापनाङ्गम् । **व्रतम्**, उपाकर्मादि । **नियमाः**; "पद्यु वा एतत् श्मशानम्" इत्याद्युक्तदेशकालभक्ष्याभक्ष्यादिनियमाः । 'अनेन' 'उपदेशैश्च' इति पृथङ् निर्देशः श्रुतित्वस्मृतित्वविमतिसंमतिविभागात् । "मासानर्धपञ्चमान्" इत्यनेनाङ्गाध्ययनकालसिद्धिः । एवमङ्गविधिसहितप्रधानविधिना किं प्रतिपन्नमित्यत्राह—**एवमिति**; एवम्; साङ्गे विधौ निरूपिते । 'सत्संतान' इत्यादिकम् "अभिजनविद्यासमुदेतम्" इत्यादिसूत्रानुविधायि । **आचार्योपनीतस्य**; गुरुविशेषणमुपनयनद्वारा माणवकार्थं यथा पक्षान्तरे माणवकविशेषणमन्यार्थमिति भावः । **आत्मगुणाः**; अक्रोधादयः । **व्रतनियमविशेषयुक्तस्येति** दृष्टान्ततयोक्तिः । अनेन पदद्वयेन कथमित्याकाङ्क्षापूरणम् । उपरितनपदद्वयेन किंरूपमित्याकाङ्क्षा च शमिता, परतन्त्रासकृदुच्चारणरूपतासिद्धेः । आद्यत्वं च तेन सिद्धम् । आवृत्त्यश्रवणेऽपि दृष्टफलत्वस्य चापरित्याज्यतयावघातादिवदावृत्तिसिद्धिरिति ।

## नयप्रकाशिका

ननु—अध्ययनप्रयुक्तिविचारोऽत्र व्यर्थः, प्रथमकाण्डाद्ये कृतत्वात् । न च शास्त्रैक्यहेतुतया तद्विचारोऽत्रेति वाच्यम्, तत्र सिद्धस्योपयोगेन तदैक्यप्रसाधनस्य शक्यत्वात् । विचारविषयस्य वेदस्य वेदत्वाविशेषादध्ययनविधिगृहीताध्ययनसंस्कृतवेदविषयविचारात्मकशास्त्रस्याप्यैक्यं साध्यते; तत्राध्ययनप्रयुक्तिविचारस्य क उपयोगः ? न च पूर्वकाण्डेऽध्ययनविधेरर्थज्ञानपर्यन्तत्वस्योक्तत्वात्तस्य तथात्वे वेदान्तार्थज्ञानस्यापि कर्तृसंस्कारापादनद्वारा कर्मशेषत्वापत्तेः प्रथमकाण्डप्रथमपादे आत्मस्वरूपस्यापि निरूपितत्वाद्वेदान्तशास्त्रस्यानारम्भ-

ता स्यात्, अतोऽत्रार्थज्ञानपर्यन्तता विधेर्निवार्यत इति वाच्यम्; अध्ययनविधेरर्थज्ञानपर्यन्तत्वेऽपि वेदान्तानां कर्मसु कर्तुर्जीवात्मनः स्वरूपपरत्वेनापि शास्त्रस्यारम्भणीयत्वात् शास्त्रारम्भाक्षेपानुपपत्तेः। प्रथमपादे आत्मस्वरूपनिरूपणमात्रं कृतम्; अत्र तु देहोत्तीर्णात्मस्वरूपकथनमात्रपरत्वेनापि योजयितुं शक्यम्। आत्मनस्तु सर्वगतत्वजडत्वप्रसाधनं तु व्याख्यातॄणां मोह एव। न च परमात्मन एव प्राधान्यतो वेद्यत्वस्यात्राभिप्रेतत्वात्तद्विधेरर्थज्ञानपर्यन्तत्वे तज्ज्ञानस्य कर्मकर्तृजीवद्वारा कर्मशेषत्वे परमात्मनः प्राधान्यतो वेदान्तवेद्यत्वं न सिध्यतीति वाच्यम्; शास्त्रारम्भस्य तावताप्याक्षेप्तुमशक्यत्वात्; प्राधान्यतो वेदान्तवाक्यानां जीवपरत्वेनापि निरूपयितुं शक्यत्वात्। वेदान्तवाक्यानां न्यायैरेव यथाकथंचिन्निरूपणीयत्वे शास्त्रारम्भाक्षेपो न सिध्यत्येव, जीवपरत्वनिश्चयेऽपि हि वेदान्तवाक्यानां प्रधानपरमात्मपरत्वनिरासात्। तत्तु न्यायादेव साध्यम्। किंच आत्मज्ञानस्य वस्तुतः पूर्वमीमांसकैः कृत्स्नस्य कर्मशेषत्वस्यानभिहितत्वाच्च; प्रायेण वेदनस्याधिकारिविशेषणत्वेनैव हि स्वीकारः; तस्य चानुपादेयत्वान्नाङ्गत्वम्। अथ कर्त्रवस्थतया तस्य शुद्ध्यादिवदन्वयादङ्गत्वमिति चेत्—न; तस्य सर्वस्य तथात्वानङ्गीकारात्। तच्च "पुरुषार्थोऽतः" इत्यत्रास्माभिः प्रदर्शितम्। किंच तदधिकरण एव भाष्यकृद्भिरध्ययनविधेरर्थज्ञानपर्यन्तत्वेऽपि तस्य कर्माङ्गत्वमुक्तम्; तदनङ्गत्वे च तदनारम्भः। किं च भाष्यादावध्ययनविधेरर्थज्ञानपर्यन्तत्वे शास्त्रानारम्भशङ्का न क्वचित् द्योत्यते; अतोऽध्ययनविधिप्रयुक्तिविचारः किमर्थ इति न जानीम इति चेत्—उच्यते—अधीतसाङ्गसशिरस्कवेदस्येष्टतदर्थावबोधस्य तदर्थसंशयनिरासाय प्रवृत्तमीमांसाविषयस्य सर्वस्यापि वेदस्य वेदत्वाविशेषात् तदितिकर्तव्यतारूपपूजिततर्कस्य मीमांसात्वाविशेषाच्च पूर्वोत्तरमीमांसयोरैकशास्त्र्यमिति तावद्वक्तव्यम्; तदभिधाने चाध्ययनविधेर्बुद्धिस्थत्वात् पूर्वमीमांसाव्याख्यातृभिरन्यथा व्याख्यातत्वात् समीचीनार्थकथनद्वारेण तदैक्यादि प्रसाध्यत इति। पूर्वमीमांसकैर्ह्यध्ययनविधेरर्थज्ञानपर्यन्तत्वात् विधितो मीमांसाप्रवृत्तिरित्युक्तम्। तत्र प्राभाकरैस्त्वाचार्यकरणविधिप्रयुक्तत्वमध्ययनस्योपनयनस्याध्यापनाङ्गत्वमध्ययनस्यापूर्वविषयत्वेन प्रधानकर्मत्वं चोक्तम्। अध्ययनस्याचार्यकरणविधिप्रयुक्तत्वसिद्धावेव विचारः कृतः। भाट्टैस्त्वध्ययनस्य पूर्वपक्षे फलार्थत्वं राद्धान्ते संस्कारकर्मत्वं क्रतुविधिप्रयुक्तत्वं चोक्तम्। अध्ययनविधेरर्थज्ञानपर्यन्तत्वमुभयोः समानम्।

अत एव तत्पक्षनिरासायारुणाधिकरणस्य समीचीनार्थाभिधानवदध्ययनादिविधेः समीचीनोऽर्थोऽभिधीयते। अरुणाधिकरणस्य समीचीनार्थ आनन्दमयाधिकरण उक्तः। नन्वरुणाधिकरणस्य स्वाभिमतविशिष्टवाक्यार्थप्रतियोगितया शाबरोक्तप्रक्रियानिरासो युक्तः; अत्र तत्प्रक्रियानिरासे तु न किंचित्प्रयोजनमिति चेत्—न; सम्यगर्थज्ञापनस्यैव प्रयोजनत्वात्; यथा वेदान्तवाक्यानां यथार्थाभिधानस्य तज्ज्ञापनमेव प्रयोजनम्। किंच प्रयोजनान्तरमप्यस्ति—अध्ययनविधेरर्थज्ञानपर्यन्तत्वे मीमांसाश्रवणमन्तरेण गुरुगेहान्निवृत्तौ विध्यतिक्रमगात् प्रत्यवायित्वेन विवाहादिसंस्कारप्रभृतियज्ञादिकर्मस्वनधिकारः; विहितातिक्रमे च पातित्यं

"विहितस्याननुष्ठानान्निन्दितस्य च सेवनात्।
अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति॥"

इत्यादिभिः सिद्धम्। रागतो मीमांसाप्रवृत्तौ तु न तत्; काम्यकर्माकरणे हि काम्यफलासिद्धिरेव, न तु प्रत्यवायः। ननु विदुष एव कर्मादिष्वधिकाराच्छ्रुत्यर्थज्ञानस्य मीमांसाधीनत्वात् मीमांसाश्रवणस्य च विवाहादेः पूर्वभावित्वस्यार्थसिद्धत्वात् रागसद्भावे तत्र प्रवृत्तिः, अन्यदा नेति न वक्तुं युक्तमिति चेत्—न; ब्राह्मणादेः स्वाधिकारोपयोगिवेदस्य कृत्स्नवेदार्थनिर्णयहेतुमीमांसाशास्त्रस्याप्रयोजकत्वात्। ब्राह्मणादेरध्ययनगृहीतस्वानुष्ठानोपयोगिमन्त्राणां सद्भावे तु धनादिरागतः प्रवृत्तविद्वद्याजकादपि प्रयोगानुष्ठानसिद्धेः; तच्च लोकत एव सिद्धम्। किं चानधीतवेदमिवाश्रुतमीमांसं 'पतितः' इति न स्मर्तारः स्मरन्ति, विद्वांसोऽपि न गर्हन्ते। अतोऽध्ययनविध्यर्थविचारः प्रयोजनवान्। अस्मत्पक्षे तु अध्ययनस्य संस्कारकर्मत्वे, तद्विधेर्नियमपरत्वे, अध्ययनस्याचार्यरागप्रयुक्तत्वे, उपनयनस्य च माणवकद्वाराध्ययनशेषत्वे च स्थिते विचारावसरोऽभिमतः; वेदस्यार्थपरत्वे रागत एव मीमांसाप्रवृत्तिरिति च।

अत्र परमतप्रक्रियातन्निरासौ च व्यज्येते। तत्र गुरुमतं तावदुपन्यस्यते; अत्र संशयः—वेदार्थनिश्चयहेतु मीमांसाशास्त्रं किमनारम्भणीयम्, उतारम्भणीयमिति; तदर्थमध्ययनविधिर्नार्थज्ञानपर्यन्तः, उत तत्पर्यन्त इति; तदर्थं वेदस्यार्थे तात्पर्यं नास्ति, उतास्तीति; तदर्थमाचार्यकरणविधिप्रयुक्तमध्ययनमाचार्यत्वार्थम्, उत माणवकस्यार्थज्ञानार्थ-

त्वेन तदर्थमिति । अत्र पूर्वः पक्षः—निरधिकारत्वेन श्रुताध्ययनविधेः साधिकाराध्यापनविधिप्रयोज्यत्वेन प्रथमभावित्वादाचार्यत्वार्थत्वम् । नन्वर्थज्ञानस्य साङ्गाध्ययनकर्तृगतत्वेनान्तरङ्गत्वादध्यापनविधिर्माणवकार्थत्वमध्ययनस्यानुजानात्विति चेत्—न ; अध्ययनविध्यवगतिसमये तस्य माणवकैश्वर्यत्वाप्रतीतेरधीस्थत्वेन दुर्बलत्वात् । नन्वध्ययनस्याचार्यकरणविधिप्रयुक्तत्वं कथमिति चेत् ; उच्यते—स्वाध्यायाध्ययनविधौ स्वर्गकामादिवाक्येष्विव नियोज्यो न श्रुतः ; न च विश्वजिदादिवन्नियोज्यकल्पनम्, प्रयाजादिवदन्यप्रयुक्तत्वेनानुष्ठानसिद्धेः ; अनुष्ठानाय हि तत्क्लृप्तिः ; प्रयाजादिविधयो हि न प्रयोजकाः ; किंतु दर्शपूर्णमासविधिरेव ; अन्यतोऽपि विषयानुष्ठानलाभे कल्पकहेत्वभावान्न नियोज्यकल्पनावकाशः । एवमध्ययनेऽपि । आचार्यकरणविधिरपि

" उपनीय तु यः शिष्यं वेदमध्यापयेद् द्विजः ।
सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते ॥ "

इति स्मृत्यनुमितः । उपनयनाङ्गकाध्यापनेनाचार्यकं भावयेदिति तस्यार्थः । अध्यापनेन चाध्ययनमाक्षिप्तम्, अध्ययनव्यतिरेकेण तदसिद्धेः । ननु लोके अध्यापनकारके लौकिकाचार्यपदप्रयोगादाचार्यत्वस्य लौकिकत्वान्न विध्यर्हतेति चेत्—न ; अध्यापनक्रियानिर्वृत्तावेवाचार्यत्वोत्पत्तेः ; " आचार्याय वरो देयः " इत्यादौ तत्समाप्तावेवाचार्यत्वाभिधानात् । न च तत्र भूतपूर्वगत्योपलक्षणत आचार्यपदप्रयोग इति वाच्यम्; तद्गतत्वेन लौकिकार्थोपलक्षकत्वस्यानुपपत्तेः । न हि सनियमकाध्यापने तदकरणे वा विशेषः । अतो यूपाहवनीयादिवदलौकिकमेवाचार्यत्वम् ; यूपाहवनीयादिश्च संस्कृतकाष्ठानलादिरेव, न काष्ठानलादिमात्रं ; अन्यत्र तदप्रयोगात् । अतोऽस्य विध्यर्हता । ननु " उपनीय तु यः शिष्यम् " इति यत्पदश्रवणात् " य एवं विद्वान् " इत्यादिष्विव न विधित्वप्रतीतिरिति चेत्—न ; विधित्वतात्पर्यावधृतौ तस्य विध्यनुपघातकत्वात् " यदाग्नेयोऽष्टाकपालः " इत्यादिष्विव " उपनीयाध्यापयेत् " इति क्त्वात उपनयनस्याध्यापनसमानकर्तृकत्वप्रतीतेः ; समानकर्तृत्वस्य चैकप्रयोगाधीनत्वात् ; प्रयोगैक्यस्य चाङ्गाङ्गिभावायत्तत्वादध्यापनाङ्गत्वनिश्चयः । अङ्गत्वनिर्वाहश्चोपनेयासत्तिद्वाराध्यापनोपकारकत्वात् । श्रौतो वाचार्यविधिरस्तु—" अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयेत् " इति हि श्रुतिः । उपनयने आत्मनेपदं हि श्रूयते । अत्रात्मनेपदस्याचार्यक-

रणप्रयोजनत्वे पाणिनिस्मरणसद्भावादध्यापनविधिरपेक्षिताचार्यकरणविधिरेव । स्मर्यते हि—" संमाननोत्सञ्जनाचार्यकरणज्ञानभृतिविगणनव्ययेषु नियः " इत्यात्मनेपदम् । वृत्तौ च स्पष्टीकृतम्—" आचार्यकरणमाचार्यक्रिया ; माणवकमीदृशेन विधिनात्मनः समीपं प्रापयति यथासावुपनेता स्वयमाचार्यः संपद्यते ; माणवकमुपनयते—आत्मानमाचार्यीकुर्वन् माणवकमात्मनः समीपं प्रापयतीत्यर्थः " इति । न च " अध्यापयेत् " इति " एतयान्नाद्यकामं याजयेत् " इतिवत् प्रयोज्यव्यापाररूपाध्ययनविधिरेवेति वाच्यम् , तत्र " अन्नाद्यकामम् " इति कामिनः श्रुतत्वेन तस्यैव विध्यपेक्षितत्वात् " याजयेत् " इत्यस्यानुवादत्वस्यैव युक्तत्वेऽप्यत्र तदभावात् । अत उपनयनाङ्गकश्रौताचार्यकरणविधिसिद्धिः। ननु "वेदमध्यापयेत्"इत्यत्र परस्मैपदश्रवणादध्यापनस्य नाचार्यकफलकत्वम् , आचार्यकफलकत्वे " कर्त्रभिप्राये क्रियाफले " इत्यात्मनेपदापत्तेरिति चेत्—न ; " बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णेः " इति क्रियाफलस्य कर्त्रभिप्रायविवक्षायां विशेषतः परस्मैपदविधानात् । अत एव हि वृत्तौ ण्यन्तादिङः परस्मैपदे ' अध्यापयति ' इत्युदाहृतम् । ननु उपनयनस्याध्यापनाङ्गत्वे तत्प्रयोगापवर्गत्वं स्यात् ; माणवकेऽनुवृत्तिः पुरुषार्थचत्वारिंशत्संस्कारान्तर्भावश्च न स्यात् ; स्मृतिषु तत्पाठश्च दृश्यत इति चेत्—न ; ब्राह्मणादेः पातित्याभाव इज्याद्यधिकारानुवृत्तौ तत्संस्कारस्थितेः कल्प्यत्वात् । तच्च द्विजानामेव, यज्ञाद्यधिकरणश्रवणात् ; द्विजत्वस्योपनयनसंस्कारानुवृत्त्यधीनत्वात् पुनरुपनयनान्तरास्मरणाच्च । यत्र सिन्धुसौवीरदेशाक्रमणादिनिमित्तत्वेन पुनरुपनयनस्मरणं तत्र तु तत्संस्कारनाशः कल्प्यः, अध्यापनादिनिर्वृत्तौ संस्कारानुवृत्तावपि तस्याध्यापनोपकारकत्वं च न विरुद्धम् । अतः संस्कारान्तरतुल्यत्वात् तस्य तदन्तर्भावोऽपि न विरुद्धः । नन्वध्यापने धनादिरागादेव प्रवृत्तेर्नाचर्यीबुभूषोरधिकार इति चेत्—न ; धनादिप्रवृत्त एवाध्यापनोपायत आचार्यीबुभूषुरिति तदवस्थस्याधिकारान्तरत्वात् । एवमुपनयनस्याध्यापनाङ्गत्वे दृष्टोपनेयासत्तिद्वारेणासन्नस्याप्यध्यापनोपयोगिकर्मापेक्षायां तस्याध्ययनं कर्मत्वेनावगतम् । तदेवमध्यापनविधिः स्वाङ्गोपनयनं प्रयुञ्जानो द्वारभूताध्ययनमपि प्रयुङ्क्त इत्याचार्यकरणविधिप्रयुक्तत्वमध्ययनस्य सिद्धम् । नन्वध्यापनाङ्गता स्यात् ; अध्ययनस्यापि तत्प्रयोज्यत्वादिति चेत्—न; प्रयुक्तेरङ्गत्वाहेतुत्वात् । श्रुत्यादीनामेव हि तद्धेतुत्वम् । प्रयोज्यत्वमात्रादङ्गत्वे तु क्रतुविधि-

प्रयोज्याधानस्यापि क्रत्वङ्गता स्यात्। न चाध्ययनस्यानङ्गत्वेऽध्ययनाङ्गशौचाचाराद्यप्रयुक्तिः स्यादिति वाच्यम्,

" उपनीय गुरुः शिष्यं महाव्याहृतिपूर्वकम्।
वेदमध्यापयेदेनं शौचाचारांश्च शिक्षयेत्॥"

इत्यादौ साङ्गाध्ययनकारयितृत्वादेवाचार्यत्वसिद्धिप्रतीतेः। अतोऽध्ययनस्याध्यापनाङ्गत्वेऽप्युपकारकत्वमेव। ननु "स्वाध्यायोऽध्येतव्यः" इति स्वाध्यायस्य कर्मत्वावगमान्न साध्यान्तराकाङ्क्षेति चेत्——न; अनीप्सितकर्मणः स्वाध्यायस्य साध्यत्वाभावात्; तस्यानीप्सितत्वं चापूर्वस्यैव भाव्यत्वात्; "अध्येतव्यः" इति हि श्रूयते; तव्यप्रत्ययो हि नियोगवाचकः; तस्य च स्वतः साध्यापूर्वपरत्वं युक्तम्। न च तस्य क्रतुविध्यनुवादकता, क्रतुविधीनां दूरस्थत्वात्। न च स्वाध्यायस्य कर्मबोधकतया कर्माव्यभिचारात् कर्मविध्यनुवादकतेति वाच्यम्, 'हुम्' इत्येवमादिस्तोभाक्षराणां कर्मबोधकत्वव्यभिचारात्। अत एव स्वाध्यायस्य न कृत्स्नस्य संस्कार्यत्वम्। न च जपपारायणादिप्रयोजनात् संस्कार्यत्वम्, अर्थज्ञानस्याननुरोध्यत्वापत्तेः; तेनैव कृत्स्नाध्ययनसिद्धेः। यदि संस्कारवादिनो जपादिविधेरेव प्रयोजकत्वमिष्टम्, तदा शूद्रादेरप्यध्ययनं स्यात्। विधितः प्रवृत्तौ शूद्रस्याध्ययने न निषेधावकाशः। निषेधशास्त्रं तु रागतः प्रवृत्तविषयत्वेनापि योजनीयम्। इत्यध्ययनविधेर्न संस्कारकर्मपरत्वोपपत्तिः। अतोऽध्ययनस्याचार्यत्वसिद्ध्यर्थत्वादन्यपरत्वेनार्थज्ञानपर्यन्तत्वाभावाद्वेदस्यार्थपरत्वाभावादस्यार्थपरत्वनिश्चयाभावे चाध्ययनविधेरर्थज्ञानपर्यन्तत्वाभावात् तदर्थनिश्चयहेतुभूतमीमांसाशास्त्रमनारम्भणीयमिति। राद्धान्तस्तु——तन्माणवकार्थमेव, साङ्गाध्ययनादध्येतृगतत्वेनार्थज्ञानस्योत्पत्तेस्तस्यान्तरङ्गत्वात्। यत्कर्तृकं हि यत्कर्म तत्तदर्थमेव युक्तम्। स्वतोऽध्ययनस्यान्यप्रयुक्तत्वेन पश्चादवगम्यमानफलद्वाराप्यैश्वर्यधीपूर्वकमधिकारपरत्वमित्यतुल्यकालत्वेऽप्यन्तरङ्गत्वं प्राथम्यादपि बलीयः। अतो वेदस्यार्थवत्त्वेनाध्ययनविधेरर्थज्ञानपर्यन्तत्वम्। तस्यार्थपरत्वाभावेऽध्यापनविधेरपि वेदान्तर्गतत्वेनाविवक्षितार्थत्वापत्तौ प्रयोजकतैव न स्यात्। ननु "स्वाध्यायोऽध्येतव्यः" इत्यत्र नियोगस्यैव भाव्यत्वमुक्तम्; अतः स्वाध्यायस्यान्यपरत्वादविवक्षितार्थत्वमिति चेत्——न; केवलनियोगनिर्वृत्तेरेव प्रयोजनत्वेनास्वीकारात्,

किंत्वर्थज्ञानस्यापि स्वीकारात् । शब्दान्नियोगसिद्धिरेव प्रयोजनत्वेन स्वीक्रियते । अर्थादर्थज्ञानं च प्रयोजनमित्यविरोधः । अर्थपरत्वे चार्थनिर्णयाय मीमांसाशास्त्रारम्भः । ततोऽध्ययनस्य माणवकार्थत्वात् वेदस्यार्थतात्पर्येऽध्ययनविधेरर्थज्ञानपर्यन्तत्वे च तन्निर्णायकमीमांसाशास्त्रमारम्भणीयमिति "अथातो धर्मजिज्ञासा" इत्युच्यत इति ।

तदेतदनुपपन्नम् ; नियोगार्थाध्ययनस्याचार्यत्वप्रयोजनकत्वानुपपत्तेः, एकस्य साध्यद्वयासंभवात् । अतो न पूर्वपक्ष उपपन्नः । तथा सिद्धान्तोऽपि, अर्थज्ञानस्य प्रमाणान्तरतः सिद्धत्वेनाध्ययनविधिप्रयोज्यत्वानुपपत्तेः ; अनन्यप्रमाणविषयत्वाच्छास्त्रस्य । साङ्गाध्ययनेऽर्थस्य चापातप्रतीतौ तन्निर्णयरागादेव प्रवर्तते । शास्त्रे रागतः प्रवृत्तौ न विधिव्यापारः । स्वर्गमोक्षादिपुरुषार्थावबोधकत्वात्तत्र रागोऽपि संभवत्येव । शास्त्रैकसमधिगम्यार्थज्ञानं च समभिव्याहारव्युत्पत्त्याभासतो जायते । तदाभासत्वनिर्णयाय शास्त्रारम्भश्च युक्तः । अतोऽर्थज्ञानेऽर्थस्य ज्ञातत्वात् न शास्त्रारम्भः; अज्ञाते च बुभुत्साभावान्न शास्त्रारम्भ इति न चोद्यावकाशः । अर्थज्ञानस्य प्रमाणान्तरसिद्धता चानधीयानेन पार्श्वस्थेन पुस्तकनिरीक्षणादिना वा सिद्धेः । न चाध्ययनेनैवार्थज्ञानं कुर्यादिति नियम्यत इति वाच्यम् , अर्थज्ञानस्यापुरुषार्थत्वात् । न चाचार्यत्वं प्रयोजनमिति वाच्यम् , तादर्थ्ये शास्त्रानारम्भप्रसक्तेः । क्रत्वादिप्रयोजनकल्पनायां चास्मदीय एव मार्ग आश्रितः स्यात् ; नियोगविषयता चाध्ययनस्य न स्यात् । कार्यपरस्य वाक्यस्यार्थज्ञानपरत्वं चानुपपन्नम् । न चार्थाज्जातार्थज्ञानपरत्वान्न दोष इति वाच्यम्, आर्थस्याचोदनार्थत्वात् । नन्वध्ययनविधिरेव स्वविधित्वसिद्धयेऽर्थाज्जातमर्थज्ञानं स्वीकरोति ; अन्यथाध्ययनविधेरपि वेदान्तर्गतत्वेनार्थपरत्वाभावे विधित्वहानेरिति चेत्——न; विधेरक्षरराशिग्रहणमात्रपरत्वेनान्यपरत्वहेत्वभावे विधिव्यापारव्यतिरेकेणार्थपरत्वसिद्धेर्व्यर्थत्वात् । किंच अर्थाज्जातार्थज्ञानस्वीकारे चाचार्यत्वसिद्धिरपि किमिति प्रयोजनं न स्यात् ? । किंच अध्ययने नियोज्यः किमिति न कल्प्यः ? न चान्यतोऽनुष्ठानसिद्धेर्न तत्कल्पनमिति वाच्यम् , कृत्युद्देश्यत्वानभिज्ञाने तदर्थप्रवृत्त्यनुपपत्तेः । परप्रवृत्त्यानुष्ठाने तु तदर्थत्वेन वा तदुपकारकत्वेन वानुष्ठानं स्यात् , नापूर्वोद्देशेन । ननु चाचार्यादिभ्योऽध्ययनमपूर्वार्थमिति श्रुत्वापूर्वोद्देशेन प्रवृत्तिरिति चेत् ; न तस्यान्यतोऽनुष्ठानम्, कार्यबुद्धेरेव प्रयुक्तेः । प्रयाजादेस्त्वन्याङ्गतैकस्वभावत्वेनान्यतोऽनुष्ठानसंभवः; आधानस्याप्यन्योपकारकत्वेनान्यतोऽनुष्ठानम् । स्वतन्त्रकार्यस्य तु नान्यतोऽनुष्ठानं क्वचिद् दृश्यते । अध्ययनव्यतिरेकेणाध्यापनासंभवमात्रात् प्रयोजकत्वक्लृप्तावकृत-

प्रथमयज्ञस्योत्तरक्रत्वधिकारासंभवादग्निष्टोमस्योत्तरक्रतुविधिप्रयोज्यता स्यात्। न च तत्र स्वर्गकामो नियोज्यः श्रुत इति वाच्यम्; नित्याग्निष्टोमस्य तत्प्रयोज्यत्वापत्तेः। नित्ये हि नियोज्यः प्रायेण कल्प्यते; "वसन्ते ज्योतिषा यजेत" इत्यत्र नियोज्यस्याश्रवणात्। तथा जातकादिसंस्काराणां चोत्तरोत्तरसंस्कारप्रयोज्यत्वं च स्यात्। अतो नियोगविषयत्वे विश्वजिदादिवत् स्वर्गकामो नियोज्यः कल्प्यः। किंच अध्यापनविधेरेव प्रयोजकत्वमिति निर्बन्धोऽपि व्यर्थः, वैपरीत्येनापि संभवात्; अध्यापनविधौ "अष्टवर्षं ब्राह्मणम्" इत्यादौ न नियोज्यः श्रुतः; कल्प्यश्चेदध्ययने एव कल्प्यताम्। तत्र क्लृप्तेऽध्यापनव्यतिरेकेण शास्त्रीयाध्ययनासंभवात् तदाक्षेपः सिद्धः। अध्यापनप्रवृत्तिश्च धनादिरागाच्छीघ्रा। न च "उपनीय" इति स्मृतौ नियोज्यः श्रूयत इति वाच्यम्, तत्र कामनाया अश्रवणात्। ".आचार्यं प्रचक्षते" इत्याचार्यलक्षणकथनमात्रमेव प्रतीयते ब्रह्मचार्यादीनां भिक्षाचरणगुरुशुश्रूषादिभिर्लक्षणकथनवत्। तच्च दृश्यते स्मृतिषु। तच्च संभाव्यत्वादितारतम्यज्ञापनाय, "आचार्यः श्रेष्ठो गुरूणाम्" इत्यादौ तथा दर्शनात्; अन्यथा श्रैष्ठ्याद्युक्तेर्न प्रयोजनम्। अतोऽध्यापनविधावपि नियोज्यः कल्प्यः। तत्रापि कल्पनाविशेषेऽध्ययने द्राक् प्रवृत्तिलाभाय नियोज्यकल्पना युक्ता। नियोज्यविशेषणं च स्वर्गादिरस्तु। तथात्वे चान्यार्थत्वेनाध्ययनस्य शास्त्रानारम्भः फलितः। अर्थज्ञानस्य विशेषणत्वे तु नादृष्टसिद्धिः। न चोभयस्य कल्प्यत्वम्, एकेनैवानुष्ठानसिद्धेः। जातेष्टौ पुत्रगतपूतत्वादेर्निमित्तस्य च श्रवणे ह्युभयस्वीकारः। न ह्यन्यत्र तथा। ननु "अष्टवर्षं ब्राह्मणम्" इत्यादिश्रुतावुपनयन आत्मनेपदश्रवणादाचार्यकरणस्य श्रौतता गम्यत इति चेत्—न; तत्रात्मनेपदमकर्त्रभिप्रायमिति तज्ज्ञैरुक्तत्वात्। न चात्र कर्त्रवस्थायां तज्जन्यत इति तदभिप्रायतेति वाच्यम्, संमाननादावपि तथात्वापत्तेः। न हि तदिष्टम्। संमाननादिक्रियाफलस्यान्यगामित्वाभिप्रायमात्मनेपदम्, उपनयने तु कर्त्रवस्थाभिप्रायमिति वैषम्ये तु न प्रमाणम्। आचार्यत्वोत्पत्तिवचनं तूपनयनक्रियाफलभागित्वमात्रादप्युपपन्नम्। अकर्त्रभिप्रायार्थोऽयमारम्भ इत्युक्तिस्तु कर्मभूतोपनेयाभिप्राया। स्मृतौ चोपनयनमात्रादाचार्यत्वं प्रतीयते, न तु साङ्गाध्यापनात्। "अध्यापयेत्" इत्यत्र क्रियाफलस्य कर्त्रभिप्रायता स्वेनाप्युक्ता। "गुरवे वरं दत्त्वोदायुपेत्युत्थाप्याचार्याधीनो भवेत्" इत्यादौ चोपनयनमात्रादाचार्यत्वमुच्यते; साङ्गाध्यापनान्ताचार्यत्वोत्पत्तौ न तद्वचनोपपत्तिः। न हि भविष्यतो गुरोर्गुरुत्वव्यवहारः।

अस्त्याचार्यत्वे च न तद्वचनोपपत्तिः। अतः साङ्गाध्ययनादेवाचार्यत्वोत्पत्तिरित्युक्तिरपि व्यर्था। विद्यासमाप्तिगतम् "आचार्याय वरो देयः" इत्यादिवचनं च भूतपूर्वगत्याप्युपपन्नम्। अत आचार्यत्वस्य लोकत एव व्युत्पत्तेर्नालौकिकता, उपनेतरि पूर्वपूर्ववृद्धैराचार्यपदस्य प्रयुक्तत्वात् स्मृतिरपि तन्मूला। एवं च तत्स्मृतेर्दृष्टमूलत्वसंभवे नादृष्टमूलत्वकल्पना। न च दृष्टस्यानियमे चाभेदाद्युपाधिवदलौकिकत्वमेवेति वाच्यम्; पाचकादिष्वपि तथात्वापत्तेः। न हि पाचकादिषु पाकात्किंचिददृष्टमारोप्यते; तथापि पाकादिनिवृत्तावपि 'पाचकः' इति लोको व्यवहरति। भूतपूर्वगतिमात्रेण च "आचार्याय वरो देयः" इत्यादिशास्त्रमुपपन्नं पित्रोर्नमस्कारादिशास्त्रवत्। पितृत्वमपि जनकत्वदशायामेव; जनकत्वं च निषेकावस्थायामेवेति न पितृत्वधर्मानुपपत्तिः। त्रिवृदादिवद्वेद एवोपनेतर्याचार्यपदप्रयोगात् व्युत्पत्तिरस्तु; तथापि नालौकिकार्थता, उपनयनकारके तत्प्रयोगात्। अतो धनार्जनप्रवृत्तस्य ब्राह्मणादिभ्यः प्रतिग्रहादिनियमवत् "अध्यापयेत्" इति धनार्जनोपायनियममात्रम्। अध्ययनस्यापूर्वविषयत्वोक्तिरपि व्यर्था, "व्रीहीनवहन्ति" इत्यादिवत् संस्कारकर्मत्वप्रतीतेः। न चापूर्वस्य भाव्यत्वे स्वाध्यायस्यानीप्सितकर्मत्वमिति वाच्यम्, इतरेतराश्रयप्रसङ्गात्; अत्रापूर्वभाव्यत्वेऽनीप्सितकर्मत्वम्, अनीप्सितकर्मत्वे चापूर्वभाव्यतेति। न च स्वाध्यायस्य क्रतुसंबन्धित्वव्यवहारान्न संस्कार्यत्वोपपत्तिरित्यपूर्वस्यैव भाव्यत्वमिति वाच्यम्, जपादौ कृत्स्नोपयोगात् कृत्स्नसंस्कारोपपत्तेः। "सक्तून् जुहोति" इत्यादौ तु सक्तूनां श्रुताद्युपयोगित्वाभावान्नियोगविषयत्वं युक्तम्। तथा "सुवर्णं भार्यम्" इत्यादिष्वपि। अतो द्वितीयास्वारस्यात् भावार्थस्य द्रव्यनिष्ठत्वमेव। तत्तु क्वचिदसंभवादपोदितम्। तत्तु पूर्वकाण्डे द्वितीयलक्षणे उक्तम्। द्वितीयाश्रवणे तु दृष्टार्थसंभवे चापूर्वविषयत्वशङ्कैवायुक्ता। अत एव "व्रीहीनवहन्ति" इत्यादौ द्वितीयाभाव इति कृत्वा चिन्तया 'तानि द्वैधा'धिकरणप्रवृत्तिरुक्ता तत्रैव। तच्च "तानि द्वैधम्"; "व्रीहीनवहन्ति" "तण्डुलान् पिनष्टि" इत्यादिर्विषयः; किमवहननादीनां नियोगविषयत्वम्, उत संस्कारकर्मत्वमिति संशयः। पूर्वः पक्षः—तेषां नियोगविषयत्वं साक्षादपूर्वसंबन्धलाभात्। ननु "व्रीहीनवहन्ति" इत्यादौ द्वितीयाश्रवणात् द्रव्यस्यैव साध्यत्वं प्रतीयत इति चेत्—न; द्वितीयाभाव इति कृत्वा चिन्तात्वादिति। राद्धान्तस्तु—संस्कारकर्मत्वमेव; वैतुष्याद्दृष्टकार्यजनकत्वप्रतीतेस्तदनुरोधेन नियोगा-

न्वयोपपत्तावदृष्टस्वभावस्याकल्प्यत्वादिति। अतः "अध्येतव्यः" इति संस्कारकर्मैव। स्वाध्यायस्य साध्यत्वं च प्राप्यत्वात्; वैयाकरणैः कर्मणश्चातुर्विध्यमभिहितम्—उत्पाद्यं विकार्यं प्राप्यं संस्कार्यमिति। सर्वस्यैतस्य संस्कारकर्मत्वाविशेषेऽप्यदृष्टरूपप्रोक्षणादिसंस्कारापेक्षया संस्कारस्य पृथगुक्तिः। उपनयनस्याध्यापनाङ्गत्वोक्तिरपि व्यर्था, "अष्टवर्षं ब्राह्मणम्" इत्यादिद्वितीयाश्रुतेस्तस्य माणवकनिष्ठत्वप्रतीतेः; स्मृतिषु तस्य संस्कारान्तर्भावात्। संस्कारश्च संस्कार्यार्थ एव। न चैकस्योभयशेषत्वोपपत्तिः। न च "उपनीयाध्यापयेत्" इति क्त्वातोऽङ्गत्वप्रतीतेर्द्वितीयाश्रुत्या माणवकनिष्ठताप्रतीतेश्चोभयशेषतेति वाच्यम्, एकस्य युगपदुभयार्थत्वानुपपत्तेः। न चाग्नेयादीनां प्रयाजादिवदध्यापनाध्ययनयोस्तन्त्रेणोपनयनस्य शेषतास्त्विति वाच्यम्, एकापूर्वकरणत्वाभावात्तयोस्तन्त्रेणोपकार्यत्वानुपपत्तेः। एतेन प्रासङ्गिकत्वशङ्कापि निरस्ता। न च माणवकद्वाराध्यापनैकशेषत्वम्, माणवकस्याध्यापनशेषत्वाभावात्। न च दर्शार्थप्रणीताग्नेः प्रसङ्गादग्निहोत्रोपकारकत्वशङ्का, यतो नात्र तद्वदुभयकर्मफलभागैक्यम्। न ह्यशेषभूतस्य द्वारत्वम्। न हि माणवकस्य तच्छेषत्वे प्रमाणमस्ति। तच्छेषत्वे चाध्ययनस्य माणवकैश्वर्यत्वाभावान्न स्वराद्धान्तसिद्धिः। प्रत्युत "तमध्यापयेत्" इति द्वितीयादर्शनान्माणवकशेषत्वमेवाध्यापनस्य, अध्यापकव्यापारस्याप्यृत्विग्व्यापारवदध्ययनार्थत्वात्। ऋत्विगप्यानीतो दक्षिणादानादिभिः, आचार्योऽपि तथा। स्वहितकारित्वेन स्वार्थप्रवृत्तौ हि माणवकोऽर्थदो भवति। आचार्यत्वोत्पत्त्यर्थत्वावगतेस्तस्य परार्थत्वान्नार्थदानाद्युपपत्तिः। यद्यपि बालस्याज्ञत्वान्न दानादानविवेकः, तथापि पित्रादयस्तत्कारयन्ति; लोके पित्रादय एवार्थं दापयन्तो दृश्यन्ते। अन्यार्थत्वे तु न दापयितृत्वोपपत्तिः। ननु वरणादिनियमैः ऋत्विक्त्वोत्पत्तावेव धनादिदानं, तथात्राप्यध्यापनादाचार्यत्वोत्पत्तावेव धनादिलाभ इति तदर्थमाचार्यत्वमुत्पद्यत इति चेत्—न; साङ्गाध्यापननिवृत्त्युत्तरकालं तदुत्पत्तौ तस्य स्वानुपकारकत्वाद्धनदानानुपत्तेः। ऋत्विक्त्वस्य तु प्रयोगसमय एव जातत्वेन प्रयोगोपकारकत्वादस्तु दानोपपत्तिः। अत उपनयनादिद्वाराध्ययनाङ्गत्वमध्यापनस्य याजकत्वादेः प्रयोगशेषत्ववत्। क्त्वा तु पूर्वकालत्वेऽप्युपपन्नः। "दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत" इत्यादावङ्गत्वव्यभिचारदर्शनात् क्त्वाप्रत्ययस्य तत्रैव स्वारस्येऽपि तस्य लिङ्गत्वात् स्मृतिगतत्वाच्च विलम्बतोऽङ्गाङ्गिभावेनाङ्गत्वप्रतीतिहेतुत्वात् "ब्राह्मणम्" इत्यत्र द्वितीयायाः श्रुतत्वात् तस्य वेदत्वाच्चोपनयनस्याध्येतृमाणवकद्वारा अविलम्बेनाध्ययनशेषत्वप्रतीतेरध्यय-

नशेषत्वं युक्तम् । क्त्वातो विलम्बिता चैककर्तृत्वप्रतीतिः, ततः प्रयोगैक्यधीः, ततश्चाङ्गाङ्गिभाव इति । द्वितीयाश्रुतिश्च "ऐन्द्र्या गार्हपत्यम्" इत्यादिष्विव लिङ्गाद्बलीयसी । "उपनीयाध्यापयेत्" इति वाक्यं वास्तु, समभिव्याहारादङ्गत्वप्रतीतिहेतुत्वात्; तदा तु सुतरां दौर्बल्यम् । अत उपनयनस्य माणवकद्वाराध्ययनाङ्गत्वमेव । अध्ययनकर्तृगतत्वेनोपनयनस्यान्तरङ्गत्वाच्चाध्ययनाङ्गत्वमेवोचितम् । न तु बहिरङ्गाध्यापनाङ्गत्वम् । क्त्वा चोपनयनस्याध्ययनार्थतयानुवादत्वेन समानकर्तृकतयाप्यन्वीयते; पूर्वकालतामात्रपरत्वेन वा; धनादिरागादध्यापने प्रवृत्तो नियमशास्त्रानुसारेण ब्राह्मणादीनध्ययने प्रवर्तयन्नध्ययनाङ्गोपनयनादावपि प्रवर्तत इति समानकर्तृत्वस्यार्थसिद्धत्वात् । अत आचार्यरागत एवाध्ययनप्रयुक्तिः । न च रागतस्तत्प्रवृत्तौ नाध्ययनस्य नित्यतासिद्धिः, रागाभावे तत्प्रयुक्त्यनुपपत्तेरिति वाच्यम्; याजकत्वस्य रागतः प्राप्तावपि क्रतूनां नित्यतानुष्ठानसिद्धिवत् तस्यापि सिद्धेः । रागतोऽध्ययनप्रवृत्तोऽपि "अष्टवर्षं ब्राह्मणमुपनयीत" इति शास्त्रानुसारात् प्रवर्तत इति शूद्रादीनां नोपनयनादिप्रसक्तिः । अतः शूद्रस्योपनयनाभावादनधीतित्वेनाविद्यत्वान्न क्रतावधिकारः । क्रतुविधीनामधीतविद्यब्राह्मणादिलाभे न शूद्रस्य विद्याप्रयोक्तृत्वम् । अध्ययनस्य क्रतुविधिप्रयुक्तत्वे तु शूद्रस्य साङ्गाध्ययनप्रसक्तिरनिवार्या; विध्यधीनप्रवृत्तित्वादनुपेतस्यापि शूद्रस्याध्ययनं स्यात् । निषेधोऽपि न वैधेऽर्थे । निषेधस्मृतेस्तु रागतः प्रवृत्तिविषयतया योजनीयत्वापत्तिः । अत एवाध्यापकरागत एव प्रयुक्तौ विधितः प्रयुक्तिकल्पनमनुपपन्नम् । उपनयनस्य द्वितीयाश्रवणेऽपि क्त्वातोऽध्यापनाङ्गत्वकल्पनायां "त्रिवृता यूपं परिवीयाग्नेयं पशुमुपाकरोति" इत्यादौ त्रिवृद्रशनादेर्यूपाद्यर्थता न स्यात्; किं तु पश्वर्थता स्यात् । द्वितीयाश्रुत्या यूपाङ्गतैवोक्ता चतुर्थलक्षणे । तच्च "पश्वङ्गं रशना स्यात्तदागमे विधानात् ।" "आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीयाग्नेयं पशुमुपाकरोति" इति श्रूयते । तत्र रशना किं पश्वङ्गम् ? उत यूपाङ्गमिति संशयः । "परिवीयोपाकरोति" इति क्त्वाश्रुतेः समानकर्तृकत्वाभिधानमुखेनाङ्गाङ्गिभावप्रतिपादनपरत्वात् "यूपम्" इति द्वितीयाया अनीप्सिततयाप्युपपत्तेः पश्वर्थोपाकरणार्थत्वाच्च तन्मुखेन पश्वङ्गमिति पूर्वः पक्षः । क्त्वाप्रत्ययस्य समानकर्तृकत्वाक्षेपपूर्वकत्वेन विलम्बितत्वात् "यूपम्" इति द्वितीयाविभक्त्यभिधेयस्य क्रियाजन्यफलभागिनः क्रियां प्रति प्राधान्यस्यानपेक्षतयाञ्जसावगमादेव प्राबल्याद्यूपार्थपरिव्ययणमुखेन यूपा-

ङ्गमिति सिद्धान्त इति। अतः प्राभाकरोक्तशास्त्रप्रयुक्तेर्दुष्टत्वान्न ततः शास्त्रप्रयुक्तिसिद्धिः।

भाट्टप्रक्रिया तु—मीमांसाशास्त्रं किमारम्भणीयम्, उतानारम्भणीयमिति; तदर्थं तस्या विषयप्रयोजने न स्तः, उत स्त इति; तदर्थं स्वाध्यायो नार्थपरः, उतार्थपर इति; तदर्थं "स्वाध्यायोऽध्येतव्यः" इत्यध्ययनं स्वर्गार्थत्वेन विधीयते, उताक्षरग्रहणपरंपरोपजायमानवाक्यार्थज्ञानार्थं विधीयत इति संशयपरंपरा। ननु गुरुगेहान्निवृत्त्यनुवृत्त्योरपि फलसंशयत्वेनोभयदर्शनेऽप्युदाहरणेऽपि किमिति नात्रोदाहरणमिति चेत्—न; शास्त्रानारम्भारम्भयोरनुपयोगित्वात्। तैस्तु शास्त्रानारम्भारम्भाभ्यां तत्फलतीत्येतावन्मात्रेणोक्तम्। तादृशफलभङ्गोऽप्युत्तरत्र वक्ष्यते। अत्र पूर्वः पक्षः—तदध्ययनं स्वर्गार्थत्वेन विधीयते, तत्र स्वाध्यायादेर्भाव्यत्वासंभवात् भाव्यत्वेन स्वर्गस्यैव स्वीकार्यत्वात्; न हि तावत्स्वतोऽध्ययनस्य भाव्यत्वम्, अपुरुषार्थत्वात्। न च स्वाध्यायस्य भाव्यत्वम्, प्रमाणान्तरेणापि तत्संभावाद्विध्यानर्थक्यापत्तेः। अर्थज्ञानस्यापि तथात्वापत्तेरेव न भाव्यता। अनधीयानेनापि स्वाध्यायादेः साध्यता पुस्तकपाठादिनापि। न च "अवहन्ति" इत्यादिवन्नियमार्थता, प्रमाणान्तरेणापि तत्सिद्धेर्नियमानर्थक्यात्। केवलार्थावगमो हि प्रमाणान्तरैरपि शक्यः। न चाधीतैरेव वेदैरवगतानि कर्माणि फलदानीति कृत्वा क्रत्वपूर्व एवाध्ययननियम इति वाच्यम्, अध्ययनस्यानारभ्याधीतत्वात् श्रुत्याद्यभावाच्चाध्ययनस्याक्रत्वर्थत्वात्। अतः "सक्तून् जुहोति" इतिवत् स्वाध्यायस्य करणत्वमेव; विश्वजिदादिवत् स्वर्गस्य भाव्यत्वं कल्प्यम्। तदुक्तम्—

"विनापि विधिना दृष्टलाभान्न हि तदर्थता।
कल्प्यस्तु विधिसामर्थ्यात् स्वर्गो विश्वजिदादिवत्॥"

इति। तत्कल्पना च जपाध्ययने श्रूयमाणार्थवादिकफलस्यैव। प्रथमाध्ययनेऽप्यध्ययनसाम्यादपेक्षयातिदेशादार्थवादिकमपि फलं कल्प्यमेव। अर्थवादस्य तत्परत्वाभावात् कल्पनायां प्रसृतायां संनिधावार्थवादिकफलस्याम्नानात् बुद्धौ संनिधानाल्लाघवात् फलत्वेन क्लृप्ती रात्रिसत्रे। नन्वेवं तस्य स्वाभाविकार्थपरताहानिः स्यादिति चेत्—न; विषनिर्हरणादिकार्ये विनियुक्तमन्त्राणामर्थाविवक्षादर्शनात्। अतोऽध्ययनस्य स्वर्गार्थत्वात् स्वाध्यायस्यार्थपरत्वाभावे मीमांसाया विषयप्रयोजनाभावान्नारम्भणीयत्वमिति। राद्धान्तस्तु—तदध्ययनं वाक्यार्थज्ञानार्थं विधीयते "अध्येतव्यः" इत्यक्षरग्रहण-

परंपरया तस्यैव भाव्यत्वप्रतीतेः ; दृष्टार्थसंभवे तु नादृष्टार्थकल्पनम् । न चार्थज्ञानस्य प्रमाणान्तरसिद्धत्वेन विध्यानर्थक्यमिति वाच्यम्, नियमार्थत्वाद्विधेः । ततश्च व्युत्पन्नार्थपरत्वानुरोधलाभः । न चाध्ययनस्य क्रत्वर्थतापत्तिस्तदेति वाच्यम्, तदापादितज्ञानस्यैव क्रत्वर्थत्वात् ; आधानसिद्धाग्नेरिव । ननु नात्र नियमोपपत्तिः, हुमादिस्तोभाक्षराणमर्थाभावात् ; ब्राह्मणादेरश्वमेधाद्यधिकाराभावात्तद्विषयब्राह्मणादिज्ञानस्य प्रयोजनाभावाच्च ; अध्ययनविधेरर्थज्ञानपर्यन्तत्वे न कृत्स्नाध्ययनसिद्धिरिति चेत्—न ; जपयज्ञादिविध्यन्तरोपयोगित्वेन कृत्स्नाध्ययनसिद्धेः । तदुक्तं तैः—

"दृष्टप्रयोजनालाभे सत्यदृष्टं प्रकल्प्यते ।
दृष्टमेव त्विह ज्ञानं विधेश्च नियमार्थता ॥

अक्रत्वर्थतया यत्तु नियमार्थनिवारणम् ।
तत्प्रयोजनमात्रत्वान्नियमस्य न दूषणम् ॥

न केवलार्थविज्ञानसिद्धिरस्य प्रयोजनम् ।
अपेक्षितं दृश्यते यद्यत् तत्सर्वं फलमिष्यते ॥"

इति । अतोऽध्ययनविधेरर्थज्ञानार्थत्वात् स्वाध्यायस्यार्थपरत्वे मीमांसाया विषयप्रयोजनलाभादारम्भणीयत्वमिति ; तदेतदुच्यते—"अथातो धर्मजिज्ञासा" इति ।

एतच्चानुपपन्नम्, स्वाध्यायनिष्ठत्वेन प्रतीयमानभावार्थस्य स्वर्गभाव्यत्वकल्पनाया अनुपपन्नत्वेन पूर्वपक्षस्यानुपपन्नत्वात् । वेदाख्याक्षरराशिमात्रस्य स्वाध्यायशब्दवाच्यत्वात् स्वाध्यायशब्दस्यार्थपर्यन्तत्वकल्पनाया अनुपपन्नत्वाद्राद्धान्तोऽप्यनुपपन्नः । सर्वप्रकारेणान्वेषणेऽपि दृष्टसाध्यत्वासंभवे ह्यदृष्टसाध्यत्वक्लृप्तिः । पूर्वपक्षस्यापि नात्यन्ताभासता युक्ता, तथात्वे शङ्काया एवानुत्थानात् ; पूर्वोत्तरपक्षयोस्तुल्यवदाभासमानत्व एव हि शङ्का । एकत्र संशय एव हि न्यायप्रवृत्तिः । तथा स्वाध्यायस्यार्थो न स्वाध्यायशब्दवाच्यः, वेदाख्याक्षरराशावेव हि तत्प्रसिद्धिः; न तदर्थे । अक्षरग्रहणपरंपरया जायमानार्थपरत्वे परंपरोपजायमानक्रत्वनुष्ठानपरतापि स्यात् । रागतो मीमांसाप्रवृत्तौ न विधिव्यापारकल्पनेत्युक्तम् । किंचाध्ययनस्य क्रतुविधिप्रयुक्ततापयङ्गीकार्या, क्लेशरूपक्रियामात्रस्य प्रयोजकत्वानुपपत्तेः । क्रतुप्रयोज्यत्वे च शूद्रस्यापि प्रसक्तिरिति पूर्वमेवोक्तम् । यत्तु विषयप्रयोजनलाभालाभाभ्यां शास्त्रस्यारभ्यत्वमनारभ्यत्वं चोक्तम्, तच्चासत् ; साङ्गाध्ययनापातप्रतीयमानधर्मादिविषयसद्भावादनुष्ठान-

मेव प्रयोजनमस्तु। नन्वनुष्ठानस्याद्य पूर्वपक्षनयमात्रसिद्धत्वात्प्रयोजनत्वाभावान्न शास्त्रारम्भ-सिद्धिरिति चेत्—न; वेदार्थाविवक्षाया अपि विनियोगादिलक्षणापेक्षत्वात्प्रयाजादिवाक्यान्यविवक्षितार्थानीत्येवं शेषत्वादिपरवाक्यानां निरूपणीयत्वात्। अथानुष्ठानप्रयोजनत्वेनारिप्सितं न सिध्यतीति चेत्—मास्तु; शास्त्रारम्भाक्षेपस्य तावदशक्यत्वात्। न च मीमांसाया बहुविद्यान्तराश्रितत्वात् शुश्रूषूणां प्रवृत्त्यर्थं प्रयोजनं वक्तव्यमिति वाच्यम्, तेषामाप्तपुरुषप्रवृत्त्यैव तस्याः प्रयोजनवत्त्वनिश्चयात्। अतो न विषयप्रयोजनपरता सूत्रस्य। किंतु साङ्गाध्ययनादापातप्रतीयमानपुरुषोपयोगिवेदार्थनिश्चयाय प्रवृत्तस्यान्यपरत्वेन स्वार्थतात्पर्याभावबुद्ध्या तन्निर्णयप्रवृत्तिवैमुख्येऽर्थपरत्वनिश्चयात्प्रवृत्तेर्विषयप्रयोजनाभिज्ञविषयतैव। एवं मतद्वयेऽप्यस्मन्मतविरुद्धार्थनिरास ऊहनीयः। ग्रन्थविस्तरभीत्या तु न तन्मतयोः कृत्स्नोपन्यासनिरासौ कृतौ। अतोऽध्ययनविधेर्नियमविधित्वेऽग्नीनामाधानस्येव स्वाध्यायशब्दवाच्याक्षरराशिसंस्कारपरत्वे च स्थित एव विचारोऽभिमतो भगवतो भाष्यकारस्य। आधानं चाग्निसंस्कार इति शेषलक्षण उक्तम्। तच्च "तत्प्रकृत्यर्थं यथान्येऽनारभ्यवादाः"; आधानं किं प्रकृत्यर्थम्? उताग्न्यर्थमिति संशयः। "अग्नीनादधीत" इति द्वितीयाश्रुत्याग्न्यर्थत्वप्रतीतावपि प्रकृत्यर्थमाधानम्, अग्न्याधानवाक्यस्यानारभ्याधीतत्वात्। अग्निद्वारा प्रकृत्यन्वयात् द्वितीयाश्रुतेरविरोध इति पूर्वः पक्षः। आहिताग्नेः कर्मस्वधिकारात् कर्मप्रयोगाद्बहिरेवाग्नीनामार्जनाद्भिन्नकालत्वाच्च द्वितीयाश्रुत्याग्न्यर्थमेवाधानमिति राद्धान्तः। अत्राप्यध्ययनस्यानारभ्याधीतत्वात्स्वाध्यायसंस्कारपरत्वं सिद्धम्। प्रथमाध्ययनस्य नियोगविषयत्वकल्पनायां तत्र माणवकस्याधिकारो न स्यात्; कर्मस्विव विदुषोऽधिकारापत्तेः। अतोऽग्न्याद्यार्जनादिकथनवद्विद्यार्जनकथनपरत्वमेवाध्ययनविधेः।

प्रायशोऽस्मदीयराद्धान्तप्रकारः परक्रियानिरास एव प्रदर्शितः; तथापि शास्त्रारम्भादिप्रक्रियाज्ञानाय किंचिदुच्यते; अत्र संशयः—मीमांसाशास्त्रं किमनारम्भणीयम्, उतारम्भणीयमिति; तदर्थं स्वाध्यायस्यार्थपरत्वं नास्ति, उतास्तीति; तदर्थं "स्वाध्यायोऽध्येतव्यः" इति विहिताध्ययनसंस्कृतस्य स्वाध्यायस्य जपपारायणादिरेव प्रयोजनम्; उतार्थज्ञानमपीति। अत्र पूर्वः पक्षः—न तावत्तस्यार्थज्ञानं प्रयोजनम्, हुमादेरर्थाभावेन तस्याव्यापित्वात् कृत्स्नस्य स्वाध्यायस्य संस्कार्यत्वानुपपत्तेः; ब्राह्मणादीनामश्वमेधादिष्वनधिकारात्तद्विषयमन्त्रादेश्च नाध्ययनं स्यात्, अप्रयोजनत्वात्; अनुष्ठानद्वारा ह्यर्थज्ञानस्य प्रयोजनत्वम्; एव-

मचिकीर्षितकर्मविषयमन्त्रादेरपि । अतो नार्थप्रयोजनता; किंतु जपादिरेव प्रयोजनम्; तस्य कृत्स्नस्वाध्यायव्यापित्वात् कृत्स्नाध्यायायनं च सिद्धम् । "प्रतिगृह्य वानश्नंस्त्रिःस्वाध्यायं वेदमधीयीत" "वेदमेव जपेन्नित्यम्" इत्यादौ तद्विधिर्दृश्यते । स्वाध्यायशब्दार्थश्च स्वशाखा कृत्स्नैव, न तु तदेकदेशः । एवं जपादौ विनियोगे तु नार्थपरता । न चार्थज्ञानमपि तस्य प्रयोजनमस्त्विति वाच्यम्, निरर्थकपदोच्चारणरूपत्वाज्जपस्य; अनेकप्रयोजनकल्पनानुपपत्तेश्च; एकेनैव श्रुतेन प्रयोजनेन कृत्स्नस्वाध्यायसंस्कारसिद्धौ कल्पनानवकाशात् । न हि जपे स्वाध्यायस्य विनियोगवदर्थज्ञाने विनियोगः । ननु साङ्गाध्ययनात् पुरुषोपयोगिधर्मतत्साधनादिबोधो जायते; अतो लिङ्गात्तस्यार्थे विनियोगो विद्यत इति चेत्—न; तस्य जपश्रुतिबाधितत्वात् । अतो जपद्वारा स्वाध्यायः पापनिर्हरणादिफलपर इति नार्थपरः । तात्पर्याभावे प्रतीयमानोऽप्यर्थो हेय एव । ततो मीमांसाप्रवृत्तौ रागो विच्छिन्न एव । अर्थपरत्वनिश्चये हि तदर्थनिर्धारणाय प्रवृत्तिः । अतो जपादेरेव स्वाध्यायाध्ययनप्रयोजनत्वादर्थपरत्वाभावे मीमांसाशास्त्रमनारम्भणीयमिति । राद्धान्तस्तु—अस्योभयमपि प्रयोजनम्; न केवलं जपादिरेव; तथात्वे शब्दानां स्वाभाविकार्थपरत्वहानिप्रसङ्गः । अस्त्विति चेत्—न, चक्रकापातात् । "वेदमधीयीत" इत्यस्यापि वेदान्तर्गतत्वान्न स्वार्थपरत्वम्; ततश्च स्वाध्यायोऽर्थपर इति "त्रिःस्वाध्यायम्" इत्यादिजपविधेरप्यर्थपरत्वम्; ततश्च पुनः "स्वाध्यायस्यार्थपरत्वहानिरिति चक्रकापातः। अतो जपविधेरपि स्वाध्यायत्वप्रतीतिसिद्ध्यर्थं स्वाध्यायस्यार्थपरतापेक्षितैव । न च जपार्थपरत्वयोर्वस्तुविरोधः, निरर्थकपदोच्चारणरूपत्वाज्जपस्येति वाच्यम्; जपानुष्ठानकालेऽर्थविवक्षाभावमात्रादपि तदुपपत्तेः। किंच जपे स्वाध्यायस्यार्थपरत्वे को विरोधः? न च द्विपरत्वमेव विरोध इति वाच्यम्; "अध्येतव्यः" इति विधेराकाङ्क्षितत्वेन स्वीकार्यत्वात् । तस्य हि स्वशेषिस्वाध्यायनिरूपणसिद्ध्यर्थं पुरुषोपयोग्यर्थपरत्वमप्यकाङ्क्षितमेव । ततश्च विधेयार्थप्रवृत्तिशैघ्र्यम् । अर्थपरत्वं जपविधेरपीष्टमित्युक्तम्; न चार्थपरत्वस्याव्यापकत्वान्न तत्स्वीकार इति वाच्यम्; अव्यापकस्यापि विध्याकाङ्क्षितत्वेन स्वीकार्यत्वात् । अतः स्वाध्यायेन यद्यत्साध्यं तत्सर्वमध्ययनविधेः प्रयोजनमित्यविवक्षितावान्तरभेदेन प्रयोजनैक्यस्वीकारान्नैकप्रयोजनोक्तिलाभ इति न चोद्यावकाशः । एवं स्वाध्यायस्यार्थपरत्वे तदर्थनिर्णयाय मीमांसाप्रवृत्तौ न रागविच्छेदः । अतो जपादेरर्थज्ञानस्याप्यध्ययनसंस्कृतस्वाध्यायप्रयोजनत्वादर्थपरत्वे तदर्थनिर्णयाय मीमांसाशास्त्र-

मारम्भणीयमिति ; तदेतदुच्यते—"अथातो धर्मजिज्ञासा" इति । एवं शास्त्रप्रयुक्तिविचारे तु "अधीत्य स्नायात्" इत्यादिस्मृतेश्च न बाधः, विधितः शास्त्रप्रयुक्तेरपि रागतः प्रयुक्तिरुत्कटा च । गुरुकुलान्निवृत्तस्यापि द्रव्यार्जनादिवत् शास्त्रश्रवणावकाशोऽपि संभवत्येव । यदन्यदस्मन्मतापेक्षितं तत्सर्वं परपक्षभङ्ग एवोक्तम् ।

ननु पूर्वोत्तराविभागेन मीमांसाशास्त्रस्यारम्भणीयत्वसमर्थनपरत्वे "वेदार्थजिज्ञासा" इति सूत्रं स्यात्, न तु "धर्मजिज्ञासा" इति; अतस्तत्र कर्मविषयश्रुत्यर्थविचारमात्रारम्भणपरत्वं तस्येति चेत्—न; धर्ममुखेन कृत्स्नवेदार्थविचारारम्भणप्रतिपादनपरत्वात्; तच्च वेदानां कर्मविषयत्वेनोपक्रान्तत्वात् । तदुक्तं वेदान्तसारे—"अधीतवेदस्य हि पुरुषस्य कर्मप्रतिपादनोपक्रमत्वाद्वेदानां कर्मविचारः प्रथमं कार्य इति 'अथातो धर्मजिज्ञासा' इत्युक्तम्" इति । ननु "अथातो धर्मजिज्ञासा" इति धर्मजिज्ञासामात्रस्यैव प्रथमकर्तव्यतोक्ता तत्रैव, न तु वेदार्थविचारमात्रस्यारम्भणीयत्वमिति चेत्—न ; तस्य भाष्ये स्फुटत्वात् । सारग्रन्थस्तु कर्मविचारमुखेन वेदार्थविचारमात्रपरत्वेन योजनीयः । अत्र "अध्येतव्यः" इत्यध्ययनस्य नियमविधित्वम् 'अध्ययनेनैव' इति भाष्याद्गम्यते, एवकारादन्यनिवृत्तेः । **अध्ययनं किंरूपमिति;** किंस्वरूपमित्यर्थः । तदाकाङ्क्षापूर्तिस्तु "तमध्यापयेत्" "युक्तश्छन्दांस्यधीयीत" इत्याभ्याम् । **कथं च कर्तव्यमिति;** किमितिकर्तव्यताकमित्यर्थः । तदाकाङ्क्षापूर्तिश्च "अष्टवर्षं ब्राह्मणमुपनयीत" "श्रावण्यां प्रौष्ठपद्यां वा उपाकृत्य" इत्यादिभिः । अर्थादुपनयनमध्ययनाङ्गमिति चोक्तम् । **एवं सत्संताने**त्यादिभाषेण पूर्वोदाहृतश्रुत्यादीनां संपिण्डितार्थ उच्यते । आचार्याधीनोपनयनपुरस्कारेणाध्ययनप्रवृत्त्यभिधानादाचार्यरागादेवाध्ययनप्रयुक्तिरभिमतेति गम्यते; किंचोत्तरत्रापशूद्राधिकरणे "यथैव हि त्रैवर्णिकविषयाध्ययनविधिसिद्ध—" इत्यादिभाष्ये तथा प्रतीतेश्च "अष्टवर्षं ब्राह्मणम्" इत्यादिस्त्रैवर्णिकविषयत्वेनाभिप्रेतः, केवलं "स्वाध्यायोऽध्येतव्यः" इत्यत्र त्रैवर्णिकविषयत्वाप्रतीतेः; भाष्यविवरणे श्रीराममिश्रैरपि तथोक्तत्वाच्च । **अक्षरराशिग्रहणफलमध्ययन**मित्यनेनावहन्त्यादिशास्त्रवदध्ययनविधेर्दृष्टफलपरत्वमुच्यते । नियमाददृष्टं तु दृष्टफलपरत्वेऽपि स्वीकृतम्; केवलादृष्टपरत्वे तु सकृन्मात्रमेवाध्ययनं स्यात् । दृष्टपरत्वं च भाविविनियोगापेक्षया ।

प्रकृतस्यैकशास्त्र्यस्य ब्रह्मचिन्तोद्यमस्य च ।
क्रमादेश्चोपपत्त्यर्थं तथाहीत्यादि भाष्यते ॥ २४६ ॥

अत्र कर्मविचारात्प्रागपि ब्रह्मविचारः स्यादिति पश्यन् किमध्ययनादपि तस्य पूर्वत्वमिच्छति, उत अधीतवेदस्य कर्मनिरूपणात् प्राच्यत्वमिति विकल्पं हृदि निधायाद्यं निषेधति—**प्रथममिति** । "तावच्छब्दोऽध्ययनानन्तर्यस्य सर्वसंमतिं दर्शयति" इति विवरणम् । एतेन विचारस्याध्ययनानन्तरभावित्ववद्व्याख्येयस्यैकविधिसिद्धाध्ययनसंस्कारगोचरनियतक्रमैकप्रबन्धत्वम् , अध्ययनस्य विधिबलात्कृत्स्नस्वाध्यायविषयत्वं, तत एव तद्विचारस्य तथात्वं च यथावत्कर्मब्रह्मचिन्तकैः सर्वैर्दुस्त्यजमिति व्यज्यते । अवधारणार्थो वा तावच्छब्दः । तेन चाष्टवर्षाद्युपनीतस्यानन्तरं शौचाचारशिक्षणपूर्वकेण नियतेनाध्ययनेन शास्त्रान्तरावसरनिरोधात् तन्मूलत्वेन संभावनीयसाधनचतुष्टयादिपूर्ववृत्तान्तरनिरासः । "स्वाध्यायोऽध्येतव्यः" इति स्वविधिं गृह्णता तत्प्रयुक्तिरभिप्रेता । **अध्ययनेनाक्षरराशिग्रहण**मित्यनेन संस्कारलाभः सूचितः । एवकार इह नियमस्य फलितत्वं द्योतयति । यद्यप्यकरणे प्रत्यवायान्निमित्तादृष्टेश्च नित्योऽयमध्ययनविधिः, तथापि दृष्टस्य फलस्यापरित्याज्यतया तत्स्वीकारार्थादध्ययनादक्षरराशिग्रहणे सत्यन्यस्य ग्रहणहेतोर्नात्रावकाशः । अध्ययनस्य नियोगार्थत्वं वदतापि ह्यर्थात् पुस्तकपाठादि प्रतिषेध्यम् ; अत एव हि लिखितपाठकनिन्दापि । **स्वाध्यायशब्दवाच्ये**त्यादिभिस्त्रिभिः स्वशाखैकदेशमात्रं वा शास्त्रान्तरं वा विचार्यो वेदार्थो वा न स्वाध्यायशब्दवाच्य इति व्यज्यते ; यथाक्रमाध्ययनं परंपराप्राप्तं विध्यनुमतमिति च भावः । **ग्रहणं विधीयते** ; फलत्वेन बोध्यते; संभवदुपायान्तरं फलमिदमुपायविशेषतो नियम्यत इत्यर्थः ; यत एवकारस्ततोऽन्यत्र हि नियमः । यद्यप्यक्षरग्रहणस्यान्यतोऽपि शक्यत्वान्न स्वरूपतो नियमः, तथापि जपाद्युपयोगोऽध्ययनगृहीतेनैवेति नियमोपपत्तिः । अर्थज्ञाने नियमं वदतामप्येवमेव निस्तारः । नन्वध्ययनविधिना स्वाध्यायस्याध्येतव्यत्वमात्रं प्रतीयते ; न तावता साधनचतुष्टयसंपत्त्यादिहेतुभूतशास्त्रान्तरावसरनिरोधः ; ततः पश्चादप्यध्ययनोपपत्तेः ; निरङ्गं वा सकृदधीत्य वा शास्त्रान्तरमभ्यस्यतामित्यत्राध्ययनस्वरूपकालाधिकार्यादिकं व्यनक्ति—**तदिति**; सर्वसंमतनित्यविधिसिद्धमध्ययनमित्यर्थः। **किंरूपम्** ; किं जपादिवत् स्वतन्त्रोच्चारणम्? उत अनूच्चारणम्? किं वापन्यायमूलगौडाध्ययनवत् पारायणवच्चानावृत्तम्? उत अवघातवच्चावृत्तम्?

इत्यर्थः। "रूपशब्देन फलग्रहणम्" इति तूलिकाया अपि यावद्ग्रहणमावृत्तरूपत्वे तात्पर्यम्। **कथमिति** इतिकर्तव्यतापरम्। अध्यापनार्थशङ्कार्थस्योपबृंहणीयस्याध्ययनार्थतया संप्रतिपन्नानामुपबृंहणानां च विशेषमैकरस्यावश्यंभावं चाभिप्रेत्य **अनेन उपदेशैश्च** इति विभज्य निर्देशः। 'उपाकृत्याधीयीत' इत्येतत् 'उपनीतोऽधीयीत' इति श्रुतितात्पर्यकृतेः स्थापकम्। उपनीतस्य ह्यध्ययनार्थतयोपाकर्मादि निर्दिश्यते। **युक्तः**; अवहितः, व्रतादियुक्तो वा। अर्धं पञ्चमं येषां ते अर्धपञ्चमाः। आदिशब्देन

"अत ऊर्ध्वं तु छन्दांसि शुक्लेषु नियतः पठेत्।
वेदाङ्गानि च सर्वाणि कृष्णपक्षेषु संपठेत्॥"

इत्यादीनि प्रागुक्तसाङ्गाध्ययनानुगुणवचनानि गृह्यन्ते। व्रतविशेषाः सोपाकृतयः प्राजापत्यसौम्यादयः। नियमविशेषाः शुक्लकृष्णपक्षार्धपञ्चममासादिविभक्ताङ्गाङ्ग्यध्ययनकालभेदविषयाः 'शूद्रसमीपे नाध्येतव्यम्' इत्याद्युक्तदेशादिविषयाश्च। ननु "उपनयीत तमध्यापयेत्" इति श्रुत्या आचार्यकर्तव्यताश्रुतौ कथमध्ययनापेक्षितविधिः? कथं चात्रोपात्तश्रुत्यादेरपि शास्त्रान्तरावसरनिरोधादिसिद्धिः? इत्यत्राह— **एवमिति**; प्रदर्शितश्रुतिस्मृतिसहकृतस्वविधिसिद्धसाङ्गाध्ययनविधानप्रकारेणेत्यर्थः। "अभिजनविद्यासमुदेतम्" इत्यादिभिराचार्यगुणग्रहणान्नाध्यापनविधिपरत्वं शङ्क्यम्, ऋत्विग्गुणोक्तिन्यायादित्यभिप्रायेण **सत्संताने**त्याद्युक्तिः। अत्राचारात्मगुणौ समाहितशब्दाभिप्रेतौ। **वेदविदिति** विद्यासमुदेतत्वविशदीकरणम्। निषिध्यते चायोग्यादध्ययनम्; तद्गुणहानौ प्रतिसमाधीयते च। तथा च "तमसो वा एष तमः प्रविशति" इत्यादिभिः शिष्यस्य हानिरुक्ता। "संस्कर्तारमीप्सेत्" "तस्मिंश्चैव विद्याकर्मान्तम्" इत्यादिना च तद्गुणानां माणवकार्थत्वं व्यक्तम्। यथाध्यापनविधिवादिनामष्टवर्षत्वादिमाणवकविशेषणमाचार्यार्थं तद्वदाचार्यविशेषणं माणवकार्थमिति प्रतिबन्दीसूचनाय **व्रतनियमविशेषयुक्तस्ये**त्याद्युदाहृतम्। षष्ठ्यन्तपदाभ्यामधिकारिस्वरूपेतिकर्तव्यतयोः सिद्धिः। तेनाध्ययनस्याङ्गाध्ययनसाहित्यं शास्त्रान्तरावसरनिरोधकत्वं च सिद्धम्; अङ्गाध्ययनस्यापि नियमविशेषत्वादष्टवर्षाद्युपनीतस्याध्ययनविध्यवरुद्धत्वाच्च। **आचार्योच्चारणानूच्चारण**मित्यनेन स्वतन्त्रोच्चारणं विचारस्याध्ययनशास्त्रार्थानुप्रवेशशङ्का चापास्यते। उपनयनस्य यथाध्यापनानुगुणशिष्यासत्तिर्दृष्टफल-

तयोपकारिका मतान्तरे, तथानूच्चारणानुगुणप्रत्यासत्तिरस्मन्मते स्यादिति च भावः। अस्मिन्प्रथमाध्ययनेऽवघातन्यायात्सकृदसकृद्द्विस्त्रिरित्यादिविशेषानादरेण यावत्फलमावृत्तेरर्थसिद्धिमभिप्रेत्याह—**अक्षरराशिग्रहणफलमिति**; अनेनाक्षरग्रहणकामत्वमधिकारिविशेषणमित्यपि व्यञ्जितम्।

फलत्वेनाश्रितस्यापि तथात्वं वितुषत्ववत्।
उपयोगश्च यागादौ ग्रहणस्यापि दुस्त्यजः ॥ २४७ ॥

विधितोऽनुज्ञया वार्थज्ञानं फलमिहेच्छता।
फलानुबन्धान्नित्यत्वं प्रहीयेतेति दुर्वचम् ॥ २४८ ॥

ये तु पूर्वपक्षे नित्याध्ययनविधौ विश्वजिन्न्यायात्सर्वाविशिष्टं स्वर्गं फलमिति कल्पयन्ति सिद्धान्ते चार्थज्ञानं, तेऽप्यनेन प्रतिचिक्षिपिरे। अक्षरग्रहणस्य हि दृष्टस्य सुखादन्यस्याप्यर्थज्ञानादेरिव सुखादिपर्यवसानात्फलत्वं युक्तम्। तदेवम् 'अनूच्चारणम्, अक्षरराशिग्रहणफलम्' इत्युभाभ्यां किंरूपमिति बुभुत्सितमाद्याध्ययनभावार्थस्वरूपं प्रदर्शितम्। तथा च विवरणम्—"एकफलावच्छिन्नक्रियाक्षणनिचये हि धातोर्वृत्तिः, यथा 'ओदनं पचति' इति; इतरथा वर्तमाननिर्देशभङ्गप्रसङ्गात्; प्रारब्धोऽपरिसमाप्तो हि वर्तमानशब्दार्थः। क्षणभङ्गिन्यास्तु क्रियाया धात्वर्थत्वे शब्दप्रयोगात्पूर्वमेव ज्ञातस्य क्रियाक्षणस्य नष्टत्वादुत्तरस्य च भविष्यत्त्वात्समकालस्याज्ञाततया शब्दाविषयत्वाच्चाक्षुषत्वेऽपि क्षणध्वंसादादिमध्यान्तानिरूपणाच्च न प्रारम्भापरिसमाप्त्योः सिद्धिरित्यतो ग्रहणफलावच्छिन्नक्रियाक्षणनिचयेऽध्ययनशब्दस्य वृत्तिरित्याह" इति। अध्ययनस्याचार्योपनीतकर्तृकानूच्चारणत्वोक्तिः "उपनयीत, तमध्यापयेत्" इत्युभाभ्यामाचार्यकर्तृकोपनयनादिपूर्वकत्वं विधीयत इति व्यनक्ति। ननु "अध्यापयेत्" इति वृत्त्युपायनियमार्थत्वं स्यात्। मैवम्—अनुपनेतुरपि तदर्थाध्यापनदृष्टेरुपनयनविधानैरर्थक्यात्। नापि 'उपनीतमेवाध्यापयेत्' इति क्रमनियमोऽपि, तथाहि "अष्टवर्षं ब्राह्मणम्" इत्यादेरनपेक्षितवचनत्वप्रसङ्गात्; अन्यार्थमिह तदुपदेशस्त्वसङ्गत एव। न चात्रोपनीतौ नियमः शङ्क्यः, तत्प्रापकान्तरादृष्टेः। स्मृतिर्दृश्यत इति चेत्—न; अष्टवर्षाद्युक्तेरनुपयोगादेव। न चात्र वृत्त्युपायद्व्योक्तिः, उपनयनस्य तदुपायत्वेनापरिसंख्यानात्। तथात्वेऽपि प्रापकाभावेन नियमानुप-

पत्तिरुक्तैव; दत्तोत्तरत्वाच्च। अतोऽध्ययनापेक्षितविधिरेवायम्। प्रयोजके चात्र विधिः "याजयेत्" इतिवत् स्यात्; अध्यापनमपि हि याजनवद्वृत्त्यर्थतया प्राप्तत्वान्न विधेयम्। तदत्र 'अष्टवर्षो ब्राह्मणः स्वाध्यायग्रहणकाम उक्तप्रकाराचार्योपनीतस्तदुपगत्या यथोक्तव्रतनियमवानधीयीत' इति सोपबृंहणाद्याध्ययनशास्त्रार्थस्थापना। अत एवाध्ययनविधौ नियोज्याश्रवणादन्यप्रयुक्तानुष्ठानत्वक्लृप्तिरयुक्ता; अध्यापनविधावप्यश्रवणाच्च; क्लृप्तेश्चोभयत्राविशेषात्। न चेह तत्क्लृप्तिः; "ब्राह्मणम्" इत्यादेः प्रजाकामादिवद्विभक्तिविपरिणाममात्रेण तत्सिद्धेः। *'विप्रोऽधीयीत' इति स्मृत्यनुग्रहाच्च। बालस्य स्वाधिकाराज्ञानान्न स्वविधिप्रयुक्तिरिति चेत्—न; निषादस्थपतिन्यायादन्यैस्तदभिज्ञैरनुष्ठानोपपत्तेः; हितैषिण एव हि बालादीनामविदितस्वाधिकाराणां जातकर्मादिसंस्कारानपि स्वयंविदितोपयोगाः कुर्वन्ति। अध्ययने तु बालस्याप्याप्तप्रेरणादिभिः साफल्यानुमानात्प्रवृत्तिर्युक्ता।

नित्यमध्ययनं काम्यप्रयुक्तमिति वादिनाम्।
कथं तत्र नियोगस्य कृत्युद्देश्यत्वलक्षणम्॥ २४९॥
प्रबुद्धानां स्वविधिनाऽबुद्धानामन्यतस्त्विति।
प्रयुक्तिभेदक्लृप्तौ च स्यादर्धजरतीयता॥ २५०॥

यच्च "निस्तीर्णाध्ययनदुःखे माणवके विचारात्पूर्वमध्ययनविधेरधिकारपर्यवसानाय दृष्टमर्थज्ञानं विषयसाध्यप्रयोजनतया स्वीक्रियते" इति, तदपि मन्दम्; अध्ययनस्यान्यतः सिद्धौ तदप्रयोजकेन सिध्यता कार्येण तस्य प्रयोजनान्तरक्लृप्तेरयोगात्; नित्यान्तरवदस्यापि ते नियोगमात्रप्रयोजनत्वोपपत्तेः। दृष्टत्वादन्यदप्यनुज्ञातमिति चेत्—न; आनु-

---

*'विप्रोऽधीयीत' इत्यतः पूर्वं 'अतः परं लक्षणं प्रबुद्धमित्यारभ्य भगवन्तमित्यन्तं' इत्यधिकः पाठः केषुचित् कोशेषु दृश्यते। स तु प्रकृतानन्वितः। कदाचित् २४९ तमश्लोकान्ते दृश्यमानं 'लक्षणम्' इति पदमारभ्य २०५ पुटे २५ पङ्क्तौ दृश्यमानं 'भगवन्तम्' इति पदं यावत् यथास्थानं लिखितुं प्रमाद्यता पश्चात् प्रबुद्धेन लेखकेनान्येन वा शोधकेन २५० तमश्लोकादौ दृश्यमानं 'प्रबुद्धानाम्' इति पदमपि संयोज्य 'लक्षणं प्रबुद्धानामित्यारभ्य भगवन्तमित्यन्तो ग्रन्थोऽतःपरं पठनीयः' इति सूचयितुं २४९ तमश्लोके 'कृत्युद्देश्यत्व' इत्यस्यानन्तरं हंसपादिकया मातृकायां पार्श्वयोरधस्ताद्वा लिखिता पङ्क्तिरनवधानेन पश्चात्तनलेखकेनात्र ग्रन्थमध्ये संयोजिता स्यादित्यूहितुं शक्यते।

षङ्गिकस्य लाभपूजादेरत्र विध्यनुज्ञातत्वेन स्वीकारप्रसङ्गात्। न च धर्मानुष्ठानोपयुक्तत-यार्थज्ञानमेव विधिरनुजानाति, नान्यदिति वाच्यम्; धनादेरपि तदुपयुक्तत्वेन तस्याप्यनु-मतिप्राप्तेः।

सर्वविध्युपकारित्वमर्थज्ञानस्य संभवेत्।
नैतावता विशेषेण दृष्टमन्यदुपेक्ष्यते॥ २५१॥
धनादेरुपकर्तृत्वं स्वशक्त्यैवेति चेन्मतम्।
अर्थज्ञानं च तद्वत्स्यान्न विधिभ्रूवशंवदम्॥ २५२॥
अर्थतस्तदनुज्ञातं शब्दशक्त्यैव भावितम्।
सापेक्षैर्यागदानादिनियोगैरुपजीव्यताम्॥ २५३॥
अपि चैकस्य वैरूप्यं विध्यनुज्ञात्मकत्वतः।
प्रधानगुणकर्मत्वविषये च प्रसज्यते॥ २५४॥

तस्मादध्ययनारम्भवेलायामेव माणवकस्य हितमाचार्यादयोऽभिसंधाय परबुद्धेरुपदिश्य वा तत्र प्रवर्तका इति युष्मद्ग्रामेष्वपि वृत्तान्तः। न पुनरन्यस्याचार्यकं मया भावनीय-मिति बुद्ध्या कश्चित्प्रवर्तमानो दृश्यते; शिक्षयन्तश्च हितैषिणो बालस्यैवागामि फलं व्यपदिशन्ति। छान्दोग्ये च—"ब्रह्मचर्यं भगवति वत्स्याम्युपेयां भगवन्तम्" इति जाबालो गौतममाह; तेन च प्रत्युक्तम्—"समिधं सोम्याहर, उप त्वा नेष्ये" इत्यादि; अतः शिष्यार्थमेवाचार्यः प्रवर्तते; ततस्तु वरादिकं तेन प्राप्यमिति सिद्धम्। अत एव 'द्रव्यार्जनादिलुब्धाचार्यरागप्रयुक्तमध्ययनम्' इति यत्कैश्चिदुक्तं तत्स्वविधिप्रयुक्त्य-संभवेऽप्यध्यापनविधिप्रयुक्तिस्तावदयुक्तेति स्थापयितुम्। न हि माणवकस्य प्रयोजनम-बोधयित्वा तत्प्रवर्तनतन्मूलद्रव्यार्जनादिसंभवः; अन्यथा हठात्प्रवृत्तिराचार्यस्य स्यात्। अतः साङ्गाध्ययनविधौ कण्ठोक्तो विप्रादिः स्वहिताभिसंधिकर्तेति नान्यतः प्रयुक्तिः। एतेनाचार्यकरणविधिप्रयुक्त्यनङ्गीकारे क्रतुविधिप्रयुक्तेरवश्याश्रयणीयतया तत्तत्फलकामशूद्रा-देरप्यध्ययनाधिकारः स्यादिति कैश्चिदुक्तं निरस्तम्, आधानवन्नियतकर्तृकेण स्वविधिनैवा-ध्ययनस्य प्रयुक्तेः। अध्ययनविधावधिकाराश्रवणचोद्यमपि वैतुष्यवत् दृष्टस्याक्षरग्रहणस्य फलत्वोक्त्या प्रत्युक्तम्। "उपनीय" इत्यादिस्मृतिरपि नाध्यापनं विधत्ते, नाप्या-चार्यकं तत्फलत्वेनोपादत्ते; अन्यतः प्राप्तविशिष्टाध्यापनानुवादेनाचार्यशब्दव्युत्पादनपर-

त्वात्, उपाध्यायादिशब्दव्युत्पादनवत्; न ह्यत्र तदतिरिक्ततात्पर्यक्लृप्तिहेतुः। न चाचार्यकमेकमन्यादृशम्, मानाभावात्। निमित्तान्तरादृष्टया तत्क्लृप्तिरिति चेत्—न; सनियमकोपनयनाध्यापनात्यन्तायोगव्यवच्छेदमेलकस्य निमित्तस्य दृष्टेः। अत एवोपनयनादेरुत्तरकालेऽप्युपाध्यायादिनयादाचार्यशब्दप्रयोगोपपत्तिः। पूर्वं त्वनागतावेक्षणस्य दुःशकतया निमित्तज्ञानसंदेहाभ्यामप्रयोगः। अपि च स्मृतेरत्र शब्दव्युत्पादनमात्रपरत्वे वृद्धव्यवहार एव मूलं दृष्टम्; आचार्यकरणविध्यर्थत्वे त्वलौकिकार्थश्रुतिमूलत्वं कल्प्यम्; क्लृप्तकल्प्ययोश्च विरोधे क्लृप्तमेव ग्राह्यम्। क्त्वादिश्रुतिश्चात्र "दर्शपूर्णमासाभ्यामिष्ट्वा" इत्यादिवदनङ्गत्वेऽपि सूत्रोक्तसमानकर्तृकत्वादिसाधर्म्यमात्रेण घटते। ननु समानकर्तृकत्वस्वारस्याद्बाधकाभावाच्चैकप्रयोगतयाङ्गाङ्गित्वसिद्धिः स्यात्; तन्न—

क्त्वाश्रुतेः स्मृतिसंस्थत्वादनुवादतयापि च।
श्रुतिस्थं लिङ्गमेवात्र बलीयो ह्यविलम्बतः॥ ३५५॥

"ब्राह्मणम्" इति माणवकैकसंस्कारतया श्रुतमुपनयनं प्रयोज्यप्रयोजकव्यापारतयाध्ययनाध्यापनयोर्द्वयोः फलवतोः संनिधावपि कर्मस्थतयान्तरङ्गलिङ्गादुपनीतगताध्ययनाङ्गमेव; अन्यार्थत्वे तु प्रणाड्या स्यात्। एवं श्रौतलिङ्गतोऽध्ययने विनियुक्तस्याध्यापनाङ्गत्वक्लृप्तौ विनियुक्तविनियोगविरोधः; न हि स्मृतिस्था क्त्वाश्रुतिः श्रौतं लिङ्गं बाधितुं क्षमा; स्मृतिः स्वमूलम्, अनूक्तिः पुरोक्तिमपेक्षत इति विलम्बद्वयेन प्रतिरोधात्। ननु "स्वरित—" इत्यादिविहितादात्मनेपदादुपनयनमुपनेतृगताध्यापनाङ्गं स्यात्; न स्यात्, "संमानन—" इत्यादिसूत्रविहितत्वात्; "अकर्त्रभिप्रायार्थोऽयमारम्भः" इति शाब्दाः। कर्तर्येव फलान्वयः कर्त्रभिप्रायत्वम्; अकर्त्रभिप्रायत्वं तु नियमाभाव इति चेत्—न; "आदधीत" इत्यत्र "स्वरित—" इत्यादिसूत्रोक्तात्मनेपदेऽपि फलस्योभयान्वयात्। न च क्रियाफलस्य चेतनद्वयेऽनन्वयस्तत्; "जायापती अग्निमादधीयाताम्" इत्यत्रापि तद्दृष्टेः। कर्तृव्यतिरिक्तचेतनेऽनन्वयस्तदित्यपि निरस्तम्, प्रामाणिकदृष्टया सर्वेषु शास्त्रार्थेष्वकर्तर्याराध्ये प्रीतिरूपफलश्रुतेराराधनादिष्वात्मनेपदलोपप्रसङ्गात्; "अभिचरन् यजेत" इत्यादौ भ्रातृव्येऽपि तदुचितफलसंमतेश्च; "ऋत्विजो वृणीते" इत्यत्र च वरणीयेष्वपि फलं सिद्धम्। अव्यवहितफलस्य क्रियाफलशब्देन विवक्षितत्वात्तस्य कर्त्रन्वयः कर्त्रभिप्रायत्वम्; "संमानन—" इत्यादिसूत्रं तु व्यवहितफलस्य

कर्त्रन्वयार्थं स्यादित्येतदपि दत्तोत्तरम्, "आदधीत" इत्यादावेव व्यभिचारात्। अस्ति ह्यत्राग्निसंस्कारव्यवहितमाधातर्याहिताग्नित्वं फलम्। नन्वागामिनित्यकाम्यादियागोपजीव्यसंस्कृताग्निसिद्धिरेवाधातुः फलमिति न व्यवहितफलान्वयः; मैवम्; अत्राप्युपनयनसंस्कृताध्येतृसिद्धिरेवोपनेतुः फलमिति "संमानन—" इत्यादिसूत्रवैयर्थ्यप्रसङ्गात्। अव्यवहितफलस्य कर्त्रभिमतत्वानभिमतत्वाभ्यां सूत्रद्वयसाफल्यमिति चेत्—न; आचार्यकार्थिनोऽप्युपनेतुरुपनेयसंस्कारानभिमत्ययोगात्। अतः कर्त्रन्वयसिद्धमेवात्रात्मनेपदम्। एवम् "अध्यापयेत्" इत्यनेनापि न फलस्य कर्तृगामित्वम्। तदेवं न विध्यन्तरप्रयुक्तमध्ययनम्। विचारश्च—किमध्ययनविधिना प्रयुज्यते? उत अध्यापनविधिना? न प्रथमः, विषयफलानुज्ञाया निरस्तत्वात्; न द्वितीयः, यावच्छ्रुतानतिक्रमणात्।

स्वाध्यायं ग्राहयित्वा हि गुरुणापि विरम्यताम्।
दयादिप्रेरितत्वे तु प्रागप्येवमिति स्थितिः ॥ २५६ ॥
अतो गुरुमते कृत्स्नमीमांसैव न सिध्यति।
इति मत्वा विधूतं तत्प्रकृतस्थापनार्थिभिः ॥ २५७ ॥

### मूलभावप्रकाशिका

'अधीतसाङ्गसशिरस्क' इत्यादिभाष्यसंगृहीतं क्रममुपपादयति—**प्रथमं तावदित्यादिना**; 'प्रथमम्' इत्यनेन "अष्टवर्षं ब्राह्मणमुपनयीत" इति विधिलब्धमष्टवर्षत्वमभिप्रेतम्। अनेन नित्यानित्यविवेकोपयोगिशास्त्रान्तरश्रवणानवकाशः सूचितो भवति। "स्वाध्यायोऽध्येतव्यः" इत्यनेनाध्ययनस्य विधिप्रयुक्तत्वं सूचितम्। **अध्ययनेनैवे**त्येवकारेणाध्ययनविधेर्नियमविधित्वं सूचितम्। **अक्षरराशिग्रहणमि**त्यनेनाध्ययनविधेरक्षग्रहणमात्रविश्रान्तत्वं नार्थज्ञानपर्यन्तत्वमित्युक्तं भवति। न चाक्षरराशिग्रहणस्य फलत्वे फलस्याविधेयतया कथं 'विधीयते' इत्युक्तमिति वाच्यम्; 'अध्ययनेनैवाक्षरराशिग्रहणम्' इति नियमो विधीयत इत्यर्थात्; "स्वाध्यायोऽध्येतव्यः" इत्यत्र स्वाध्यायशब्दवाच्याक्षरराशेरेव तव्यप्रत्ययेनाध्ययनभावनाभाव्यतायाः प्रतीतेस्तव्यप्रत्ययस्वारस्यभङ्गेन 'अधीतेन स्वाध्यायेन, स्वाध्यायाध्ययनेन वार्थज्ञानं संपादयेत्' इति वाक्यार्थवर्णनस्यायुक्तत्वादिति भावः। नन्वक्षरराशिग्रहणं न पुरुषार्थ इति चेत्,

किमर्थज्ञानं पुरुषार्थः? पशुपुत्रादिवत् पुरुषार्थोपयोगितया गौणपुरुषार्थत्वं तु स्वाध्यायावाप्तेरपि तुल्यम्। अथ अर्थज्ञानमन्तरेणानुष्ठानासंभवात्तस्यानुष्ठानोपयोगितया गौणपुरुषार्थत्वं सामर्थ्यादवगतं, न स्वाध्यायावाप्तेरिति चेत्; तां विना जपपारायणाद्यसंभवेन तस्या अपि तथात्वं सामर्थ्यादवगतम्। ननु "यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति" इति श्रुत्या सामर्थ्यतः शीघ्रगामीत्यर्थज्ञानस्य तथात्वं प्रथमतोऽवगतमिति चेत्—न; तस्याः श्रुतेः प्रकृतोद्गीथविद्याविषयत्वस्य पुरुषार्थाधिकरणे सूत्रकृता वक्ष्यमाणत्वेनार्थज्ञानपरत्वाभावात्।

"धन्यं यशस्यमायुष्यं पुण्यं स्वर्गापवर्गदम्।
धारणं धर्मशास्त्राणां वेदानां धारणं तथा॥"

इत्यादिस्मृत्या स्वाध्यायावाप्तेरपि तथात्वस्य शीघ्रमवगतेश्च। ननु धारणस्य तत्र फलार्थत्वमुक्तम्; न त्ववाप्तेरिति चेत्—न; स्वाध्यायस्य धारणमवाप्तिरित्यभेदात्; स्वाधीनोच्चारणक्षमत्वं ह्यवाप्तिः। तच्च पुरुषस्य स्वाध्यायोच्चारणेच्छायां सत्यामस्खलिततदुच्चारणोपयोगिताल्वमूर्धादिवर्णस्थानवशित्वसहिताविच्छिन्नस्मृतिसंतानजनकयावद्वर्णपदवाक्यावलिविषयकसंस्कारदार्ढ्यमेव। धीशक्तिविशेषेण गुणनिकया च संपादितं स्वाध्यायस्य धारणमपि तदेव; न वस्त्रभूषणादेरिव तस्य मुख्यं धारणमस्ति। अवश्यं चार्थज्ञानं फलमभ्युपगच्छतापि क्वचिदक्षरावाप्तिरपि फलत्वेनाभ्युपगन्तव्या। न खलु 'हुं फट्' प्रभृतीनां स्तोभाक्षराणामर्थोऽस्ति। न वा निषेधवाक्यानामर्थवत्त्वेऽपि तदध्ययनस्यार्थज्ञानं फलमभ्युपगन्तुं शक्यम्; तथा सति निषेधोऽपि निषिद्धानुष्ठानपरिहाराय 'हिंसानृतपारदारिकत्वादिकं प्रत्यवायकरम्' इतिज्ञानवदधिकारिसापेक्षः स्वतःसिद्धतज्ज्ञानेषु त्रैवर्णिकेष्वेव पर्यवस्यति न शूद्राणां तज्ज्ञानमाक्षिपतीति त्वदीयकल्पनाप्रसरेण निषेधवाक्याध्ययनविधेरुक्तरूपज्ञानवतां त्रैवर्णिकानामेव निषिद्धानुष्ठानं प्रत्यवायकरमिति नियमपर्यवसायितया शूद्राणां हिंसानृतादिभिः प्रत्यवायाभावप्रसङ्गात्; त्रैवर्णिकानामपि वेदाध्ययने सति 'एतानि निषिद्धानि प्रत्यवायकराणि' इति ज्ञानावश्यंभावात् 'तदनुष्ठाने प्रत्यवायो भवेत्' इत्यनिष्टफलत्वप्रतिसंधानेनाध्ययने प्रवृत्त्यभावप्रसङ्गाच्च। अथोच्येत—निषेधवाक्येषु प्रत्यवायफलकं निषिद्धानुष्ठानं न शास्त्रार्थः; किंतु प्रत्यवायपरिहारफलकं तदननुष्ठानमिति तद्विषय एव नियमः; अध्ययनपूर्वकनिषेधवाक्यार्थज्ञानवत

एव निषिद्धाननुष्ठानं प्रत्यवायपरिहाराय भवतीति नियमः संभवति ; तथा च निषिद्धानुष्ठानेन प्रत्यवायजनने निषेधवाक्यार्थज्ञानं नापेक्षितमिति शूद्राणां तदनुष्ठाने प्रत्यवायाभावो न प्रसज्यते ; त्रैवर्णिकानां प्रत्यवायपरिहारोपयोगिज्ञानफलकमध्ययनं नानिष्टफलमिति तेषामध्ययने प्रवृत्त्यभावोऽपि न प्रसज्यत इति—एवमप्यनधीतवेदानां निषिद्धाननुष्ठानेऽपि प्रत्यवायापरिहारादवश्यं भावी प्रत्यवायस्तदनुष्ठानेनैवास्त्विति प्रतिसंधानेनानधीतवेदानां त्रैवर्णिकानां शूद्राणां च निषिद्धानुष्ठानप्रसङ्गो दुर्वारः । एवं च यद्यपि—ब्राह्मणानामश्वमेधादिभागार्थज्ञानं याजनाद्युपयोगि ; क्षत्रियवैश्ययोर्बृहस्पतिसवादिभागार्थज्ञानं तदवगमार्थिभ्य उपदेशोपयोगि, "आपत्कल्पो ब्राह्मणस्याब्राह्मणाद्विद्योपयोगः" इति स्मरणात् , जाबालिकेकयाजातशत्रुप्रभृतीनां क्षत्रियाणामृषीन्प्रत्यङ्गावबद्धसगुणनिर्गुणब्रह्मविद्योपदेष्टृत्वश्रवणाच्च; सर्वेषामप्यश्वमेधभागविचारस्य मीमांसाशास्त्रे कृतस्य न्यायसाम्येन ब्राह्मणाद्यनुष्ठेयार्थनिर्णयेष्वप्यपेक्षितत्वाच्च ; अतस्तत्राध्ययनजन्यार्थज्ञानवतैव क्रियमाणं याजनमुपदेशनं च फलाय भवतीति नियमः संभवति—तथापि द्रुमादिष्वर्थाभावान्निषेधवाक्येषु विपरीतफलत्वाच्च तथा क्वचिदर्थज्ञानफलकाध्ययनविधिलभ्यो नियमो वक्तुं न शक्यत इति तत्राक्षरावाप्तिरेव फलत्वेन स्वीकर्तव्या ; एवं चेत्सर्वत्रापि सैव फलमस्तु, व्यापित्वात् ।

ननु तथाप्यर्थज्ञानमपि संभवस्थले फलत्वेन स्वीकर्तव्यम् , अन्यथा वेदवाक्यानां तत्रार्थे तात्पर्यासिद्ध्या तन्निर्वाहार्थलक्षणादिकल्पनोच्छेदप्रसङ्गात् ; अर्थावबोधमुद्दिश्य शब्दोच्चारणेन हि लोके वाक्यानां तात्पर्यमवगम्य तन्निर्वाहार्थं मुख्यार्थासंभवे लक्षणादिकं कल्प्यते, न तूच्चारणमात्रेण । अत एव 'गौरश्वः पुरुषो हस्ती' इति पदानामुच्चारणमात्रेण लक्षणा न कल्प्यते ; यदा विशिष्टार्थबोधमुद्दिश्य तेषामुच्चारणमिति तात्पर्यमवगम्यते तदैव तन्निर्वाहार्थम् 'अयं गौर्बलीवर्दः, अश्वो वेगवान् , पुरुषो नियतचेष्टः, हस्ती महाबलः' इत्यश्वादिपदानां लक्षणा कल्प्यते । एवं च वेदवाक्यानामर्थावबोधमुद्दिश्योच्चारणाभावे तात्पर्यासिद्ध्या तन्निर्वाहार्थलक्षणागौणवृत्त्यनुषङ्गाध्याहारावधारणकल्पनोच्छेदप्रसङ्गादवश्यं वेदेऽप्यर्थावबोधमुद्दिश्योच्चारणस्य वक्तव्यत्वात् वेदे च लोक इव तमुद्दिश्य रागप्रयुक्तोच्चारणाभावाद्विधिप्रयुक्तमेव तदाश्रयणीयम् ; विधिश्चाध्ययनविधेरन्यो न दृश्यत इति तेनैवार्थावबोधमुद्दिश्य गुरुमुखोच्चारणानूच्चारणरूपमध्ययनं विधीयत इत्यकामेनापि स्वी-

27

करणीयम् । एवं च दृष्टफलेऽप्यर्थावबोधे विधिरन्यतोऽसिध्यतस्तात्पर्यस्य सिद्ध्यर्थो न तु स्वाध्यायाध्ययनजन्यार्थज्ञानवत एव तदर्थकर्मानुष्ठानेन तत्तद्वाक्योक्तं फलं भवतीति नियमार्थ इति निषेधवाक्येऽप्यर्थज्ञानकामाधिकारे न कश्चिद्दोषः । अत एवाध्ययनविधावपि न दोषः ; तदध्ययनजन्यार्थज्ञानवतैव तद्विधेयमध्ययनमनुष्ठेयमिति नियमपर्यवसायी विधिरित्यङ्गीकारे ह्यात्माश्रयदोषः स्यात् । स्तोभाक्षरेषु परं विशिष्टार्थपराणामृचां तदन्तर्गतपदानां तदन्तर्गतवर्णानां च मध्ये प्रविष्टत्वात् कथमप्यर्थपरतया वर्णयितुमशक्येषु स न संभवतीति तेषु जपपारायणस्तोत्रशस्त्राद्यर्थगीतिविरामोपयोगिन्यक्षरावाप्तिरेव फलम् । न चैवं विधिवैरूप्यदोषप्रसङ्गः, यदेव किंचन विध्यन्तरोपयोगि स्वाध्यायसंस्काररूपेणाध्ययनेन शक्यं भावयितुं तत्सर्वमनेन भावयेत्' इत्येकयैव वचनभङ्ग्योभयार्थत्वलाभात् । एवं च क्रमफलमपि संगृहीतं भवति । क्रमविशेषविशिष्टवर्णपदवाक्यसंख्यातो हि स्वाध्यायशब्दार्थः । अतोऽध्ययनविधिः क्रमविशेषविशिष्टतयैव स्वाध्यायस्याध्ययनं विधत्ते । क्रमविशेषस्य चैतत्प्रयोजनम्—यत्समिदादिविधिवाक्यपाठक्रमेण प्रयाजाद्यनुष्ठानोपयोगी, आग्नेयाद्यग्नीषोमीयादिमन्त्रपाठक्रमेण तदनुष्ठानोपयोगी च स्मृतिक्रमः; काम्येष्टिकाण्डसमाम्नातानामैन्द्राग्नीनां याज्यानुवाक्याकाण्डसमाम्नातानाम् "उभा वामिन्द्राग्नी आहुवध्यै" इत्यादिमन्त्राणां च यथासंख्यपाठक्रमेणाङ्गाङ्गिभावः ; उच्चैस्त्वादिस्वरविधिषु वेदोपक्रमेण ऋगादिपदानामृग्वेदादिषु लक्षणा ; बार्हस्पत्ये सप्तदशशरावे शरावातिदेशिकचतुर्मुष्टिनिर्वापासंभवादवश्यंभाविनि संख्यामुष्ट्यन्यतरबाधे चरमश्रुतमुष्टिबाध इत्यादि । यत्र तु नैतादृशं फलमस्ति तत्रैव परं क्रमस्य जपयज्ञादिमात्रोपयोगः । तस्माद्युक्तमध्ययनविधेरर्थज्ञानं फलमिति । उच्यते—तव्यप्रत्ययेन स्वाध्याये भाव्यतया बोध्यमाने तदवाप्तिमतिलङ्घ्यार्थज्ञानस्याध्ययनविधिफलत्वकल्पनं न युक्तम्, स्वाभिमतप्रयोजनसिद्ध्यर्थं श्रुतफलसाध्यस्यापि वैधफलत्वकल्पनायोगात् ; अन्यथा चित्रापुत्रेष्ट्यादिवाक्यश्रुतेषु पशुपुत्रादिषु फलेषु प्राप्तेष्वपि तैः संपादनीयस्य स्वभोगस्य कदाचिदप्राप्तिः स्यादिति तत्प्राप्तिनैयत्यसिद्धये पशुपुत्रादिप्रयुक्तस्य भोगस्यापि चित्रापुत्रेष्ट्यादिविधिफलत्वकल्पनाप्रसङ्गात् ; लोकव्युत्पत्तिसिद्धस्य शब्दानामर्थपरत्वस्यौत्सर्गिकस्य क्वचित् क्वचिल्लौकिकवाक्ये वक्तृदोषादपवादेऽप्यपौरुषेये वेदे तदभावान्निरपवादस्य स्वत एव सततस्तस्यार्थज्ञानोद्देश्यकशब्दोच्चारणविधिनिरपेक्षत्वाच्च । शब्दानामर्थपरत्वमात्रं व्युत्पत्तिसिद्धमि-

त्यग्निहोत्रादिवाक्यं तत्तदर्थविशेषमुद्दिश्योच्चारणमपेक्षत इति तदर्थोऽध्ययनविधिः स्यादिति-चेत्—न; अध्ययनविधिनापि तदलाभात्; न ह्यध्ययनविधिः प्रतिवाक्यं तत्तदर्थ-विशेषज्ञानमुद्दिश्य तत्तद्वाक्योच्चारणविधाने व्याप्रियते। 'स्वाध्यायाध्ययनेन यद्भावयितुं शक्यं तदनेन भावयेत्' इति विधाने सत्यग्निहोत्रादिवाक्याध्ययनेन न्यायलभ्यतत्त-दर्थविशेषज्ञानमेव भावयितुं शक्यमिति तत्र तत्रार्थविशेषे तात्पर्यमर्थतः सिध्येदिति चेत्, तर्ह्यग्निहोत्रादिवाक्यानामौत्सर्गिकमर्थपरत्वमेव न्यायपर्यालोचनेन तत्तदर्थविशेषतात्पर्य-रूपतया पर्यवस्यतीत्येवास्तु; किमुच्चारणविधिना? यदि च लोके दृष्टमित्येतावता वेदेऽप्यर्थावबोधमुद्दिश्योच्चारणमाद्रियेत, तदा स्वतन्त्रवक्तृविवक्षितेतरार्थावबोधमुद्दिश्य श्रोतृ-भिरुच्चारणे कृतेऽपि तस्य वाक्यस्य तत्र तात्पर्यं न दृष्टं किंतु स्वतन्त्रवक्तुर्यदर्थावबोधमुद्दिश्यो-च्चारणं तत्रैव तात्पर्यं दृष्टमिति वेदस्य तात्पर्यसिद्ध्यर्थं पौरुषेयत्वमपि कल्प्येत। वस्तु-तस्तु लोके नोच्चारणाधीनं तात्पर्यम्, मौनिना लिखित्वा दत्ते परेणापि लिखितं दृष्ट्वा मन-सानुसंहिते श्लोकादावुच्चारणाभावात्। किंतु 'अस्माद्वाक्यादेतदर्थप्रतीतिर्भवतु' इति वक्तृविवक्षाधीनं तदिति तात्पर्यसिद्ध्यर्थमध्ययनविधेर्नार्थावबोधकत्वकल्पनायाः कथंचिदव-काशः। वक्तृविवक्षा त्वपौरुषेये वेदे न संभवति। लोके व्युत्पत्तिसिद्धमर्थपरत्वं वक्तृविवक्षिते विशेषे पर्यवस्यति; वेदे तु न्यायलभ्ये विशेषे; तदनुसारेण च लक्षणादि-कल्पनमित्येवाभ्युपगन्तुं युक्तम्। अत एव वेदस्य तात्पर्यवत्त्वरूपस्वाभिमतप्रयोजन-सिद्धिमेव न्याय्यां मन्वानेनापि न्यायतोऽध्ययनविधिरर्थावबोधमपि फलत्वेन गृह्णातीति तत्तात्पर्यं निश्चित्य तद्बलेन स्वाध्यायावाप्तेरेव फलताप्रत्यायकस्य तव्यप्रत्ययस्य स्वारस्य-मुल्लङ्घितम्। न ह्यध्ययनविधेरुक्तार्थतात्पर्यनिश्चयोऽयमर्थावबोधमुद्दिश्योच्चारणविध्यधीनः, तथाभूतविध्यन्तराभावात्; अस्यैव विधेरपेक्षायामात्माश्रयापत्तेः; किंतु केवलं न्याया-धीन एव वक्तव्यः। तस्मात् तात्पर्यसिद्ध्यर्थमध्ययनविधेरर्थावबोधफलत्वकल्पनमित्ये-तत्तावदयुक्तम्। क्रमफलसंग्रहार्थं 'यदनेन शक्यं भावयितुं तद्भावयेत्' इत्यध्ययनविध्यर्थ-पर्यवसानादध्ययनेन भावयितुं शक्यमर्थज्ञानमपि तद्भाव्यकोटावनुप्रविशेदित्येतदप्ययुक्तम्, अनुष्ठानकालापेक्षितस्य समिद्यागादिस्मृतिक्रमस्याध्ययनगृहीतस्वाध्यायपाठक्रमेणाध्ययनविधि-फलाक्षरावाप्त्यनुनिष्पादितया स्वत एव संभवतोऽध्ययनविधिफलत्वेन संग्राह्यत्वाभावात्। मीमांसाशास्त्रपाठकालापेक्षितक्रमफलस्यापि तथैव विधिफलत्वेन संग्राह्यत्वाभावात् तत्संग्रहार्थं

'यदनेन भावयितुं शक्यं तत्सर्वमनेन भावयेत्' इत्यध्ययनविध्यर्थाङ्गीकारेऽर्थज्ञानवत् ख्यातिलाभादीनां चार्वाकापादितफलानामपि तद्भाव्यकोट्यनुप्रवेशप्रसङ्गाच्च, तेषामपि लोकतः "शोभतेऽस्य मुखं य एवं वेद" "अस्य प्रजायां वाजी जायते य एवं वेद" इत्यादिश्रौतलिङ्गतश्चाध्ययनेन भावयितुं शक्यत्वावगमात्; "शोभतेऽस्य मुखं य एवं वेद" इति हि गर्गत्रिरात्रब्राह्मणज्ञस्य तज्ज्ञानफलानुवादः; 'शिष्यैरुद्वीक्ष्यमाणत्वात् तज्ज्ञस्य मुखं शोभते' इति तदुपपादनं कृतमर्थवादाधिकरणे। अनेन ख्यातेरध्ययनावाप्यत्वं लब्धम्। "अस्य प्रजायां वाजी जायते" इति वेदानुमन्त्रणमन्त्रज्ञस्य तज्ज्ञानफलानुवादः; 'कुले संतताध्ययनश्रवणात् तज्ज्ञस्य प्रजासु मेधावी वेदविज्जायते' इति तदुपपादनं कृतम्। अनेन कैमुतिकन्यायेन साक्षादध्येतुर्धनलाभस्याध्ययनावाप्यत्वं लब्धम्। 'विध्यन्तरापेक्षितं यद्भावयितुं शक्यम्' इति विशेषितमिति चेत्, धनलाभोऽपि; स त्वर्थज्ञानवत् क्रतुविधिभिरपेक्षित एव। ख्यातिरपि धनलम्भनद्वारा क्रतुषूपयुज्यते। तस्मादध्ययनविधेस्तव्यप्रत्ययोपात्ताक्षरावाप्तिफलकत्वमेव, न त्वर्थज्ञानपर्यन्तत्वमिति। न चैवं सति स्वाध्यायस्योद्देश्यत्वात् स्वीयत्वविशेषणाविवक्षाप्रसङ्गः, सर्वशाखानामध्येतुमशक्यतया संकोचापेक्षासत्त्वेनोद्देश्यस्यापि विशेषणसहिष्णुत्वात्; "यस्योभावग्नी अनुगतावभिनिम्रोचेदभ्युदियाद्वा पुनराधेयं तस्य प्रायश्चित्तिः" इति निमित्तान्तर्गततयोद्देश्यविशेषणीभूतस्याग्न्युभयत्वस्याधानेनाग्निद्वयोत्पादकत्वस्वभावेनैकस्याग्नेरुत्पादयितुमशक्यतया विवक्षितत्वस्य "पुनराधेयमोदनवत्" इत्यधिकरणे निर्णितत्वात्। ननु 'अधीतेन स्वाध्यायेनार्थज्ञानं संपादयेत्' इत्यर्थज्ञानपर्यन्ताध्ययनविध्यभावे कल्पसूत्रोपद्रष्टृवचनाद्यधीनज्ञानेनैव क्रत्वनुष्ठानसंभवान्मीमांसा नारम्भणीया स्यात्; 'अधीतेनैव स्वाध्यायेनार्थज्ञानं संपादयेत्' इति नियमविधिसद्भावे हि

"धर्मे प्रमीयमाणे तु वेदेन करणात्मना।
इतिकर्तव्यताभागं मीमांसा पूरयिष्यति॥"

इति न्यायेन मीमांसारम्भणीया स्यादिति चेत्—न; अध्ययनसंस्कृतस्य स्वाध्यायस्य प्रयोजनान्तरासंयुक्तस्य भाव्युपयोगमपेक्षमाणस्य हेतुसाकाङ्क्षेषु क्रत्वर्थज्ञानादिषु लिङ्गादिनियुक्ततया स्वाध्यायव्यतिरिक्तकल्पसूत्रादेः क्रत्वर्थज्ञाने नोपायत्वप्रसक्तिः। नन्वेवमाधानसंस्कृताग्नीनां विनियोगापेक्षायां लौकिकाग्निसाध्यतया संभवदुपायान्तरेषु लौकिकेषु पचन-

दहनप्रकाशादिष्वपि विनियोगः प्रसज्येतेति विहाराधिकरणविरोधः स्यादिति चेत्—न; आधानसंस्कृतस्याग्नेः "गार्हपत्ये हवींषि श्रपयति, दक्षिणाग्नावन्वाहार्यं पचति, आहवनीये जुहोति" इत्यादिवाचनिकविनियोगैर्निराकाङ्क्षीकृतत्वेन "वि वा एष इन्द्रियेण वीर्येणर्ध्यते यस्याहिताग्नेरग्निरपक्षायति" इत्यग्नेरन्यत्र नयने प्रत्यवायश्रवणेन च लौकिकेषु दहनपचनादिष्वग्नेर्विनियोगाभावेऽपीह तादृशबाधकाभावेन तदधिकरणसिद्धान्तन्यायानवतारात् तत्पूर्वपक्षन्यायेन संभवदुपायान्तरेष्वपि क्रत्वनुष्ठानौपयिकार्थज्ञानादिष्वधीतवेदस्यैव हेतुत्वमिति नियमलाभेन वेदेन साधयितव्येऽर्थज्ञाने मीमांसाया आवश्यकत्वात्। ननु तथापि वेदभाष्यादिसहकारेणापि वेदार्थज्ञानसंभवात् कथं मीमांसाया नैयत्यमिति चेत् "सोमेन यजेत" इत्यत्र सोमशब्दस्य न कर्मनामत्वं "श्येनेनाभिचरन्यजेत" इत्यादौ श्येनशब्दस्य कर्मनामत्वमित्यादिवैषम्यस्य न्यायोपदेशं विना निर्णेतुमशक्यत्वात्; दहरविद्यायां प्रजापतिविद्यायां च "आत्मा अपहतपाप्मा" इत्यादिवाक्ययोः साम्येऽपि दहरविद्यावाक्यं ब्रह्मपरं, प्रजापतिविद्यावाक्यं परिशुद्धजीवात्मस्वरूपपरमिति न्यायमन्तरेण दुर्ज्ञानत्वात्। अतो मीमांसारम्भः सिद्ध एव। अत एव मीमांसितवेदजन्यज्ञानस्यैव ज्ञानसाकाङ्क्षक्रत्वादिषु विनियोगात् तच्छून्यस्य नाधिकारप्रसक्तिरपि।

नन्वध्ययनस्यार्थज्ञानार्थत्वपक्षेऽपि कर्मविचारस्य पूर्ववृत्तत्वं सिध्यति; तथाहि—तस्मिन्पक्षे हि 'अधीतेन स्वाध्यायेन स्वाध्यायाध्ययनेन वा ज्ञानं भावयेत्' इति वचनव्यक्तिः। 'अधीतेन स्वाध्यायेनार्थज्ञानं भावयेत्' इति पक्षे स्वाध्यायस्य करणत्वम्, अध्ययनस्य मीमांसायाश्च तदङ्गत्वमिति सिध्यति। तत्र पूर्वभाव्यध्ययनस्य प्राथम्यात् पूर्वभागविचार एव प्रवृत्तिक्रमात् प्रथमतः प्राप्नोति। एवं चाध्ययनविधेरर्थज्ञानपर्यन्तत्वपक्षे मीमांसाध्ययनाङ्गं भवति। ततश्च मुख्यक्रमानुरोधात् यदध्ययनं पूर्ववृत्तं तद्विचार एव प्रथमतः प्राप्नोति। एवं चाध्ययनविधेरर्थज्ञानपर्यन्तत्वपक्षे कर्मविचारपूर्ववृत्तत्वस्य सूपपादत्वात् कर्मविचारपूर्ववृत्तत्ववादिनामर्थज्ञानार्थत्वप्रत्याख्यानमनुचितमिति चेत्—न; पुरुषार्थाधिकरणेऽध्ययनस्यार्थज्ञानपर्यन्ततया "अधीत्य स्नायात्" इति कृत्स्नाध्ययनजन्यज्ञानस्य स्नानोपलक्षितसर्वकर्मसु विनियोगात् वेदान्तार्थज्ञानस्यापि कर्मविशेषत्वप्रतीतेर्वेदान्ताः सर्वोऽपि कर्मकर्तृजीवाभिन्नब्रह्मप्रतिपादक एवेति न कर्म कर्तुर्जीवाद्ब्रह्मातिरिच्यत इति "तद्भूतो विधानात्" इति सूत्रेण पूर्वपक्षं कृत्वा अध्ययनविधेरक्षरग्रहणमात्रविश्रान्तत्वान्नायं

दोषः प्रसज्यत इति "अध्ययनमात्रवतः" इति सूत्रेण सिद्धान्तितत्वेनाध्ययनविधेरर्थज्ञानपर्यन्तत्वस्य निरसनीयत्वात्। नन्वध्ययनविधेरक्षरग्रहणमात्रविश्रान्तत्वे "आचार्यकुलाद्वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेणाभिसमावृत्त्य" "अधीत्य स्नायात्" इति श्रुतिस्मृतिभ्यामक्षरग्रहणानन्तरमेव स्नानस्य प्राप्ततया न मीमांसावसर इति चेत्——न; स्नानानन्तरभाविदारप्रतिग्रहानन्तरकर्तव्याग्निहोत्रादिनित्यनैमित्तिककर्मानुष्ठानोपयोग्यर्थज्ञानस्य स्नानपूर्वभाविमीमांसामन्तरेणानुपपत्तेः "अधीत्य स्नायात्" इति स्नानस्याध्ययनानन्तर्यप्रतिपादिका क्त्वाश्रुतिः कर्मविचारव्यवधानं सहताम्, दारपरिग्रहानन्तरमवश्यकर्तव्यानुष्ठानौपयिकधनार्जनादाविव क्रत्वनुष्ठानौपयिकार्थज्ञानार्थकर्मविचारेऽपि गार्हस्थ्य एव प्रवृत्त्युपपत्तेः। ननु "संवत्सरे संवत्सरे द्वौ द्वौ मासौ समाहित आचार्यकुले वसेद्भूयः श्रुतमिच्छन्निति श्वेतकेतुः" इत्यारभ्य "तच्छास्त्रैर्विप्रतिषिद्धं निवेशे हि वृत्ते नैयमिकानि श्रूयन्तेऽग्निहोत्रमतिथयः" इत्यादिना श्रवणं गृहस्थस्य निषिध्यत इति चेत्——न; साकल्येन मासद्वयं गुरुकुले वासस्यैव नैयमिकविरुद्धस्य निषिद्धत्वात्। न च गुरुशुश्रूषाव्यग्रस्य कथमग्निहोत्रादिनित्यनैमित्तिकानुष्ठानमिति वाच्यम्, शुश्रूषानिरपेक्षगुरुसंभवात्; गृहस्थानामेव युधिष्ठिरादीनां भीष्मादिभ्यः श्रवणस्य भारते प्रतिपादितत्वाच्चाध्ययनस्याक्षरग्रहणार्थत्वे नानुपपत्तिः। स्वाधीनोच्चारणक्षमत्वलक्षणाक्षरराशिग्रहणस्य गुणनिकया विना असंभवादसकृदावृत्तत्वमप्यध्ययनस्य सिध्यतीत्यलमतिविस्तरेण।

**किंरूपमिति**; किं स्वतन्त्रोच्चारणरूपम्? उत परतन्त्रोच्चारणरूपम्? इत्यर्थः। **कथं च कर्तव्यमिति**; किमितिकर्तव्यताकमित्यर्थः। **तमध्यापयेदिति**; अत्र "अध्यापयीत" इति प्रायेण पठन्ति; तत्र "बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णेः" इति ण्यन्तात् 'इङ् अध्ययने' इत्यतः परस्मैपदस्यैव विधानेनात्मनेपदाप्रसक्त्या "अध्यापयीत" इत्यस्य छान्दसं साधुत्वमाश्रयणीयम्। "अध्यापयेत्" इति पाठे तु नायं क्लेश इति द्रष्टव्यम्। "अतिरात्रेण प्रजाकामं याजयेत्" "निषादस्थपतिं याजयेत्" इत्यादौ याजनस्येव "अध्यापयेत्" इत्यत्राध्यापनस्य रागप्राप्तत्वेन णिजर्थस्य तस्याविधेयत्वात् "तमध्यापयेत्" इत्यस्य 'सोऽधीयीत' इत्यर्थः। एवं च "अष्टवर्षं ब्राह्मणमुपनयीत" इत्यध्ययनाङ्गतयोपनयने विहिते उपनयनस्य दृष्टार्थत्वायोपनेयासत्तिं द्वारतया परिकल्प्य तस्याश्च स्वतन्त्राध्ययने

दृष्टद्वारोपकारकत्वासंभवात् गुरुमुखोच्चारणानूच्चाणलक्षणपरतन्त्रोच्चारण एव दृष्टद्वारोपयोगसंभवादुपनयनरूपाङ्गमहिम्नाध्ययनस्य परतन्त्रोच्चारणत्वसिद्धिरिति भावः । ननु

" उपनीय तु यः शिष्यं वेदमध्यापयेद् द्विजः ।
सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते ॥ "

इति स्मृत्या 'उपनीयाध्यापनादाचार्यकं भावयेत्' इति श्रुत्युन्नयनात् " उपनीय " इति क्त्वाप्रत्ययस्योपनयनसमानकर्तृकत्वावगमनमुखेन प्रयोगैक्यप्रत्यायनद्वाराङ्गाङ्गिभावज्ञापकत्वादुपनयनाध्यापनयोरङ्गाङ्गिभावो वक्तव्यः । किंच " संमाननोत्सञ्जनाचार्यकरणज्ञानभृतिविगणनव्ययेषु नियः " इति सूत्रे आचार्यकरणेऽर्थे नयतेरात्मनेपदविधानादुपनयनस्याध्यापनफलभूताचार्यकसाधनत्वस्याध्यापनाङ्गत्वेऽसंभवात् " तमध्यापयेत् " इत्युपनयनसंस्कारविशिष्टस्याध्यापनान्वयावगमाच्चाध्यापनाङ्गत्वमेव प्राभाकररीत्या युक्तम् ; तन्नाध्ययनाङ्गत्वमिति चेत्—न; " अष्टवर्षं ब्राह्मणमुपनयीत " इति द्वितीयाश्रुत्या माणवकसंस्कारार्थत्वावगमात् माणवकसंस्कारस्य चाव्यवहितसमानाधिकरणाध्ययनार्थत्वे संभवत्यध्ययनव्यवहितपुरुषान्तरगताध्यापनाङ्गत्वासंभवात् ; " उपनीय तु यः शिष्यम् " इत्यस्य " स्यान्निषेकादिकृद्गुरुः " " ऋत्विग्यज्ञकृदुच्यते " इत्यादिवदाचार्यशब्दार्थनिर्णयप्रवृत्तस्य यच्छब्दानुविद्धस्य 'उपनीयाध्यापनादाचार्यकं भावयेत्' इति विध्युन्नायकत्वासंभवात् ; उपनयनस्याध्यापनाङ्गत्वे क्रियोद्देश्यफलस्याध्ययनस्योपनयनकर्तृगततया " स्वरितञितः " इत्यनेनैवात्मनेपदसिद्धेः " संमानन— " इत्यकर्त्रभिप्रायार्थसूत्रानर्थक्यप्रसङ्गात् । ननूपनयनं प्रत्यङ्गित्वेनोद्देश्यस्याध्यापनस्य तत्फलस्याचार्यकस्य च कर्तृगतत्वेऽप्युपनयनजन्यसंस्कारस्याकर्तृगतत्वात् " स्वरितञितः " इत्यनेन नात्मनेपदमुपपद्यत इति चेत्—न; यत्प्रधानं फलमुद्दिश्य क्रियारम्भस्तस्य कर्तृगतत्वाकर्तृगतत्वयोरेव कर्त्रभिप्रायाकर्त्रभिप्रायशब्दार्थत्वात् । अत एव वृत्तिकारेण " स्वरितञितः " इति सूत्रे यस्य कस्यचित्फलस्य कर्तृगामित्वमात्रेणात्मनेपदविधाने 'यजन्ति याजकाः, पचन्ति पाचकाः' इत्यत्राप्यात्मनेपदं स्यादित्याशङ्कानिराकरणार्थं " यदर्थमसौ क्रियारभ्यते तत्क्रियाफलम् " इत्युक्तम् । हरिणा च—

" यस्यार्थस्य प्रसिद्ध्यर्थमारभ्यन्ते पचादयः ।
तत्प्रधानं फलं तेषां न लाभादि प्रयोजनम् ॥ "

इत्युक्तम्। अत एव "नीचैः सदो मिनुयात्" इति परस्मैपरश्रुत्या "यदि कामयेत वर्षुकः पर्जन्यः स्यात्" इति श्रुतस्य वर्षरूपफलस्याध्वर्युरूपकर्तृव्यतिरिक्तयजमानगामित्वमुक्तं "तथा कामोऽर्थसंयोगात्" इति तार्तीयाधिकरणे। ततश्चोपनयनोद्देश्यफलस्याध्यापनस्य कर्तृगतत्वे "संमानन—" इत्यादिसूत्रानर्थक्यं प्रसज्यत एव। किंच "सप्तमे ब्रह्मवर्चसकाममष्टम आयुष्कामं नवमे तेजस्कामं दशमेऽन्नाद्यकामम्" इत्याद्युपनयनाश्रितवयोविशेषलक्षणगुणानां माणवकगतफलार्थत्वावगमात्तदाश्रयस्याप्युपनयनस्य माणवकगतफलार्थत्वस्य "तथा कामोऽर्थसंयोगात्" इति तार्तीयाधिकरणन्यायेनावश्यवक्तव्यत्वान्माणवकगताध्ययनरूपफलार्थत्वमेवोपनयनस्य युक्तं, नाध्यापनाङ्गत्वमिति। न चोपनयनजन्यसंस्कारस्य माणवकगतत्वात्तावन्मात्रेणैव गुणतदाश्रयफलयोरेकगतत्वान्न तार्तीयाधिकरणविरोध इति वाच्यम्, क्रियोद्देश्यफलस्यैव गुणफलसामानाधिकरण्यस्य वक्तव्यत्वात्; अन्यथा दक्षिणादिलक्षणक्रियाफलस्याध्वर्युगतत्वात् "यदि कामयेत वर्षुकः पर्जन्यः स्यात्" इति श्रुतगुणफलस्याप्यध्वर्युगतत्वप्रसङ्गात्। न च "तमध्यापयेत्" इत्युपनयनस्याध्यापनान्वयप्रतीतेस्तद्विरोधः स्यादिति वाच्यम्, 'कुशलेन तक्ष्णा रथं निर्मापयति' इत्यत्र तक्षगतकौशलस्य रथनिर्माणद्वारा निर्मापणोपयोगवदुपनयनस्याध्ययनद्वाराध्यापनान्वयसंभवेनोक्तानुपपत्तेरभावात् अध्ययनाङ्गमेवोपनयनं नाध्यापनाङ्गम्। एतेन—अध्ययनविधेर्नियोज्यासत्त्वान्नानुष्ठापकत्वम्; अध्यापनविधेराचार्यकामस्य नियोज्यस्य सत्त्वादनुष्ठापकत्वम्; न च विश्वजिन्न्यायादध्ययनविधौ नियोज्यकल्पनं युक्तम्; अनुष्ठानाय हि नियोज्यकल्पनम्; स्वर्गकामनियोज्यकदर्शपूर्णमासविधिभिः प्रयाजानामिवाचार्यककामनियोज्याध्यापनविधिनैवाध्ययनानुष्ठानसंभवान्नाध्ययनविधौ नियोज्यकल्पनम्। न चाध्ययनमन्तरेणाध्यापनासंभवात् अध्यापनविधिनाध्ययनमात्राक्षेपेऽप्यध्ययनविधिविहितस्य सनियमाध्ययनस्य नाक्षेप इति वाच्यम्; अध्यापनविधिना ह्युपनयनाङ्गकमध्यापनं प्रयुज्यते; उपनयनस्याध्यापनाङ्गत्वं चोपनेयासत्तिरूपदृष्टमुखेनैव युक्तम्; उपनेयासत्तेरपि द्वाराकाङ्क्षायामुपनयनं प्रक्रम्य विहितमेवाध्ययनं द्वारत्वेन कल्प्यते, नाध्ययनान्तरमिति विहितस्य सनियमाध्ययनस्याध्यापनविधिनैवानुष्ठानसिद्धेर्नाध्ययनविधिस्तस्यानुष्ठापकः—इति प्राभाकरमतं निरस्तम्। अध्यापनस्य रागप्राप्तत्वेन याजनवद्विधेयत्वाभावान्नियोज्याश्रवणस्याध्यापनविधावपि तुल्यत्वान्नियोज्यकल्पनस्याध्ययनविधावपि संभवात् उपनयनस्याध्यापनाङ्गत्वनिरासाच्च नाध्ययनमध्यापनविधिप्रयुक्तम्। किंच

" योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम् ।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ॥ "

इति नित्यतया श्रुतस्याध्ययनस्य काम्याध्यापनविधिप्रयुक्तत्वासंभवश्च । यत्र ग्रामे जनपदे वार्थवत्त्वादिहेतुभिराचार्यककामो न स्यात्, सन् वा कश्चिदुपनीयाध्यापयितुं प्रवृत्तः प्रव्रजनादिहेतुभिर्निवृत्ताध्यापनविधिसंबन्धः स्यात्, ततस्तद्ग्रामजनपदवासिनामध्ययनस्य तेन तेनाचार्येणोपनीतानामेकदेशान्तराध्ययनस्य च निवृत्त्यवश्यंभावेन नित्यत्वविरोधप्रसङ्ग इत्यास्तां विस्तरः । **अर्धपञ्चमानिति**; अर्धं पञ्चमं येषां ते तथोक्ताः; अर्धमासाधिकांश्चतुरो मासानित्यर्थः । **इत्यादी**त्यादिशब्देन

" अत ऊर्ध्वं तु छन्दांसि शुक्लेषु नियतः पठेत् ।
वेदाङ्गानि च सर्वाणि कृष्णपक्षेषु संपठेत् ॥ "

इत्यादिवचनान्यभिप्रेतानि । व्रतशब्देन " यथाविधि " इत्यनेन परिगृहीतानि वेदव्रतान्युच्यन्ते 'यथाविध्यधीयीत' इत्यनेनाप्यन्वयात् । नियमशब्देन " मासान्विप्रोऽर्धपञ्चमान् " इत्युक्तकालविशेषनियमादयो गृह्यन्ते । अङ्गविध्युपेताध्ययनविधिलभ्यार्थमाह—**एवमिति** । "अभिजनविद्यासमुदेतं समाहितं संस्कर्तारमीप्सेत्" " इत्येते चत्वारिंशत्संस्काराः । अथाष्टावात्मगुणाः—दया सर्वभूतेषु क्षान्तिरनसूया शौचमनायासो मङ्गलमकार्पण्यमस्पृहेति " " तमसो वा एष तमः प्रविशति यमविद्वानुपनयते " इत्यादिवाक्यानि **सत्संताने**त्यत्राभिप्रेतानि । उपनयनविधिलब्धमर्थमाह—**आचार्योच्चारणानूच्चारणमिति** ।

**श्रीभाष्यम्**

**अध्ययनं च स्वाध्यायसंस्कारः, " स्वाध्यायोऽध्येतव्यः " इति स्वाध्यायस्य कर्मत्वावगमात् । संस्कारो हि नाम कार्यान्तरयोग्यताकरणम् । संस्कार्यत्वं च स्वाध्यायस्य युक्तम्; धर्मार्थकाममोक्षरूपपुरुषार्थचतुष्टयतत्साधनावबोधित्वात्, जपादिना स्वरूपेणापि तत्साधनत्वाच्च । एवमध्ययनविधिर्मन्त्रवन्नियमवदक्षरराशिग्रहणमात्रे पर्यवस्यति । अध्य-**

यनगृहीतस्य स्वाध्यायस्य स्वभावत एव प्रयोजनवदर्थावबोधित्वदर्शनात् गृहीतात् स्वाध्यायादवगम्यमानान् प्रयोजनवतोऽर्थानापाततो दृष्ट्वा तत्स्वरूपप्रकारविशेषनिर्णयफलवेदवाक्यविचाररूपमीमांसाश्रवणेऽधीतवेदः पुरुषः स्वयमेव प्रवर्तते। तत्र कर्मविधिस्वरूपे निरूपिते कर्मणामल्पास्थिरफलत्वं दृष्ट्वाध्ययनगृहीतस्वाध्यायैकदेशोपनिषद्वाक्येषु चामृतत्वरूपानन्तस्थिरफलापातप्रतीतेस्तन्निर्णयफलवेदान्तवाक्यविचाररूपशारीरकमीमांसायामधिकरोति।

**श्रुतप्रकाशिका**

"सक्तून् जुहोति" इत्यत्र पुरुषस्य सक्तुहोमजन्यादृष्टभाक्त्वात् सक्तुहोमो यथा पुरुषसंस्कारस्तद्वदध्ययनस्य पुरुषसंस्कारत्वेऽस्याक्षरराशिग्रहणफलत्वं न स्यात्, अपूर्वसिद्ध्यर्थत्वाभावात्; ततश्चाक्षरराशिग्रहणफलत्वाभावेनावृत्त्यसिद्धेः सकृदुच्चारणरूपमेवाध्ययनं स्यादित्याशङ्क्याह—**अध्ययनं चेति**। उपनयनाङ्गकत्ववत्स्वविधिप्रयुक्तत्ववदिदं चोपपादनीयमिति चार्थः। **स्वाध्यायसंस्कारः**; न तु सक्तुहोमवदपूर्वविषयतया पुरुषसंस्कार इत्यर्थः। कुत इत्यत्राह—**स्वाध्याय इति**। तव्यप्रत्ययात् कर्मत्वावगमः; स्वाध्यायस्य हि कर्मत्वावगमः, न पुरुषस्य; कर्तुः क्रिययाप्तुमिष्टतमत्वं हि कर्मत्वम्; अतोऽध्ययनं स्वाध्यायस्य संस्कारः, न तु पुरुषस्येत्यर्थः। निर्वृत्त्यादेरपि साधारणं कर्मत्वं कथं संस्कार्यत्वहेतुतयोच्यत इत्यत्र निर्वर्त्यत्वविकार्यत्वानुपपत्तिमभिप्रेत्य 'स्वाध्यायस्य' इति पुनः कीर्तनम्; वस्तुसामर्थ्यसचिवकर्मत्वावगमः संस्कार्यत्वे हेतुरिति भावः। फलान्तरे संभवति प्राप्यत्वमात्रपर्यवसानं चायुक्तम्। ननु न कर्मत्वमात्रावगमात्संस्कार्यत्वम्, "सक्तून् जुहोति" "सुवर्णं भार्यम्" इत्यत्र सक्तुसुवर्णयोः संस्कार्यत्वाभावादिति शङ्कायां संस्कारस्वरूपं शोधयति—**संस्कारो हीति**। हिनामभ्यां प्रसिद्धिः प्रतियोग्यभ्युपगमश्च सूच्यते; अपि चेतिवदमेकाव्ययतुल्यरूप एकशब्दो वा। यद्यपि "सत उत्कर्षाधानं संस्कारः" इति भूतभाव्युपयोगिसंस्कारानुगतं लक्षणं, तथापि स्वाध्यायस्य भूतोपयोगित्वासंभवात् भाव्युपयोगिसंस्कारलक्षणमत्रोक्तम्। संस्कारलक्षणानुपपत्त्या "सक्तून् जुहोति" इत्या

दिषु प्रत्ययस्वारस्यावगतमपि कर्मत्वं भग्नमिति भावः। अत्र तु न तथानुपपन्नमित्याह—**संस्कार्यत्वं चेति**; चः शङ्कानिवृत्तौ। कुत इत्यत्राह—**धर्मार्थेति**। **पुरुषार्थचतुष्टयतत्साधने**त्यनेन पूर्वोक्तव्याख्येयैकत्वाय प्रयोजनवदर्थावबोधनमनुगतमिति दर्शितं भवति; पुरुषार्थपरत्वं वानुगतम्; इष्टतत्साधनयोरुभयोरपि पुरुषार्थत्वात्। यद्यप्यर्थकामतदुपायेषु केचिल्लोकसिद्धाः, तथापि धनेशसुरेशादिविभूतिरूपातिशयितार्थकामतत्साधनानां लोकसिद्धपशुपुत्रान्नादेश्चित्रादिसाध्यत्वस्य च लौकिकप्रमाणागोचरत्वात् पुरुषार्थचतुष्टयस्य वेदवेद्यत्वोक्तिर्युक्ता। **अवबोधित्वात्**; अनुष्ठानौपयिकबोधजनकत्वादिति भावः। अर्थावबोधकत्वस्य हुमादावव्याप्तत्वादाह—**जपादिनेति**। **स्वरूपेणापि**; अर्थज्ञानानुष्ठानाभ्यामृते जप्यमानेनाक्षरमात्रेणापीत्यर्थः। आदिशब्दादध्यापनग्रहणम्। अनुष्ठानानुगुणं ज्ञानं जपादि चाध्ययनसंस्कृतेन स्वाध्यायेनैवेत्युक्तं भवति। यद्वा पुरुषार्थतत्साधनावबोधित्वेन सह तत्साधनत्वं चशब्देन समुच्चीयते। तत्साधनत्वं द्विधा—जपादिना, ध्रियमाणेन स्वरूपेण चेति। अतोऽवान्तरसमुच्चेतव्यसमुच्चयपरोऽपिशब्दः। एवं नियमविधित्वं चोपपादितं भवति। अर्थज्ञानपर्यन्तत्वं किं शब्दस्वारस्यादभ्युपगम्यते, उतार्थानुपपत्त्येति विकल्पमभिप्रेत्य तत्र शब्दस्वारस्यं प्रतिवदन्नध्ययनविधिनिरूपणमुपसंहरति—**एवमिति**। **मन्त्रवदिति** पृथङ् निर्देशो व्रतान्तर्भावेन तदनन्तर्भावेन वाध्ययनोपकारकमन्त्राभिप्रायः। अस्ति हि 'शं नो मित्रा' दिमन्त्राणां व्रताननुप्रवेशेनापि जपमात्रेणोपकारकत्वम्। नियमाः पूर्वोक्ताः। यद्वा यथा बालस्योपनयनकाले संध्योपासनादिकाले च विधीयमानमुच्चारणं नियमवदक्षरपठनमेव, नार्थधीसंपादनम्; न हि बालानां पूर्वं मन्त्रार्थावबोधसंभवः; तद्वदिति। **अक्षरराशिग्रहणेति**; सनियमकोच्चारणमध्ययनशब्दस्य मुख्यार्थः "वेदानां किंचिदधीत्य ब्राह्मणः" 'एकां शाखामधीत्य श्रोत्रियः," "अङ्गाध्याय्यनूचानः" "कल्पाध्यायी ऋषिः" "कल्पसूत्रप्रवचनाध्यायी भ्रूणः" इत्यादिप्रयोगात्। न हि स्वशाखैकदेशाध्यायिनोऽर्थज्ञानसंभवः; अङ्गाध्ययनस्य पृथगुपादानेन तद्विरहेऽर्थज्ञानप्रसङ्गाभावात्। स्वाध्यायशब्दश्च नार्थज्ञानवाची, अपितु स्वशाखामात्रवाचीति तत्कर्मत्वं स्वाध्यायस्यैव युक्तं, न त्वर्थज्ञानस्य। अध्ययनस्य प्रयोजनाकाङ्क्षायां दृष्टे संभवत्यदृष्टकल्पनायोगादक्षरग्रहणस्यासन्नत्वात् हुमादिष्वनुगतत्वाच्च तत्स्वीकारो युक्तः; व्यवहितत्वादसार्वत्रिकत्वाच्च नार्थज्ञानमित्यभिप्रायः। सकृदुच्चारणावधिकत्वव्या-

वृत्त्यर्थमक्षरग्रहणे पर्यवसानमुक्तम्। मात्रचा विधिव्यापारस्यार्थज्ञानपर्यन्तत्वव्युदासः। **पर्यवस्यतीति**; यथा "अग्नीनादधीत" इति वाक्यमाधानमात्रपरं, न तूत्तरक्रतुविनियोगपरम्; यथा च "कारीर्या वृष्टिकामो यजेत" इति वाक्यं वृष्टिसिद्धिपर्यन्तकर्मविशेषपरं, न तु वृष्ट्युपरितनोपयोगपरं तथेति भावः। एवं शब्दस्वारस्यादर्थज्ञानपर्यन्तत्वं निरस्तम्। अथार्थानुपपत्तिं परिहरति; त्रिधा चानुपपत्तिशङ्का—विधेरक्षरग्रहणमात्रपरत्वे ग्रहणशेषतया विनियुक्तस्य स्वाध्यायस्यार्थपरत्वे प्रमाणाभावादविवक्षितार्थत्वं स्यात्; मीमांसायाः प्रवर्तकाभावादनारम्भणीयत्वं स्यात्; अक्षरराशिग्रहणमात्रस्य दुःखरूपतया विधेः प्रयोजनपर्यवसानं न स्यादिति। एतच्छङ्कात्रयनिराकरणमुखेनाध्ययनविधेरर्थज्ञानपर्यन्ततां, तन्निमित्तां ब्रह्मविचारानारम्भशङ्कां च व्युदस्यन् वेदाख्यैकप्रबन्धव्याख्यानरूपतया कर्मब्रह्मविचारयोरैकशास्त्र्यमपि दर्शयति — **अध्ययनगृहीतस्येति**। इह साङ्गमध्ययनं विवक्षितम् "अधीतसाङ्गसशिरस्कवेदस्य" "ननु च साङ्गवेदाध्ययनात्" इति पूर्वापरानुगुण्यात्। तेन हि प्रयोजनवदर्थापातप्रतीतिसिद्धिः। अर्था यज्ञोपासनादयः; ते स्वर्गमोक्षादिप्रयोजनवन्तः। प्रयोजनवदर्थशब्देन काकदन्तवदपरीक्ष्यत्वशङ्काव्यावृत्तिः। **प्रयोजनवदर्थावबोधित्वदर्शनादिति**; अनेन विधेः परंपरया पुरुषार्थपर्यवसायित्वमुक्तं भवति। अध्ययनस्य साक्षात्प्रयोजनमक्षरराशिग्रहणमित्युक्तम् 'अध्ययनगृहीतस्य' इति पदेन। अयमर्थः—किं साक्षात्पुरुषार्थपर्यवसायित्वं विधेर्विवक्षितम्, उत परंपरया। साक्षात्प्रयोजनपर्यवसायित्वं विधेरर्थज्ञानपर्यन्तत्वेऽपि नोपपद्यते; अनुष्ठानापूर्वद्वारा स्वर्गस्यैव प्रयोजनत्वात्, अध्ययनविधेः स्वर्गपर्यन्तत्वानभ्युपगमाच्च। परंपरया चेत्, अस्मत्पक्षेऽपि संभवतीति। **स्वभावत इति**; शब्दस्य बोधकत्वशक्तिस्वाभाव्यादित्यर्थः। व्युत्पन्नपदपदार्थं प्रति शब्दस्यार्थावबोधकत्वं स्वाभाविकमिति लोकसिद्धम्। एवकारो विधिनैरपेक्ष्यपरः। अन्यत्र विनियोगस्तु न स्वाभाविकं शब्दस्यार्थपरत्वं निरुणद्धि, जपविधिवत्; "याजयित्वा प्रतिगृह्य वाऽश्नन् स्त्रिः स्वाध्यायं वेदमधीयीत त्रिरात्रं वा सावित्रीम्" "वेदमेव जपेन्नित्यम्" इत्यादिविधानं हि न वेदस्यार्थपरत्वं निवारयति। स्वाध्यायः स्वतोऽर्थबोधकश्चेत् किं मीमांसयेत्यत्राह—**गृहीतादिति**; गृहीतात् गृहीतमात्रात्, 'अध्ययनगृहीतस्य' इत्युक्तेः। तेन मीमांसाख्येतिकर्तव्यताराहित्यं विवक्षितम्। आपाततः प्रतीतेः संशय-

विपर्ययसहत्वात्तन्निराकरणाय मीमांसेति भावः । 'अध्ययनगृहीतस्य' इत्यादिना वेदस्यावबोधकत्वस्वभावत्वमुक्तम् ; तत्र प्रयोजनवदर्थशब्दः परंपरया पुरुषार्थपर्यवसानज्ञापनाय । उपरि [१]तन्निमित्तापातप्रतीतिजनकतायाः सहकारिवैकल्यनिबन्धनत्वमित्यपौनरुक्त्यम् । न हि वेदस्यापातप्रतीतिजनकत्वं स्वभावः, प्रमितिजनकत्वस्वभावत्वात् । मीमांसाख्यपरिकरशून्यस्य तदभावो न श्रुतेः प्रमितिजनकत्वस्वभावविरोधी ; यथा आलोकादिसहकारिविरहे रूपाद्यनुपलम्भश्चक्षुरादीनां रूपादिसाक्षात्कारजनकत्वस्वभावं न विहन्ति, तद्वत् । आपातप्रतीतावपि प्रयोजनवत्त्वेन प्रतिपत्तिरस्तीति दर्शयितुं पुनः प्रयोजनवदर्थशब्दः ; प्रयोजनवदर्थापातप्रतीतिर्हि तन्निर्णयरागं जनयति ; न हि निष्प्रयोजनकाकदन्ताद्यापातप्रतीतिस्तन्निर्णयरागं जनयति । 'आपाततोऽवगम्यमानान् दृष्ट्वा' इत्यन्वयः ; अर्थानामवगम्यमानत्वं दृष्ट्वेत्यर्थः, 'स्वात्मनो बुद्ध्युत्पत्तिं दृष्ट्वा' इतिवत् । प्रयोजनवदर्थापातप्रतीतेः स्वानुभवसिद्धत्वान्न तदपह्नवः शक्य इति भावः । व्याकरणादिफलस्वरूपविलक्षणे मीमांसाफलस्वरूपे दर्शयति—**तत्स्वरूपेति** । स्वरूपविशेषा अङ्गिनः ; प्रकारविशेषा अङ्गानि । पूर्वपक्षोक्तस्वरूपप्रकारतः सिद्धान्तितस्वरूपप्रकारयोर्वैषम्यं विशेषशब्देन विवक्षितम् । प्रयोजनवदर्थस्वाध्यायवेदमीमांसाशब्दाः पूर्वोत्तरभागसाधारणाः । **स्वयमेव** ; न तु विधिना । तदुपपादकम् **अधीतवेदः पुरुषः** इति पदद्वयम् । 'अधीतवेदः' इत्यध्ययनविधिव्यापारस्यानुष्ठितांशे पर्यवसितत्वान्मीमांसायां तस्याप्रवर्तकत्वं द्योतितम् । चेतनत्वात् फलवदर्थापातप्रतीत्या स्वयमेव प्रवर्तत इति पुरुषशब्दस्याभिप्रायः । नन्वक्षरराशिग्रहणपर्यन्तत्वपक्षे रागतः प्रवृत्तिरपि नोपपद्यते, "वेदाङ्गानि समस्तानि कृष्णपक्षेषु संपठेत्" "निष्कारणः षडङ्गो वेदोऽध्येयः" "वेदमध्यापयेद् द्विजः । सकल्पं सरहस्यं च" इत्यादिविहिताङ्गाध्ययनस्याप्यक्षरग्रहणपर्यन्ततया व्याकरणादेरर्थावबोधाभावात् प्रकृतिप्रत्ययज्ञानाभावेनापातप्रतीत्यभावात् ; मैवम् ; व्याकरणादीनां वेदाङ्गत्वात् अकिंचित्करस्याङ्गत्वायोगात् दृष्टकिंचित्कारे संभवति तत्प्रहाणेनादृष्टकल्पनायोगात् पदाद्यवबोधरूपदृष्टकिंचित्कार एव स्वीकार्य इत्यङ्गत्वान्यथानुपपत्त्यैव व्याकरणाद्यर्थावगमसिद्धेः प्रयोजनवदर्थापातप्रतीतिसिद्ध्या मीमांसारम्भोपपत्तेः । 'अधीतवेदः पुरुषः स्वयमेव प्रवर्तते' इत्यनेन "अथातो धर्मजिज्ञा-

---

१. **अर्थावबोधकत्वस्वभावत्वनिमित्तेत्यर्थः ।**

सा" इति सूत्रमप्यर्थाद्व्याख्यातं भवति। विधेरक्षरराशिग्रहणपर्यन्तत्वे प्रवर्तकाभावात् स्वाध्यायस्यार्थपरत्वे प्रमाणाभावाच्च मीमांसा नारम्भणीयेति पूर्वः पक्षः। साङ्गाध्ययनानन्तरं शब्दस्य स्वतोऽर्थावबोधित्वदर्शनात् प्रवर्तकान्तराभावेऽपि रागात्प्रवृत्त्युपपत्तेरारम्भणीयेति सिद्धान्त इति।

ननु कर्मविचारस्य रागप्राप्तत्वे "आधीत्य स्नायात्" इति समावर्तनस्मृतिर्बाधिका स्यात्; वैधत्वे स्मृतेरपि श्रुतेर्बलीयस्त्वात् स्मृतिरवकाशप्रदा स्यात्; नैवम्; अध्ययनविधेरक्षरराशिग्रहणपर्यन्तत्वार्थज्ञानपर्यन्तत्वयोः किमभिप्रेत्यैतदुक्तम्? यद्यर्थज्ञानपर्यन्तत्वं तर्हि "अधीत्य स्नायात्" इति स्मृतिगताध्ययनशब्दस्य तत्तुल्यार्थत्वान्न विरोधः। यद्यक्षरराशिग्रहणपर्यन्तत्वं ततोऽपि तुल्यार्थत्वान्न विरोधः। किंच विरोधे सत्यपि प्रत्यक्षश्रुतिरप्यस्ति; यथा छान्दोग्ये—"आचार्यकुलाद्वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेणाभिसमावृत्य कुटुम्बे शुचौ देशे" इत्यादि; ततश्च स्मृतिवचनोपेता स्नानश्रुतिर्बलीयसी; तस्मात् श्रुतिस्मृतिवचनयोः प्राबल्यदौर्बल्यकथनं निरर्थकम्। नन्वेवं श्रुत्यापि रागतः प्रवृत्तिर्बाध्यत इति चेत्—न; समावृत्तस्यापि रागतः श्रवणोपपत्तेः। नन्वध्ययनानन्तरभावित्वे समावर्तनस्य तत्पूर्वकगृहस्थकर्मानुष्ठानानवरुद्धश्रवणावसरालाभान्मीमांसानारम्भः प्रसज्यते; नैवम्; समावृत्तस्यापि श्रोतुः श्रावयितुरिवावसरसंभवात्। आचार्यस्य ह्यध्यापनं विहितम्, न तु गृहस्थस्य श्रवणमिति चेत्—न; अध्यापनस्य याजनप्रतिग्रहवद्रागप्राप्तत्वात्। रागप्राप्तमपि "प्रतिग्रहादिना धनमर्जयेत्" इत्यादिशास्त्रानुमतमध्यापनमिति चेत्; श्रवणमपि शास्त्रानुमतम्, अनिषिद्धत्वात्; यज्ञानुष्ठानोपयुक्तत्वाच्च। ननु "संवत्सरे संवत्सरे द्वौ द्वौ मासौ समाहित आचार्यकुले वसेद्भूयः श्रुतिमिच्छन्निति श्वेतकेतुः" इत्यारभ्य "तच्छास्त्रैर्विप्रतिषिद्धम्; निवेशे हि वृत्ते नैयमिकानि श्रूयन्तेऽग्निहोत्रमतिथयः" इत्यादिना श्रवणं गृहस्थस्य निषिद्धमिति चेत्—न; साकल्येन मासद्वयं गुरुकुलवासस्यानुष्ठानोपरोधित्वेन तस्यैव निषिद्धत्वात्। "निवेशे हि वृत्ते नैयमिकानि श्रूयन्तेऽग्निहोत्रमतिथयः" इति ह्युच्यते; आचार्यस्याप्यनुष्ठानानुपरोधेन श्रावणस्य हि शास्त्रानुमतत्वम्; अतोऽनुष्ठानानुपरोधोपरोधप्रयुक्तानुमत्यननुमतिविषयत्वं श्रावणस्य श्रवणस्य च तुल्यम्। अत एव हि युधिष्ठिरादीनां गार्हस्थ्यनिष्ठानामपि भीष्मादिभ्यः श्रवणं भारतादिषु प्रतिपाद्यते। यद्यपि श्रावणकाल एव श्रवणकालः, तथापि

श्रोतुरुदकाहरणकाष्ठसंपादनादिभिरनुष्ठानोपरोध इति चेत्—न; अध्ययनविधिप्रयुक्तोदकाहरणादेस्तन्निवृत्त्या निवृत्तत्वात्; वित्तख्यात्यादिप्रयोजनान्तरस्पृहया शिष्यस्नेहेन च गुरोः श्रावणमुपपद्यते। श्रावयितुर्ज्ञातार्थत्वादनुष्ठानमुपपद्यते; श्रोतुरज्ञातार्थत्वान्नेति चेत्—न; उपनयनप्रभृत्यनुष्ठानवद्धितैषिवचनादनुष्ठानोपपत्तेः। तर्हि हितैषिवाक्यमेव स्यात्, किमर्थं मीमांसाश्रवणमिति चेत्; हितैषिवचनस्य प्रमाणमूलत्वनिश्चयार्थं प्रष्टॄणां परेषां स्वयमुपपादनार्थं च। हितैषिवचनादनुष्ठानसंभवे शूद्रादीनामप्यनुष्ठानप्रसङ्ग इति चेत्—न; "न शूद्राय मतिं दद्यात्" "न चास्योपदिशेद्धर्मं न चास्य व्रतमादिशेत्" इत्यादिनिषेधवचनसद्भावात्। न हि यज्ञादिकं ब्राह्मणाः शूद्रायोपदिशन्ति। न च शुश्रूषाविरहितशूद्रविशेषविषयत्वेनेदृशनिषेधवचनानां संकोचः कार्यः, संकोचकाभावात्। न हि शूद्रस्य यज्ञाद्यर्हत्वविषयं वचनान्तरं दृश्यते। किंच यजमानेन कृत्स्नवेदस्य मन्त्रविशेषाणां च जप्यतावचनात् तेषामध्ययनलभ्यत्वात् अध्ययनस्य चोपनयनसापेक्षत्वात् उपनयनस्य च त्रैवर्णिकाधिकारत्वान्न शूद्राद्यधिकारप्रसङ्गः। ननूपनयनविधिस्त्रैवर्णिकाध्ययनविषयतया नेतुं शक्यते; अतः शूद्रस्याध्ययनमुपनयननिरपेक्षमिति तस्य याजमानाद्युच्चारणसंभव इति चेत्—न; "तस्माच्छूद्रसमीपे नाध्येतव्यम्, अथ हास्य वेदमुपशृण्वतस्त्रपुजतुभ्यां श्रोत्रप्रपूरणमुदाहरणे जिह्वाच्छेदो धारणे शरीरभेदः" इत्यादिना शूद्रस्य वेदश्रवणादेर्निषिद्धत्वात्। अध्ययनं चेदुपनयनाङ्गकं तत् त्रैवर्णिकाधिकारमेवेति न तत्र शूद्राद्यधिकार इति मन्त्रविशेषोच्चारणानुपपत्तेर्न हितैषिवचनाच्छूद्रादेः क्रत्वनुष्ठानप्रसङ्ग इति नापशूद्राधिकरणविरोधः। किंच यथा "यावज्जीवमग्निहोत्रं जुहोति" इत्यादिविधिः 'न स्वाङ्गं स्वव्यवधायकम्' इति न्यायात् स्वोपयोगिनोऽर्थार्जनादेः रागप्राप्तस्याप्यवसरप्रदः, तथानुष्ठानोपयोगिमीमांसाश्रवणस्य समावर्तनविधिरवकाशप्रदः स्यात्। क्त्वाप्रत्ययस्य च समानकर्तृकत्वपूर्वकालीनत्वमात्रमर्थः, न त्वानन्तर्यम्। नन्वानन्तर्यमेव विधेयम्; न चेद्विधिवैयर्थ्यम्, दुःखात्मकगुरुकुलवासनिवृत्तेः स्वतः प्राप्तत्वादिति चेत्—न; आनन्तर्यपरत्वेऽपि विधिवैयर्थ्यात्; तच्च गुरुकुलवासस्य दुःखात्मकत्वादेव। अतः सनियमकसंस्कारविशेष एव स्नानमिति तद्विधेयं, न त्वानन्तर्यम्। तस्मात् "अधीत्य" इति क्त्वाश्रुतेर्न विरोधः। तस्मात्स्वयमेव प्रवर्तते। ननु "यो ह वा अविदितार्षेयच्छन्दोदैवतेन मन्त्रेण यजति याजयति वाध्या-

पयति वा स्थापयति वा स्थाणुं वर्च्छति गर्तं वा पद्यते प्र वा मीयते पापीयान् भवति यातयामान्यस्य छन्दांसि भवन्ति । अथ यो मन्त्रे मन्त्रे वेद स सर्वमायुरेति श्रेयांश्च भवत्ययातयामान्यस्य छन्दांसि भवन्ति तस्मादेतानि मन्त्रे मन्त्रे विद्यात्" इति श्रुत्या

"अविदित्वा ऋषिं छन्दो दैवतं योगमेव च ।
योऽध्यापयेज्जपेद्वापि पापीयान् जायते तु सः ॥"

इति स्मृत्युपबृंहितयार्थज्ञानविधानं फलितम्, मन्त्रप्रतिपाद्यदेवताज्ञानस्यात्र विहितत्वात्; तुल्यन्यायतया दैवतशब्दस्य मन्त्रप्रकाश्यानुष्ठेयार्थप्रदर्शनार्थतया च विध्यादिभागार्थज्ञानस्य विधेयत्वापत्तेः; योगो मन्त्राणां विनियोगः, तज्ज्ञानस्य ब्राह्मणभागार्थज्ञानसापेक्षत्वाच्चेति चेत्— न; प्रतिग्रहर्तुसंवेशनादेरिव रागप्राप्तत्वानिवृत्तेः । न हि "ब्राह्मणः प्रतिग्रहादिना धनमार्जयेत्" "ऋतावुपेयात्" इति वचनं रागतः प्राप्तिं प्रतिग्रहादेर्निरुणद्धि । किंचानेनैव वाक्येनार्थज्ञानं विहितमित्यध्ययनविधेरर्थज्ञानपर्यन्तत्वं नाश्रयणीयम्; यथा क्रतूनां विध्यन्तरसिद्धत्वादाधानविधेरुत्तरक्रतुपर्यन्तत्वं नाश्रीयते, तद्वत् । न चेदं वाक्यमध्ययनस्यार्थधीपर्यन्तत्वमवगमयति; न च स्वयमर्थज्ञानं विधत्ते; अर्थज्ञानस्यान्यतः सिद्धत्वात्, अत्र मन्त्रमात्रस्य ऋष्यादिविज्ञानविधानप्रतीतेश्च । ततश्च वेदस्य साङ्गतयाध्येयत्वं सिध्येत्; न त्वर्थज्ञानम्, छन्दोदेवतादिज्ञानस्य छन्दःकल्पव्याकरणनिरुक्तादिसापेक्षत्वात् मीमांसानपेक्षत्वाच्च । विनियोगविषयसंदेहे सति मीमांसापेक्षा स्यादिति चेत्, तर्हि संदेहापाकरणाय रागतः प्रवृत्तिः स्यात् ।

"यदधीतमविज्ञातं निगदेनैव शब्द्यते ।
अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित् ॥"

इतीदमपि वचनं नार्थज्ञानपर्यन्तत्वमध्ययनविधेरवगमयति, 'अधीतम्, अविज्ञातम्' इत्यत्रैवाध्ययनार्थज्ञानयोः पृथङ् निर्देशात्; रागप्राप्तस्य विधातुमशक्यत्वाच्च । "वेदानां किंचिदधीत्य ब्राह्मणः" "एकां शाखामधीत्य श्रोत्रियः" "अङ्गाध्याय्यनूचानः" इत्यादयः कल्पसूत्रप्रयोगाश्चाध्ययनादर्थज्ञानं पृथग्भूतमवगमयन्ति । अतः श्रवणस्य दुःखरूपत्वेन तन्द्रालुतया वा अर्थार्जनाद्यन्यपरतया वा यो न शृणोति तत्प्ररोचनार्थमिदं "यदधीतम्" इत्यादि वचनम्; यथा "अक्षैर्मा दीव्यः कृषिमित्कृषस्व वित्ते रमस्व बहु मन्यमानः"

इति वाक्यं तन्द्रालुप्ररोचनार्थम्; प्ररोचनया हि प्रवृत्तिरुत्कटा स्यात्; न ह्येतावता कृषेरर्थार्जनस्य च रागप्राप्तत्वभङ्गेन सर्वत्र वैधत्वमेव स्यात्; तद्वदिदमपि वचनं श्रवणस्य रागप्राप्तत्वं न विहन्ति। तस्माद्रागत एव प्रवर्तते। एवमन्यतः प्रवृत्तौ संभवन्त्यां शब्दशक्त्युल्लङ्घनेन मीमांसाश्रवणस्य विधेयत्वकल्पनमयुक्तम्।

ऐकशास्त्र्यं रागतः प्रवृत्तिश्चास्तु; कथं पौर्वापर्यनियमः? इत्यत्राह- **तत्रेति**। तत्र वेदे। **कर्मविधिस्वरूपे निरूपित** इति; कर्मभागस्य वेदोपक्रमत्वादधीतक्रमेणैव निरूपणं प्राप्तमिति कर्मविचारस्य पूर्वभावित्वमिति भावः। ननु न हि कर्मणामल्पास्थिरफलत्वमनन्तस्थिरफलत्वं च पूर्वपक्षसिद्धान्तरूपेण क्वचिन्निरूपितम्; तत्कथमल्पास्थिरफलत्वावगतिः? इत्यत्राह—**स्वरूपे निरूपित** इति। केवलं कर्मविधिस्वरूपमेव निरूपितम्; अल्पास्थिरफलत्वज्ञानं चावृत्तिविधानादिना फलितमिति भावः। यद्वा कर्मविधिस्वरूपं निरूपितं, न त्वाराध्यपरदेवतेति भावः; तदाराधनत्वेन कृते ह्यनन्तस्थिरफलत्वसिद्धिः। **अध्ययनगृहीतस्वाध्यायेति**; अध्ययनस्य कृत्स्नस्वाध्यायविषयत्वादुपनिषदश्च स्वाध्यायशब्दान्तर्गतत्वादिति भावः। एकदेशशब्देनैकप्रबन्धांशत्वं सूचितम्। साधारणवेदशब्दनिर्दिष्टे शब्दराशावनन्यपरं प्रदेशं पृथङ् निर्दिशति **उपनिषच्छब्देन**। **वेदान्त**शब्देन विचारपौर्वापर्यनियमहेतुर्दर्शितः। **मीमांसा**शब्दोक्ते व्याख्याने प्रदेशभेदं विशिनष्टि **शारीरकपदेन**। "अन्नवानन्नादो भवति। महान् भवति प्रजया पशुभिर्ब्रह्मवर्चसेन" इत्याद्युक्तानुषङ्गिकाल्पास्थिरफलव्यावृत्त्यर्थम् **अमृतत्वरूप**शब्दः। आनुषङ्गिकाणामल्पास्थिरफलत्वेऽपि प्रधानफलस्यानन्तस्थिरफलत्वेनापातप्रतीतिरस्तीत्यर्थः। कर्ममीमांसासंस्कृतमनस्कत्वादत्राप्यानुषङ्गिकं प्रधानं च फलं संभवतीति श्रोतुः प्रतीयत एव। ननु फलत्वादिदमप्यनित्यमिति बुद्धिः स्यात्—नैवम्; विपक्षे बाधकाभावात्। यथा भौमसुखात् स्वर्गादिसुखं विलक्षणं प्रतिपन्नं, तत्रापि परस्परवैलक्षण्यं देशकालस्वरूपभेदात्प्रतिपन्नं, तथैव तस्मादपि विलक्षणं सुखं संभवतीत्यतीव रागजननायास्यापि प्रतीतिः स्यात्। **अधिकरोति**; अधिकारी भवति। एवं कर्मविचारकृदेवाधिकारी भवति, न तु साधनचतुष्टयवानित्यभिप्रायः।

### भावप्रकाशिका

**सक्तुहोमो यथा पुरुषसंस्कार इति**; यथा भूतभाव्युपयोगविधुराणां सक्तूनां होमसंस्कार्यत्वाभावेन सक्तुहोमस्य गुणकर्मत्वाभावेन प्रधानकर्मत्वं तद्वदिति भावः।

एतदभिप्रायेण पुरुषसंस्कारत्वोक्तिरिति द्रष्टव्यम्। **स्वाध्यायस्य हि कर्मत्वावगमो न पुरुषस्येति**; यद्यप्यध्ययनस्य प्राभाकराभिमतमर्थकर्मत्वमेव निरसनीयम्; न तु पुरुषसंस्कारत्वं, तस्य परानुक्तत्वात्; न चाध्ययनस्य स्वाध्यायसंस्कारत्वाभावे पुरुषसंस्कारत्वमापतेदेव, कोटिद्वयविनिर्मुक्ताकाराभावादिति वाच्यम्; गुणकर्मत्वशून्यानां काम्यानां प्रयाजादीनां च पुरुषसंस्कारत्वस्याभावात्—तथापि प्रधानकर्मत्वनिरासे तात्पर्यम्। **प्राप्यत्वमात्रपर्यवसानं चायुक्तमिति**; न चैवं वैदिके "पयो दोग्धि" इत्यत्रापि पयसः संस्कार्यत्वप्रसङ्गः, तत्रापि प्रापणनियमजन्यादृष्टस्याभ्युपेतत्वेन संस्कार्यत्वस्येष्टत्वात्। ततश्चाध्ययनेन वेदानां या प्राप्तिः स्वाध्यायोच्चारणेच्छायां सत्यामस्खलिततदुच्चारणोपयोगिताालुमूर्धादिवर्णस्थानवशित्वसहिताविच्छिन्नस्मृतिसंततिजनकवर्णपदवाक्यावलीविषयसंस्कारदार्ढ्यजनकाक्षरराशिग्रहणरूपा तन्नियमजन्यादृष्टस्य स्वाध्यायनिष्ठस्याभ्युपेयत्वमिति भावः। **सुवर्णं भार्यमित्यत्रेति**; तृतीये सुवर्णभरणस्य पुरुषार्थत्वस्य व्यवस्थापितत्वादिति भावः। **प्रातियोग्यभ्युपगम इति**; प्रतिवाद्यभ्युपगम इत्यर्थः। **सक्तून् जुहोतीत्यादिषु प्रत्ययस्वारस्यावगतमपीति**; ननु "मैत्रावरुणाय दण्डं प्रयच्छति" इत्यत्रेव "तथा युक्तं चानीप्सितम्" इत्यनीप्सिते कर्मणि द्वितीया भविष्यतीति कुतो व्यत्ययाश्रयणमिति चेत्—न; तत्र हि दानकर्मभूतेन दण्डेन मैत्रावरुणस्य संस्कारः, न तु दण्डसाधनकेन दानेन; इह तु सक्तुसाधनकेन होमेनापूर्वं, न होमकर्मभिः सक्तुभिरिति वैषम्यात्। नन्वध्ययनस्यार्थज्ञानार्थत्वपक्षेऽपि न कर्मत्वभङ्गः, अर्थसिद्धस्याध्ययनसंस्कार्यत्वस्य "चरुमुपदधाति" इत्यत्रेव द्वितीययानुवादोपपत्तेः; अग्निप्रकरणाम्नातेन "चरुमुपदधाति" इति विधिना चरूपधाने स्थण्डिलस्याङ्गतया विनियुज्यमाने तस्य साक्षात्स्थण्डिलनिर्वर्तकत्वायोगादुपहितेन चरुणा तन्निर्वृत्तिदर्शनाच्चोपधानस्य स्थण्डिलाङ्गत्वं चरुसंस्कारद्वारकमित्यर्थसिद्धमेव हि चरोरुपधानसंस्कार्यत्वं द्वितीययानूद्यते; एवमिहाप्यध्ययनस्य तत्समाप्त्यनन्तरारम्भणीयमीमांसापरिचयोत्तरकालभाविन्यर्थज्ञाने साक्षात्करणत्वायोगात् अध्ययनगृहीतस्वाध्यायेन कालान्तरे स्मृतिसमारूढेन द्वारेणार्थज्ञानदर्शनाच्चार्थसिद्धं स्वाध्यायस्याध्ययनसंस्कार्यत्वं तव्यप्रत्ययेनानूद्यत इत्युपपत्तेरिति चेत्—न; 'अध्ययनगृहीतस्वाध्यायेनार्थज्ञानं भावयेत्' इत्यर्थाश्रयणेन भट्टमते दोषाभावेऽप्यध्ययनस्य स्वाध्यायसंस्कारत्वानभ्युपगन्तृगुरुमते 'स्वाध्यायसाधनकाध्ययनेनार्थज्ञानं भावयेत्'

इत्यर्थाश्रयणेन तव्यप्रत्ययार्थत्यागः सिद्ध इति भावः । अर्थावबोधनस्य सप्रयोजनत्वप्रदर्शनार्थमाह—**अनुष्ठानौपयिकेति** । **चशब्देन समुच्चीयत इति**; यद्यपीदं पक्षद्वयेऽपि समानं, तथापि पूर्वपक्षे अपिर्विरोधसूचकः, द्वितीयपक्षे तु जपादेः स्वरूपस्य च समुच्चयपर इति विवेकः । मन्त्राणां स्वाध्यायान्तर्गतानां पृथङ् निर्देशः किंनिबन्धन इत्याशङ्क्याह—**मन्त्रवदिति पृथङ् निर्देश इति** । उपकारकमन्त्रवत्त्वप्रतिपादनस्य प्रकृतेऽत्यन्तानुपयोगाद्वृत्तिप्रत्ययान्तत्वमाश्रित्याह—**यद्वा बालस्येति** । **सनियमकोच्चारणमिति**; यद्यपि नियमोऽङ्गविधायकवाक्यान्तरप्राप्यो नाध्ययनशरीरान्तःपाती, तथाप्यर्थज्ञानस्य तच्छरीरान्तःपातित्वे तात्पर्यम् । **अपितु स्वशाखामात्रवाचीति**; अध्यायशब्दो वेदपरः, स्वशब्दः पितृपितामहपरंपरागतस्वीयत्ववाची । न च 'स्वाध्यायशब्दवाच्यवेदाख्याक्षरराशेः' इति भाष्येण विरोध इति वाच्यम्, तस्यापि 'स्ववेदाख्याक्षरराशेः' इत्यत्र तात्पर्यात् । न च सिद्धान्ते स्वाध्यायस्याध्ययनोद्देश्यतयोद्देश्यगतविशेषणस्य ग्रहैकत्ववदविवक्षितत्वात् स्वीयास्वीयसाधारण्येनाध्ययनं प्राप्नोतीति वाच्यम्, वेदानामानन्त्येन सर्वाध्ययनस्याशक्यत्वेन संकोचेऽपेक्षिते स्वीयत्वस्योद्देश्यगतस्य विवक्षितत्वोपपत्तेः । **मात्रचेति**; ननु 'क्षीरमात्रं पिब' इत्यादावुत्तरपदत्वनियतं मात्रपदं प्रातिपदिकम्; न तु "प्रमाणे द्वयसज्दघ्नञ्मात्रचः" इति विहितो मात्रच् प्रत्ययः, तस्य प्रमाणार्थ एव विधानादिति चेत्—न; 'ऊरुमात्रम्' इत्यादावपि प्रमाणार्थप्रत्यय इतरव्यवच्छेदप्रतीतेर्मात्रच्प्रत्ययव्यतिरेकेणोत्तरपदत्वनियतप्रातिपदिकाभ्युपगमे प्रमाणाभावादित्यत्र तात्पर्यात् *। **यथाग्नीनादधीतेति वाक्यमिति**;

---

*अत्र प्रमाणस्य प्रत्ययार्थत्वकथनं फलितार्थकथनपरतया कथंचिन्नेयम्, महाभाष्यादिषु प्रमाणं प्रकृत्यर्थोपाधिरित्युक्तेः । ये त्वत्र मात्रचः साधुत्वे संदिहते त इत्थं प्रतिबोधनीयाः—"प्रमाणे द्वयसज्दघ्नञ्मात्रचः" इत्यत्र प्रमाण इति प्रकृत्यर्थोपाधिः । प्रमाणं चात्र परिच्छेदकमात्रं विवक्षितं, न पारिभाषिकम्, "प्रथमश्च द्वितीयश्च ऊर्ध्वमाने मतौ मम" इत्याकरेष्टेः । एवं च यत् परिच्छेदायावधिनिर्धारणायोपादीयते तद्वाचकात् अस्येत्यर्थे मात्रच् प्रत्ययो भवति । अत एव "यत्तदेतेभ्यः परिमाणे वतुप्" इत्यत्र 'प्रमाणे' इत्यनुवर्तमाने 'परिमाणे' इति किमर्थमिति प्रश्ने "मात्राद्यप्रतिघाताय" इति भाष्यमुपादाय "यदि 'प्रमाणे' इत्यनुवर्त्य प्रमाणोपाधिकेभ्यो यदादिभ्यो वतुप् विधीयेत तदासौ विशेषविहितत्वात् सामान्यविहितान् बाधेत; परि-

एतच्च "तत्प्रकृत्यर्थं यथान्येऽनारभ्य वादाः" इति तार्तीयाधिकरणे स्थितम्; तत्र ह्याधानविधेः पर्णतादिवत् क्रतुपर्यन्तत्वं पूर्वपक्षीकृत्य अलौकिकस्याहवनीयाद्यग्नेरेव फलाकाङ्क्षाशामकत्वसंभवात्तन्मात्रविश्रान्त एवाधानविधिः, न क्रतुपर्यन्त इति स्थापितम्। **आधानमात्रपरमिति**; अग्निसिद्ध्यर्थाधानमात्रविधिपरमित्यर्थः। **ग्रहणशेषतयाविनियुक्तस्येति**; ननु सिद्धान्ते न स्वाध्यायस्य ग्रहणशेषतया विनियोगः, स्वाध्यायस्य शेषित्वावगमादिति चेत्—मैवम्; ग्रहणशेषतया अविनियुक्तस्येति छेदः; ग्रहणशब्दश्चार्थग्रहणपरः; अर्थज्ञानशेषतया अविनियुक्तस्य स्वाध्यायस्यार्थपरत्वे प्रमाणाभावादित्यर्थः। अयं भावः—अर्थावबोधमुद्दिश्य शब्दोच्चारणेन हि लोके वाक्यानां तात्पर्यमवगम्य तन्निर्वाहार्थं मुख्यासंभवे लक्षणादिकं परिकल्प्यते, न तूच्चारणमात्रेण; अत एव 'गौरश्वः पुरुषो हस्ती' इतिपदानामुच्चारणमात्रेण लक्षणा न कल्प्यते; यदा विशिष्टार्थबोधमुद्दिश्य तेषामुच्चारणमिति तात्पर्यमवगम्यते, तदैव तन्निर्वाहार्थम् 'अयं गौर्बलीवर्दः, अश्वो वेगवान्, पुरुषो नियतचेष्टः, हस्ती महाबलः' इति गवादिपदानामध्याहारलक्षणादि कल्प्यते; एवं च वेदवाक्यानामर्थावबोधमुद्दिश्योच्चारणाभावे तात्पर्यासिद्ध्या तन्निर्वाहार्थलक्षणागौणवृत्त्यनुषङ्गाध्याहारावधारणकल्पनोच्छेदप्रसङ्गादवश्यं वेदेऽप्यर्थावबोधमुद्दिश्योच्चारणस्य वक्तव्यत्वात् वेदे च लोक इव तमुद्दिश्य रागप्रयुक्तोच्चारणाभावाद्विधिप्रयुक्तमेव तदाश्रयणीयमिति विधिश्चाध्ययनविधेरन्यो न दृश्यत इति तेनैवार्थावबोधमुद्दिश्य गुरुमुखोच्चारणानूच्चारणरूपमध्ययनं विधीयत इत्यकामेनापि स्वीकर्तव्यम्; एवं च दृष्टफलेऽप्यर्थावबोधे विधिरन्यतोऽसिध्यतस्तात्पर्यस्य सिद्ध्यर्थ इति। **शब्दस्य बोधकत्वशक्तिस्वाभाव्यादित्यर्थ इति**; लोकव्युत्पत्तिसिद्धस्य शब्दानामर्थपरत्वस्यौत्सर्गिकस्य क्वचित्क्वचिल्लौकिकवाक्ये वक्तृदोषादपवादेऽप्यपौरुषेये तदभावात् निरपवादस्य स्वत एव समर्थस्यार्थज्ञानोद्देश्यकशब्दोच्चारणस्य विधिनिरपेक्षत्वाच्च। ननु—शब्दानामर्थपरत्वमात्रं व्युत्पत्तिसिद्धम्; न त्वग्निहोत्रादिवाक्यं तत्तदर्थविशेषपरमित्यपि; तत्तु तत्तदर्थविशेषमुद्दिश्योच्चारणमपेक्षत इति तदर्थोऽध्ययनविधिः स्यादिति चेत्—न; अध्ययनविधिनापि तदलाभात्; न ह्यध्ययनविधिः प्रतिवाक्यं तत्तदर्थज्ञानविशेषमुद्दिश्य तत्तद्वाक्योच्चारणे व्याप्रियते। 'स्वाध्या-

---

माणग्रहणे तु सति भिन्नोपाधिविषयत्वात् बाध्यबाधकभावाभावः। तेन 'तन्मात्रं, यन्मात्रम्' इत्यादि प्रमाणोपाधौ प्रकृत्यर्थे सिद्धं भवति" इति कैयटः प्राह।

याध्ययनेन यद्भावयितुं शक्यं तदनेन भावयेत्' इति विधाने सत्यग्निहोत्रादिवाक्याध्ययनेन न्यायलभ्यतत्तदर्थविशेषज्ञानमेव भावयितुं शक्यमिति तत्तदर्थविशेषे तात्पर्यमर्थतः सिध्येदिति चेत्—तर्हि अग्निहोत्रादिवाक्यानामौत्सर्गिकमर्थपरत्वमेव न्यायपर्यालोचनेन तत्तदर्थविशेषतात्पर्यतया पर्यवस्यतीत्येवास्तु ; किमुच्चारणविधिना ? यदि च लोके दृष्टमित्येतावता वेदेऽप्यर्थावबोधमुद्दिश्योच्चारणमाद्रियेत, तदा स्वतन्त्रवक्तृविवक्षितेतरार्थावबोधमुद्दिश्य श्रोतृभिरुच्चारणे कृतेऽपि तस्य वाक्यस्य तत्र तात्पर्यं न दृष्टं, किंतु स्वतन्त्रकर्तुर्यदर्थावबोधमुद्दिश्योच्चारणं तत्रैव तात्पर्यं दृष्टमिति वेदस्य तात्पर्यसिद्ध्यर्थं पौरुषेयत्वमपि कल्प्येत । वस्तुतस्तु लोकेऽपि नोच्चारणाधीनं तात्पर्यम्, मौनिना लिखित्वा दत्ते परेणापि लिखितं दृष्ट्वा मनसानुसंहिते श्लोकादावुच्चारणाभावात् ; किंतु 'अस्माद्वाक्यादेतदर्थप्रतीतिर्भवतु' इति वक्तृविवक्षाधीनं तदिति तात्पर्यसिद्ध्यर्थमध्ययनविधेरर्थावबोधफलकल्पनायाः कथंचिदपि नावकाशः । लोके व्युत्पत्तिसिद्धमर्थपरत्वं वक्तृविवक्षिते विशेषे पर्यवस्यति, वेदे तु न्यायलभ्ये विशेषे ; तदनुसारेण च लक्षणादिकल्पनमित्येवाभ्युपगन्तव्यम् । अत एव वेदस्य तात्पर्यवत्त्वसिद्धिमेवाध्ययनविधिफलं मन्वानेनापि न्यायतोऽध्ययनविधिरर्थावबोधमपि फलत्वेन गृह्णातीति तात्पर्यं निश्चित्य तद्बलेन स्वाध्यायावाप्तेरेव फलताप्रत्यायकस्य तव्यप्रत्ययस्य स्वारस्यमुल्लङ्घितम् । न ह्यध्ययनविधेरुक्तार्थतात्पर्यनिश्चयोऽयमर्थावबोधमुद्दिश्योच्चारणविध्यधीनः, तथाभूतविध्यन्तराभावात् ; अस्यैव विधेरपेक्षायामात्माश्रयापत्तेः ; किंतु केवलन्यायाधीन एव वक्तव्यः ; तस्मात्तात्पर्यसिद्ध्यर्थमध्ययनविधेरर्थावबोधफलकत्वकल्पनमित्येतत्तावदयुक्तमिति भावः। **अन्यत्र विनियोगस्त्विति** ; अध्ययनस्यार्थज्ञानादन्यस्मिन् स्वाध्याये विनियोग इत्यर्थः । **गृहीतमात्रात्, अध्ययनगृहीतस्येत्युक्तेरिति** ; ननु 'अध्ययनगृहीतस्य' इति भाष्यस्य कथमध्ययनगृहीतमात्रत्वमर्थः ? येन 'गृहीतमात्रात्' इत्यंशे तदुपपादकं स्यादिति चेत्—उच्यते—'अध्ययनगृहीतस्य स्वाध्यायस्य' इति पूर्वभाष्ये 'अध्ययनगृहीतस्यार्थावबोधित्वदर्शनात्' इत्येवं प्रमितिजनकत्वस्वभावस्योपपादितत्वात् तस्यैवापातप्रतीतिजनकत्वस्य विरुद्धत्वात् पूर्ववाक्यं मीमांसापरिकरयुक्तपरम् ; अतस्तदविरोधायेदं वाक्यमध्यनगृहीतमात्रपरमिति भावः । केचित्तु मीमांसापरिकरयुक्तस्येत्यनुक्तेः 'सर्वं वाक्यं सावधारणम्' इति न्यायात्सिध्यतीत्याहुः । **आपाततोऽवगम्यमानान् दृष्ट्वेत्यन्वय इति** ;

केचित्तु—अवगम्यमानानर्थान् प्रयोजनवतो दृष्ट्वेत्यपि योजयन्ति । **अङ्गत्वान्यथानुपपत्त्यैवेति**; न च "वेदाङ्गानि च सर्वाणि" इति द्वितीयाश्रुत्याङ्गानां कर्मत्वावगमात् स्वाध्यायस्येवाङ्गानां प्राप्यत्वं किं न स्यादिति वाच्यम्; तथा सत्यङ्गाध्ययनस्याक्षरग्रहणमात्रपर्यन्तत्वेऽङ्गानां वेदानुपकारकतया अङ्गत्वभङ्गप्रसङ्गेन मुख्यप्रातिपदिकानुरोधेन "सक्तून् जुहोति" इत्यत्रेव विभक्तिविपरिणामेन कर्मत्वपरित्यागेन करणत्वस्याश्रयणीयत्वात्; 'पाठकर्मभूतैरङ्गैरर्थज्ञानं भावयेत्' इत्यपि संभवेन प्राप्तपाठकर्मत्वानुवादेनापि दोषाभावाच्च; यथा "चरुमुपदधाति" इत्यत्र 'उपहितेन चरुणा स्थण्डिलं निर्वर्तयेत्' इत्येवं प्राप्तमुपधानकर्मत्वं द्वितीययानूद्यते, तद्वदिति भावः । **किमभिप्रेत्यैतदुक्तमिति**; किमभिप्रेत्य श्रुतिस्मृत्योर्बाध्यबाधकत्वमुक्तमित्यर्थः । ननु—"अधीत्य स्नायात्" इत्यादौ 'अध्ययनकर्मिकां भावनां परिसमाप्य' इत्यर्थः; न तु 'अध्ययनकरणिकामर्थज्ञानकर्मिकाम्' इति, "वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत" "उच्चैः प्रवर्ग्येण चरन्ति, अप्स्ववभृथेन चरन्ति" इत्यादाविव तृतीयानिर्देशाभावेन तत्करणिकाया भावनाया असंप्रतिपत्तेः । **ननु** "अग्निचिद्वर्षति न धावेत्" इत्यत्र चयनभावनाया एव भूताया निमित्तत्वम्, न धात्वर्थमात्रस्य भूतस्य निमित्तत्वम्; ततश्च क्रत्वन्त एवाग्निचिद्व्रतानि प्रवर्तन्त इति पञ्चमे स्थितम्; तद्वदिह किं न स्यादिति चेत्—न; अत्र "अग्नौ चेः" इत्यग्नौ कर्मणि चिनोतेः क्विब्विधानात् अग्निकर्मिकायाश्चयनकरणिकाया भूताया एव भावनाया निमित्तत्वम्; इह तु "वेदमधीत्य स्नायात्" इति वेदकर्मिकाया एव भावनायाः पूर्वकालत्वं क्त्वाप्रत्ययेन प्रतीयते, न त्वर्थज्ञानफलकर्मिकायाः; ततश्चाध्ययनविधेरर्थज्ञानफलकत्वपक्षे विरोधः स्यादेवेत्यरुचेराह—**किंच विरोधे सत्यपीति** । **गुरोः कर्मातिशेषेण**; गुरुशुश्रूषानवरुद्धकालेनेत्यर्थः; यद्वा **अतिशेषेण**; निःशेषमित्यर्थः । **निवेशे हि वृत्ते नैयमिकानीति**; निवेशो विवाहः । ननु "ज्योतिष्टोमेन स्वर्गकामो यजेत" इत्यविशेषेण स्वर्गकाममात्रप्रवृत्तत्वात् शूद्रस्यापि स्वर्गकामत्वाविशेषादनुष्ठानप्रसङ्गो दुर्वारः, "न शूद्राय मतिं दद्यात्" इत्यादिनिषेधस्मृतेः शुश्रूषारहितशूद्रविषयत्वस्य संभवादित्यरुचेराह—**किंच यजमानेनेति** । **अध्ययनलभ्यत्वादिति**; अध्ययनसंस्कृतस्वाध्यायस्य प्रयोजनसाकाङ्क्षस्य स्वाध्यायसाध्यसकलकर्मसु विनियोगो भवतीति भावः । **यो ह वा अविदितार्षेयेति**; "यो ह वा अविदितार्षेयच्छन्दोदैवतब्राह्मणेन मन्त्रेण

याजयति वाध्यापयति वा स्थाणुं वर्छति गर्तं वा पद्यते" इति प्रसिद्धश्रुतिपाठः। अस्यायमर्थः——आर्षेयः ऋषिः; छन्दो गायत्र्यादि, दैवतमग्न्यादिकं, ब्राह्मणं विनियोजकवाक्यम्; आर्षेयादिकमजानानो याजकोऽध्यापको वा स्थावरतां प्राप्नोति, गर्ते वा पतति, म्रियेत वा; अस्य छन्दांसि निर्वीर्याणि भवन्ति; जानानस्य तु तद्विपर्ययो भवति; तस्मादेतानि मन्त्रे मन्त्रे विद्यादिति। **प्रतिग्रहर्तुसंवेशनादेरिवेति**; न चैतत् "रागप्राप्तस्य विधातुमशक्यत्वाच्च" इत्युत्तरग्रन्थविरुद्धमिति वाच्यम्; रागप्राप्तस्य पाक्षिक्यामप्राप्तौ सत्यां विधेयत्वदर्शनात् रागप्राप्तत्वविधेयत्वयोर्नात्यन्तविरोध इत्येतत्तात्पर्योऽयं ग्रन्थः; उत्तरग्रन्थस्तु रागतो नित्यप्राप्तविषय इत्यविरोधोपपत्तेः। ननु—एतद्भट्टपर्यालोचनायामर्थज्ञानस्याध्ययनविधिविधेयत्वरागप्राप्तत्वविचार इव प्रतीयते; न चैष युज्यते, अर्थज्ञानस्याध्ययनविधिविधेयत्वस्य मीमांसकैरप्यनभ्युपेतत्वात्; अर्थज्ञानस्याध्ययनविधिफलत्वमेव हि तैः स्वीकृतम्, न तु विधेयत्वम्; फलस्याविधेयत्वात्; चतुर्थे "लिप्सा" सूत्रे "फलं चाकर्मसंनिधौ" इति द्वैतीयाधिकरणे "कर्मस्वप्रवृत्तिः स्यात्" इत्याद्यभिकाधिकरणेऽपि फलाविधेयत्वस्य प्रतिपादितत्वात्; एकादशाद्ये च फलाविधेयत्वस्य प्रतिपादितत्वाच्चेति चेत्—न; अत्रार्थज्ञानपदेन विचारस्यैव विवक्षितत्वात्; विचारवैधत्वस्य मीमांसकैरभ्युपेततया तस्य रागप्राप्तत्वेन प्रतिक्षेप्यत्वोपपत्तेः। **किंचानेनैव वाक्येनेति**; ""यो ह वा अविदितार्षेय—" इत्यादिवाक्यविहितार्थज्ञानाक्षिप्ततया विचारस्य प्राप्तेर्नाध्ययनाक्षेप्यत्वं विचारस्य युज्यते; यथा स्वस्वविधिविहितानां क्रतूनां ज्योतिष्टोमदर्शपूर्णमासादीनामाधानविधिसिद्धैराहवनीयादिभिः स्वसाफल्यसिद्ध्यर्थं नानुष्ठाप्यत्वं तथेत्यर्थः। **ननु न हि कर्मणामल्पास्थिरफलत्वमनन्तस्थिरफलत्वं चेति**; अत्र 'पूर्वपक्षसिद्धान्तरूपेण' इत्यस्य व्युत्क्रमेणान्वयो द्रष्टव्यः। 'स्वरूपे निरूपिते' इत्युक्ते 'स्वरूपमात्रे निरूपितेऽपि कर्मणामल्पास्थिरफलत्वमावृत्तिविधानादिभिर्ज्ञात्वा' इत्यस्यार्थस्याध्याहारसापेक्षतया विलम्बितप्रतीतिकतया अन्यथा व्याचष्टे—**यद्वा कर्मविधिस्वरूपं निरूपितमिति**। अस्मिन्पक्षेऽस्य भाष्यस्येत्थमवतारिका—ननु परमात्माराधनकर्मसु "स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः" इत्यनन्तस्थिरफलतयावगतेषु कथमल्पास्थिरफलत्वावगतिरित्याशङ्क्याह—**कर्मविधिस्वरूपे निरूपित इति**। अस्मिन्नपि पक्षे 'कर्मविधिस्वरूपे' इत्यस्य परमात्माराधनविनिर्मुक्तस्वरूपमात्रेऽवगते अल्पा-

स्थिरफलत्वावगतिप्रतिबन्धकपरमात्माराधनरूपत्वप्रतीत्यभावेनाल्पास्थिरफलत्वमवगम्येत्यस्याप्यर्थस्य विलम्बितप्रतीतिकत्वमविशिष्टमित्यस्वरसो बोध्यः। केचिदेवं व्याचक्षते—**तत्र कर्मविधिस्वरूपे निरूपित इति**; विधिश्च स्वरूपं च विधिस्वरूपम्; कर्मविधौ कर्मस्वरूपे च निरूपित इत्यर्थः; प्रत्यब्दं चातुर्मास्याद्यावृत्तिविधौ निरूपिते चातुर्मास्यानां क्षय्यफलत्वनिश्चयो भवति; यदि चातुर्मास्यानामक्षय्यफलत्वं तदा पुनस्तदनुष्ठानवैयर्थ्यप्रसङ्गादित्यवगतेः। तथा चातुर्मास्यादिस्वरूपं सहस्रसंवत्सरसाध्यविश्वसृजामयनादिस्वरूपं च निरूपयता चातुर्मास्यादिष्वल्पवित्तव्ययायाससाध्येषु "फलस्य कर्मनिष्पत्तेः, तेषां लोकवत्परिणामतो विशेषः स्यात्" इति न्यायालोचनसनाथचेतसा नित्यनैमित्तिककर्माराधितपरमपुरुषानुग्रहलब्धचित्तनैर्मल्येन पुंसा चातुर्मास्यादिकर्मणामनित्यफलत्वस्य सुज्ञानत्वादिति भावः।

## श्रुतप्रदीपिका

"प्रथमं तावत्" इत्यादौ प्रतिज्ञातं संस्कारविधिमुपपादयितुमाह—**अध्ययनं चेति**। कुत इत्यत्राह—**स्वाध्याय इति**। स्वाध्यायस्य कर्मत्वावगमान्नापूर्वद्वारा पुरुषसंस्कार इत्यर्थः। "सक्तून् जुहोति" इतिवत् किं न स्यादित्याशङ्क्य तत्स्वरूपं शिक्षयति—**संस्कार इति**। ततः किमित्यत्राह—**संस्कार्यत्वमिति**; न सक्तुवदनुपयुक्तमिति भावः। कुत इत्यत्राह—**धर्मेति**; चतुष्टयकीर्तनेन वेदाख्यप्रबन्धस्यानुगतार्थश्च सूचितः। **स्वरूपेणापि**; अर्थज्ञानानुष्ठानाभ्यामृतेऽपीत्यर्थः। **जपादिना स्वरूपेणापि**; जप्यमानेनाक्षरराशिमात्रेणापीत्यर्थः। अनुष्ठानशेषं ज्ञानमदृष्टपर्यन्तो जपश्चाध्ययनसंस्कृतेनैव, न तु पुस्तकाद्यवगतेनेति नियमविधित्वं च सिद्धम्। अर्थज्ञानपर्यन्तत्वं किं शब्दस्वारस्यात्, उतार्थानुपपत्त्येति विकल्पमभिप्रेत्य प्रथमं शिरः प्रतिवदन्नध्ययनविधिचिन्तनमुपसंहरति—**एवमिति**। व्रतानुप्रविष्टाननुप्रविष्टमन्त्राभिप्रायेण मन्त्रवादित्युक्तम्। अननुप्रविष्टाः "शं नो मित्रः" इत्यादयः। **नियमाः**; पूर्वोक्ताः। अर्थज्ञानव्युदासाय मात्रशब्दः; शब्दप्रतिपन्नमेतावत्, तत्र तात्पर्यं च पर्यवस्यतीत्यर्थः; न ह्याधानवाक्यमुत्तरक्रतुविनियोगपर्यन्तम्, तद्वदिति भावः। अथ विधेरक्षरग्रहणपर्यन्तत्वे स्वाध्यायस्यार्थपरत्वे मानाभावादविवक्षितार्थत्वं, विधेः पुरुषार्थपर्यन्तत्वाभावः, प्रवर्तकाभावान्मीमांसानारम्भणीयत्वं च स्यात्—इति त्रिविधानुपपत्तिमूलामर्थधीपर्यन्ततां तन्नि-

मितां ब्रह्मविचारानारम्भशङ्कां च व्युदस्य, एकव्याख्येयव्याख्यानतया शास्त्रैक्यमपि दर्शयति—**अध्ययनेत्यादिना**। **स्वभावत** इत्यादिना अविवक्षितार्थत्वपरिहारः। साक्षात्प्रयोजनपर्यवसानं त्वन्मतेऽपि न ; परंपरया चेदस्मन्मतेऽप्यस्तीत्यभिप्रायेण प्रयोजनविरहं परिहरति **प्रयोजनवदर्थ**शब्दः। स्वर्गमोक्षादिप्रयोजनवन्तोऽर्था यज्ञोपासनादयः। पूर्वं श्रुतिस्वभावोक्तिः ; पश्चात् तन्निमित्तापातप्रतीतिः। आपातप्रतीतिसमयेऽपि प्रयोजनवत्तयैव प्रतीतिसिद्ध्यर्थं **प्रयोजनवतोऽर्थान्** इति पुनः कीर्तनम्। तत्र हेतुः—**गृहीतादिति** ; साङ्गाध्ययनगृहीतादित्यर्थः ; **अवगम्यमानान् दृष्ट्वा** ; अवगतत्वं दृष्ट्वा। स्वरूपमङ्गि ; प्रकारोऽङ्गम्। विशेषः पूर्वपक्षितरूपाद्वैषम्यम्। व्याकरणादिव्यावृत्तं शास्त्रशरीरं विचारः। निर्णयः फलम्। स्वयमेवाधीतवेदत्वे सति पुरुषत्वाचेतनत्वाद्रागत एव प्रवर्तते, न तु विधिनेत्यर्थः। अनेन प्रवर्तकाभावादनारम्भः परिहृतः। श्रुतौ स्मृतौ चाध्ययनशब्दस्य तुल्यार्थतया प्राबल्यदौर्बल्यकल्पनमनर्थकम्। श्रुतिश्चास्ति—"वेदमधीत्याभिसमावृत्य" इति। रागप्राप्तस्यापि स्वोपयोग्यर्थार्जनादेरिव श्रवणस्यापि विधिरवसरप्रदः। क्त्वाप्रत्ययः समानकर्तृकत्वपूर्वकालत्वपरः, न त्वानन्तर्यपरः। स्नातस्यापि श्रवणं घटते, श्रावयितुरिवावसरसंभवात्। न चोदकाहरणादिभिरनुष्ठानोपरोधः, अध्ययनविधिप्रयुक्तानां तन्निवृत्तौ निवृत्तेः। वित्तख्यात्यादि गुरोः फलम्। यावच्छ्रवणसमाप्ति हितैषिवचनादनुष्ठानोपपत्तिः। न च तर्हि मीमांसानैरपेक्ष्यम्, मूलजिज्ञासया स्वयं प्रतिपिपादयिषया च सापेक्षत्वात्। न च हितैषिवाक्यादनुष्ठानेऽपशूद्रनयविरोधः, "न शूद्राय मतिं दद्यात्" इत्यादिभिर्ब्राह्मणैस्तस्यानुपदेशात् ; क्रतुषु जप्यमन्त्रादीनां त्रैवर्णिकाधिकारोपनयनाङ्गकाध्ययनसापेक्षत्वाच्च। अतो रागतः प्रवृत्त्युपपत्तिः। **वेदवाक्यविचाररूप**शब्देन व्याख्येयैक्याच्छास्त्रैक्यं च सिद्धमित्यभिप्रेतम्। एवमस्तु ; कथं पौर्वापर्यनियमः ? इत्यत्राह—**तत्रेति**। **निरूपिते** ; कर्मस्वरूपमेव निरूपितम् ; आवृत्तिविधानादिनाल्पास्थिरफलत्वं फलितमिति भावः। यद्वा कर्म निरूपितं, न त्वाराध्यपरदेवता ; तज्ज्ञाने सति हि फलस्यानन्त्यमिति भावः। "अन्नवानन्नादो भवति" इत्यानुषङ्गिकफलव्युदासाय **अमृतत्वरूप**शब्दः। स्वाध्यायमीमांसाप्रयोजनवदर्थादिशब्दा उभयभागसाधारणाः। उपनिषदादयस्त्वसाधारणाः। एवमैकशास्त्र्यं, पौर्वापर्यनियमः, ब्रह्मविचारारम्भणीयत्वं चेत्यर्थत्रयमुपपादितम्।

## नयप्रकाशिका

**अध्ययनं चे**त्यनेन तद्विधेः संस्कारपरत्वं तदुपपत्तिश्चोच्यते । **एवमध्ययनविधिरित्य**नेनार्थज्ञानपर्यन्तत्वमपूर्वविषयत्वं च तस्य नास्तीत्युच्यते । **मन्त्रवदिति** "प्रणवं प्राक् प्रयुञ्जीत व्याहृतीस्तदनन्तरम् । ततोऽधीयीत वेदांस्त्रीन्" इत्यादाववगम्यमानप्रणवादिमन्त्रा उच्यन्ते । **नियमवदिति**; "नीचैरासीत चासनम्" इत्यादाववगम्यमाननीचासनासीनत्वाचार्यमुखेक्षणादयो विवक्षिताः । **अध्ययनगृहीतस्ये**त्यादिभाष्येण प्रतिज्ञातसंगतिविशेषसिद्धविषयप्रयोजनज्ञस्यैव मीमांसाप्रवृत्तिः; तत्प्रवृत्तिश्च रागत एवेत्युच्यते । ननु तद्विधेः संस्कारविधित्वस्थैर्य एव पूर्वपक्षावकाश इति भाष्यादौ न द्योतत इति चेत्—न; वैपरीत्याप्रतीतेस्तस्यैव युक्तियुक्तत्वेन तथाभिप्रायस्यैव कल्प्यत्वात्; श्रीराममिश्रेण तथोक्तत्वाच्च । अत्रास्मदीयैरेव कैश्चिदध्ययनस्य क्रतुविधिप्रयुक्तत्वमुक्तम् । क्रतुविधिप्रयुक्तत्वे शूद्रस्यापि स्यादित्याशङ्क्य सामान्यविषयत्वान्निषेधस्य क्रत्वर्थनिषेधस्यापि शारीरकापशूद्राधिकरणोक्तत्वादित्युक्त्वा "संस्कारपरामर्शात्" इत्यादिसूत्राण्युदाहृत्य "पद्यु वा एतत् श्मशानम्" इत्यादयस्तदधिकरणोक्ताश्चोदाहृताः । "पर्णमयी जुहूर्भवति" इतिवत् पदार्थसंबन्धमुखेन नियोगप्रत्यभिज्ञानं नानुपपन्नम्, अव्यभिचरितक्रतुसंबन्धित्वात् स्वाध्यायस्येति चोक्तम्; तदनुपपन्नम्—"तच्चाध्ययनं किंरूपम्" इत्यादिभाष्ये अध्ययनस्योपनयनाध्यापनपुरस्कारेण स्वरूपस्याभिहितत्वादाचार्यरागप्रयुक्तत्वमेव भाष्यकाराभिप्रेतमिति गम्यमानत्वात्, वैपरीत्याप्रतीतेश्च; अपशूद्राधिकरणे "यथैव हि त्रैवर्णिकविषयाध्ययनविधिसिद्धस्वाध्यायसंपाद्यज्ञानलाभेन कर्मविधयो ज्ञानतदुपायादीनपरान्न स्वीकुर्वन्ति" इत्यादिष्वप्याचार्याधीनताध्ययनस्याभिमतेति द्योत्यते । अतोऽत्र भाट्टप्रक्रियानुसारः । भाट्टैः—'उपनीतैः किं कर्तव्यम्' इत्यपेक्षायां तत्संनिधावनिर्दिष्टकर्तृकत्वेन श्रूयमाणमध्ययनं तत्कर्तृकं भवतीत्युच्यते । अस्मद्भाष्ये तु मुखत एव त्रैवर्णिकविषयतोच्यते । अतः स्वविधिप्रयुक्तता वा क्रतुविधिप्रयुक्तता वा अध्ययनस्य नेष्टा । यच्च क्रतुविधिप्रयुक्तत्वे शूद्राधिकारप्रसक्तिपरिहारः शारीरकापशूद्राधिकरणेनेत्युक्तम्; तच्चासत्, तदधिकरणे शूद्रस्य क्रत्वर्थप्रवृत्तिनिषेधस्यासाधितत्वात् । "पद्यु वा एतत् श्मशानम्" इत्यादीन्यपि न तन्निषेधप्रमाणत्वेनोपन्यस्तानि; किंतु न्यायसिद्धार्थानुग्राहकत्वमात्रेण; यत एवमुक्तं तत्रैव—"न्यायसिद्धः शूद्रस्यानधिकारः श्रुतिभिरनुगृह्यते"

इति । अध्ययनस्य पर्णमयीत्ववत् क्रत्वनुप्रवेशोक्तिरप्यनुपपन्ना, पर्णतावत् क्रत्वङ्गत्वापत्तेः । तथात्वेऽन्यत्र "आधानवत्" इति भाष्यविरोधः । अतः पूर्वोक्तैव रीतिः साध्वी । ननु वेदाख्याक्षरराशिग्रहणमात्रपरताध्ययनविधेरस्तु ; रागतो मीमांसाप्रवृत्तिरप्यस्तु ; ऐकशास्त्र्ये हेतुहेतुमद्भावे च किमायातमिति चेत् ; उच्यते—साङ्गकृत्स्नशाखाध्ययननियमादधीतत्वे तत्र सर्वत्रापातप्रतीतेर्विद्यमानत्वात् पुरुषार्थावबोधित्वाविशेषाच्च तन्निर्णयाय रागतो मीमांसाप्रवृत्तेरविशेषात् तस्या वेदेतिकर्तव्यतात्वाविशेषात् तया निर्णीयमानार्थवेदस्य वेदत्वाविशेषाच्च पूर्वोत्तरयोः शास्त्रैक्यं तावत् सिद्धम् । यद्यपि मीमांसाया इतिकर्तव्यतात्वेन न शास्त्रत्वम् , वेदस्यैव तु शास्त्रत्वम् ; तथापि शास्त्रेतिकर्तव्यतात्वात् शास्त्रव्यवहारो न विरुद्धः । वेदस्य च शास्त्रत्वोपाधिः सर्वत्राविशिष्टः । अवान्तरभेदविवक्षया भेदस्वीकारे प्रतिवाक्यं भिन्नशास्त्रत्वात् तद्विषयाधिकरणानामपि भिन्नशास्त्रता स्यात् । एकोपाधिस्वीकारेण हि सर्वत्राध्यायाद्यैक्यम् ; तदत्रापि समानम् । वृत्तिकारादिभिरैकशास्त्र्यस्याभिहितत्वादैकशास्त्र्यप्रक्रियैव सांप्रदायिकी ; उपपन्ना च सा ।

ननु पूर्वकाण्डोक्तार्थैरुत्तरकाण्डोक्तार्थानां विरोधदर्शनान्नैकशास्त्र्यम् ; तथाहि—तत्र कार्यस्यैव वाक्यार्थत्वमुक्तम् ; उत्तरकाण्डे त्विष्टसाधनस्य; इष्टसाधनत्वं च प्राप्ताप्राप्तविवेकेन ब्रह्मण एवेष्टम् ; ब्रह्म च सर्वनियन्तृत्वादिगुणयोगि जीवातिरिक्तमभिमतम् । तत्तु नेष्टं जैमिनीयानाम् । वेदान्तिनां देवतादीनां विग्रहादिमत्त्वात् कर्माराध्यत्वेन प्राधान्यं कर्मादिष्वधिकारिता चेष्टा; तन्नेष्टमन्येषाम् । जगतो युगपत्सृष्टिप्रलयावुच्येते एकत्र ; अन्यत्र तौ निषिध्येते । आत्मनां सर्वगतत्वमागन्तुकचैतन्यस्वरूपत्वं चोच्यते पूर्वत्र ; उत्तरत्राणुपरिमितत्वं ज्ञातृत्वस्वरूपत्वं चोच्यते । ब्रह्मण एव सर्वकारणत्वमभिमतमेकत्र ; न तदन्यत्र । एकत्र स्वरूपाविर्भावपूर्वकब्रह्मप्राप्तिरेवात्मनो मोक्ष इत्युच्यते ; अन्यत्र बुद्ध्यादिनवगुणोच्छेद इत्याद्यनेको विरोधः । किंच पूर्वकाण्डे शूद्रस्याधिकारनिरासेऽप्युत्तरत्र पुनस्तन्निरासाच्च तयोर्भेदः ; सर्वशाखाप्रत्ययादिन्यायैरेव विद्याभेदादिसिद्धावपि "सर्ववेदान्तप्रत्ययम्" इत्यादौ तन्न्यायानामेव पुनरारम्भाच्च ; ऐक्ये पुनरुक्तिदोषः । सूत्रप्रणेतृभेदश्च । अत एवमादिभिर्न शास्त्रैक्योपपत्तिरिति चेत्—नैवम् ; कार्यवाक्यार्थाभिधानादेर्व्याख्यातृविप्रतिपत्तिमात्रमूलत्वेन पूर्वोत्तरयोर्विरोधाभावात् । न ह्यपूर्ववाक्यार्थप्रतीतिः सूत्रे; प्रत्युत "आम्नायस्य क्रियार्थत्वात्" इत्यादिषु क्रियार्थ-

तैवोक्ताम्नायस्य, नापूर्वार्थता। ननु कृत्स्नाम्नायस्य क्रियापरत्वेन क्रियाप्राधान्ये ब्रह्मप्राधान्यहानिरिति चेत्—न; तदुक्तेरज्ञानां कर्मश्रद्धाजननार्थत्वात्; तथैव देवताप्राधान्यनिराकरणमपि क्रियायाः स्वर्गादिसाधनत्वानुपपत्त्या कार्यपरत्वस्य जैमिनेरनिष्टत्वेऽपि कर्मश्रद्धाजननार्थमेव। अथवा क्रियायाः प्राधान्येऽपि न ब्रह्मणः प्राधान्यहानिः; क्रियायास्तत्समाराधनत्वेन समाराध्यप्राधान्यस्यार्थसिद्धत्वात्। अथवा शिष्येण राद्धान्तैकदेशिमतावलम्बेन क्रियाप्राधान्येऽभिहिते आचार्येण भगवता व्यासेन सम्यग्राद्धान्ताभिधानात् ब्रह्मणो वेदार्थत्वेन प्राधान्यमुक्तमिति न विरुद्धोक्तिमात्राच्छास्त्रभेदः। सम्यग्राद्धान्तत्वं च जैमिनिमतादपि तन्मतस्य युक्तिप्राबल्यात्। ब्रह्मणः प्राधान्योक्तिश्च फलप्रदत्वपरमपुरुषार्थत्वपराधिकरणेषु। तथा जीवातिरिक्तब्रह्मापि जैमिनेर्नाननुमतम्, "परं जैमिनिर्मुख्यत्वात्" इत्यादौ तस्य परत्वाङ्गीकारप्रतीतेः। वेदसिद्धेश्वरनिरासोऽपि वस्तुतो नानुमतस्तन्निष्ठानामपि; यत एवमुक्तम्—"परोक्तमनुमानं निरस्तं नेश्वरः" इति। न च तत्र तदनुमाननिरासे पुनः शास्त्रयोन्यधिकरणे तन्निरासो न युक्त इति वाच्यम्, अत्रैव ब्रह्मणः प्रमाणान्तरासिद्धत्वस्य साध्यत्वेन वक्तव्यत्वात्। अत्रोक्तोपजीवनेन वेदप्रामाण्यसिद्धावप्यर्वाचीनव्याख्यातॄणां तत्र तन्निरासो भिन्नशास्त्रत्वमोहात्। तथा न पूर्वकाण्डे युगपत्सृष्टिप्रलयप्रतिपादकसूत्रोपलब्धिः; तत्परत्वकल्पनायामपि कर्मश्रद्धाजननपरतैव कल्प्या। आत्मनां सर्वगतत्वप्रतिपादनं न सूत्रेषु; अतः सर्वगतत्वाद्यभिधानं व्याख्यातॄणां मोह एव। तथा प्रवाहानादिताक्लृप्तिरपि, जगत्सृष्ट्यादेर्जीवाणुत्वादेश्च साक्षाच्छ्रुतावेवोपलब्धेः। तच्छ्रुतीनामनन्यपरत्वमुत्तरत्र वक्ष्यते। तेषां सूत्रकाराभिप्रायत्वक्लृप्तावपि न सम्यग्राद्धान्त इति पुनस्तावन्मात्रनिरास उत्तरत्र। पूर्वकाण्डे शूद्राधिकारनिरासेऽपि पुनस्तन्निरासः शूद्रेत्यामन्त्र्य विद्योपदेशदर्शनात् विद्यासु तदधिकारित्वशङ्कयेति न दोषः। एवं "सर्ववेदान्तप्रत्ययम्" इत्यादेरपि पुनरुक्तिपरिहारस्तत्रैव प्रदर्शितः। यथा पूर्वकाण्डेऽल्पशङ्कामात्रात् तत्र पुनरुक्तिपरिहारः, तथात्रापीति न कश्चिद्विशेषः। विषयभेदश्च नैक्यबाधकः, आदाविवावान्तरार्थभेदेनापि विषयभेदोपपत्तेः। तावन्मात्रेण शास्त्रभेदे लक्षणानामपि तथात्वापत्तेः। वेदार्थत्वोपाधितः शास्त्रैक्यं चोपपन्नम्। उपदेशातिदेशविषयभेदवदवान्तरभेदश्च। सूत्रकर्तृभेदोऽपि नैक्यबाधकः; यथा मानवस्मृतेर्मनुनोपक्रान्ताया भृगुणा शास्त्रार्थकथनेनोपसंहारेऽपि न तद्भेदः, यथा चोपकोसलविद्याया उपदेष्टृभेदेऽपि न भेदः;

उपकोसलाय हि तदाचार्यो गार्हपत्याद्यग्नयश्च भागशो विद्यामुपदिदिशुरिति छान्दोग्ये श्रूयते। लोकेऽपि वैयाकरणवृत्त्यादौ कर्तृभेदप्रसिद्धावपि शास्त्रैक्यव्यवहारः प्रसिद्धः। किंच "औपसदवत्तदुक्तम्" इत्यादौ पूर्वकाण्डोक्तानां सूत्रकारैरेव स्वोक्तानामिव स्मारितत्वात् तदैक्यं सिद्धम्; अन्यथा पुनरेव तदर्थानां वक्तव्यत्वापातः; श्रुतिलिङ्गवाक्यादयोऽप्यत्र व्युत्पाद्याः। वेदप्रामाण्यमप्यत्र प्रसाध्यम्। फलसंयोगरूपचोदनाश्चात्र वक्तव्याः; किंच "औत्पत्तिकस्तु" इत्यादौ "बादरायणस्यानपेक्षितत्वात्" इति बादरायणोक्तत्वेन स्वीकार्यत्वाभिधानाच्च। यद्यपि यत्र कापिपूर्वोत्तर भागयोः सूत्रेषु परस्परविरोधसंभवः, तथापि न तावता शास्त्रभेदः; उभयोर्युक्तियुक्तस्यैव ग्रहणादैक्योपपत्तेः; यथा "द्रव्यगुणसंस्कारेष्वेव बादरिः" इत्यादेर्मतस्य पूर्वपक्षत्वम्, इतरस्य राद्धान्तत्वम्। नित्यत्वेनानुष्ठीयमानाग्निहोत्रादिकर्मणां ब्रह्मविद्याशेषत्वेनैकफलत्वाच्च न शास्त्रभेदः। साध्यानुबन्धभेदाद्धि शास्त्रभेदः। एकसाध्यावघाताग्नेयादिशास्त्राभेदवदग्निहोत्रादिकर्मब्रह्मविषयशास्त्रयोरैक्यं सिद्धम्। "यज्ञेन दानेन" इत्यादौ यज्ञादीनां तच्छेषतोच्यते। "सर्वापेक्षा च" इत्यादौ तच्चोपपाद्यते। अङ्गत्वे च न फलभेदः। "यच्च शास्त्रं यच्छास्त्रानपेक्षं सत् साध्यं भिनत्ति तत्ततो भिन्नम्" इति हि नीतिविदः। काम्यफलत्वेन श्रुतानामपि कर्मणां विनियोगभेदादन्यशेषत्वं च युक्तम्। प्रकरणान्तरे अग्निहोत्रदर्शपूर्णमासादीनां कर्मान्तरत्ववत् तेषां कर्मान्तरता वास्तु; तद्वत् सादृश्यात् धर्मप्राप्तिरप्यस्तु। ननु नित्यकर्मणां ब्रह्मविद्यैक्येऽपि काम्यकर्मणां साध्यानुबन्धभेदात् शास्त्रभेदान्न ब्रह्मविद्याशास्त्रैक्यमिति चेत्—न; इष्टसाधनत्वस्यैव वाक्यार्थत्वात् ब्रह्मण एव फलदत्वेन सर्वेष्टसाधनत्वाच्छास्त्रैक्यसिद्धेः। न च साध्यभेदाच्छास्त्रभेदस्यावर्जनीयत्वमिति वाच्यम्, साधनधर्मभेदेऽपि तदधिष्ठानस्यैकत्वात्। परमात्मसमाराधनरूपकर्मभेदात् फलभेदसिद्धिश्च। तावतैव शास्त्रभेदव्यवहारोऽप्युपपन्नः; सर्वशास्त्राणां प्राधान्यतः परमात्मपरत्वात् शास्त्रैक्यं चेत्येवमादयः "स्मृत्यनवकाश—" इत्यत्रास्माभिः प्रतिपादिताः। अतः शास्त्रैक्यं सिद्धम्। एवमैक्येऽप्यवान्तरोपाधिभेदात् पूर्वाचार्यैः पादाध्यायादिभेदः कृतः, तद्वत् द्वादशलक्षण्याः कर्मविषयत्वमुपाधिः; अनन्तरचतुर्लक्षण्या देवताविषयत्वम्; तदनन्तरचतुर्लक्षण्या ब्रह्मविषयत्वम्। तत्र चौपदेशिकार्थपरत्वं पूर्वषट्कस्य; अतिदेशविषयत्वमुत्तरषट्कस्य। प्राभा-

करैस्तु—औपदेशिकी प्रतिपत्तिः पूर्वषट्कार्थः, कार्यजा तूत्तरषट्कार्थ इत्युक्तम् । आद्ये स्वाध्यायस्यान्यपरत्वशङ्कानिरासद्वारा मीमांसाया आरम्भणीयत्वं साधितमविशेषेण । तत आद्यं शास्त्रोपोद्घाततत्वेन संगतम् । चोदनासूत्रे शास्त्रमारब्धम् । तत्रैव धर्मस्य साध्यात्मकत्वं वेदैकसमधिगम्यत्वं चोक्तम् । अभिचारादिकर्मणामनर्थत्वेनाधर्मत्वं च शब्दानामर्थासंस्पर्शितानिरासश्च कृतः ; कार्यार्थे व्युत्पत्तिप्रकारश्च । "तस्य निमित्त-परीष्टिः" इत्यध्यायारम्भः । प्रथमलक्षणे वेदप्रामाण्यं निरूपितम् । द्वितीये कर्मो-त्पत्तिविधिभेदः । तृतीये विहितानामङ्गाङ्गिभावः । चतुर्थे क्रत्वर्थपुरुषार्थप्रयुक्तानुष्ठेय-परिमाणम् । पञ्चमे तदनुष्ठानक्रमः । षष्ठे विद्याकाङ्क्षिताधिकारिनिरूपणम् । अत एवं पूर्वषट्के स्वसंनिध्यधीयमानप्रयाजाद्यङ्गवद्दर्शपूर्णमासादिप्रकृतिविध्यपेक्षितकर्म-विचारः कृतः । सप्तमे विकृतीनां विकलाङ्गत्वेनाङ्गाकाङ्क्षावतां सौर्यादीनां प्रकृत्युपदि-ष्टानामङ्गानामतिदेशप्रकारः सामान्येन निरूपितः । अष्टमे प्रकृतावाग्नेयादिषूपदिष्टा-ङ्गानां सौर्यादिविकृतौ द्रव्यादिसामान्यविशेषातिदेशः । नवमे प्रकृत्युपदिष्टमन्त्रसंस्कार-कर्मणां विकृतावतिदिष्टानां विकृतप्रयोगात्मक ऊहो निरूपितः । दशमे विकृतावतिदि-ष्टानामवघातादीनां कृष्णलादौ वैतुष्यादिकार्याभावादनुष्ठानबाधः । एकादशेनैकशे-ष्याग्नेयविकृतिप्रयुक्तप्रयाजाद्यनुष्ठानतन्त्रत्वम् । द्वादशे पश्वादिविधिप्रयुक्तप्रयाजादेः पशुपुरोडाशादिषूपकारप्रकारप्रसङ्गः । एवं विकृतिगतविचार उत्तरषट्के कृतः । देवताकाण्डस्त्वस्माभिरदृष्टचरः ; अतस्तत्प्रक्रिया मृग्या* । ब्रह्मकाण्डे चावान्तरार्थभेदात् द्विकभेदः कृतः । तत्र प्रथमद्विकस्योपेयविषयत्वमुपाधिः । द्वितीयस्योपायविषयत्वम् । तत्र प्रथमे लक्षणे ब्रह्मकारणत्वं निरूप्यते । द्वितीये तद्दार्ढ्यमापाद्यते । तृतीये ब्रह्म-प्राप्त्युपायचिन्ता । चतुर्थे ब्रह्मानुभवात्मकफलं निरूपितम् । एवं वेदार्थविषयत्वा-कारेण शास्त्रैक्यम्, अवान्तरोपाधिभेदात् भेद इति सुस्थम् । पूर्वोत्तरयोर्हेतुहेतुमत्ता तु केवलकर्मणां निरूपितत्वात् तत्फलानामल्पत्वेनास्थिरत्वेन च ज्ञातत्वाद्वेदैकदेशोपनि-षत्सु च श्रूयमाणब्रह्मानुभवरूपानन्तस्थिरफलस्यापातप्रतीतेर्विद्यमानत्वात् तत्कर्मज्ञानस्य विरक्तिहेतुतया ब्रह्मविचारप्रवृत्त्युपयोगित्वात् सिद्धा । विद्यातः कर्मणां प्रथममधीतत्वात्

* "स्वरूपमादौ तद्भेदस्तदुपासनपूर्वकम् ।
फलं च देवताकाण्डे देवतानां तु कथ्यते ॥"
इति देवताकाण्डार्थसंग्रहो नयमयूखमालिकायामुदाहृतः ।

केवलकर्माधिकार्यर्थत्वेन निरूपणीयत्वाच्च मीमांसायाः सर्वत्र रागतः प्रवृत्त्यविशेषेऽपि प्रथममेव निरूपणीयत्वं सिद्धम् । प्रथममधीतार्थनिर्णये हि प्रथमं बुद्ध्यवरोहः । यज्ञानामृणापाकरणायावश्यकर्तव्यत्वेन च प्रथमं निरूपणीयता । ब्रह्मज्ञानस्य तु नावश्यकर्तव्यता ; मुमुक्षोरेव हि तत्कर्तव्यता ; मुमुक्षोश्च कस्यचिदेव ।

**तत्त्वटीका**

यद्यप्येवमक्षरग्रहणावधि शास्त्रान्तरावसरो निरुद्धः, तथापि गृहीताक्षरस्यासौ स्यादिति शङ्कायामुत्तरत्रापि तन्निरोधार्थमध्ययनस्य नियोगविषयत्वपक्षप्रतिक्षेपेण प्राक् सूचितं स्वाध्यायसंस्कारत्वं व्यनक्ति—**अध्ययनमिति** । चः शङ्कानिवृत्त्यर्थः; यद्वा भिन्नक्रमः, असकृदनूच्चारणत्वादिना सह संस्काररूपत्वस्य समुच्चयार्थः । "संस्कारः पुंस एवेष्टो मन्त्रणप्रोक्षणादिभिः" इति वदद्भिरध्ययनसंस्कारोऽपि कर्तुरेवेति स्वीकृतम् ; तेन विवक्षितासिद्धिरिति शङ्कां निवर्तयितुमाह—**स्वाध्याय** इति । उक्तं च बृहट्टीकायाम्—

"संस्कारगणनायां च युक्तैवाक्षरसंस्क्रिया ।
स्वाध्यायो हि स्फुटं कर्म साक्षात्संस्क्रियते हि सः ॥"

इति ।

पुरुषातिशयाधानं प्रोक्षणाद्यैश्च ये विदुः ।
तेऽपि संस्कारकर्मत्वं तत्र तत्र न तत्यजुः ॥ २५८ ॥
तत्कर्मकक्रियाजन्यः संस्कारः पुरुषाश्रयः ।
तत्तत्सहकृतं कार्यं करोतीत्यवधारणात् ॥ २५९ ॥

अत्राध्ययनस्य स्वाध्यायसंस्कारत्वे कर्मत्वं हेतुरिति न वैयधिकरण्यम् । अयं भावः—अत्र हि तव्यप्रत्ययस्यार्थान्तरं न घटते ; ततश्च द्वितीयाश्रुतेस्तव्यादेर्वा कर्मार्थत्वे विशेषाभावात्कारकाणां क्रियार्थत्वेऽपि द्रव्यनिष्ठस्य भावार्थस्य द्रव्यार्थत्वादवहन्त्यादिनयोऽत्र युक्त इति । सिद्धं चावहन्त्यादेस्तत्तद्द्रव्यसंस्कारत्वं भेदलक्षणे "तानि द्वैधं गुणप्रधानभूतानि" इति । **स्वाध्यायस्येत्यनेन** निर्वर्त्यत्वाद्यनुपपत्तिः सूचिता ; न खल्वसौ निर्वर्त्यः, अनादिसिद्धक्रमत्वात् ; यथापूर्वोच्चारणे वाक्यनिर्माणव्यवहाराभावाच्च ; नापि विकार्यः, दुग्धदध्यादिवदन्यथाभावादृष्टेः ; नापि प्राप्यत्वमात्ररूपः, उपयोगान्तरवत्त्वे तदयोगात् ; अतः परिशेषसहकृतकर्मत्वावगतिः संस्कार्यत्वे हेतुरिति ।

ननु कर्मत्वावगमेऽपि श्रुत्यादिभिरविनियुक्तस्याद्रव्यस्य स्वाध्यायस्य कथं संस्कार्यत्वमित्यत्राह—**संस्कार इति**। हिः प्रसिद्धौ। **नाम**शब्दः परसंमतिपर्यन्ते तत्प्रकर्षे ; स्वाध्यायसंभावितभाव्युपयोगिसंस्काराभिप्रायेणात्र कार्यान्तरयोग्यताकरणोक्तिः। यद्वा 'कस्यचित्सतोऽतिशयाधानं संस्कारः' इति लक्षणमत्र विवक्षितम्। ततश्च भूतोपयोगिन्यपि तदनुगुणोपयोगविवक्षया कार्यान्तरयोग्यताशब्दः कथंचिद्योज्यः। प्रहृता अपि परिधयस्तेनैव रूपेण भूतोपकाररूपकार्यान्तरयोग्याः श्रूयन्ते। अयं भावः—न तावदविनियुक्तत्वादसंस्कार्यत्वम् ; विनियोगाभावेऽप्युपयोगदृष्ट्यैव संस्कार्यत्वसंभवात्। अस्ति च "ऋग्वेदेन होता करोति" इत्यादिभिः सामान्यतो विशेषतश्च विनियोगः। नाप्यद्रव्यत्वादसंस्कार्यत्वम्, यथोक्ताध्ययनगृहीतत्वे विरोधाभावात् ; ग्रहणविषयत्वादेश्च गुणादावपि सर्वसंमतेः। चोदितक्रियासाध्यस्येश्वरानुग्रहरूपस्यातिशयस्य स्वाध्यायाधारत्वाभावेऽप्यध्ययनप्राप्ततया आराध्यबुद्धिसंगृहीतेन तेनैव यथार्होत्तरक्रियायाः शास्त्रतो नियमान्नातिप्रसङ्गः। व्रीह्यादिष्वपि प्रोक्षणादिभिरतीन्द्रियातिशयो भवतु वा मा वा ; उक्तन्यायः सार्वत्रिक इति। ननु "सक्तून् जुहोति" "सुवर्णं भार्यम्" इत्यादिषु निर्वर्त्यत्वादिरहितकर्मत्वावगमेऽपि भावार्थस्य न द्रव्यार्थता ; तथा "स्वाध्यायोऽध्येतव्यः" "स्वाध्यायमधीयीत" इत्यादिजपविधावपि कर्मत्वावगतिरविशिष्टा ; अतस्तत्रानैकान्त्यम् ; तत्रापि वा संस्कार्यत्वप्रसङ्ग इत्यत्राह—**संस्कार्यत्वमिति**। अयं भावः—सक्त्वादीनां भूतभाव्युपयोगासंभवात् जपादेश्च गृहीताक्षरविषयत्वावश्यंभावादनेकसंस्कारकल्पनौ गौरवाज्जपादिसंस्कारसाध्योपयोगान्तरादर्शनात् फलश्रवणाच्च तत्र संस्कारपरित्यागः ; न त्विह तथा स्यात्, तथाप्यवगतकर्मत्वस्य निर्बाधत्वादिति। अत्रैव न्यायसुदर्शनम्—

"आद्याध्ययनमिच्छामः संस्कारं कर्मतामितेः।
स्वाध्यायस्योपयोगित्वात्फलाश्रवणतोऽपि च॥
जपादेरपि संस्कारकर्मतेष्येत चेत्तदा।
आद्यं तु सर्वस्वाध्यायानुपयोगादसंस्कृतिः॥
सर्वत्र कर्मताबाधः स्वाध्यायस्य प्रसज्यते।
तेन संस्कार आद्यं स्यादपरे त्वर्थकर्मणि॥
आर्थवादिकमेवात्र फलं स्याद्रात्रिसत्रवत्॥

अत्रानीप्सितकर्मत्वं स्वाध्यायस्येष्यते बुधैः ।
आद्ये त्वीप्सितकर्मत्वं तदर्था च क्रिया मता ॥

जपादेरपि संस्कारकर्मत्वे सर्वसंस्कारसंस्कार्यस्य स्वाध्यायस्यार्थावबोध एव भाव्युपयोगः स्यात् । तस्य चानधिकृतकर्मभागे द्रुमादिषु च वैयर्थ्यात्सर्वाण्यध्ययनान्यर्थकर्माणि स्युः ; तदा स्वाध्यायस्य कर्मताभङ्गः स्यात् ; तस्मादाद्याध्ययनमेकमेव संस्कारः । ” इति । नन्वत्राप्युपयोगादर्शनादयुक्तिः सिद्धा, संस्कार्यत्वादेवोपयोगक्लृप्तावन्योन्याश्रयणात् ; आहुश्च—“ संस्कारविधिश्च न संस्कार्यं विनियुङ्क्ते ; प्रमाणान्तरावसितोपयोगस्य संस्कारपर्यवसायी तु संस्कारविधिर्न संस्कार्यस्य कार्यं कल्पयति ” इति ; तत्राह—**धर्मार्थ इति** । उपयोगादर्शनाद्धि सक्त्वादौ कर्मश्रुतिबाधः; स्वाध्यायस्य तु भाविदृष्टादृष्टविविधप्रयोजनदर्शनात्सक्त्वादिवन्नासंस्कार्यत्वं युक्तमिति भावः । अत्र पुरुषार्थचतुष्टयस्य वेदवेद्यत्ववचनं सर्वभागानुवृत्तप्रयोजनसामान्यदर्शनेन कृत्स्नस्य मीमांसितव्यत्वख्यापनार्थम् ; बाह्यागमोक्तानां तेषामश्रद्धेयत्वार्थं च ; अर्थकामतदुपायानां केषांचिल्लोकसिद्धत्वेऽपि त्रैलोक्यविभवादिरूपयोरर्थकामयोस्तत्साधनानां च वेदवेद्यत्वं युक्तम् । लौकिकार्थकामयोरपि कारीर्यादिषूपायेषु शास्त्रव्यापारः सिद्धः ; धर्मस्तु द्रव्याद्यात्मना प्रत्यक्षोऽपि धृतिसाधनत्वेन शास्त्रग्राह्यः । यथाहुः—

“ श्रेयःसाधनता ह्येषां नित्यं वेदात् प्रतीयते ।
ताद्रूप्येण च धर्मत्वं तस्मान्नेन्द्रियगोचरः ॥ ”

इति । मोक्षश्च नास्मदादिप्रत्यक्षः ; आत्मा कदाचित्समस्तविशेषगुणशून्यः, अनित्यविशेषगुणवत्त्वात् घटवत् इत्यादीनां तु विपक्षे बाधकाभावान्नानुमानत्वम् ; मुक्तिपरशास्त्रोपजीवनेन विपक्षे बाधकोक्तौ चानुमाननैष्फल्यम् ; निरतिशयानन्दब्रह्मानुभवात्मनि तु मोक्षे हेतुप्रवृत्तेर्न प्रसङ्गः ; तद्विपरीतसाधने त्वागमबाधः ; अपि च जीवः कदाचित्समस्तविशेषगुणशून्यो न भवति, आत्मत्वात् ईश्वरवत् इत्यपि वक्तुं शक्यम् । अत्रार्थस्येव धर्मस्यापि समीहितसाधनतया पुमर्थस्य सतो धर्मविशेषः साधनम् ; अतः सोऽपि तत्साधनशब्दोक्तः । मन्त्रार्थवादयोरपि यथार्हं चतुर्वर्गबोधकत्वं तद्बोधकोपकारकत्वं च ग्राह्यम् ।

श्येनेषु वज्रप्रभृतिष्वपि नानर्थचोदना ।
इष्टस्यारातिभङ्गादेरुपायांशोपदेशतः ॥ २६० ॥

घोरोपायान्तरेभ्यश्च लभ्येतात्र निवारणम् ।
[1]लघुनिष्कृतिनिस्तार्यं ह्यभिचारं प्रचक्षते ॥ २६१ ॥
किंचानभिचरन् षट्सु पतेदित्यपि शिष्यते ।
तेन धर्मोपयुक्तत्वमाततायिवधे विदुः ॥ २६२ ॥

नन्वलौकिकपुरुषार्थादिबोधकत्वं स्मृत्यादावप्यस्ति; अतोऽन्यसाध्ये प्रयोजने किं वेदस्य संस्कारेण? अर्थबोधश्च हुमादौ नास्ति; पुरुषभेदेनानधिगताचिकीर्षितभागयोश्च सन्नप्यसावनुष्ठानपर्यन्तत्वाभावान्नोपयोगी स्यात्; तदिह स्वाध्यायस्यान्यलभ्योपयोगत्वादध्ययनस्य कृत्स्नस्वाध्यायसंस्कारत्वायोगादेकदेशसंस्कारस्याशाब्दत्वाच्च "अध्येतव्यः" इत्यस्य संस्कारविधित्वाभावे नियोगार्थत्वपक्ष एव प्राप्त इत्यत आह—**जपादिनेति**; आदिशब्देन धारणं गृह्यते। **स्वरूपेणापि**; न केवलमर्थज्ञानद्वारेणेत्यर्थः। यद्वा अध्यापनमादिशब्दग्राह्यम्; तदा **स्वरूपेणापि**, धृतस्वरूपमात्रेण चेति यावत्, "ऋग्वेदं धारयन्विप्रः" इत्यादिस्मृतेः। अयं भावः—अध्ययनगृहीतस्वाध्यायसाध्यमेव ज्ञानं विधिभिरुपजीव्यम्; उपबृंहणानां तु न स्वातन्त्र्येण धर्मादिसाधनत्वम्। अस्ति च श्रुतिः—

"वेदाभ्यासेन सततं सत्येन तपसैव च ।
अद्रोहेण च भूतानां जातिं स्मरति पौर्विकीम् ॥"

इत्यादिप्रसिद्धमनन्यसाध्यं जपादि प्रयोजनम्। तेनैवानर्थकानधिकृताचिकीर्षितभागेष्वपि संस्कार्यत्वोपपत्तिः। जपविधिश्च निरर्थकोच्चारणविषयोऽपि स्वाध्यायस्यार्थपरतां न बाधते, सर्वविधिबाधेन स्वव्याघातप्रसक्तेरिति। न चोभयार्थत्वे विनियुक्तविनियोगविरोधः, एकेनैव रूपेणानेकार्थत्वाभावात्। तथाच न्यायसुदर्शनम्—

"स्वरूपेण जपाद्यर्थः स्वशक्त्यार्थावबोधकः ।
रूपभेदाद्विरोधो न यथाग्नेर्दाहभासयोः ॥"

इति। तदिहाध्ययनसंस्कृताद्वेदादनन्तप्रयोजनसंभवे तद्विचारमन्तरेणान्यत्र शास्त्राभ्यासे कः प्रयस्येदिति तात्पर्यम्।

नन्वेवं विदितोपयोगेनाध्येत्रा अर्थज्ञानमपि विधिफलतया स्वीकार्यम्; अविदितो-

१. "अभिचारमहीनं च त्रिभिः कृच्छ्रैर्व्यपोहति" इति मनुना अभिचारे कृच्छ्रत्रयरूपा लघुर्निष्कृतिर्विहिता।

प्रयोगेन त्वक्षरग्रहणमपि न फलत्वेन प्रतिपत्तुं शक्यम्; अतोऽनुष्ठानं प्रत्यव्यवहितोपयुक्तमर्थज्ञानमपि ग्रहणवदध्ययनविधेर्दृष्टं फलमस्त्विति शङ्कां प्रस्तुतोपसंहारव्याजेन प्रतिक्षिपति—**एवमिति**; विधेयस्वरूपफलादिनिरूपणप्रकारेणेत्यर्थः। मन्त्रवत्त्वं नियमवत्त्वं चानूच्चारणस्थं तत्फले गृहीतावुपचरितम्। **मन्त्राः** काण्डव्रताद्यङ्गभूताः, अध्ययनदशाजप्याश्च "शंनो मित्रः" इत्याद्याः। **नियमाः** प्रागुक्ताः। "**मन्त्रवत्**" इत्येतत् दृष्टान्तोक्तिरित्येके—यथा मन्त्रे चोद्यमानमध्ययनमक्षरग्रहणमात्रपर्यवसायीति स्वीक्रियते तथेहापीति। अपरे तु—यथोपनयनदशोच्चारणीयेषूपनीतमात्रस्य समिदाधानादिमन्त्रेषु च, तथेहापीति वेदितव्यमिति। हुमादिवदित्यन्ये, विषहरणादिमन्त्रविशेषवदिति च। मात्रचा पर्यवसानशब्देन चाक्षरग्रहणात्पश्चात्पूर्वं च विधिविश्रान्तिर्निषिध्यते[1]। अयं भावः—अध्ययनशब्दस्य न तावदर्थज्ञानवाचकत्वम्, अव्युत्पत्तेः; "किंचिदधीत्य ब्राह्मणः" इत्यादौ तस्यार्थपरत्वासंभवाच्च। विधिविषयमध्ययनं प्रत्यव्यवहितसाध्यमभिव्याप्तमवर्जनीयं च फलं दृश्यते; तदन्यस्यापि तत्फलत्वक्लृप्तौ गौरवं स्यात्; व्यवहितसाध्यस्यापि फलत्वक्लृप्तौ ज्ञानवत्तत्साध्यस्यानुष्ठानस्यापि तत्क्लृप्तिप्रसङ्गः; उत्तरविध्यव्यवहितापेक्षितत्वमपि ग्रहणज्ञानयोः समम्। यदि चार्थज्ञानं कर्मविषयतयाम्नातं, तदा त्वव्यापिनि व्यवहितेऽपि तस्मिन् संप्रत्ययः स्यात्; न त्वेतदस्ति। अतोऽर्थधिय उपयोगितयैव स्वीकार्या इति। ननु समन्वयाधिकरणन्यायादर्थज्ञानस्यैव स्वतः प्रयोजनतया फलत्वक्लृप्तिर्युक्ता; मैवम्; निरतिशयानन्दब्रह्मप्रतिपादकभागमात्रे तदुक्तेः; अत्र तु कृत्स्नाध्ययनफलविमर्शात् विरूपक्लृप्त्ययोगाच्च। ननु 'वृद्धवाक्यानि शृणु' इत्यादौ वाक्यश्रवणविधेरर्थधीपर्यन्तत्वं लोकदृष्टमिति चेत्—न; वृक्षादिवन्मार्गलक्षणभूतस्य कस्यचिद्वाक्यस्य श्रोतव्यत्वोपदेशे तात्पर्यात्तदभावस्यापि दृष्टेः। किंच क्वचिद्वाक्यश्रवणोपदेशस्यार्थपरत्वमगत्या; इह तु न तथा, यथाश्रुते बाधाभावात्। न च वाक्यश्रवणवत्तदनूच्चारणमर्थज्ञानार्थं युक्तम्। आहत्य स्वयंप्रयोगानुगुणाक्षरग्रहणार्थतैव लोके दृष्टा। ननु "यो ह वा अविदितार्षेयच्छन्दोदैवतेन मन्त्रेण" इत्यादिश्रुतिभिः "अविदित्वा ऋषिं छन्दः" "यदधीतमविज्ञातम्" इत्यादिभिः स्मृतिभिश्च विपर्यये दोषोक्त्या अर्थज्ञानमवश्यसंपाद्यत्वेन

---

१. **अनेनात्र "प्रमाणे द्वयसज्" इत्यादिना मात्रजिति गम्यते। तदुपपत्तिस्तु २२७ पुटे टिप्पण्यां द्रष्टव्या।**

स्थापितम्; तदभावेऽध्ययनस्य नैष्फल्यं तत्सद्भावे सर्वपुरुषार्थावाप्तिश्चोच्यते—

"स्थाणुरयं भारहारः किलाभूदधीत्य वेदं न विजानाति योऽर्थम्।
योऽर्थज्ञ इत्सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मा ॥"

इति; तस्माद्विधेयो वेदार्थविचारः; मैवम्—यथा रागप्राप्तस्य ऋतुगमनादेरकरणे दोषो विधिवत्करणे संतत्यादिलाभश्च फलत्वेन स्मर्यते, एवमिहापि स्यात्। विधिवत्समाप्ताध्ययनानुवादेन चार्थज्ञानाभावे दोषं वदन्ति वाक्यानि नार्थधीपर्यन्तमध्ययनं विधातुं क्षमन्ते। "तस्मादेतानि मन्त्रे मन्त्रे विद्यात्" इत्येतत्तु प्रयोगकाले प्रतिमन्त्रं प्रज्ञातऋष्याद्यनुस्मरणपरम्। अत एव अविदितार्षेयत्वादिनिषेधश्च तावन्मात्रविषयः। अतः "यदधीतम्" "स्थाणुरयम्" "यश्च मीमांसतेऽध्वरम्" इत्यादिभिरर्थज्ञानप्रशंसया स्वतः प्रवृत्तिरुत्तभ्यते। एतैश्चार्थज्ञानस्यावश्यापेक्षितत्वेन विधावपि नाध्ययनविधेस्तत्पर्यन्तत्वं कल्प्यम्, नैरपेक्ष्यात्; अन्यतः प्राप्ते विधेरौदासीन्याच्च, तावत्पर्यन्तधावनेऽपि स्वतः पुरुषार्थापर्यवसानाच्च। यत्तु कैश्चित् प्रत्यवस्थीयते—अध्ययनविधेरर्थज्ञानपर्यन्तत्वात् "आचार्यकुलाद्वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेणाभिसमावृत्त्य कुटुम्बे शुचौ देशे स्वाध्यायमधीयानो धार्मिकान्विदधत्" इत्यादिश्रुतिभिः "अधीत्य स्नायात्" इत्यादिस्मृतिभिश्चात्मरूपार्थज्ञानस्यापि कर्मार्थितया तत्कर्तृसंस्कारत्वेन विनियोगात् "द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" "सोऽन्वेष्टव्यः स विजिज्ञासितव्यः" इति जिज्ञास्यतयोक्तस्यात्मनोऽवहन्तव्यव्रीहिवत् स्वरसावगतसंस्कार्यत्वाबाधेन कर्मशेषत्वसिद्ध्या "तत्त्वमसि" "अयमात्मा ब्रह्म" इत्यादिभिः कर्मवश्यस्यैव ब्रह्मत्वोक्तेः विश्वकर्तृत्वस्य च कर्मद्वारोपपत्तेः क्लृप्तकल्प्यविरोधे क्लृप्तगृहीतेर्न्याय्यत्वाज्जीवस्य कर्मसु कर्तृतया प्राप्तस्य तदर्थसंस्कारार्हत्वाच्च जीवपरे वेदान्ते सति तदतिरिक्तेश्वरविषयशास्त्रासंभवात्कस्यैकशास्त्र्यं क्रमश्च कल्प्यत इति—तदप्यक्षरग्रहणमात्रपर्यवसानभाषणात्प्रत्युक्तम्। सूत्रकारोऽप्येतदेव चोद्यं "तद्वतो विधानात्" इत्यनूद्य "अध्ययनमात्रवतः" इति परिहरिष्यति। अध्ययनविधेरर्थज्ञानपर्यन्तत्वेऽपि "अधीत्य", "अभिसमावृत्य" इत्यादिभिर्नार्थज्ञानस्य कर्मशेषत्वेन विनियोगः; क्त्वाश्रुतेः समानकर्तृत्वादिमात्रे विश्रमात्। तथा विनियोगेऽपि कर्मानुष्ठानोपयुक्तार्थज्ञानादन्यदेवोपासनात्मकं ज्ञानं वेदान्तवाक्यैर्विधित्सितम्; उपास्यश्चात्मा जीवातिरिक्तः श्रुत्यैव सिद्धः, न

तु कल्यः ; जीवब्रह्मसामानाधिकरण्यं चाचिद्ब्रह्मसामानाधिकरण्यवदैक्यविरोधादन्यार्थम् । तिष्ठतु च तथाविधज्ञानं, तथापि न विरोधः ; कर्तुरिवाराध्यस्यापि कर्मार्थित्वेन विचार्यत्वात् तस्य च कर्मवश्यादन्यत्वेन श्रुतिसिद्धत्वात् तद्विचारार्थकाण्डान्तरादिसिद्धेः । यद्यप्यत्राप्यर्थज्ञानस्यानुष्ठानशेषत्वेऽपि यथांशं परब्रह्मोपासनशेषत्वमपि स्यादित्युत्तरं प्राप्तं, तथाप्यर्थज्ञानपर्यन्ततामूले चोद्ये प्रथमपर्वस्थोद्भटापराधोपेक्षायोगादन्वारुह्यवादमनादृत्य मूलच्छेद एवात्र कर्तव्य इत्यभिप्रायेण सूत्रभाष्ययोर्मात्रशब्दः । ननु—अध्ययनविधावक्षरग्रहणपर्यवसितेऽन्यार्थतयैवाधीतस्य स्वाध्यायस्य प्रतीतोऽप्यर्थस्तात्पर्यविषयत्वायोगादविचार्यः ; ततो निरर्थको वेदः ; अध्ययनविधिश्च न पुरुषार्थपर्यन्तः ; निर्विषयतया "अधीत्य स्नायात्" इति स्मृतिनिरुद्धावसरतया च मीमांसापि नारभ्येत ; कुतस्तदैक्यादि स्यात् ? इति शङ्कामपनुदन् एकविषयतया वेदाख्यैकव्याख्येयव्याख्यानात्मकशास्त्रैक्यमपि दर्शयन् मीमांसारम्भसूत्रार्थं च सूचयति—**अध्ययनेति** । अत्र स्वाध्यायनिर्णयविचाररूपाधीतवेदशब्दैर्मीमांसाया विषयफलस्वरूपाधिकार्यैक्यव्यञ्जनम् । **गृहीतस्येत्य**नेन विधिव्यापारस्य विश्रमोक्तिः । प्रयोजनवदर्थदर्शनोक्तिस्तु पुरुषार्थपर्यवसानज्ञापनार्था । **स्वभावत एव** ; विधिव्यापारमनपेक्ष्येत्यर्थः ; 'व्युत्पन्नपदपदार्थादेः' इति शेषः । अयं भावः—

ग्रहणार्थमुपात्तोऽपि स्वाध्यायो वह्निवत् स्वयम् ।
प्रकाशयति यत्तत्र स्वतो मानमबाधतः ॥ २६३ ॥

जपादध्ययनं श्रौततत्तत्फलसमन्वितम् ।
न रुन्द्धे शब्दसामर्थ्यं ग्रहणार्थं तु किं पुनः ॥ २६४ ॥

विनियोगविशेषेण वेदेऽर्थपरतां क्षिपन् ।
विनियोगार्थधीबाधात् स्वव्याघातेन बाधितः ॥ २६५ ॥

विवक्षितार्थैव न वा स्यादध्ययनचोदना ।
आद्ये व्याहतिरन्त्ये तु पूर्वपक्षस्य नोत्थितिः ॥ २६६ ॥

अर्थज्ञानफलत्वेन मानत्वं चात्र दुर्भणम् ।
तत्फलत्वे हि तन्मानं तन्मानत्वे च तत्त्विति ॥ २६७ ॥

स्वीकरोत्यर्थपरतां नियोगार्थोऽपि चेद्विधिः ।
संस्कारार्थोऽपि तद्वत्स्यात् स्वसिद्ध्यौत्सुक्यसामवत् ॥ २६८ ॥

वेदः ; निरपेक्षवेदकः, न तु पुंवाक्यवन्मूलभूतमानान्तरमपेक्ष्येत्यर्थः । अत एव न मूलदोषविचारशङ्कया विचारस्तम्भनमिति भावः । प्रयोजनमत्र चतुर्वर्गः । तद्वन्तोऽर्थास्तदुपायाः कर्मोपासनारूपाः । अवबोधित्वमिह निर्णयजननानुगुणत्वं दृष्टं दुरपह्नवम् । "न च दृष्टेऽनुपपन्नं नाम" इत्यभिप्रायेण दर्शनादित्युक्तम् । स्वत एव बोधकत्वेऽपि साध्याभावान्न मीमांस्यमित्यत्राह—**गृहीतादिति** । 'अर्थानापाततोऽवगम्यमानान् दृष्ट्वा' इति तत्कालविशेषणतयान्वयः । आपातधीरेव दृष्टा ; अतः संशयादिनिरासः साध्य इत्याशयः । पूर्वः प्रयोजनवदर्थशब्दः काकदन्तोक्तिव्यावृत्त्या श्रुतिप्रामाण्यार्थः । उत्तरस्त्वापातधियः स्वविषयविचाररागजननेन प्रेरकत्वज्ञापकः ।

प्रतीतमप्रतीतं वा न मीमांस्येत किंचन ।
इति चोद्यमपि क्षिप्तमापातज्ञाततोक्तितः ॥ २६९ ॥

ननु यदि शब्दस्वभावादापातधीः, तर्ह्यव्युत्पन्नानामपि स्यात् ; न चात्र व्युत्पत्तिमतामेव तद्विधिरस्ति ; अङ्गेष्वप्यङ्गिवदक्षरग्रहणान्ते विधौ तदसंभवात्, विध्यैकरूप्ये चाङ्गाध्ययनस्यार्थज्ञानपर्यन्तत्वे विशेषहेत्वभावात् । अत्र ब्रूमः—

यस्य संस्कृतभाषैव बाल्यात्प्रभृति शीलिता ।
तदा तु तस्य सा तत्र स्यादापातमतिः स्वयम् ॥ २७० ॥
निरङ्गाध्ययनेऽप्येवं साङ्गाधीतौ तु किं पुनः ।
वेदार्थापातधीवृद्धिमङ्गार्थापातधीर्दिशेत् ॥ २७१ ॥
हितैषिवाक्यजातां च केचिदापातसंविदम् ।
प्राप्नुवन्तो विचारे हि प्रवर्तन्ते मनीषिणः ॥ २७२ ॥
केचित्त्वङ्गद्युपकारार्हरूपेणाङ्गाक्षरग्रहे ।
सार्थज्ञानत्वमाचख्युर्दृष्टार्थत्वं तु लब्धिति ॥ २७३ ॥

अस्त्वेवमापातधीः ; तदतिरिक्तमपि ज्ञानं विद्यास्थानान्तरैरेव साध्यतामित्यत्रोक्तम्—**तत्स्वरूपेत्यादि** । पूर्वपक्षोक्ताद्यावृत्तरूपावधारणमिहान्यैरसाध्यं फलमिति

भावः । **वेदवाक्यविचाररूपेत्यनेन** विद्यास्थानान्तरव्यावृत्तमीमांसाशरीरव्यञ्जनम् । मीमांसाया विचाररूपत्वोक्तिस्तदभेदोपचारात्, विचारशब्दस्य करणव्युत्पत्त्या वा । विधिविषये कृत्यशेषं नास्तीत्यभिप्रायेणाधीतवेदत्वोक्तिः, आपातधीमत्त्वादिति हेत्वभिप्राया च । **पुरुष** इति हेतुगर्भं, प्रयोजनार्थित्वादिति । **स्वयमेव**; विधिनिरपेक्षस्वेच्छयेत्यर्थः ।

आपातस्वोपयुक्तार्थे भाते तन्निर्णयार्थिनः ।
तदुपाये प्रवृत्तस्य विधानं ह्यनपेक्षितम् ॥ २७४ ॥
स्वेष्टनिश्चयहेतुत्वमन्वयव्यतिरेकतः ।
सिद्धमेव विचारस्य तत्रापि ह्यफलो विधिः ॥ २७५ ॥
संप्रेक्ष्य निधिरत्नादींस्तद्यथार्थनिरूपणे ।
अपरप्रेरिता एव प्रवर्तन्ते तदर्थिनः ॥ २७६ ॥
अतो न विधिसिद्धोऽत्र विचारस्तत्क्रमोऽपि वा ।
अन्यथा दोषदृष्ट्यैव द्वितीयस्योपपत्तितः ॥ २७७ ॥

स्वयं प्रवृत्तावप्याचार्यनैरपेक्ष्यव्युदासाय श्रवणतदाश्रयणे प्रवृत्तिः । अकरणे तर्हि दोषः स्यात्; तन्न, तदधीननिश्चयतत्सापेक्षहितप्रवृत्त्यादीनामभावस्यैव दोषत्वात् । तदभिप्रायेण ह्येतदप्युच्यते—

"अधीत्य वेदान् साङ्गांस्तु यो विचारमुपेक्षते ।
स्वप्रयासं च विस्मृत्य प्रभ्रष्टः स्यात्प्रयोजनात् ॥"

इति । नन्वेवं विचारस्यावैधत्वे "अधीत्य स्नायात्" इत्यादिविधिनिरुद्धावसरः कथं मीमांसताम्; दुःखात्मकगुरुकुलवासान्निवृत्तेः स्वतः प्राप्तत्वादानन्तर्यमेव ह्यत्र विधेयम् । मैवम्; सनियमकसमावृत्तियुक्तस्नानरूपसंस्कार एव ह्यत्र विधीयते; अन्यथा निवृत्त्यानन्तर्यस्यापि स्वतः प्राप्तत्वादविधेयत्वं स्यात् । किंच विचारस्य वैधत्वेऽपि कथमवसरः? श्रुत्या स्मृतेर्बाधादिति चेत्—न; श्रुतावपि "अधीत्य" "अभिसमावृत्य" इत्युक्तेः । तत्र समानकर्तृकत्वपूर्वकालत्वमात्रपरतयानन्तर्ये तात्पर्यं नास्तीति चेत्, स्मृतावपि किं न तथा स्यात्? न च श्रुतावध्ययनशब्दोऽर्थज्ञानपर्यन्तः, स एव स्मृतावक्षरग्रहणपर्यन्त इति नियन्तुं शक्यम् । "यदधीतम्"

इत्यादिवत् स्यादिति चेत्—न, विरोधाविरोधाभ्यां विशेषात् । अस्तु तर्हि श्रुतिस्मृत्योर्द्वयोरप्यर्थज्ञानपर्यन्ताध्ययनानुवादः, तथा सति स्नानविधिर्वैधस्य विचारस्यावसरं न विरुन्ध्यादिति चेत्; तर्हि रागप्राप्तस्यापि स्वोपयुक्तद्रव्यार्जनादेरिव श्रवणस्यावसरं न विरुन्ध्यादेव ।

ज्ञात्वानुष्ठानमिच्छन्तः स्नानादिविधयः स्वतः ।
प्राचीमेव स्वविषयां मीमांसां परिगृह्णते ॥ २७८ ॥
किंचात्र मानभेदाङ्गक्रमकर्त्राद्यवेदिनः ।
न स्नानविधिमप्येकं यथावद्वेदितुं क्षमाः ॥ २७९ ॥
अगत्याध्ययनादौ प्रागविचार्य प्रवर्तते ।
स्नाने तु गतिसद्भावान्न स्यादगतिका गतिः ॥ २८० ॥
अनुज्ञातं च सर्वत्र न स्वाङ्गं व्यवधायकम् ।
अतो मीमांसया नात्र व्यवधानं विरोधकृत् ॥ २८१ ॥

यद्वा अध्ययनस्नाननैरन्तर्येऽपि न विरोधः । अविचारितधर्माणामुत्तरानुष्ठानासिद्धिप्रसङ्गाद्विरोध इति चेत्—न, स्नातस्यापि यावद्विचारं हितकामैर्ब्रह्मचारिण इवानुष्ठापनोपपत्तेः । न च हितैषिवाक्यादनुष्ठानेऽपशूद्रनयविरोधः, तत्तदुचितधर्मेषु हितैषिभिः प्रवर्तनात् "न चास्योपदिशेद्धर्मम्" इत्यादिनिषेधदृष्टेश्च । अन्यथाप्यनुष्ठानसिद्धौ मीमांसाश्रवणं निरर्थकं स्यादिति चेत्—तन्न, वैपरीत्यशङ्कायां मूलजिज्ञासया परनैरपेक्ष्यप्रवचनख्यात्यादिश्रद्धया च तदुपपत्तेः । एवमेव पूर्वेषामुत्तरेषामपीत्यविच्छेदसिद्धिः । कश्चिदालस्यात्पित्रादीनेव सर्वथा प्रमाणयेदिति चेत्, ततः किम्? अनलसैरन्यैः शास्त्रश्रवणोपपत्तेः । स्नातस्य शृण्वतो गुर्वर्थव्यापारैः स्वधर्मोपरोधः स्यादिति चेत्—न; अध्ययनविधिप्रयुक्तानां तेषां निवृत्तेः । यथोक्तं न्यायसुदर्शने—

"अक्षरग्रहणोपायनियमार्थो ह्ययं विधिः ।
तद्ग्रहावधिका धर्मस्थितिरित्यब्रवीत् स्मृतिः ॥
अधीताद्वेदतः पश्चादर्थज्ञानं स्वतो भवेत् ।
तत्तु नाध्ययनं नापि धर्माणां च प्रयोजकम् ॥"

इति । किमर्थं तर्हि मीमांसामाचार्यः श्रावयेत्? लाभाद्यर्थं धर्मार्थं वा । गृहस्थधर्मो-

परुद्धस्य कः श्रोतुमवसरः ? को वाचार्यस्य प्रवक्तुम् ? तस्य वृत्त्यर्थिनोऽस्ति द्रव्यार्जनकाल इति चेत्, तर्हि विध्यनुज्ञातदृष्टार्थप्रवृत्त्यन्तरवत् श्रवणस्यापि स्यात्। इतिहासाद्यर्थतया च गृहिणोऽप्यस्ति कश्चिद्विचारकालः ; तदा च वेदोपबृंहणैस्तैः स्वसाध्यानुगुणत्वेन मीमांसाप्युपादीयेत। वेदाभ्यासं चैवं विभजन्ते—

"वेदस्वीकरणं पूर्वं विचारोऽभ्यसनं जपः।
तद्दानं चैव शिष्येभ्यो वेदाभ्यासो हि पञ्चधा॥"

इति। कुलक्रमागतधनादेर्दैवादागतधनादेः कस्यचित् तदार्जनकालोऽप्यपेक्षितश्रवणस्य कालः। गृहस्थादयश्चाविचारितवर्णादिधर्मास्तत्तद्धर्मश्रोतारः श्रुतिस्मृतिषु दृश्यन्ते। गृहस्थस्याप्यतिशयितविद्यार्थं प्रत्यब्दं द्वौ द्वौ मासौ गुरुकुलवासश्च केनचिदनुज्ञातः ; यथानूद्यते—"निवेशे वृत्ते संवत्सरे संवत्सरे द्वौ द्वौ मासौ समाहित आचार्यकुले वसेद्भूयः श्रुतिमिच्छन्निति श्वेतकेतुः" "एतेन ह्यहं योगेन भूयः पूर्वस्मात्कालात् श्रुतमकुर्वि" इति। नन्वत्र "तच्छास्त्रैर्विप्रतिषिद्धम्, निवेशे हि वृत्ते नैयमिकानि श्रूयन्तेऽग्निहोत्रमतिथयः" इत्यादिनापस्तम्बः स्वमतमाह ; सत्यम् ; तेनापि तदा मासद्वयं निरन्तरगुरुकुलवासमात्रं निषिध्यते ; न तु प्रवक्तृवत् श्रोतुः सिध्यन् विचारावसरः क्षिप्यते। अस्त्वध्ययनानन्तरं विचारः, स च रागतः कृत्स्नविषयश्च ; तथापि,

अवैधत्वे विचारस्य क्रमस्य च यथारुचि।
अप्रवृत्तेः प्रवृत्तेश्च प्राप्तौ तत्रेति भाष्यते॥ २८२॥

दुस्त्यजत्वाद्विचारस्य यौगपद्यविरोधतः।
व्युत्क्रमे दोषदृष्ट्या च क्रमः सौत्रो ह्यसाविति॥ २८३॥

**तत्र** ; वेदे मीमांसायां वा ; स्वेच्छातः प्रवृत्तौ सत्यामिति वार्थः। कर्मविधिरिह काम्यकर्मचोदना, काम्यानुष्ठानं वा; अविशेषाद्वा नित्यादेरपि संग्रहः। स्वरूपशब्देन त्यक्तफलस्य परविद्याङ्गविनियोगो न चिन्तित इति सूच्यते। स हि साधनलक्षणे शोध्यः ; तन्निरूपणे ह्यनन्तस्थिरफलपर्यन्तत्वं बुध्येत। यद्वा केवलकर्मणामल्पास्थिरफलत्वस्य क्वचिदमीमांसितत्वेऽपीति भावः। **निरूपिते** इत्यनेन कर्मनिरूपणस्य वृत्तत्वावश्यंभावोऽभिप्रेतः। प्रपञ्चितं चैतत्तात्पर्यतूलिकायाम्—

" तत्रेदं नियतं कर्म नैव शक्यमुपेक्षितुम् ।
तद्धि सर्वास्ववस्थासु पुमांसमनुवर्तते ॥
बुभुक्षुर्वा मुमुक्षुर्वा यो यो गृह्येत पूरुषः ।
तस्य सर्वस्य बहुना कर्मणानुगमोऽस्ति हि ॥
नित्यं नैमित्तिकं कर्म प्रतिषिद्धं च सर्वदा ।
सर्वैरपि परीक्ष्यं हि प्रत्यवायजिहासया ॥
न ये बिभ्यति दुःखेभ्यस्ते मा कार्षुर्विचारणाम् ।
इतरेषामियत्कर्म विचार्यमिति तु स्फुटम् ॥
काम्यं तु कर्म भोगाय विनापि ब्रह्मणा क्षमम् ।
न कर्मणा विना ब्रह्म मोक्षसामर्थ्यमश्नुते ॥
सर्वापेक्षा च यज्ञादिश्रुतेरिति हि वक्ष्यते ।
वेदैकदेशचिन्तापि प्रोक्ता कृत्स्नप्रयोजिका ॥
तस्मादवश्यचिन्त्यत्वे कर्मैवाग्रे विचार्यते ॥ "

इति । **कर्मणामल्पास्थिरफलत्वं दृष्ट्वा** ; तत्तद्वाक्यैरेवार्थतो विशदं निश्चित्येत्यर्थः । ज्योतिष्टोमाग्निहोत्रादिस्वरूपनिरूपणे हि यथोपायं गुरुलघुस्वर्गभेदक्लृप्तिः स्यात् । " ज्योतिष्टोमोऽग्निष्टोमः " इत्यनेन ज्योतिष्टोमस्याग्निष्टोमरूपत्वे निश्चिते च तत्साध्यस्य स्वर्गस्य " यावदग्निष्टोमेनोपाप्नोति " इत्यादिना देशकालादिपरिच्छेदनिश्चयः । तत्रावृत्तिविधिरप्यनावृत्तस्य फलाल्पत्वे लिङ्गम् । नित्यकर्मणामपि कस्मिंश्चिदधिकारिणि " प्राजापत्यं ब्राह्मणानाम् " इत्यादिभिर्वर्णाश्रमभेदेन फलतारतम्यं स्मर्यते । वैश्वदेववरुणप्रघासादीनां चातुर्मास्यानां स्वरूपेऽवगते हि " एषा वै वैश्वदेवस्य मात्रा, एतद्वा एतेषामवमम्, अतोऽतो वा उत्तराणि श्रेयांसि भवन्ति " इति वैश्वदेवादेर्मितफलत्वदर्शनात् " अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतम् " इत्यत्र चिरोपभोग्यत्वमात्रे तात्पर्यग्रहः । यद्यप्यक्षयफलत्वमिदं विद्याङ्गत्वेन परंपरया नेतुं शक्यम्, तथाप्यत्र तद्विवक्षाविरहान्न तथा नीयते । एवं परिमितफलसोमहविष्कर्मस्वरूपनिश्चये सत्येव " अपाम सोमम् " इत्यादावमृतत्वस्य " आभूतसंप्लवं स्थानममृतत्वम् " इत्यादिस्मृत्या नियमः । स्वर्गस्वाराज्यादिफलभेदसाधककर्मस्वरूपभेदसिद्धौ च तत्र स्वर्गशब्दोक्तस्याल्पत्वसिद्धिः ।

"यं यं क्रतुमधीते" इत्यादिषु च फलतारतम्यक्लृप्तिर्गुरुलघुकर्मस्वरूपनिश्चयादेव । उत्पत्तिनाशवदाराध्यप्रीणनकर्मस्वरूपनिश्चयाच्च तत्साध्यस्य तत्सायुज्यादेरस्थिरत्वदृष्टिरिति । तदेवं निरस्तप्रतिबन्धब्रह्मविचारार्थस्य शारीरकस्य विद्यास्थानान्तरव्यावृत्तस्वरूपफलाभ्यां मीमांसैकदेशत्वव्यक्त्यर्थं निर्णेतव्यविशेषसिद्ध्यर्थं च पुनः "अध्ययन—" इत्यादिकमुक्तम् । अत्रामृतत्वशब्देन त्र्यन्तप्रधानवेद्यफलोक्तिः ; तेनार्वाचीनानामानुषङ्गिकान्नवत्त्वादीनां संगत्यन्तरघटितदृष्टिविध्यादिफलानां च व्यवच्छेदः । कर्मभागोक्तममृतत्वमापेक्षिकं साधितम् ; इदं तु बाधादर्शनात् निर्णीतांशसंवादिवेदान्तैकदेशोपष्टम्भाच्च न प्राच्यवदिति प्रत्यायितप्रायमित्यभिप्रायेण **अनन्तस्थिरफलापातप्रतीते**रित्युक्तम् । न ह्यत्र फलत्वाद्यनुमानैरल्पास्थिरफलत्वादिक्लृप्तिः शक्या, अतिप्रसङ्गादिति । अनवच्छेदादिह सर्वशरीरः शारीरः, तमधिकृत्य प्रवृत्तं शास्त्रं शारीरकम् । वक्ष्यति हि आनन्दमयाधिकरणे—"स एव निरुपाधिकः शारीर आत्मा ; अत एवेदं परं ब्रह्माधिकृत्य प्रवृत्तं शास्त्रं शारीरकमित्यभियुक्तैरभिधीयते" इति । सैव मीमांसेति शारीरकमीमांसा ; तस्याम् । **अधिकरोति** ; स्वार्थबुद्ध्या तत्रोद्युक्तो भवति, न तु पूर्ववृत्तान्तरादधिकरोतीत्यर्थः । ब्रह्मविचारानन्तर्ये युक्तिसिद्धे तद्विषयशास्त्रानन्तर्यमपि सिध्येदिति भावः ।

ग्रहणं च फलत्वं च सार्थता च स्वतः श्रुतेः ।
रागात् कृत्स्नविचारश्चेत्यपूर्वमिह भाषितम् ॥ २८९ ॥

## मूलभावप्रकाशिका

येनैव तव्यप्रत्ययेन स्वाध्यायस्य कर्मत्वावगमादक्षरादिराशिग्रहणस्य फलत्वसिद्धिः तेनैव तव्यप्रत्ययेनाध्ययनस्य संस्कारकर्मत्वमेव, न तु प्राभाकराभिमतमर्थकर्मत्वमित्याह— **अध्ययनं चेति** । शिष्यानुग्रहाय वक्ष्यमाणशङ्काया अवकाशप्रदानाय च संस्कारस्वरूपं दर्शयति—**संस्कारो हीति** । इदं चोपयोक्ष्यमाणसंस्कारविषयम् ; 'अतिशयाधानं संस्कारः' इति तु संस्कारसामान्यलक्षणं द्रष्टव्यम् । ननु "तस्मात्सुवर्णं हिरण्यं भार्यम्" इत्यत्र कृत्यप्रत्ययेन हिरण्यस्य कर्मत्वे श्रुतेऽपि भूतभाव्युपयोगशून्यतया कृत्यप्रत्यय स्वारस्यानादरेण श्रुतविनियोगं भङ्क्त्वा हिरण्यभरणस्यार्थकर्मत्वमाश्रितम् ; एवमिहापि स्वाध्यायस्य तव्यप्रत्ययेन कर्मत्वे श्रुतेऽपि भूतभाव्युपयोगविधुरत्वात् श्रुतविनियोगभङ्गेन स्वाध्यायाध्य-

यनस्यार्थकर्मत्वमेवाश्रयणीयमिति शङ्कां निरस्यति—**संस्कार्यत्वमित्यादिना**। 'हुं फट्' प्रभृत्यनर्थकवेदभागे पुरुषार्थतत्साधनाववबोधस्य तत्साध्यस्य प्रयोजनस्य चाभावादनुपयुक्तस्य तदंशस्य न संस्कार्यत्वमित्यत्राह—**जपादिनेति**। ज्ञानसहितजपादेः प्रयोजनान्तरहेतुत्वव्यवच्छेदार्थः स्वरूपशब्दः ; हुंफडादिस्थले जपादिस्वरूपमेव प्रयोजनसाधनं, नार्थप्रत्ययापेक्षेति भावः। उपसंहरति—**एवमिति**। **मन्त्रवत्** इत्यत्र मन्त्रशब्देन निरर्थकहुंफडादिवेदभागा विवक्षिताः। सप्तम्यर्थे वतिः। निरर्थकवेदभागेऽध्ययनस्य सनियमाक्षरग्रहणफलकत्वस्य संप्रतिपन्नत्वात्तदेव सर्वत्र फलं, नाऽव्यापकमर्थज्ञानमिति भावः। नन्वक्षरग्रहणस्यापुरुषार्थत्वादभाव्यत्वम् ; अध्ययनविधेरर्थज्ञानपर्यन्तत्वाभावे स्वाध्यायस्य विवक्षितार्थत्वं न स्यादिति शङ्काद्वयं परिहरति—**अध्ययनगृहीतस्येति**। लोकव्युत्पत्तिसिद्धं शब्दानामर्थपरत्वं न विधिमपेक्षत इति **स्वभावत एवे**त्यस्याभिप्रायः। अर्थज्ञानस्यापि स्वतः पुरुषार्थत्वाभावेनानुष्ठानद्वारा स्वर्गादिजनकतयैव पुरुषार्थत्वस्य वक्तव्यतया अक्षरग्रहणस्यापि प्रयोजनवदर्थज्ञानद्वारा पुरुषार्थत्वं संभवतीति भावः। अयमर्थोऽनागतावेक्षणन्यायेन "स्वाध्यायशब्दवाच्याक्षरराशिग्रहणं विधीयते" इति भाष्यव्याख्यानावसरे प्रपञ्चितः। नन्वध्ययनविधेरर्थज्ञानपर्यन्तत्वाभावे प्रवर्तकाभावान्मीमांसाया अनारम्भणीयत्वं स्यादिति शङ्कां व्युदस्यति—**अध्ययनगृहीतात्स्वाध्यायादिति**। 'आपाततोऽवगम्यमानान् दृष्ट्वा' इत्यन्वयः। दृष्ट्वेत्यनेनापाततः प्रतीतेरनुभवसिद्धतया दुरपह्नवत्वमुक्तम्। **स्वयमेव प्रवर्तत इति** ; रागादेव प्रवर्तते; न तु मीमांसकमत इवार्थज्ञानपर्यन्ताध्ययनविधिबलादिति भावः। **कर्मविधिस्वरूपे निरूपित इति** ; विधिश्च स्वरूपं च विधिस्वरूपम् ; कर्मविधौ कर्मस्वरूपे च निरूपित इत्यर्थः। प्रत्यब्दं चातुर्मास्याद्यावृत्तिविधौ निरूपिते चातुर्मास्यादीनां क्षयिफलत्वनिश्चयो भवति, अक्षय्यफलत्वे आवृत्तिवैयर्थ्यात्। तथा चातुर्मास्यादिस्वरूपं सहस्रसंवत्सरसाध्यविश्वसृजामयनादिस्वरूपं च निरूपयता "फलस्य कर्मनिष्पत्तेस्तेषां लोकवत्परिमाणतः फलविशेषः स्यात्" इति न्यायालोचनसनाथचेतसा भगवदनुग्रहविषयेण पुंसा "तद्यथा" इत्यादिवक्ष्यमाणवाक्यैः कर्मणामनित्यफलत्वं सुनिश्चयमिति भावः। **अधिकरोतीति** ; अधिकारिसिद्धिः कर्मविचाराधीनेति भावः।

श्रीभाष्यम्

तथा च वेदान्तवाक्यानि केवलकर्मफलस्य क्षयित्वं ब्रह्मज्ञानस्य चाक्षयफलत्वं दर्शयन्ति—"तद्यथेह कर्मचितो लोकः क्षीयत एवमेवामुत्र पुण्यचितो लोकः क्षीयते" अन्तवदेवास्य तद्भवति" "न ह्यध्रुवैः प्राप्यते" "प्लवा ह्येते अदृढा यज्ञरूपाः" "परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन। तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्। तस्मै स विद्वानुपसन्नाय सम्यक् प्रशान्तचित्ताय शमान्विताय। येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्।" "ब्रह्मविदाप्नोति परम्" "न पुनर्मृत्यवे तदेकं पश्यति" "न पश्यो मृत्युं पश्यति" "स स्वराड् भवति" "तमेवं विद्वानमृत इह भवति; नान्यः पन्था अयनाय विद्यते" पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति" इत्यादीनि। ननु च साङ्गवेदाध्ययनादेव कर्मणां स्वर्गादिफलत्वं स्वर्गादीनां च क्षयित्वं ब्रह्मोपासनस्यामृतत्वफलत्वं च ज्ञायत एव। अनन्तरं मुमुक्षुर्ब्रह्मजिज्ञासायामेव प्रवर्तताम्; किमर्था धर्मजिज्ञासापेक्षा? एवं तर्हि शारीरकमीमांसायामपि न प्रवर्तताम्, साङ्गाध्ययनादेव कृत्स्नस्य ज्ञातत्वात्। सत्यमापातप्रतीतिर्विद्यत एव, तथापि न्यायानुगृहीतस्य वाक्यस्यार्थनिश्चायकत्वादापातप्रतीतोऽप्यर्थः संशयविपर्ययौ नातिवर्तते; अतस्तन्निर्णयाय वेदान्तवाक्यविचारः कर्तव्य इति चेत्; तथैव धर्मविचारोऽपि कर्तव्य इति पश्यतु भवान्।

## श्रुतप्रकाशिका

एवमैकशास्त्र्यक्रमनियमारम्भणीयत्वान्युपपादितानि । कैर्वेदान्तवाक्यैरारम्भणीयत्वौपयिकापातप्रतीतिरित्यत्राह—**तथा चेति**; यथा सूत्रं व्याख्यातं तथेत्यर्थः । चः शङ्कानिवृत्तौ, प्रसिद्धौ वा । केवलशब्देन ज्ञानाङ्गकर्मव्यावृत्तिः । ननु कर्मविचारेण निर्णीतेऽपि कर्मफलक्षयित्वे पुनश्चाल्पास्थिरफलत्वप्रतीतिजनकवाक्यानि किमर्थमुदाह्रियन्ते? अनन्तस्थिरफलापातप्रतीतिजनकान्येव हि वाक्यान्युदाहर्तव्यानि । उच्यते—अधिगतकर्मणः पुरुषस्य हि निर्णीतार्थसंवादिवाक्यदर्शनात् कर्मफलास्थिरत्ववत् ब्रह्मज्ञानफलाक्षयित्वस्य प्रामाणिकत्वं संभवतीति श्रद्धास्थिरीकरणार्थम् । **तद्यथेति**; लोक्यत इति लोकः, फलम् । **अन्तवदेवास्य तद्भवति** इत्यनेन ज्ञानविधुरकर्मणोऽनेककालानुष्ठितस्य बहुविधस्यापि क्षयित्वमुक्तं भवति, "यो वा एतदक्षरं गार्ग्यविदित्वास्मिन् लोके जुहोति यजते तपस्तप्यते बहूनि वर्षसहस्राणि" इत्येतद्वाक्यपूर्वकत्वात्तस्य वाक्यस्य । अन्तवदित्युक्ते क्रियास्वरूपस्यान्तवत्त्वं लोकसिद्धतयानुपदेश्यमिति फलस्यैवान्तवत्त्वमर्थसिद्धं स्फुटीकर्तुं पूर्वं "तद्यथा" इति वाक्योपादानम् । सांसारिकफलस्याध्रुवत्वं स्यात्; कर्मभिरेव ध्रुवं फलं संपाद्यतामिति शङ्काव्युदासायोपादत्ते—**न ह्यध्रुवैः प्राप्यत इति** । "ध्रुवं तत्" इति वाक्यखण्डः । तदुपपादकत्वेन प्रतीयमानं वाक्यान्तरमुदाहरति—**प्लवा ह्येते अदृढा यज्ञरूपा इति**; संसारपारं तारयितुं नालम्, मध्ये भङ्गुरत्वादित्यर्थः । सूत्रयोजनानुगुणतरं कर्मणामल्पास्थिरफलत्वं ब्रह्मोपासनस्यानन्ताक्षयफलत्वं च दर्शयद्वाक्यमुपादत्ते—**परीक्ष्य लोकानिति**; अस्मिन्वाक्ये न्यायसिद्धार्थानुवादेन गुरूपसत्तिर्विधीयते । **कर्मचितान्**; कर्मसंचितान् कर्मसंपाद्यान् । **परीक्ष्य**; मीमांसान्यायैर्निरूप्य । **ब्राह्मणः**; अधीतसाङ्गसशिरस्कवेदः । 'यः' इत्यध्याहार्यम्, 'सः' इत्युत्तरत्र श्रवणात् । **अकृतः**; नित्यः । अत्र पुरुषो विशेष्यः, लिङ्गवशात् "अक्षरं पुरुषम्" इत्यनन्तरोक्तेश्च । **कृतेन**; कर्मणा । **नास्ति**; न सिध्यति । इतिकरणं द्रष्टव्यम्; इति यो निर्वेदमायात् स तद्विज्ञानार्थं गुरुमेवाभिगच्छेत् । एवकारेण नियमविधित्वं गम्यते । **समित्पाणिः**; न रिक्तपाणिः; "रिक्तपाणिस्तु नोपेयाद्राजानं दैवतं गुरुम्" इति हि स्मर्यते । **श्रोत्रियम्**; श्रुतवेदान्तम् । **ब्रह्मनिष्ठम्**; ब्रह्मसाक्षात्कारवन्तम्, श्रुतवेदान्तोऽपि रुचिभेदादब्रह्मनिष्ठो नोपगन्तव्य इति भावः । अभिगच्छेदित्यन्वयः । **शमः**

बाह्येन्द्रियनियमनरूपः, 'प्रशान्तचित्ताय' इत्यन्तःकरणनियमनस्योक्ततया पारिशेष्यात् ; एतेन श्रवणोपयुक्तमवधानं विवक्षितम् ; न तूपासनोपयुक्तात्यन्तेन्द्रियजयादिः । 'तस्मै स विद्वान् प्रोवाच' इत्यन्वयः । येनेति निर्देशो ब्रह्मज्ञानाभिप्रायः, 'तद्विज्ञानार्थम्' इति हि प्रकृतम् । सामान्यतः कारणाभिप्रायो वा ; लिङ्गव्यत्ययो वा । **अक्षरम्** ; स्वरूपेणाविकारम् । **सत्यम्** ; गुणतोऽप्यविकारम् । आभ्यामचिज्जीवव्यावृत्तिः । **तां ब्रह्मविद्यां प्रोवाच** ; प्रब्रूयादित्यर्थः । इति वेदान्तसारे व्याख्यातम् । "छन्दसि लुङ्लङ्लिटः" इति लिट् । ननु "प्रशान्तचित्ताय शमान्विताय" इति शमादेः पूर्ववृत्तत्वं प्रतीयते—न; श्रवणोपयोग्यवधानमात्रस्य विवक्षितत्वात् । नात्रोपासनाङ्गभूतात्यन्तविषयवैतृष्ण्यं विवक्षितम् ; तद्धि "शमदमाद्युपेतः स्यात्" इति निरूपयिष्यते । अतो निरूप्य संपाद्यैस्तैर्निरूपणात्प्रागेव विशिष्टत्वमनुपपन्नम् । श्रुतिश्च शास्त्रजन्यज्ञानवतः पुरुषस्य तदुत्तरभाविशमाद्यङ्गकमुपासनं दर्शयति—"तस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वात्मन्येवात्मानं पश्येत्" इति । अत्र हि 'एवंवित्' इति शास्त्रजन्यज्ञानवत्त्वमुक्तम् । 'भूत्वा पश्येत्' इत्युपासनस्य शमाद्यङ्गकत्वं स्थापितम् । केवलानन्तस्थिरफलपरवाक्यान्युदाहरति—**ब्रह्मविदिति** । अत्रानुवाके "यतो वाचो निवर्तन्ते" इति श्रवणादनन्तफलत्वसिद्धिः । प्राप्यस्य ब्रह्मणोऽनन्तस्थिरत्वेऽपि प्राप्तेः कादाचित्कत्वशङ्काव्यावृत्त्यर्थमपुनर्निवृत्तिमाह—**न पुनरिति** । यद्वा विद्ययानन्तस्थिरफलरूपब्रह्मप्राप्तिमाह—**ब्रह्मविदिति** । विद्यया ब्रह्मप्राप्तेः प्रतिबन्धनिवृत्तिपूर्वकत्वमाह—**न पुनरिति** । **मृत्युः**; प्रमादः, मोहो वा ; "मोहो मृत्युः संमतो यः कवीनाम्" "प्रमादं वै मृत्युमहं ब्रवीमि" इत्युभयत्र मृत्युशब्दव्यपदेशात् । प्रमादः यथावस्थितात्मस्वरूपस्याज्ञानम् । मोहो भ्रान्तिज्ञानम्, 'दिङ्मोहः' इत्यादिव्यपदेशात् । न मृत्युनिवृत्तिमात्रमेव ; तत्कार्यमपि निवर्तत इत्याह—**न पश्यो मृत्यु पश्यतीति** । अस्य वाक्यस्योपरि "न रोगं नोत दुःखताम्" इति हि श्रूयते । "न पुनः" इत्यादि वाक्यं ब्रह्मणि दृष्टे मृत्युप्रमुखनिवृत्तिरिति ज्ञापनार्थम् । "न पश्यो मृत्युम्" इत्यत्रापि पश्यशब्दस्य ब्रह्मदर्शीत्यर्थः, "तदेकं पश्यति" इत्यनन्तरोदाहृतवाक्ये विषयस्य दर्शितत्वात् । **स स्वराड् भवतीति** ; कर्मवश्यो न भवतीत्यर्थः । "स्वराट् स्वतन्त्रो विज्ञेयः" इति नैघण्टुकाः । "तमेवं विद्वान्" इति वाक्येन निर्विशेषचिन्मात्रज्ञान-

देवतान्तरोपासनाद्युपायान्तरव्यावृत्तिसिद्धिः, पुरुषोत्तमोपासनस्यैवोपायतयोक्तत्वात्। तदुपासनरूपज्ञानं च नात्मैक्यविषयम्; अपितु पृथक्त्वविषयमिति दर्शयति—**पृथगात्मानमिति**। **मत्वा**; ज्ञात्वा। **ततः**; पृथक्त्वज्ञानात्। **तेन जुष्टः**; प्रीतिविषयीकृतः; अनुगृहीतोऽमृतत्वमेतीत्यर्थः। 'इत्यादीनि वेदान्तवाक्यानि' इति पूर्वेणान्वयः। उदाहृतस्पष्टार्थवाक्यमात्रतृप्तः कश्चिच्चोदयति—**ननु चेति**। पूर्वत्र चोद्यान्तराणां कण्ठोक्त्यभावेऽपि परिहारकण्ठोक्त्या तान्यभिप्रेतानि। अतश्चशब्देन तैरर्थसिद्धैः सह समुच्चयो युक्तः। **साङ्गेति**; कर्मज्ञानपूर्ववृत्तत्ववादिनापि साङ्गाध्ययनस्यापेक्षितत्वं स्वीकृतमिति तदधिकव्युदासार्थ एवकारः। अध्ययनस्य साङ्गत्वादङ्गानां चार्थज्ञानहेतुत्वान्मीमांसानिरपेक्षं स्वर्गादेरेव केवलकर्मफलत्वं, स्वर्गादेश्च क्षयित्वं, ब्रह्मोपासनस्याक्षयफलत्वं च ज्ञायत इत्यर्थः। **ब्रह्मोपासनस्ये**त्यादिग्रन्थो दृष्टान्ताभिप्रायः। **ज्ञायत एवे**त्येवकारो ज्ञातत्वसंप्रतिपत्तिसूचकः; ज्ञानसामग्री हि सिद्धेति भावः। ततः किमित्यत्राह—**अनन्तरमिति**; कर्मणोऽल्पास्थिरफलत्वज्ञानेन मुमुक्षासिद्ध्यर्थं हि कर्मविचारः; तन्निरपेक्षमेवाल्पास्थिरफलत्वज्ञानान्मुमुक्षासिद्धेर्ब्रह्मजिज्ञासैव कर्तव्या, धर्मविचारे प्रयोजनाभावादित्यर्थः। परिहरति—**एवमिति**। **एवं तर्हि**; उदाहृतवाक्यमात्रतृप्तोऽसि चेत्। **कृत्स्नस्येति**; ब्रह्मणोऽपीति भावः। वेदान्तवाक्यान्यपि स्फुटार्थानि ह्यस्माभिरुदाहृतानि; तेषामर्थोऽपि मीमांसानपेक्षं ज्ञायते; अतोऽनन्तस्थिरफलज्ञानाय न ब्रह्मविचारः कर्तव्य इत्यर्थः। **सत्यमि**त्यार्धाङ्गीकारे; आपातप्रतीतावभ्युपगमः, ब्रह्मविचारनैरपेक्ष्येऽनभ्युपगमः। **आपातेति**; आपातप्रतीतिरज्ञाननिवृत्तिमात्रेण संशयविपर्ययसहं ज्ञानम्। संशयविपर्ययौ च कारणवाक्यगतसद्ब्रह्मात्माकाशप्राणवैश्वानरादिशब्दैरर्थतत्त्वस्य दुर्निश्चयत्वात्, "विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति" "असद्वा इदमग्र आसीत्" इत्यादिभिरात्मानित्यत्वादिप्रतीतेः, "अन्नवानन्नादो भवति। महान् भवति प्रजया पशुभिर्ब्रह्मवर्चसेन" इत्यादिनाल्पास्थिरफलत्वावगमाच्च स्याताम्। अतः साङ्गाध्ययनमात्रेण तयोरनिवृत्तेस्तद्व्युदासस्य न्यायानुगृहीतवाक्यफलत्वाच्च ब्रह्मविचारः कर्तव्य इति चेदित्यर्थः। **भवान्**; अनुदाहृतवाक्यान्तरपर्यालोचनायामपि प्रवृत्तस्त्वमिति भावः। **तथैव**; एतया दृष्ट्यात्रापि संशयविपर्ययनिरासस्यापेक्षितत्वं जानन्ननुदाहृतवाक्यानि पश्येदित्यर्थः। "अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति" "पूर्णा-

इत्वा सर्वान् कामानवाप्नोति " " सर्वान् लोकान् पशुबन्धयाज्यभिजयति " " अपाम सोमममृता अभूम " " अनन्तं ह वा अपारमक्षय्यं लोकं जयति ; योऽग्निं नाचिकेतं चिनुते " " नास्येष्टापूर्ते क्षीयेते ; योऽग्निं नाचिकेतं चिनुते " इत्यादीनि हि " अमृतत्वं भजन्ते " " सोऽश्नुते सर्वान् कामान् " " इमान् लोकान् कामान्नी कामरूप्यनुसंचरन् " इत्यादिब्रह्मवेदनफलवाक्यैस्तुल्यानि वाक्यानि दृश्यन्ते । अत औपनिषदवाक्येष्विवानुदाहृतवाक्येषु संशयविपर्ययबाहुल्यात्तन्निरासाय कर्मविचारः कर्तव्य इत्यर्थः ।

भावप्रकाशिका

**येनेति निर्देशो ब्रह्मज्ञानाभिप्राय इति** ; ततश्च " प्रोवाच तां तत्त्वतो ब्रह्मविद्याम् " इति प्रतिनिर्दिश्यमानाया एव ब्रह्मविद्याया यच्छब्देन परामृष्टव्यतया ययेति स्त्रीलिङ्गनिर्देशो न प्रसञ्जनीय इति भावः । **अतो निरूप्य संपाद्यैस्तैरिति** ; ननु " शमदमाद्युपेतः स्यात् " इत्यत्र न शमादिस्वरूपं निरूप्यते, अपितु शमादेरुपासनाङ्गत्वम् ; तच्च श्रुतिबलप्राप्तस्य श्रवणं प्रत्यङ्गभावस्य नोपजीव्यमिति चेत्—न; तत्राविहितविषयव्यापारोपरमः शम इत्यस्यार्थस्य तदधिकरणे व्युत्पाद्यत्वादिति भावः । " ब्रह्मविदाप्नोति " इत्यस्यानन्तस्थिरफलब्रह्मप्राप्तिपर्यन्तप्रामाण्यसंभवे अनन्तस्थिरफलत्वमात्रप्रतिपादनपरत्वमयुक्तमित्यस्वरसादाह—**यद्वा अनन्तस्थिरेति** । **विषयस्य दर्शितत्वादिति** ; ब्रह्मस्वरूपस्येत्यर्थः । ततश्च " पश्यः " इति ब्रह्मदर्शनमेव पर्यवस्यतीति भावः । **समुच्चयो युक्त इति** ; अत्र केचित्—' ननु च ' इति निपातसमुदायोऽयं नन्वर्थक एव, ततोऽतिरिक्तार्थाप्रतीतेः ; ननुशब्दस्य प्रयोक्तृधर्मभूतशङ्काद्योतकत्वेन ' ननु च ' इत्यस्य ' शङ्का च ' इतिशब्दतुल्यार्थत्वाभावात् ; अतोऽत्र चशब्दस्य समुच्चयार्थत्वप्रसाधने नातीवाभिनिवेष्टव्यमिति मन्यन्ते । ननु कर्मविचारनैरपेक्ष्यसिद्ध्यर्थं कर्मणां वाक्यजन्यं क्षयिफलत्वज्ञानमेव वक्तव्यम् ; न तु ब्रह्मोपासनस्याक्षयफलत्वज्ञानमित्यत्राह—**ब्रह्मोपासनस्येत्यादिग्रन्थ इति** ।

श्रुतप्रदीपिका

आपातधीजनकवाक्यानि सन्तीत्याह—**तथा चेति** । यथा सूत्रं व्याख्यातं तथेत्यर्थः । क्षयिफलत्वपरवाक्योपादानं क्वचिन्निर्णीतार्थसंवाददर्शनादर्थान्तराणामपि श्रद्धेयत्वाय । लोक्यत इति लोकः फलम् । फलद्वारान्तवत्त्वमुक्तम् । अन्तवदिति वाक्यं केवल-

कर्मपरम्, "अविदित्वा" इति हि प्रकृतम्। ध्रुवफलासाधनत्वमाह—**न हीति**; "ध्रुवं तत्" इतिवाक्यखण्डः। तदुपपादयति—**प्लवा हीति**। इति कर्मफलक्षयित्वपराणि। अथोभयपरम्—**परीक्ष्येति**। **ब्राह्मणः**; ब्रह्म वेदः, तदधीत इत्यण्। 'यः' इत्यध्याहार्यम्, 'सः' इत्युक्तेः। **अकृतः**; परमपुरुषः। इतिरध्याहार्यः। एवेति नियमविधिः। **श्रोत्रियम्**; श्रुतवेदान्तम्। **ब्रह्मनिष्ठम्**; ब्रह्मसाक्षात्कारिणम्। शमदमौ श्रवणौपयिकतादात्विकावधानमात्रहेतू, न त्वत्यन्तबाह्यान्तःकरणविषयप्रावण्यत्यागः; स हि निरूपयिष्यते। **अक्षरं सत्यम्**; स्वरूपतो गुणतश्चाविकारमिति चिदचिद्व्यावृत्तिः। **प्रोवाच**; प्रब्रूयात् "छन्दसि लुङ्लङ्लिटः" इति विधौ लिट्। अथानन्तस्थिरफलवाक्यानि। **ब्रह्मविदिति** वाक्येनानन्त्यसिद्धिः; "यतो वाचः" इति हि प्रकरणम्। **न पुनरित्यादिकं** मृत्युतत्कार्यनिवृत्तिपरम्। "न रोगं नोत दुःखताम्" इति ह्यनन्तरं श्रूयते। पश्यशब्दविषय उक्तः—**तदेकमिति**। **स्वराट्**; अकर्मवश्यः; स हि स्वतन्त्रः। **तमेवमि**त्युपायान्तरनिवृत्तिः। पृथक्त्वज्ञानस्योपायत्वं **पृथगिति**। **जुष्टः**; प्रीतिविषयीकृतः। उदाहृतवाक्यमात्रतृप्तश्चोदयति—**ननु चेति**। क्षयिफलत्वज्ञानाय हि कर्मविचारः; तत् साङ्गाध्ययनसिद्धमित्यनन्तफलेच्छोस्तदेव जिज्ञास्यमिति चोद्यम्। **एवं तर्हि**; उदाहृतवाक्यमात्रतृप्तोऽसि चेत्। **कृत्स्नस्य**; ब्रह्मणोऽपीति भावः। **सत्यमिति**; आपातप्रतीतावभ्युपगमः। "अन्नवान्" इत्याद्यवगताल्पास्थिरफलादाकाशप्राणादिशब्दैः "तान्येवानुविनश्यति" इत्यनित्यत्वादिभिश्च संशयाद्यनतिवृत्तिः। **भवान्**; अनुदाहृतास्पष्टार्थवाक्यान्तरजिज्ञासुः। "अक्षय्यं ह वै" "अपाम सोमममृता अभूम" इत्यादिकं पूर्वभागेऽपि पश्येत्यर्थः। उदाहृतवाक्यैः तृप्तिश्चेत् पूर्वत्रापि स्यात्। सान्तानन्तादिविरुद्धार्थधीरुभयत्र तुल्येति विचार्यत्वमविशिष्टमित्युक्तं भवति।

## नयप्रकाशिका

"तद्यथेह" इत्यादिश्रुत्यैव केवलकर्मणः क्षयिफलत्वं ब्रह्मज्ञानस्याक्षयफलत्वं हेतुहेतुमद्भावश्च प्रतीयते। "पुण्यचितो लोकः क्षीयते" इति हि तस्य क्षयित्वं श्रूयते। "परीक्ष्य लोकान्" इत्यत्रापि कर्मसंपादितलोकपरीक्ष्यत्वमुच्यते। तत्परीक्षणं च मीमांसयैव, व्यवहितत्वेनायोग्यत्वेन प्रत्यक्षादिना परीक्ष्यत्वानुपपत्तेः। किं तु न्यायसहितश्रुत्यैव; न्यायश्च मीमांसेति पूर्वमीमांसयैव तत्परीक्षणम्। कर्मणां फलपरत्वादिर्हि न्यायैक-

साध्यः । ननु श्रुत्यैव तेषां फलपरता सिद्धा ; किमर्था न्यायापेक्षेति चेत्——न ; "यस्य पर्णमयी जुहूर्भवति" इत्याद्यन्यपरवाक्येष्वपि फलश्रवणात् तस्यापि ग्राह्यत्वापत्तेः ; अश्रुतफलविश्वजिदादौ फलाभावश्च स्यात् । ननु नित्याग्निहोत्रादेर्न फलमिति चेत्——न ; फलाभावे प्रवृत्त्यनुपपत्तेः । किंतु फलविशेषसंकल्पाभाव एव ; तस्याप्यपरिमितफलत्वमेव । अपरिमितफलत्वेऽपि प्राकृतफलत्वेन विनाशः सिद्धः । तेषामपरिमितफलत्वोक्तिस्तु भूयस्त्वाभिप्राया । तच्च मीमांसयैव ज्ञायते । **नास्त्यकृतः कृतेनेति** ; **कृतेन** ; केवलकर्मणा, नित्यार्थस्यासंपाद्यत्वमुच्यते । **निर्वेदमायादिति** ; एवंविधकर्मज्ञानस्य निर्वेदहेतुत्वमुच्यते । तथाविधनिर्वेदयुक्तस्य हि गुरोः सकाशाद्वेदान्तश्रवणं श्रूयते । **येनाक्षरं पुरुषं वेद सत्यमिति** ; अक्षरवेदनस्यात्र फलानन्त्याश्रवणेऽपि "ब्रह्मविदाप्नोति परम्" "न पुनर्मृत्यवे तदेकम्" इत्यादौ तद्वेदनस्य फलानन्त्यश्रवणात् तदानन्त्यं सिद्धम् । 'अक्षरं सत्यं पुरुषं वेद' इति श्रवणाच्चाक्षयफलता सिद्धा, तत्क्रतुन्यायात् । **तस्मै प्रोवाच** ; ब्रूयादित्यर्थः; अन्यथा 'अभिगच्छेत् प्रोवाच' इत्यनन्वयात् ; अप्राप्तार्थत्वाच्च । अतोऽत्र लिट् विध्यर्थे, "छन्दसि लुङ्लङ्लिटः" इति स्मृतेः । ननु साङ्गाध्ययनाच्छब्दार्थव्युत्पत्तेः कर्मणां क्षयिफलत्वावगतेः ब्रह्मवेदनफलानन्त्यावगतेश्च प्रथमत एव वेदान्तश्रवणोपपत्तेर्न कर्ममीमांसापेक्षेति चेत्——न; उत्तरमीमांसायामप्यप्रवृत्त्यापत्तेः, साङ्गाध्ययनादेवार्थावगतेः । अथ वेदान्तवाक्यानामनेकार्थप्रतीतेस्तन्निर्णयाय तत्र प्रवृत्तिरिति चेत्——न; कर्मपरवाक्यानामपि तथात्वात्तन्निर्णयाय तत्प्रवृत्त्यापातात् "पूर्णाहुत्या सर्वान् कामानवाप्नोति" "अक्षय्यं ह वै" इत्यादौ सर्वकामावाप्त्यक्षयफलत्वादि श्रूयते कर्मणामपि । तादृशवाक्यानामर्थानिश्चये तु न कर्मणां क्षयिफलत्वनिश्चयः । "तद्यथेह कर्मचितो लोकः क्षीयते" इत्यादयस्त्वन्यस्तुतिपरा इत्यपि भ्रमः स्यात् । अत उभयत्रापि संशयाद्यविशेषात् प्रवृत्तिरविशिष्टा, निवृत्तिरप्युभयत्र समेति न कर्ममीमांसातो व्यावृत्ता ब्रह्ममीमांसाप्रवृत्त्युपपत्तिः । किंच कर्मणां विद्याङ्गत्वेन विनियोगादङ्गत्वेनानुष्ठाने तज्ज्ञानस्यावश्यकत्वादुपादेयतयापि पूर्ववृत्तता सिद्धा । ननु "विविदिषन्ति" इति विविदिषोत्पत्तावेव विनियोगान्न विद्याङ्गत्वमिति चेत्——न; ज्ञानसाधनत्वेनैव तेषां विनियोगात् ; वेदनप्रधाना हि विविदिषा । विविदिषन्ति; वेदनं प्राप्तुमिच्छन्तीत्यर्थः, 'असिना जिघांसति' इत्यादाविव ; असेर्हननसाधनत्वनिश्चये हि तथा व्यपदेशोपपत्तिः ।

अतो यावज्ज्ञानप्राप्तिस्तावत् द्वयोरप्युपयोगः। ननु "ब्रह्मविदाप्नोति" इत्यादौ ज्ञानमात्रस्यैव मोक्षसाधनत्वश्रवणात् कर्मणां विद्योपकारकत्वाभावाच्च तेषां न विद्याङ्गत्वमिति चेत्—न; विनियोगप्रतीतेः। यथा "दर्शपूर्णमासाभ्याम्" इत्यादौ दर्शादिवाच्याग्नेयादिप्रधानस्यैव स्वर्गसाधनत्वश्रवणेऽपि वाक्यान्तरविहितप्रयाजाद्युपकृतस्यैव स्वर्गसाधनत्वं तथा कर्मणां पापनिबर्हणद्वारा विद्योत्पत्तिहेतुत्वात्, उपकारकत्वसंभवाच्च। निष्पापस्यैव विद्योत्पत्तिः; न पापिनः, "न मां दुष्कृतिनो मूढाः प्रपद्यन्ते" इत्यादिस्मरणात् "सत्त्वशुद्धौ ध्रुवा स्मृतिः" इति श्रुतेश्च। सत्त्वशुद्धिश्च न सपापस्य। एवं केवलवेदनस्यैव मोक्षसाधनत्वे शमादेरप्युपादनं न स्यात्; परेषां शमादयोऽङ्गत्वेनेष्टाः। "विद्यां चाविद्यां च" इत्यादौ विद्यायाः कर्मणा सहानुष्ठानप्रतीतेश्च। अत्र मृत्युशब्दो ज्ञानोत्पत्तिविरोधिपरः। अविद्याशब्दः कर्मपरः। अत एव हि "इयाज सोऽपि" इत्यादिस्मृतिः। ननूभयोरत्र फलभेदश्रवणान्नाङ्गाङ्गित्वमिति चेत्—न; अविरुद्धफलत्वेन तदविरोधात्। फलविरोधे हि साध्यभेदाच्छास्त्रभेदः। साध्यभेदमात्रात् शास्त्रभेदस्वीकारेऽवघाताग्नेयादिशास्त्राणामपि भेदः स्यात्। अत्र ज्ञानं च ध्यानरूपमेव। तच्च यावज्जीवमहरहरावर्तनीयम्। तदावृत्तौ चाङ्गावृत्तिरावश्यकी। न च वाक्यजन्यं ज्ञानमात्रं विधेयम्, विधिव्यतिरेकेणापि तत्सिद्धेः। श्रवणमननयोरपि न विधेयता, श्रवणे रागत एव प्रवृत्तेः; श्रुतार्थप्रतिष्ठापनार्थत्वान्मननस्य। अतो वेदनं ध्यानादिपर्यायमेवात्र विधेयम्, "मनो ब्रह्म" इत्यादौ वेदनस्योपासनपर्यन्ततया प्रतीतेः। एतत्सर्वमुत्तरत्र प्रपञ्चितम्। चिरंतनैर्वाक्यकारादिभिश्च वेदनस्योपासनात्मकत्वमहरहरनुष्ठेयत्वं पञ्चमहायज्ञादेस्तदङ्गतयानुष्ठेयत्वं च "वेदनमुपासनं स्यात्" इत्यादावुक्तम्। अतोऽपि कर्मज्ञानस्य पूर्ववृत्तत्वमुचितम्। उद्गीथादिकर्माङ्गाश्रयोपासनानां ब्रह्मदृष्टिरूपत्वेनात्रैव निरूप्यत्वात् तेषां च कर्मज्ञानापेक्षत्वाच्च तदज्ञाने तत्र तद्दृष्टेरशक्यत्वात्; प्रस्तारप्रतिहारोद्गीथोपद्रवनिधनात्मकसामादिस्वरूपे न्यायतो निरूपिते हि तच्छक्यत्वम्। ननु च तेषामैहिकफलार्थत्वादपेक्षया पूर्ववृत्तत्वसंभवेऽपि ब्रह्मविद्याया न तदपेक्षेति चेत्—दृष्ट्युपासनानामपि कर्मणां प्रतिबन्धफलहेतुत्वादनभिसंहितफलत्वेनानुष्ठाने शीघ्रफलापादकत्वेन विद्योपकारकतया विद्यापेक्षितत्वात्; वेदप्रामाण्यस्यापेक्षितत्वात् संयोगरूपचोदनाख्यानां शब्दान्तराभ्याससंख्यागुणप्रकरणान्तराणां चापेक्षितत्वात् तेषां च पूर्वकाण्डप्रथमद्वितीयलक्षणयोरेवो-

क्तत्वात्, श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां तत्प्राबल्यदौर्बल्ययोरप्यपेक्षितत्वात् तेषां च तार्तीयत्वात्, क्रत्वर्थपुरुषार्थयोरपेक्षितत्वात् तयोश्च चातुर्थिकत्वात्, श्रुत्यर्थपाठप्रवृत्तिमुख्यकाण्डानां चापेक्षितत्वात् तेषां च पाञ्चमिकत्वात्, अधिकारज्ञानस्यापेक्षितत्वात् तस्य च षष्ठलक्षणसिद्धत्वात्, आनन्दादिगुणानामेकत्र श्रुतानां विद्यान्तरेषु संबन्धसाधनात् तस्य चातिदेशाधीनत्वात् अतिदेशेऽप्यपेक्षितप्रतिपत्तेः सप्तमाष्टमाधीनत्वात्, कर्मधीद्वाराप्यूहस्यापेक्षितत्वाच्च तस्य च नावमिकत्वात्, विद्यासु बाधसमुच्चयोक्तिदर्शनात् तस्य च दाशमिकत्वात्, तन्त्रोक्तेरपि तत्र तत्र दर्शनात् विद्याङ्गकर्मसु स्फुटत्वाच्च तन्त्रानुष्ठानस्य चैकादशलक्षणसिद्धत्वात्, विद्याङ्गकर्मानुष्ठाने गृहस्थस्याप्यधिकारसिद्धेः प्रासङ्गिकत्वाभिधानात् प्रसङ्गस्य द्वादशलक्षणाधीनत्वात्, देवतासु ब्रह्मदृष्ट्यादिविधानात् देवताज्ञानस्य देवताकाण्डाधीनत्वाच्च पूर्वकाण्डस्य कृत्स्नस्य हेतुत्वमुत्तरकाण्डस्य हेतुमत्त्वं च सिद्धम्। एकदेशतोऽपि हेतुता युक्ता, किमुत बहुतः। अत्रापौरुषेयत्वादिपरिहारेण वेदस्य प्रामाण्यं प्रसाध्यते। ननु—"शास्त्रयोनित्वात्" "अत एव च नित्यत्वम्" इत्यादौ तत्प्रामाण्यं प्रसाध्यत इति चेत्—न; ब्रह्मणः शास्त्रैकसमधिगम्यत्वपरत्वाच्छास्त्रयोन्यधिकरणस्य; तर्हि वेदः प्रमाणमप्रमाणं वेति विचारः। "अत एव च नित्यत्वम्" इत्यत्रापि जगतः प्रवाहानादित्वाभावे वेदस्यानित्यत्वशङ्कायां तत्परिहारमात्रस्य कृतत्वात्। न हि वेदस्य प्रामाण्याभावे तदर्थविचारोपपत्तिः। अथ तावन्मात्रापेक्षास्त्विति चेत्; तर्हि हेतुत्वं सिद्धम्, एकदेशतोऽपि हेतुत्वात्। फलसंयोगादयः शब्दान्तरादयश्च गुणोपसंहारपादे कृत्स्नश उपयुज्यन्ते; श्रुतिलिङ्गादयस्तु सर्वत्र; क्रत्वर्थपुरुषार्थता उद्गीथविद्यादौ; श्रुत्यर्थादयस्तु गतिचिन्तायाम्; अधिकारिता च साङ्गविद्यानुष्ठाने; विद्याविशेषेषु गुणविशेषाद्भिकृतानुष्ठानरूप ऊहो विद्यत एव। नन्वेवं हेतुत्वसिद्धौ पाणिनिस्मृत्यादेरपि हेतुता स्यात्, शब्दलक्षणस्य तदपेक्षितत्वादिति चेत्—सत्यम्; तस्यापि मीमांसाहेतुत्वेन स्वीकारात्; अङ्गिस्वाध्यायज्ञानहेतुभ्योऽङ्गज्ञानस्यार्थसिद्धत्वात्। अतः काम्यकर्मज्ञानस्य विरक्तिहेतुतया वेदान्तार्थविचारप्रवृत्तिहेतुत्वात् कर्मज्ञानमात्रस्य विद्याङ्गत्वेनोपयोगाद्वेदप्रामाण्यादेरुपयोगाच्च पूर्वोत्तरयोर्हेतुहेतुमत्ता सिद्धा। अत्र हेतुहेतुमद्भावोपपादनमभ्युच्चययुक्त्यपेक्षयोपन्याससौकर्याय।

**तत्त्वटीका**

ननु कर्मफलाल्पत्वादौ लिङ्गमात्रं दृष्टम्; यथाश्रुतविरुद्धप्रत्ययदाढर्याय प्राप्तिरपि वक्तव्या; कर्मस्वरूपनिरूपणं चात्र स्वयं प्रवृत्तेः प्रतिबन्धशान्त्यर्थम्; हेतुस्त्वनन्तस्थिरफलापातप्रतीतिरेव; सा कुतस्त्येत्यत्राह—**तथेति**; उक्तप्रकारेणास्य सूत्रस्याप्यैदमर्थ्यं यथा स्यात्तथेत्यर्थः। चोऽवधारणे। अत्र क्षयित्वोक्तिरक्षयित्वोक्तिश्चाल्पत्वादेरुपलक्षिका। निश्चितसंवादेनानिर्श्चितेऽर्थान्तरेऽपि श्रद्धासंवृद्ध्यै पूर्वं "तद्यथा" इत्यादिवाक्योदाहृतिः। **लोकः**; लोक्यः, भोग्यः। देशपरत्वे तु 'इह, अमुत्र' इत्याभ्यामनन्वयः। **कर्मचितः**; लौकिककर्मलब्धः। पुण्यचित इत्यविशेषोक्त्या निवृत्तिधर्मसाध्यस्यापि क्षयित्वभ्रमं निवारयितुमाह—**अन्तवदिति**। उपात्तवाक्यैकार्थ्यात् क्रियास्वरूपान्तवत्त्वस्यानपेक्षितवचनत्वाच्च फलद्वारात्रान्तवत्त्वोक्तिः। "यो वा एतदक्षरं गार्ग्यविदित्वास्मिन् लोके जुहोति यजते तपस्तप्यते बहूनि वर्षसहस्राणि" इति पूर्ववाक्यात् "यो वा एतदक्षरं गार्ग्यविदित्वास्माल्लोकात्प्रैति स कृपणः" इत्युत्तरवाक्याच्च 'अन्तवत्' इत्यस्य ब्रह्मवेदनरहितकर्मविषयत्वसिद्धौ 'पुण्यचितः' इत्यत्रोत्तरेषु च तद्विषयत्वं सुगमम्। ज्ञानरहितकर्मसु स्वर्गस्वाराज्यादिफलभेदवत् केषुचिन्नित्यफलभेदसंभवात् "सर्वेभ्यः कामेभ्यो ज्योतिष्टोमः" इति श्रवणाच्चात्रोपात्तं वाक्यं प्रायिकविषयं स्यादित्यत्राह—**न हीति**। **अध्रुवैः**; अध्रुवफलसाधनतया चोदितैरित्यर्थः; "ध्रुवं तत्" इति वाक्यखण्डान्वयान्नित्यफलार्थत्वाभावः ख्याप्यते। पुनरावृत्तिनियमवतः सर्वकर्मनिर्मूलनत्वायोगेन ध्रुवफलसाधनत्वाभावं द्रढयति—**प्लवा इति**। **अदृढाः**; तमसः पारं गमयितुमक्षमाः। "अष्टादशोक्तमवरं येषु कर्म। एतच्छ्रेयो येऽभिनन्दन्ति मूढा जरामृत्युं ते पुनरेवापि यन्ति।" इति ह्यत्र वाक्यशेषः। अथ सूत्रार्थानुगुणं कर्मणां नित्यफलसाधनत्वाभावनिश्चयस्य निर्वेदहेतुत्वं ब्रह्मज्ञानस्यानन्तफलत्वं च समुच्चित्य वदद्वाक्यमाह—**परीक्ष्येति**। इयं श्रुतिः सारे व्याख्याता—"ब्राह्मणः; वेदाभ्यासरतः। कर्मचितान्; कर्मणा संपादितान्। लोकान्; आराध्यक्षयित्वेन क्षयस्वभावान्। कर्ममीमांसया परीक्ष्य। अकृतः; नित्यः परमपुरुषः। कृतेन; कर्मणा। नास्ति; न संपद्यते। इति यो निर्वेदमायात्, स तद्विज्ञानार्थं गुरुमेवाभिगच्छेत् समित्पाणिः। श्रोत्रियम्; वेदान्तवेदिनम्। ब्रह्मनिष्ठम्; साक्षात्कृतपरमपुरुषस्वरूपम्। स च गुरुः सम्यगुपसन्नाय तस्मै येन विद्याविशेषेण तमक्षरं सत्यं परमपुरुषं विद्यात् तां ब्रह्मविद्यां

प्रोवाच ; प्रब्रूयादित्यर्थः, ‘स गुरुमेवाभिगच्छेत् तस्मै स विद्वान् प्रोवाच’ इत्यनन्वयात् अप्राप्तत्वाच्च ; विधावपि लिटो विधानात् ‘छन्दसि लुङ्लङ्लिटः इति’ इति। अत्र न्यायसिद्धानुवादांशे जातिवाचिनोऽपि ब्राह्मणशब्दस्य प्रकृतकर्मपरीक्षणौपयिकसाङ्गाध्येतृसमर्पणेनाजहल्लक्षणया त्रैवर्णिकविषयत्वार्थं “वेदाभ्यासरतः” इत्युक्तम्। ब्रह्म अणतीत्यपि ब्राह्मणशब्दं निर्ब्रुवन्ति। “आराध्यक्षयित्वेन” इति सुकृतविनाशोपलक्षणम्। “कर्ममीमांसया” इत्यर्थलभ्योक्तिः। अकृतशब्दस्य पुंलिङ्गतानुरोधात् वाक्यशेषशक्त्या च परमपुरुषो विशेष्यो दर्शितः। अत्र नास्तिशब्देनाकृतस्य स्वरूपनिषेधायोगात् कर्मणेत्यनेन चानन्वयात् उत्पत्तिनिषेधस्यानपेक्षितत्वात् “न संपद्यते” इत्युक्तम्। कृतशब्दस्य भावार्थव्यक्त्यै कर्मणेति प्रतिपदम्। तद्विज्ञानार्थम् ; आपातधीस्थस्याकृतस्य तस्य विशदबोधायेत्यर्थः। समित्पाणित्वमिह ब्रह्मविद्याश्रवणार्थोपनयनान्तरव्यञ्जनार्थमिति केचित्। उक्तं हि छान्दोग्ये जाबालं प्रति गौतमेन—“नैतदब्राह्मणो विवक्तुमर्हति समिधं सोम्याहरोप त्वा नेष्ये” इति। अन्ये त्वाहुः—अनुपनीते जाबाले युक्तमुपनयनम् ; अन्यत्र तु समित्पाणित्वोक्तिररिक्तपाणित्वोपलक्षणार्था ; दृश्यते हि वैश्वानरविद्यायाम्—“ते ह समित्पाणयः पूर्वाह्णे प्रतिचक्रमिरे तान् हानुपनीयैवैतदुवाच” इति। प्रजापतिवाक्ये चैकस्यैवेन्द्रस्य बहुषु प्रश्नेषु “समित्पाणिः पुनरेयाय” इत्यावर्त्यते। न हि तत्र बहुवारमुपनयनं दृष्टमिष्टं वा। सूत्रकारश्च “संस्कारपरामर्शात्” इत्येतावन्मात्रं वक्ष्यतीति। “एकां शाखामधीत्य श्रोत्रियः” इत्युक्तस्याधीतस्वाध्यायमात्रस्य प्रकृतानुपकारकतया “वेदान्तवेदिनम्” इति श्रोत्रियशब्दस्यात्राकामहतश्रोत्रियपरत्वं दर्शितम्। स्फुटप्रवचनक्षमत्वमदृष्टत उपकारकतमत्वं च ब्रह्मनिष्ठशब्दाभिप्रेतमित्याह—“साक्षात्कृतपरमपुरुषस्वरूपम्” इति। “प्रशान्तचित्ताय” इत्युक्तत्वात् शमोऽत्र बाह्यकरणव्यापारान्तरनिवृत्तिः। शमदमाविह श्रवणौपयिकावधानार्थौ ; “तस्मादेवंविच्छान्तो दान्तः” इत्यादौ तु श्रवणतो विदितार्थस्य विद्यार्थौ। ‘येन’ इत्यत्र लिङ्गव्यत्ययस्य क्लिष्टत्वात्सामान्योपक्रमत्वं द्योतयति—“विद्याविशेषेण” इति। तथा च प्रयुञ्जते “तत्र बाधकमभवत् क्षणभङ्गो वा बाह्यार्थभङ्गो वा” इत्यादि। स्वरूपतः स्वभावतश्च विकारं निवर्तयद्भ्यामक्षरसत्यपदाभ्यां प्रधानक्षेत्रज्ञव्यवच्छेद इत्यभिप्रायेणाह—“परमपुरुषम्” इति। संशयविपर्ययार्हवचनमपूर्णवचनं च क्षेप्तुं ‘तत्त्वतः’

इति विशेषणम्; "आचार्योऽप्यनाचार्यो भवति श्रुतात्परिहरमाणः" इति स्मरन्ति। वृत्तार्थकथनभ्रमनिरासायाह—"प्रब्रूयात्" इति। 'अभिगच्छेत्' इत्युपक्रमप्रतीत-विधिबाधेन व्यत्ययानुसरणं क्लिष्टम्; अतः 'प्रोवाच' इत्यस्य भूतपरत्वेऽनन्वय इत्यभि-प्रायेणाह—"स गुरुमेव" इति। नियमविधित्वमवधारणेन व्यञ्जितम्। प्रोवाचेत्यस्य विधिपरत्वे हेत्वन्तरमाह—"अप्राप्तत्वात्" इति। यद्यपि लाभाद्यपेक्षया कस्यचिद्रागतः प्रवृत्तिः, तथापि तन्निरपेक्षस्य गुरोः सच्छिष्यविषये धर्मार्थमिदं विधीयत इति न विरोधः। लिटो लिङर्थत्वस्य विशेषतोऽनुशिष्टत्वमप्याह—"विधावपि" इति। ब्रह्मज्ञानस्य परशब्दनिर्दिष्टब्रह्मप्रापकतया प्राकरणिकनित्यनिरतिशयानन्दप्रापकत्वमभिप्रे-त्याह—**ब्रह्मविदिति**। ब्रह्म प्राप्तस्यापि स्वर्गादिन्यायात्' "इमान् लोकान्" इत्यादिभिश्च पुनरावृत्त्यादिशङ्कां परिहर्तुमाह—**न पुनरिति**। मृत्युरिह मरणम्, "मोहो मृत्युः संमतो यः कवीनाम्" इत्याद्युक्तं वा। पाप्मनां निःशेषक्षये मृत्यूपलक्षितं सर्व-मनिष्टं न स्यात्, लोकानुसरणं चैच्छमिति भावः। तदेकदर्शनमिहोपायः, फलं वा। "न प्रेत्य संज्ञास्ति" इति विद्याप्रकरणस्थवाक्येन मुक्तस्य ज्ञानलोपशङ्कां निवर्तयन् मृत्युतत्कार्य-निवृत्तिं च व्यनक्ति—**न पश्य इति**। मुक्तस्य तदातनपरदुःखप्राक्तनस्वदुःखदर्शनेऽपि तयोः स्वाश्रितत्ववर्तमानत्वाभावान्न तं प्रति प्रतिकूलत्वम्। एवं हि बन्धदशायामपि दृष्टम्। तत्र तु परदुःखदुःखित्वं गतानुशोचनं च कर्मोपाधिकमेव; "न रोगं नोत दुःखताम्। सर्वं ह पश्यः पश्यति" इत्यादिना विशेषेण दृश्यमानेष्वपि स्वप्रातिकूल्य-दर्शनं नास्तीति हि स्थाप्यते। पश्योऽत्र "तदेकं पश्यति" इति समानप्रकरणात् ब्रह्मदर्शी जीवः। पश्यतीति व्युत्पत्त्या परमात्मन्यपि, "पश्यः पश्यति पश्यन्तम्" इत्यादि-प्रयोगदृष्टेः। ब्रह्मात्मकतया सर्वस्य दर्शनात्तदेकदर्शनसर्वदर्शनयोर्न विरोधः। न केवलं निर्व्यापारसार्वज्ञ्यमात्रम्, "अन्यराजानस्तेऽक्षय्यलोका भवन्ति" इत्याम्नातकर्म-मूलानीश्वरपारतन्त्र्यनिवृत्त्या स्वच्छन्दवृत्तिश्च स्यादित्यभिप्रेत्याह—**स स्वराडिति**। अत एवेश्वरपारतन्त्र्यस्थितावपि "स्वराट् स्वतन्त्रः" इति नैघण्टुकोक्तिर्न विरुध्यते। अमृतत्वस्योपायान्तरनिषेधश्रुत्या कर्मसाध्यामृतत्वोक्तेरन्यपरत्वं द्रढयति—**तमेवमिति**। अत्र च गुणविभूतिविशिष्टमहापुरुषपरामर्शात् जीवस्यैव निर्विशेषस्वरूपधिया पुरुषान्तरधिया वा मुक्तिः स्यादिति परेष्टं निरस्तम्। ऐक्यभेदाभेदबुद्ध्योरमृतत्वहेतुत्वं श्रुत्यैव क्षिप्तमित्याह—

**पृथगिति**। **ततः**; उपासनरूपात् पृथक्त्वमननादित्यर्थः। **तेन जुष्टः**, प्रेरकेण प्रीतिविषयीकृतः। अनेन स्थिरस्य परानुग्रहस्यैव फलद्वारतोक्तिः; "धातुः प्रसादात्" इति च श्रूयते। नन्वत्र "आमानं प्रेरितारं च" इति समुच्चित्य मननमुक्तम्; अतोऽन्यज्ञानस्यापि मोक्षहेतुत्वं भाति; सत्यम्; न तावता प्रेरकप्राधान्यमपह्नियते। "कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन्" इत्याद्यपि परविद्याङ्गजीवदर्शनपरम्। आदिशब्दो "भूयसां स्याद्बलीयस्त्वम्" इति न्यायेन वाक्यान्तरैरप्युक्तदृढीकरणार्थः। अथैभिरेव वाक्यैरपेक्षितज्ञप्तिं यथारुचि विचारप्रवृत्तिसंभवं च मन्वानः कश्चिद्ब्रह्मविचारस्य कर्मविचारानपेक्षत्वं चोदयति—**नन्विति**। चकार उद्ग्रन्थैरपि प्रत्युक्तिव्यञ्जितैः पूर्वचोद्यैः समुच्चयार्थः। आद्य एवकारो विचारनैरपेक्ष्यपरः; द्वितीयस्तु ज्ञानानुत्पत्तिनिरासार्थः। **मुमुक्षुः**; प्राग्भवीयपुण्यमहिमक्षीणकाम्यरुचिरित्याशयः। **किमर्था**; न दृष्टार्था, अन्यथापि मुमुक्षुत्वस्य ब्रह्मविचारस्य च संभवात्; नाप्यदृष्टार्था, अवैधत्वादिति भावः। अत्र प्रतिबन्द्या प्रतिवक्ति—**एवं तर्हीति**; धीमात्रतुष्ट्या त्यक्तकर्मविचारश्चेदित्यर्थः; 'एवं न प्रवर्तताम्' इति वान्वयः। अपिशब्दाभिप्रेतं हेतुं विवृणोति—**साङ्गेति**। त्वदुक्तादेवेत्यवधारणाभिप्रायः। **कृत्स्नस्य**; ब्रह्मतदुपास्त्यादेः। अत्रापातधीश्चेदिष्टप्रसङ्गः; न तया विचार्यत्वाभावः; निर्णयस्त्वमीमांसिते कथं स्यादिति मत्वा चोदकः पुनराह—**सत्यमिति**। अङ्गीकृतमर्थं व्यनक्ति—**अपातेति**। तावतापि न्यायैरनिर्णीततया "अन्नमत्ति" इत्यादिभिरल्पास्थिरफलधीः, असकृद्व्याकृताकाशप्राणादिकारणत्वसंशयः, "तान्येवानुविनश्यति" इत्यादिभिरात्मनाशभ्रमश्च न निवर्तेतेत्यभिप्रायेणाह—**तथापीति**। अनिस्तीर्णा प्रतिबन्दिरिति पश्यन् तत्फलत्वेनोत्तरमाह—; **तथैवेति**। **भवान्**; क्वचिदप्यापातधीमात्रादतृप्तो वाक्यान्तराण्यपि निर्दिधारयिषुस्त्वमिति भावः। अत्र हि कर्मभागेऽपि "अनन्तं ह वा अपारमक्षय्यं लोकं जयति; योऽग्निं नाचिकेतं चिनुते" इत्यादिभिरापाततोऽनन्तस्थिरफलधीरस्ति। ब्रह्मज्ञानफलं चानुविनाशादिश्रुत्या आत्यन्तिकप्रलयस्मृत्या चानर्थरूपमिव भाति। अतः स्वरसवृत्त्या प्रथमातिक्रमे कारणाभावात्कर्मविचारनैरपेक्ष्यहेतुर्नास्ति; तदिदमभिप्रेत्योक्तं सारे—"अधीतवेदस्य हि पुरुषस्य कर्मप्रतिपादनोपक्रमत्वाद्वेदानां कर्मविचारः प्रथमं कर्तव्य इति 'अथातो धर्मजिज्ञासा' इत्युक्तम्" इति।

### मूलभावप्रकाशिका

**तथा चेति ;** चस्त्वेवकारार्थः । यथा कर्मविचारन्यायानां कर्मफलानित्यत्वावगमकत्वं तथैवेत्यर्थः । दहरविद्यावाक्यमुदाहरति—**तद्यथेति** । **कर्मचितः**; राजसेवादिकर्मणा चित आर्जितः । **लोकः** ; लोक्यत इति लोकः, फलमित्यर्थः । अक्षरब्राह्मणगतवाक्यमुदाहरति—**अन्तवदेवेति** । "यो वा एतदक्षरं गार्ग्यविदित्वास्मिन् लोके जुहोति यजते तपस्तप्यते बहूनि वर्षसहस्राण्यन्तवदेवास्य तद्भवति" इति श्रुतिः ; भगवत्समाराधनत्वज्ञानपूर्वकमनुष्ठितमनभिसंहितफलं कर्म ब्रह्मविद्यां निष्पाद्य मुक्तिहेतुर्भवति, नान्यदित्यर्थः । 'न ह्यध्रुवैः प्राप्यते ध्रुवं तत्" इति कठवल्लीश्रुतिः, अध्रुवैः कर्मभिः ध्रुवं नित्यं तद्ब्रह्म न प्राप्यत इत्यर्थः । आथर्वणश्रुतिमुदाहरति—**प्लवा ह्येत इति** । अदृढाः प्लवाः ; संसारसागरतारणासमर्था इत्यर्थः। आथर्वणवाक्यान्तरमाह—**परीक्ष्येति** । **कर्मचितान्** ; कर्मसंचितान् कर्मसंपाद्यान् ; **लोकान् परीक्ष्य** ; मीमांसान्यायैर्निरूप्य ; **ब्राह्मणः**; अधीतसाङ्गसशिरस्कवेदः । 'यः' इत्यध्याहार्यं 'सः' इत्युत्तरत्र श्रवणात् । **अकृतः**; नित्यः; अत्र पुरुषो विशेष्यः, लिङ्गवशात् "अक्षरं पुरुषम्" इत्यनन्तरोक्तेश्च । **कृतेन**; कर्मणा ; **नास्ति** ; न सिध्यति, न लभ्यते । इतिकरणं द्रष्टव्यम् ; इति यो निर्वेदमायात्स तद्विज्ञानार्थं गुरुमेवाभिगच्छेत् । एवकारेण नियमविधित्वमवगम्यते । **समित्पाणिः**; न रिक्तपाणिः; "रिक्तपाणिस्तु नोपेयाद्राजानं दैवतं गुरुम्" इति हि स्मर्यते । **श्रोत्रियम्** ; श्रुतत्वेदान्तम् ; **ब्रह्मनिष्ठम्** ; ब्रह्मसाक्षात्कारवन्तम् ; श्रुतवेदान्तोऽपि रुचिभेदादब्रह्मनिष्ठो नोपगन्तव्य इति भावः । अभिगच्छेदित्यन्वयः । शमः बाह्येन्द्रियनियमनरूपः, 'प्रशान्तचित्ताय' इत्यन्तःकरणनियमनस्योक्ततया पारिशेष्यात् । एतेन श्रवणोपयुक्तमवधानं विवक्षितम्, न तूपासनोपयुक्तात्यन्तेन्द्रियजयादिः । तस्मै स विद्वान् प्रोवाचेत्यन्वयः । येनेति निर्देशो विज्ञानाभिप्रायः; तद्विज्ञानार्थमिति हि प्रकृतम् ; सामान्यतः कारणाभिप्रायो लिङ्गव्यत्ययो वा । **अक्षरम्** ; स्वरूपेणाविकारम् । **सत्यम्** ; गुणतोऽप्यविकारम्; आभ्यामचिज्जीवव्यावृत्तिः। तां **ब्रह्मविद्यां प्रोवाच**; प्रब्रूयादित्यर्थः। इति वेदान्तसारे व्याख्यातम् । कर्मफलानित्यत्वप्रतिपादकवाक्यान्युक्त्वा ज्ञानफलनित्यत्वप्रतिपादकवाक्यान्युदाहरति—**ब्रह्मविदिति** । **न पुनरिति**; मृत्युः प्रमादो मोहो वा; "मोहो मृत्युः संमतो यः कवीनम्" "प्रमादं वै मृत्युमहं ब्रवीमि" इत्युभयत्र मृत्युशब्दव्यपदेशात् । प्रमादो यथावस्थितात्मस्वरूपाज्ञानम् ; मोहो भ्रान्तिः ।

**तत् ब्रह्म एकम्** ; निःसमाभ्यधिकमित्यर्थः । "न पश्यो मृत्युं पश्यति न रोगं नोत दुःखताम्" इति भूमविद्यावाक्यम् । **पश्यः**; ब्रह्मदर्शी । **दुःखताम्** ; जगतः प्रतिकूलतामित्यर्थः । "स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नात्मरतिरात्मक्रीड आत्ममिथुन आत्मानन्दः स स्वराड् भवति" इति भूमविद्यावाक्यम् । अत्र भूमशब्दितपरमात्मविषयकमनननिदिध्यासनसाक्षात्कारवानात्मरतिर्भवति ; आत्मन्येव रतिर्यस्य स तथोक्तः । स्रक्चन्दनादिजन्यप्रीतिस्तु रतिः । उद्यानादिजन्या प्रीतिः क्रीडा । स्त्रीसंभवा प्रीतिर्मिथुनम् । विभूतिजन्या प्रीतिरानन्दः ; सर्वविधसुखानुभवोऽप्यात्मसुखान्तर्गत इत्यर्थः । **स्वराट्** ; स्वयमेव राजा, विधिनिषेधाकिङ्करः, अकर्मवश्य इति यावत् । **तमेवं विद्वानमृत इह भवति;** तच्छब्देन "वेदाहमेतं पुरुषम्" इति पूर्वनिर्दिष्टः पुरुषः परामृश्यते । एवंशब्देन "आदित्यवर्णं तमसस्तु पारे" इति पूर्वनिर्दिष्टादित्यवर्णत्वतमःपारवर्तित्वादिप्रकारः परामृश्यते । **अमृतः** ; मुक्तः । ईयते प्राप्यत इति अयनं मोक्षः । श्वेताश्वतरवाक्यमुदाहरति—**पृथगात्मानमिति** । आत्मानं नियन्तारमीश्वरं च नियाम्यत्वनियन्तृत्वादिना पृथङ् मत्वा । **ततः** ; पृथक्त्वज्ञानात् । **तेन** ; परमात्मना । **जुष्टः** ; प्रीतिविषयीकृतः; अनुगृहीतोऽमृतत्वमेतीत्यर्थः । नन्वित्यादिग्रन्थो निगदव्याख्यातः । परमुखेन समाधातुं प्रतिबन्दीमाह—**एवं तर्हीति** ।

---

## लघुपूर्वपक्षः

**श्रीभाष्यम्**

ननु च ब्रह्मजिज्ञासा यदेव नियमेनापेक्षते तदेव पूर्ववृत्तं वक्तव्यम्। न धर्मविचारापेक्षा ब्रह्मजिज्ञासायाः, अधीतवेदान्तस्यानधिगतकर्मणोऽपि वेदान्तवाक्यार्थविचारोपपत्तेः। कर्माङ्गाश्रयाण्युद्गीथाद्युपासनान्यत्रैव चिन्त्यन्ते; तदनधिगतकर्मणो न शक्यं कर्तुमिति चेत्—अनभिज्ञो भवान् शारीरकशास्त्रविज्ञानस्य; अस्मिन् शास्त्रेऽनाद्यविद्याकृतविविधभेददर्शननिमित्तजन्मजरामरणादिसांसारिकदुःखसागरनिमग्नस्य निखिलदुःखमूलमिथ्याज्ञाननिबर्हणायात्मैकत्वविज्ञानं प्रतिपिपादयिषितम्; अस्य हि भेदावलम्बिकर्मज्ञानं क्वोपयुज्यते? प्रत्युत विरुद्धमेव। उद्गीथादिविचारस्तु कर्मशेषभूत एव ज्ञानरूपत्वाविशेषादिहैव क्रियते। स तु न साक्षात्संगतः। अतो यत्प्रधानं शास्त्रं तदपेक्षितमेव पूर्ववृत्तं किमपि वक्तव्यम्। बाढम्; तदपेक्षितं च कर्मविज्ञानमेव, कर्मसमुच्चिताज्ज्ञानादपवर्गश्रुतेः; वक्ष्यति च "सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्" इति। अपेक्षिते च कर्मण्यज्ञाते केन समुच्चयः केन नेति विभागो न शक्यते ज्ञातुम्। अतस्तदेव पूर्ववृत्तम्। नैतद्युक्तम्; सकलविशेषप्रत्यनीकचिन्मात्रब्रह्मविज्ञानादेवाविद्यानिवृत्तेः। अविद्यानिवृत्तिरेव हि मोक्षः। वर्णाश्रमविशेषसाध्यसाधनेतिकर्तव्यताद्यनन्तविकल्पास्पदं कर्म सकलभेददर्शननिवृत्तिरूपाज्ञाननिवृत्तेः कथमिव साधनं भवेत्?

**श्रुतप्रकाशिका**

एवं फलद्वारा हानाय कर्मज्ञानापेक्षा दर्शिता। अथ स्वरूपेणोपादानाय च नियमेन कर्मज्ञानापेक्षास्तीति दर्शयितुं मुमुक्षोः कर्मणो नियमेनानपेक्षितत्वलक्षणं परपक्षमुपक्षिपति—ननु चेति। नियमेनापेक्षितत्वस्य विवक्षितेतरगामित्वव्युदासार्थः प्रथम

एवकारः; द्वितीयस्तु नियमेनानपेक्षितस्य पूर्ववृत्तत्वनिवृत्त्यर्थः। ततः किमित्यत्राह— **न धर्मेति**। कुत इत्यत्राह—**अधीतेति**। ये ब्रह्मविद्याधिकारिणस्तेषां सर्वेषामपेक्षितं हि नियमेनापेक्षितम्; वेदान्तमात्राध्यायिनस्तु तत्रैवापातप्रतीतिर्बुभुत्सा च स्यात्; तस्य कर्मविषयापातप्रतीत्यभावान्न कर्मविचारस्य नियमेनापेक्षेत्यर्थः। यद्वा अधीतकृत्स्नवेदस्यापि जन्मान्तरसुकृतवशाद्वेदान्तवाक्य एव बुभुत्सा जायते चेत्तस्य न कर्मविचारापेक्षेति। तदा 'अधीतवेदान्तस्य' इति पदमयोगव्यवच्छेदपरं, न त्वन्ययोगव्यवच्छेदपरम्। कृत्स्नवेदाध्ययनादपेक्षितवेदान्तभागोऽप्यधीत एवेत्यर्थः। एवं हानार्थमपि कर्मणो ज्ञातव्यत्वं निषिद्धम्। उपादानार्थमपि न ज्ञातव्यमित्युपपादयितुं वेदान्तमात्रबुभुत्सोरपि कर्मविचारापेक्षां शङ्कते— **कर्माङ्गेति**। एकस्य साम्नः पञ्च भागाः सन्ति; ते प्रस्तावोद्गीथप्रतिहारोपद्रवनिधनाख्याः। एते भागा भक्तिशब्दाभिधेयाः। तासु पञ्चसु भक्तिषु प्रस्तावो हिंकारपूर्वं गीयते; उद्गीथः प्रणवपूर्वं गीयते। तत्र पञ्चविधसामोपासनमपि क्वचिद्विधीयते "लोकेषु पञ्चविधं सामोपासीत" इति। क्वचित्सामावयवेषु पञ्चस्वेकैकावयवोपासनं विधीयते। क्वचिच्चावयवावयवभूतप्रणवाद्युपानं विधीयते[१]—"ओमित्येतदक्षरमुद्गीथमुपासीत" इति। **कर्माङ्गाश्रयाणि**; कर्माङ्गभूतोद्गीथादिविषयाणि। अनधिगतकर्मण उद्गीथाद्युपासनचिन्तनं न शक्यं कर्तुमिति प्रतिज्ञा। 'कर्माङ्गाश्रयाणि' इति हेतुगर्भविशेषणम्। 'कर्माङ्गोद्गीथाद्याश्रयाण्युपासनानि' इत्युक्ते सति हेतावुद्गीथशब्दस्य वैयर्थ्यं स्यात्; उपासनमात्रस्य च पक्षीकारः प्रतीयेत। अतो यथोक्तैव वचनव्यक्तिर्युक्ता। अनधिगते कर्मण्युद्गीथादिविषयोपासनचिन्ताया अशक्यत्वात् कर्मविचारोऽपेक्षित इति चेदित्यर्थः। सोपालम्भं परिहरति—**अनभिज्ञ इति**। शास्त्रे प्रधानतया प्रतिपाद्यं ज्ञानम् 'इदम्' इति त्वया न ज्ञातमित्यर्थः। अत्र किं प्रधानप्रतिपाद्यं ज्ञानमित्यत्राह—**अस्मिन्निति**। भेदो ज्ञातृज्ञेयज्ञानरूपः। वैविध्यं तदवान्तरविधाबाहुल्यम्। एवंविधभेददर्शनस्य हेतुरविद्या; तस्याः को हेतुरित्यनवस्थापरिहारार्थमनादिशब्दः। एवमविद्याकृतभेददर्शननिमित्तकं जन्मजरामरणादिकमेव सांसारिकं दुःखम्। आदिशब्देन नरकगर्भवासादिग्रहणम्। संसारः प्रकृतिसंबन्धः, तत्प्रभवं

---

१. 'विधीयते' इत्यस्यानन्तरं क्वचित्कोशेषु 'तत्रोद्गीथावयवभूतप्रणवोपासनं विधीयते' इत्यधिकः पाठो दृश्यते; स तु न संगत इति भावप्रकाशिकायामुक्तम्।

सांसारिकम् ; निरसनीयत्वाय दुःखरूपत्वोक्तिः । सागरशब्दस्तदानन्त्यपरः । निमग्नस्येति दुःखनिवृत्त्युपायापेक्षाहेतुतयोक्तमधिकारिस्वरूपमुक्तम् । प्रयोजनमाह—**निखिलेति** । मिथ्याज्ञानं भ्रान्तिज्ञानम्; "दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायात्" इति प्रयोगात् । भ्रान्तिज्ञानं च भेददर्शनम् । यद्वा मिथ्याभूतमज्ञानं मिथ्याज्ञानम् ; ज्ञाननिवर्त्यत्वाय मिथ्याशब्दः; तस्य निबर्हणाय । तन्निबर्हणमेव मोक्ष इत्यभिप्रायः। तत्साधनं किमित्यत्राह—**आत्मैकत्वविज्ञानमिति** । सर्पभ्रमस्य रज्जुयाथात्म्यज्ञानं हि निवर्तकं, न तु कर्मविशेषः ; एवं भेददर्शनस्याविद्याकृतत्वादैक्यज्ञानमेव तन्निवर्तकमिति तत्रैव तात्पर्यं वेदान्तवाक्यानामित्यर्थः । ततः किमित्यत्राह—**अस्य हीति** । **क्वोपयुज्यते**? न कुत्रचित् ; ज्ञानस्वरूपोत्पत्तौ, तत्फलोत्पत्तौ, ज्ञानोत्पत्तिसाधनानुग्रहे वा नोपयुज्यत इत्यर्थः । न केवलमुपयोगाभावः, प्रतिकूलफलत्वमपीत्याह—**प्रत्युतेति** ; द्वैतवासनाजनकत्वादित्यभिप्रायः । तथाप्युपनिषत्स्वधीतत्वात् ब्रह्ममीमांसायां निरूप्यमाणत्वाच्चोद्गीथाद्युपासनं ब्रह्मविद्यापेक्षितमित्युद्गीथादिविचारः साक्षात्संगत इत्यत्राह—**उद्गीथादीति** । तर्हि कथमुपनिषत्स्वध्ययनं, ब्रह्मविचारे तद्विचारश्च? इत्यत्राह—**ज्ञानरूपत्वाविशेषादिति** । ज्ञानरूपत्वसाम्याद् बुद्धिस्थतया कृतः, न तु प्रधानार्थोपयोगित्वादित्यर्थः । ततः किमित्यत्राह—**स त्विति** । तुशब्दद्वयं शङ्काद्वयव्यावर्तकम् । प्रधानप्रतिपाद्योपयुक्तस्यैव पूर्ववृत्तत्वं निगमयति—**अत इति** । **किमपि** ; कर्मविचारादन्यदिति भावः । प्रधानार्थोपयोगित्वेन संगतिः साक्षात्संगतिः ; येन केनाप्याकारेण साम्याद्बुद्धिस्थत्वं प्रसंगात्सङ्गतिः । अतः प्रासङ्गिकोद्गीथाद्युपासनचिन्तापेक्षितस्य प्रधानार्थविरुद्धस्य कर्मविचारस्य न पूर्ववृत्तता युक्ता, अपितु प्रधानप्रतिपाद्यात्मैकत्वविज्ञानापेक्षितमेव किमपि पूर्ववृत्तं वक्तुं युक्तमित्युक्तं भवति । अत्र भास्करीयाः प्रत्यवतिष्ठन्ते—**बाढमिति** । बाढमित्यर्धाङ्गीकारे ; यत्प्रधानं शास्त्रं तदपेक्षितमेव पूर्ववृत्तमित्येतावन्मात्रविषयोऽङ्गीकारः । **तदपेक्षितं चेति** प्रतिज्ञा । त्वया यदनपेक्षितमित्युक्तं तदेवापेक्षितमित्येवकाराभिप्रायः । कुत इत्यत्राह—**कर्मसमुच्चितादिति** ; समुच्चितशब्दः साहित्यमात्रपरः, न समसमुच्चयपरः । "अस्मद्विद्यात्मविद्या चेति समुच्चित्योपदेशात्" इत्यत्र समुच्चित्यशब्दवत् । 'कर्मज्ञानाभ्याम्' इति न निर्दिष्टम् ; अपि तु 'कर्मसमुच्चिताज्ज्ञानात्' इति विशेषणविशेष्यभावेन निर्दिष्टम् ; अतो ज्ञानप्राधान्यमवगम्यते ; कर्माङ्गकाज्ज्ञानादित्यर्थः। श्रुतिश्च "यज्ञेन दानेन" इत्यादिर्विवक्षिता ।

कर्मणो विद्याङ्गत्वे सूत्रकाराभिमतिं दर्शयति—**वक्ष्यति चेति**। चः प्रतिपादकसमुच्चये। अङ्गतया कर्मणोऽनुष्ठानमपेक्षितमस्तु; तज्ज्ञानस्य कथं पूर्वभावित्वम्? कर्मज्ञानं ब्रह्मविचारपाश्चात्यं किं न स्यात्? इत्यत्राह—**अपेक्षिते चेति**। प्रयाजादिवन्निष्पन्नस्य करणस्य फलोत्पत्तिदशायामनुग्राहकत्वेनाङ्गतयापेक्षा विवक्षिता। तृतीयस्य चतुर्थे पादे समावृत्ताकृतदारमृतदारादीनामाश्रमविशेषवर्तिनां च ब्रह्मविद्यानिष्ठानां कर्मस्वनुष्ठेयाननुष्ठेयविभागस्य निरूपयिष्यमाणत्वमभिप्रेत्योक्तम्—**केन समुच्चयः केन नेतीति**। यद्वा नित्यनैमित्तिकयोः समुच्चयः, न तु काम्यनिषिद्धयोरिति विभागो न ज्ञायत इत्यर्थः। अयमर्थः—पदार्थज्ञानपूर्वकं हि वाक्यार्थज्ञानम्; "यज्ञेन दानेन" इत्यादिवाक्ये यज्ञादिकर्मणां पदार्थभूतत्वात्, वाक्यार्थज्ञानस्य च पदार्थज्ञानपूर्वकत्वाद्यज्ञादिकर्मविचारस्य पूर्वभावित्वम्; न हि "व्रीहीनवहन्ति" इत्यादि वाक्यार्थज्ञानं व्रीह्यादिपदार्थज्ञानेन विनोपपद्यते, पदार्थसंसर्गरूपत्वाद्वाक्यार्थस्य। ननु 'गामानय' इत्यादिवाक्यात् व्युत्पत्तौ गवानयनादिरूपं वाक्यार्थं पूर्वं प्रतिपद्यावापोद्वापमुखेन पश्चात् पदार्थप्रतिपत्तेर्न पदार्थपूर्वकत्वनियमो वाक्यार्थज्ञानस्य। उच्यते—व्युत्पन्नाच्छब्दादर्थप्रतिपत्तौ सर्वत्र पदार्थज्ञानपूर्वकमेव वाक्यार्थज्ञानम्। व्युत्पत्तिदशायां तु प्रमाणान्तरेण शब्दान्तरेण वा वाक्यार्थावगमः पूर्वं स्यात्; न तु तस्मादेव शब्दात्, तस्यागृहीतसंबन्धत्वेन बोधकत्वायोगात्। व्युत्पत्तावपि न वाक्यार्थधियः पूर्वभावनियमः; अम्बातातमातुलादिपदानां पदान्तरासंसृष्टानामेव प्रथमव्युत्पत्तिदर्शनात्, 'अस्य शब्दस्यायमर्थः' इति व्युत्पत्तौ वाक्यार्थज्ञानस्य पूर्वभावाभावाच्च। न चास्मिन्नेव वाक्ये यज्ञादिशब्दव्युत्पत्तिसंभवः, विविदिषानिष्पत्तिरूपवाक्यार्थस्याप्रत्यक्षत्वेन गवानयनादाविव व्युत्पत्त्यनुपपत्तेः। अतः पदार्थज्ञानपूर्वकं वाक्यार्थज्ञानमित्युक्तम्। बाढमित्यादिकं सिद्धान्तिनश्चोद्यपरमिति च व्याख्यातृभिर्व्याख्यातम्; तदानीमपि पदार्थवाक्यार्थभावः क्रमविशेषहेतुतया विवक्षितः। किंच 'अपेक्षिते च' इत्यङ्गतयापेक्षितत्वस्य विवक्षितत्वात्, कर्मणां च ज्ञानोत्पादकतया तदङ्गत्वात्, उत्पादकोत्पाद्ययोः पौर्वापर्यनियमाद्विचारविषययोः कर्मज्ञानयोः पूर्वापरभावेन तच्छेषभूतयोर्विचारयोरपि तत्क्रमभाक्त्वं न्याय्यमिति चाभिप्रायः। शेषभूतस्य शेषिक्रमानुरोधित्वं हि न्यायसिद्धम्; यथा—"सारस्वतौ होमौ भवतः" इति युगपदुत्पन्नयोरपि सारस्वतहोमयोर्याज्यापुरोनुवाक्यामन्त्रानुसारेण सरस्वतीयागस्य पूर्वभावे सरस्वद्यागस्य पश्चाद्भावे च प्राप्ते तदङ्गा-

नामपि तेनैव क्रमेणानुष्ठानं निर्णीतम्। दृष्टान्ते दार्ष्टान्तिके च शेषिणोः क्रमनिश्चायकहेतुवैषम्यमेव। तयोः क्रमे निश्चिते शेषस्य शेषिक्रमानुरोधित्वं तत्र चात्र च तुल्यम्। एवं चोपासनस्यैव विचारं प्रति शेषित्वात् तृतीयलक्षणे कृतस्योपासनचिन्तनस्यैव कर्मविचारापेक्षया पश्चाद्भाव इति न वाच्यम्; विद्याविषयतत्फलचिन्तनस्यापि तदपेक्षितत्वेन कृत्स्नाया अपि ब्रह्ममीमांसायाः कर्मविचारपश्चाद्भावप्राप्तेः। निगमयति—**अत इति**। बाढमित्यादेः सिद्धान्तिचोद्यपरत्वादपि भास्करमतपरत्वं तूचितम्; "कर्मसमुच्चिताज्ज्ञानादपवर्गश्रुतेः" इत्यस्य ग्रन्थस्य भास्करीयभाष्ये श्रूयमाणत्वात्, अङ्गभावस्य तदभ्युपगतत्वेन तद्विषयसूत्रोपादानाविरोधाच्च शब्दतोऽर्थतश्च भास्करमतप्रत्यभिज्ञानात्, सिद्धान्तिचोद्यस्यापि तदन्तर्भावाच्च। भास्करपक्षं यादवपक्षं चोपजीव्य बाढमित्यादिना पार्श्वस्थश्चोदयतीति च निर्वाहः सांप्रदायिकः। तत्रैवं योजना—**कर्मसमुच्चितादिति**; समसमुच्चयो विवक्षितः। **कर्मसमुच्चिताज्ज्ञानादिति** विशेषणविशेष्यभावेन निर्देशो ज्ञानस्य मोक्षोपायत्वप्रसिद्धिप्राचुर्यनिबन्धनः। श्रुतिश्च "विद्यां चाविद्यां च" इत्यादिः। अस्मिन्वाक्ये मृत्युशब्द उपेयप्राप्तिविरोधिकर्मवाची। प्रतिबन्धनिवृत्तिः ब्रह्मप्राप्तिश्चेति साध्यद्वयम्, क्रमेण कर्म ज्ञानं चेति साधनद्वयमिति हि यादवप्रकाशीयैरभ्युपगतम्। अतो "विद्यां चाविद्यां च" इति वाक्ये पूर्वखण्डः साधनद्वित्वपरः, उत्तरखण्डस्तु साध्यद्वित्वपर इति तेषां निर्वाहः। **वक्ष्यति चेति** चशब्दः प्रतिपाद्यसमुच्चये; अङ्गभावं च वक्ष्यतीत्यर्थः। ज्ञानोत्पत्तेः पश्चात्कर्मणो ब्रह्मप्राप्तौ प्रतिबन्धनिवर्तकत्वं, ज्ञानात् पूर्वं कर्मणो ज्ञानोत्पादकतया तदङ्गत्वमपि हि तदभ्युपगतम्। अङ्गभावपरं सूत्रमुपादत्ते—**सर्वापेक्षेत्यादि**। इदं सूत्रमङ्गाङ्गिभावपरम्, "सहकारित्वेन च" इति सूत्रं समसमुच्चयप्रतिपादकमिति हि तेषां प्रक्रिया। अङ्गभावे समुच्चये च श्रुतिवाक्ये सूत्रे चोदाहर्तव्येऽपि ग्रन्थलाघवार्थं समुच्चये श्रुतिरङ्गभावे सूत्रं चोदाहृतम्। अङ्गभावप्रतिपादकवाक्यविषयसूत्रोपादानेन भास्करमतं चावलम्बितं भवति। एवमुभयथा कर्मणोऽपेक्षा दर्शिता; ततः किमित्यत्राह—**अपेक्षिते चेति**; समप्रधानतया अङ्गतया चापेक्षित इत्यर्थः। अन्यत्सर्वं पूर्ववत्। यद्यपि यादवप्रकाशमते कर्मविचारस्य पूर्ववृत्तत्वमनभिमतं, तथापि समुच्चयेनाङ्गतया च कर्मणोऽपेक्षितत्वस्य तदुपपादितत्वात्तावन्मात्रमुपजीव्य पार्श्वस्थेन मतद्वयावलम्बिना चोदयित्रा पूर्ववृत्तत्वापादनमुखेन

चोदितमिति न निगमनग्रन्थविरोधः। समुच्चयशब्दस्य प्रधानतयान्वयस्वारस्यात् अङ्गत्वपरसूत्रोपादानात् तदनन्तरं साध्यद्वित्वस्य साधनद्वित्वस्य च निराकरिष्यमाणत्वाच्च मतद्वयावलम्बेन चोदितमिति निर्वाहः पूर्वाचार्यैः कृतः। अत्र प्रतिवदति—**नैतद्युक्त मिति**। हानार्थं कर्मणां ज्ञातव्यत्वं प्रागेव प्रतिक्षिप्तम्। वेदान्तमात्राध्यायिनः कर्मविषयापातप्रतीत्यभावेन कर्मविचारनैरपेक्ष्यवचनात् सुकृतवशाद्वेदान्तमात्रबुभुत्सावतः कर्मज्ञानानपेक्षावचनाच्चात्रोपादानार्थं कर्मणो ज्ञातव्यत्वं निराचिकीर्षुः समसमुच्चयेनाङ्गभावेन च द्विविधेऽप्युपादाने समसमुच्चयार्थमुपादानं प्रथमं निराकर्तुं साधनद्वित्वं साध्यद्वित्वं च वाक्यद्वयेन प्रतिक्षिपति—**सकलविशेषेत्यादिना**। यद्वा बाढमित्यादिग्रन्थो भास्करमतेन सिद्धान्तिमतेन वा चोद्यपरः, तदानीं पूर्वपक्षी संभावितसमस्तप्रकारेण कर्मणोऽपेक्षां प्रतिक्षेप्तुकामः किं त्वया समसमुच्चयो विवक्षितः, उताङ्गभाव इति विकल्पमभिप्रेत्य प्रथमं समसमुच्चयपक्षं प्रतिक्षिपतीति निर्वाह्यम्। **सकलविशेषाः**; सजातीयविजातीयस्वगतव्यावृत्त्यन्वयरूपविशेषाः; तेषां प्रत्यनीकं सर्पाद्याकाराणां रज्जुत्वमिव तेषां निवर्तकमिति भावः। **चिन्मात्रमिति**; मात्रचा[1] ज्ञातृत्वज्ञेयत्वव्यावृत्तिः। यद्वा सकलविशेषप्रत्यनीकशब्देन सजातीयविजातीयभेदप्रत्यनीकत्वं, चिन्मात्रमिति मात्रचा स्वगतभेदशून्यत्वं च विवक्षितम्। प्रत्यनीकशब्देन नित्यानर्हत्वं विवक्षितम्; न हि शुक्तिशकलं कदाचिद्रजतत्वसंबन्धार्हम्; नित्यानर्हत्वादेव हि शुक्तिज्ञानस्य रजतत्वनिवर्तकत्वम्। **ब्रह्मविज्ञानादेवाविद्यानिवृत्तेरिति**; रज्जुत्वज्ञानादेव हि सर्पत्वनिवृत्तिः, न तु कर्मणेति भावः। एवं साधनद्वित्वं निरस्तम्। कथं साधनद्वित्वनिरासः? साध्यद्वित्वं हि विद्यत इति शङ्कायां साध्यद्वित्वं व्युदस्यति—**अविद्यानिवृत्तिरेव हि मोक्ष इति**; ब्रह्मणो नित्यप्राप्तत्वात् प्रतिबन्धनिवृत्तिरेव हि साध्या, न तत्प्राप्तिः। हिशब्दस्यायमभिप्रायः—या प्रतिबन्धनिवृत्तिः कर्मसाध्या त्वयोक्ता, सैव ज्ञानसाध्या श्रुतिस्मृतिसूत्रैरभिहिता "तमेव विदित्वातिमृत्युमेति" "ज्ञात्वा देवं मुच्यते सर्वपाशैः" "निचाय्य तं मृत्युमुखात् प्रमुच्यते" "क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे" "एवमेवंविदि पापं कर्म न श्लिष्यते" "ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा" "तदधिगम उत्तरपूर्वाघयोः" इत्यादिभिः। तस्माद्वाक्यद्वयेन साध्यसाधनद्वित्वं नास्तीत्युक्तं भवति। अविद्यानिवृत्तिरेव मोक्षोऽस्तु; ततः किं कर्मनै-

1. मात्रच्प्रत्ययोपपत्तिः २२७ पुटे द्रष्टव्या।

रपेक्ष्यस्य ? इत्यत्राह—**वर्णाश्रमेति** ; अनेन पदेन पूर्वोक्तं कर्मणो भेदावलम्बित्वं विवृतं भवति । आदिशब्देन निषिद्धानि प्रायश्चित्तकर्माणि च विवक्ष्यन्ते; अनन्तशब्देन वर्णादीनां बाहुल्यम् । विकल्पो भेदः । **सकलभेददर्शननिवृत्तिरूपाज्ञाननिवृत्तेरिति** ; मूलाज्ञाननिवृत्तेः फलं हि भेददर्शननिवृत्तिः ; अतो भेददर्शननिवृत्तिरज्ञाननिवृत्त्यन्तर्गतेत्यर्थः । **कथमिव साधनम्** ? न कथंचिदपीति यावत् ।

### भावप्रकाशिका

**विवक्षितेतरगामित्वव्युदासार्थः प्रथम एवकार इति** ; विवक्षितं साधनचतुष्टयम्, तदितरः कर्मविचारः । अत्र केचित्—यच्छब्दान्वित एवकारः तावत्खल्वादिशब्दवत् वाक्यालङ्कारार्थ एव ; न हि 'ब्रह्मजिज्ञासा यन्नियमेनापेक्षते तदेव पूर्ववृत्तं वक्तव्यम्' इत्यस्मादधिकस्यार्थस्यैवकारसहिताद्वाक्यात्प्रतिपत्तिरस्ति ; अस्य वाक्यस्य नियमेनानपेक्षितकर्मविचारपूर्ववृत्तत्वव्युदासमात्रपरत्वेन कर्मविचारे नियमेनापेक्षितत्वव्युदासपरत्वाभावादिति वदन्ति । तदेतदेवकारार्थानभिज्ञानविजृम्भितम् । विशेष्यसंगतो ह्येवकारो विशेषणस्य तदितरयोगव्यवच्छेदार्थः ; 'पार्थ एव धनुर्धरः' इत्युक्ते हि धनुर्धरत्वरूपविशेषणस्य पार्थेतरगामित्वं व्यवच्छिनत्त्येवकारः ; 'पार्थ एव धनुर्धरः' इति वाक्यस्य 'पार्थादन्यो धनुर्धरो न' इत्यर्थः । अत एव "षड्विंशतिरित्येव ब्रूयात्" इत्यत्र एवकारोपबन्धात् षड्विंशतिमन्त्रो न विधीयते ; अपि तु तदितरमन्त्रो निषिध्यत इति पूर्वतन्त्रे निर्णीतम् । ततश्च 'यदेव नियमेनापेक्षते' इति वाक्यस्यायमर्थः—यद्व्यतिरिक्तं नियमेन नापेक्षितं तद्व्यतिरिक्तं न पूर्ववृत्तमिति । ततश्च प्रथम एवकारो नियमेनापेक्षितत्वस्य यच्छब्दार्थातिरिक्तगामित्वव्यवच्छेदार्थकः, द्वितीयस्तु यच्छब्दनिर्दिष्टात् तच्छब्दार्थादतिरिक्तस्य पूर्ववृत्तत्वव्युदासकः । इयांस्तु विशेषः—प्रथम एवकारोऽनुवादी; द्वितीयस्तु पुरोवादीति । वेदान्तमात्राध्ययनस्याशास्त्रीयत्वादाह—**यद्वा अधीतकृत्स्नवेदस्यापीति । न त्वन्ययोगव्यवच्छेदपरमिति** ; पूर्वभागाध्ययनव्यवच्छेदपरं नेत्यर्थः । ननु "साम्ना स्तुवीत" इति साम्न एव स्तोत्रद्वारा कर्माङ्गत्वं नोद्गीथादेरिति शङ्कामुद्गीथादिस्वरूपप्रकाशनेन निराकुर्वन्नादिपदग्राह्यं चाह—**एकस्य साम्न इत्यादिना** । ननु कथं साम्नः पञ्चभागात्मकत्वम् ? हिंकारः, प्रस्तावः, आदिः, उद्गीथः प्रतिहारः, उपद्रवः, निधनम्, इति सप्तविधत्वं दृश्यते ; अत एव हि "सप्तविधं

सामोपासीत " इति विधिरित्याशङ्क्य हिंकारस्य प्रस्तावेऽन्तर्भावात्, आदिशब्दितस्यों-कारस्य चोद्गीथेऽन्तर्भावात् पाञ्चविध्ये नानुपपत्तिरित्यभिप्रयन्नाह—**प्रस्तावो हिंकारपूर्वं गीयत इति।** **एकैकोपासनं विधीयत इति**; " सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते सैषा देवता प्रस्तावमन्वायत्ता, सैषा देवतोद्गीथम-न्वायत्ता " इत्यादिष्विति शेषः। 'क्वचिच्चावयववावयवभूतप्रणवाद्युपासनं विधीयते-ओमित्येतदक्षरमुद्गीथमुपासीतेति' इति पाठः समीचीनः। मध्ये 'तत्रोद्गीथावयवभूत, प्रणवोपासनं विधीयते' इति क्वचित्पठ्यते, न तस्य सामीचीन्यं पश्यामः। " ओमित्येतद-क्षरमुद्गीथमुपासीत" इति वाक्यस्योद्गीथावयवप्रणवोपासनविधिपरत्वं च "व्याप्तेश्च समञ्जसम्" इत्यत्र स्पष्टीभविष्यति। केचित्तु कर्माङ्गाश्रयेति भाष्यस्यायमर्थः—कर्माङ्गाश्रयोद्गीथस्या-दिरुद्गीथादिः प्रणवः, तस्योपासनमिति; अत एवैतदभिप्रायेण 'तत्रोद्गीथावयवभूतप्रण-वोपासनं विधीयते' इत्युक्तमिति वदन्ति। " स्वायत्ते शब्दप्रयोगे " इति न्यायेन ' कर्माङ्गोद्गीथादिविषयाण्युपासनानि ' इति वक्तव्ये ' कर्माङ्गाश्रयाण्युद्गीथाद्युपासनानि ' इति भाष्ये वचनव्यक्तिः किमर्थमाश्रितेत्याशङ्क्याह—**कर्माङ्गोद्गीथाद्याश्रयाण्युपासनानीत्युक्त इति।** **उपासनमात्रस्य च पक्षीकारः प्रतीयेतेति**; ननु कर्माङ्गाश्रयत्वस्य हेतूकरणा-देव यावति हेतुर्विश्राम्यति तावत एव ग्रहणं भविष्यति, ' यथा पर्वतो धूमवत्त्वाद्वह्निमान् ' इत्यत्र धूमवतः पर्वतस्य ग्रहणं तथेति चेत्; सत्यम्; तादृशन्यायप्रतिसंधानाभावदशाया-मुपासनमात्रपक्षीकारप्रतीतिर्जायेत। अत एव 'प्रतीयेत' इति प्रतीतिमात्रमापादितम्। भाष्ये—**अनभिज्ञो भवान् शारीरकशास्त्रविज्ञानस्येति**; शास्त्रप्रतिपाद्यं विज्ञानं शास्त्र-विज्ञानम्; मध्यमपदलोपी समासः; तदेतदाचष्टे—**शास्त्रे प्रतिपाद्यमित्यादिना**; प्रतिपाद्यशब्द उत्पाद्यपरः; " आत्मैकत्वविद्याप्रतिपत्तये " इति परव्यवहारानुसारा-दुत्पत्तिः प्रतिपत्तिशब्देन व्यवहृता। वक्ष्यति च—" प्रतिपादकानि निष्पादकानि " इति। अतो लाक्षणिकप्रयोगो न दोषायेति द्रष्टव्यम्। **मिथ्याज्ञानं भ्रान्तिज्ञान-मिति**; मिथ्याविषयं ज्ञानं मिथ्याज्ञानमिति मध्यमपदलोपी समास इति भावः। मूला-ज्ञाननिवृत्तेरेव प्रयोजनत्वमभिप्रयन्नाह—**यद्वा मिथ्याभूतमज्ञानमिति।** **तुशब्दद्वयं शङ्काद्वयव्यावृत्त्यर्थमिति**; उपनिषत्स्वधीतत्वात् ब्रह्ममीमांसायां निरूप्यमाणत्वाच्चोद्गीथा-द्युपासनं ब्रह्मविद्यापेक्षितमित्येका शङ्का; " ततः किम् " इत्यनेनाभिप्रेता संगतत्वशङ्का

द्वितीया ; एतच्छङ्काद्वयस्य यथाक्रमं व्यावृत्त्यर्थमित्यर्थः । **अत्र भास्करीयाः प्रत्यवतिष्ठन्त इति ;** अत्र च हेतुरुत्तरत्र स्पष्टः । **न समसमुच्चयपर इति ;** तन्मते "तमेतं वेदानुवचनेन" इत्यत्र "सहयुक्तेऽप्रधाने" इति तृतीयया वेदानुवचनादीनां "विविदिषन्ति" इति निर्दिष्टवेदनापेक्षया अप्राधान्याभ्युपगमेन कर्मणां विद्यायाः फलोपकार्यङ्गत्वमात्रस्याभ्युपगतत्वेन तैरपि समसमुच्चयस्यानभ्युपगमादिति भावः । **समुच्चित्योपदेशादित्यत्र समुच्चित्यशब्दवदिति ;** इदं हि वाक्यम् "अन्तर उपपत्तेः" इत्यधिकरणभाष्यस्थमग्निविद्यात्मविद्याविषयम् ; तयोः समुच्चयानभ्युपगमादिति भावः । **विशेषणविशेष्यभावेन निर्दिष्टमिति ;** न च समुच्चितशब्दो वैषम्यं न सहत इति वाच्यम् , अङ्गाङ्गिसमुच्चयेऽपि समुच्चयशब्दप्रयोगदर्शनात् ; न ह्यत्र समसमुच्चयः श्रूयत इति भावः । **चः प्रतिपादकसमुच्चय इति ;** श्रुतिसूत्रयोः प्रतिपादकयोः समुच्चय इत्यर्थः । **तज्ज्ञानस्य कथं पूर्वभावित्वमिति ;** ब्रह्मविचारपूर्वभावित्वमित्यर्थः । **निरूपयिष्यमाणत्वमभिप्रेत्योक्तमिति;** "अन्तरा चापि तु तद्दृष्टेः" सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्" इत्यादावधिकारिविशेषे ब्रह्मविद्यायाः कर्मविशेषैः समुच्चयतदभावयोः प्रतिपादयिष्यमाणत्वादित्यर्थः । अधिकारिविशेषनिष्ठब्रह्मविद्याया अनिर्दिष्टत्वात्समुच्चयतदभावयोः सामान्येन विद्याविषयत्वमेवोचितमिति मत्वाह—**यद्वा नित्यनैमित्तिकयोरिति ;** विद्यायाश्चेति शेषः । नित्यनैमित्तिकाभ्यां समुच्चयः, न काम्यनिषिद्धाभ्यामित्यर्थः । **पदार्थज्ञानपूर्वकत्वादिति ;** यद्यपि यज्ञादिपदार्थावगमाय न मीमांसापेक्षा, व्याकरणकोशाप्तवाक्यादिभिर्व्युत्पत्तिसंभवात्, मीमांसाया अपि लोकप्रसिद्धपदार्थव्यवहारितया पदार्थावगतिप्रयोजनकत्वाभावाच्च ; तथापि ग्राह्याग्राह्यकर्मविभागो मीमांसाधीन इति भावः । यद्वा पूर्वमीमांसायामपि "यजतिचोदना द्रव्यदेवताक्रियं समुदाये" इत्यादिदर्शनात् [1]व्यापन्नादिपदार्थनिर्णयदर्शनाच्च पदार्थनिर्णायकत्वमपि संभवतीत्यपि द्रष्टव्यम् । आशयमजानानश्चोदयति—**ननु गामानयेति वाक्यादिति । वाक्यार्थं पूर्वं प्रतिपद्येति ;** प्रयोजकवृद्धवाक्यश्रवणानन्तरं प्रयोज्यवृद्धस्य गवानयने प्रवृत्तिमुपलभ्य 'इयं च गवानयने प्रवृत्तिर्गवानयनकार्यताज्ञानसाध्या गवानयनप्रवृत्तित्वात् संप्रतिपन्नगवानयनप्रवृत्तिवत्' इति

---

१. "व्यापन्नस्याप्सु गतौ यदभोज्यमार्याणां तत्प्रतीयेत" (मी ६. ५. ४८.) इति सूत्रे यदार्याणामभोज्यं केशकीटावपन्नादि तत् व्यापन्नमिति शब्दार्थनिर्णयः कृतः।

तस्याः प्रवृत्तेर्गवानयनकार्यताज्ञानसाध्यतां निश्चित्य 'तच्च ज्ञानं वाक्यात्पूर्वमजातत्वात् वाक्यानन्तरं जातत्वाच्च वाक्यजन्यम् ; तस्मात् गवानयनं वाक्यार्थः' इति प्रतिपद्येत्यर्थः । ततश्च 'अस्य वाक्यस्यायमर्थः' इति वाक्यार्थत्वज्ञानपूर्वकमेव 'अस्य पदस्यायमर्थः' इति ज्ञानम् , न तु 'अस्य पदस्यायमर्थः' इति पदार्थत्वज्ञानपूर्वकम् 'अस्य वाक्यस्यायमर्थः' इति वाक्यार्थत्वज्ञानमुत्पद्यत इत्यर्थः । शाब्दज्ञानत्वावच्छिन्ने वृत्त्या पदजन्यपदार्थोपस्थितेर्हेतुत्वमित्येतदेव हि वाक्यार्थज्ञानस्य पदार्थज्ञानपूर्वकत्वम् ; न तु वाक्यार्थत्वज्ञानस्य पदार्थत्वज्ञानपूर्वकत्वं, येनास्याक्षेपस्यावकाशः स्यादिति स्वाशयमाविष्करोति—**उच्यते ; व्युत्पन्नात् शब्दादिति** । **व्युत्पत्तावपि न वाक्यार्थधिय इति** ; यद्यपि शाब्दज्ञानत्वावच्छिन्ने पदजन्यपदार्थोपस्थितेर्हेतुत्वकथनेनैव प्रकृतोपयोगसिद्धेर्व्युत्पत्तिदशायां वाक्यार्थत्वज्ञानस्य पूर्वभावप्रत्याख्यानं न प्रकृत उपयुज्यते, तथापि पराभिमानखण्डनार्थतयोपन्यस्तमिति द्रष्टव्यम् । **याज्यापुरोनुवाक्यामन्त्रानुसारेणेति** ; सरस्वतीदेवत्ययाज्यापुरोनुवाक्ययोः प्राक् पठितत्वादिति भावः । **तेनैव क्रमेणानुष्ठानं निर्णीतमिति** ; श्रुत्यर्थपाठादिक्रमनियामकाभावादनियम इति प्राप्ते प्रधानप्रत्यासत्तिसिद्ध्यै मुख्यक्रमात् स्त्रीदेवत्यस्य यागस्य निर्वापादयश्चोदकप्राप्ता धर्माः प्रागनुष्ठेया इति निर्णीतं पञ्चमे "अङ्गानां तदर्थत्वात्[१]" इत्यत्र । **क्रमनियामकहेतुवैषम्यमेवेति** ; दृष्टान्ते याज्यापुरोनुवाक्याक्रमः शेषिक्रमनियामकः; दार्ष्टान्तिके तु कार्यकारणभाव इति हेतुवैषम्यमिति भावः । **उपासनस्यैव विचारं प्रति शेषित्वादिति** ; उपासनस्य स्वविचारं प्रत्येव शेषित्वात् शेषिक्रमादापतन् शेषयोः क्रमः शारीरकतृतीयाध्यायकर्मविचारविषय एव स्यात् , न तु कृत्स्नशारीरककर्ममीमांसाविषय इत्यर्थः । **तदपेक्षितत्वेनेति** ; उपासनापेक्षितत्वेनेत्यर्थः । **कृत्स्नाया अपि ब्रह्ममीमांसायाः** इत्यस्यानन्तरम् 'उपासनशेषत्वेन' इत्यध्याहर्तव्यम् । **यादवपक्षं चोपजीव्येति** ; समसमुच्चयाङ्गाङ्गिभावयोस्तदभिमतयोरपि प्रतीतेरिति भावः । **पार्श्वस्थश्चोदयतीति** ; यादवानभिमतकर्मविचारपूर्ववृत्तत्वोपन्यासात् सिद्धान्तिग्रन्थत्वे साधनसाध्यद्वित्वनिरासकपरिहारग्रन्थासामञ्जस्यप्रसङ्गाच्चेति भावः । **चशब्दः प्रतिपाद्यसमुच्चय इति** ; द्वितीयान्तेनाध्याहृताङ्गभावशब्देन चशब्दस्यान्वय इति भावः । ननु यदा "बाढम्" इत्यादिग्रन्थो भास्करसिद्धान्त्यन्यतरचोद्यपरः, तदा साध्यसाधनद्वित्वनिरासक-

---

१. "मुख्यक्रमेण वाङ्गानां तदर्थत्वात्" (मी ५. १. १४.) इति संपूर्णं सूत्रम् ।

भाष्यग्रन्थस्याप्रसक्तप्रतिषेधकत्वं स्यादित्याशङ्कां प्रतिक्षिपति—**यदा बाढमित्यादीति**। **व्यावृत्त्यन्वयरूपा विशेषा इति**; भावाभावरूपा इत्यर्थः। **सकलविशेषप्रत्यनीक**मित्यत्र विशेषशब्देन स्वगतधर्मस्यापि ग्रहणे तत एव ज्ञातृत्वज्ञेयत्वव्यावृत्तेरपि सिद्धत्वान्मात्रचा ज्ञातृत्वज्ञेयत्वव्यावृत्तिकथनमस्वरसमित्यस्वरसादाह—**यद्वा सकलविशेषप्रत्यनीकशब्देनेति**। **अज्ञाननिवृत्त्यन्तर्गतेत्यर्थ इति**; कार्यकारणयोरभेदोपचारादविद्यानिवृत्तेर्भेददर्शननिवृत्तिरूपत्वोक्तिरिति भावः।

### श्रुतप्रदीपिका

अथ स्वरूपेणोपादानाय निरूप्यत्वमुपपादयितुं नियमेनानपेक्षितत्वमुखेन चोदयति—**ननु चेति**। प्रथम एवकारोऽपेक्षितद्वित्वव्युदासाय; द्वितीयस्त्वनपेक्षितस्य पूर्ववृत्तत्वव्युदासाय। ततः किमित्यत्राह—**न धर्मेति**। कुत इत्यत्राह—**अधीतेति**; वेदान्तमात्राध्यायिनस्तत्रैवापातप्रतीतेरित्यर्थः। यद्वा कृत्स्नाध्यायिनोऽपि सुकृतवशादुत्तरत्रापेक्षोत्पत्तेरिति। तदा अपेक्षितांशस्याप्यधीतत्वमधीतेतिपदार्थः। शङ्कते—**कर्मेति**। प्रस्तावोद्गीथप्रतिहारोपद्रवनिधनाख्येषु सामावयवेषु द्वितीय उद्गीथः। उपासनस्य कर्माङ्गताप्रतीतिव्युदासायाश्रयशब्दः। हेतुगर्भं पदमिदमशक्यत्वे। सोपालम्भं प्रतिवक्ति—**अनभिज्ञ इति**; प्रधानप्रतिपाद्यं ज्ञानं न वेत्सीत्यर्थः। तत्किमित्यत्राह—**अस्मिन्निति**। ज्ञातृज्ञेयज्ञानरूपो भेदोऽवान्तरभिदया विविधः। सोऽविद्याकृतः। अनवस्थापरिहारोऽनादिशब्देन। आविद्यभेददर्शनहेतुकजन्मजरादिनिरसनीयत्वाय **दुःखसागर**शब्दः। **मिथ्याज्ञानं** भ्रान्तिज्ञानम्; मिथ्याभूतमज्ञानं वा। ज्ञाननिवर्त्यत्वाय मिथ्यात्वोक्तिः। **आत्मैकत्वविज्ञानम्**; चन्द्रैकत्वज्ञानं हि तद्भेदभ्रमनिवर्तकं, न कर्मेत्यर्थः। **क्व**; न क्वापि; ज्ञानोत्पत्तितत्साधनानुग्रहतत्फलेषु न क्वापीत्यर्थः; प्रत्युत भेदवासनाहेतुत्वादिति भावः। उद्गीथादिधियामौपनिषदत्वात् ब्रह्मविद्यापेक्षितास्ताः; अतः शारीरके तच्चिन्तनं साक्षात्संगतमित्यत्राह—**उद्गीथेति**। कुत इह चिन्तेत्यत्राह—**ज्ञानेति**। तुशब्दौ शङ्काद्वयव्यावर्तकौ। **अत इति**; प्रासङ्गिकापेक्षितं न पूर्ववृत्तं, किंतु प्रधानापेक्षितमेवेत्यर्थः। अत्र भास्करीयाः प्राहुः—**बाढमिति**। सिद्धान्तिन इति च संप्रदायः, अङ्गत्वोपगमसाम्यात्। पूर्वं तूचितम्, कर्मेत्यादेस्तद्ग्रन्थस्थत्वात्। बाढमिति; नियमापेक्षितस्य वृत्तत्वे संमतिः, न कर्मेत्यत्र विमतिः। किं नियतापे-

क्षितमित्यत्राह—**तदिति** ; त्वदनभिमतमेवेति भावः । कुत इत्यत्राह—**कर्मेति** । श्रुतिश्च " यज्ञेन " इत्यादिः । कर्मसमुच्चयः कर्मसंबन्धमात्रम् । चः प्रतिपादकसमुच्चये । ततः किमित्यत्राह—**अपेक्षिते चेति** ; पदार्थाप्रतिपत्तौ न वाक्यार्थधीरिति भावः । **केनेति** ; नित्यनैमित्तिकयोः समुच्चयः, न तु काम्यनिषिद्धयोरिति विभागो न ज्ञायेतेत्यर्थः । निगमयति—**अत इति** । समसमुच्चयवादिमतावलम्बेन पार्श्वस्थश्चोदयति—बाढमित्यादिनेति च निर्वाहः सांप्रदायिकः । तदा समप्रधानतयान्वयलक्षणः समुच्चयो विवक्षितः । श्रुतिश्च " विद्यां चाविद्यां च " इत्यादिः । चः प्रतिपाद्यसमुच्चये ; अङ्गभावं च वक्ष्यतीत्यर्थः ; ज्ञानोत्पत्तेः प्रागङ्गभावस्य तदभ्युपगमात् । उपरि पूर्ववत् । यद्यपि यादवप्रकाशमते कर्मधियः पूर्ववृत्तत्वमनभिमतं तथापि तदभिमतं कर्मण उभयथापेक्षितत्वमुपजीव्य पार्श्वस्थेन चोदयित्रा पूर्ववृत्तत्वमापाद्यत इति निगमनग्रन्थाविरोधः । मृषावादी प्रतिवदति—**नैतदिति** । कथमयुक्तत्वमित्यपेक्षायां कर्मणोऽपेक्षितत्वे संभावितं कृत्स्नं प्रकारं दूषयिष्यन् किं समुच्चयशब्देन समप्रधानतयान्वयो विवक्षितः, उत समुच्चयशब्दस्य संबन्धमात्रपरत्वं विवक्षित्वा तेनाङ्गतया संबन्धोऽभिधित्सित इति विकल्पमभिप्रेत्य प्रथमे शिरसि साध्यद्वित्वं साधनद्वित्वं च ग्रन्थद्वयेन व्युदस्यति—**सकलेत्यादिना** । सकलभेदाः सजातीयविजातीयस्वगताः ; तेषां प्रत्यनीकं सर्पादीनां रज्जुवत् । मात्रचा व्यावृत्तिरूपभेदव्युदासः । कर्मसाध्यतयाभिमतप्रतिबन्धनिवृत्तेर्ज्ञानसाध्यत्वस्य " तमेव विदित्वातिमृत्युमेति " इत्यादिभिः प्रतिपादनान्न साधनद्वित्वमित्यर्थः । **अविद्यानिवृत्तिरेव** ; प्रतिबन्धे निवृत्ते नित्यप्राप्तस्य प्राप्तिर्न साध्येति भावः । ततः किमित्यपेक्षायां कर्मणो मोक्षविरोधित्वं 'प्रत्युत विरुद्धमेव' इति प्रागुक्तं विवृणोति—**वर्णेति** । आदिशब्दो निषिद्धादिपरः । **भेददर्शननिवृत्तिरूपेति** ; कारणाज्ञाननिवृत्तिः कार्याज्ञाननिवृत्तिगर्भेति तद्रूपत्वम् । **कथमिव** ; न कथंचित् ।

## तत्त्वटीका

अथ विद्यापेक्षितमेव तत्त्वविवेकादिकं विचारापेक्षितमिति भ्राम्यन् कर्मणश्च विद्याविरुद्धतया तद्विचारवृत्तत्वायोगं मन्वानो गूढाभिप्रायः परश्चोदयति—**नन्विति** । **यदेवेति** स्वाभिमतचतुष्कव्यतिरिक्तनैरपेक्ष्यपरम् । तस्य परंपरयोपयोगेऽपि विचारजन्मनि तन्नियमो नास्तीति व्यक्त्यै नियमशब्दः । नियतापेक्षितचतुष्कव्यतिरिक्तस्यापि न सूत्रसूच्य-

त्वमित्यभिप्रायेण **तदे**वेत्युक्तम्। तदिहानपेक्षितमेव त्वदुक्तमित्याह—**न धर्मेति**। स्वेष्टमपेक्षितांशं सूचयितुमाह—**अधीतवेदान्तस्येति**। अव्युत्पाध्ययने मानाभावेऽप्यापदि वेदान्तमात्राध्यायिन इत्यर्थः। तस्य हि न कर्मण्यापातधीः, नतरां बुभुत्सा, नतमां विचार इति नियमभङ्गः। यद्वा कृत्स्नाध्येतुरपि स्वापेक्षितांशस्याप्यधीततया सुकृतविशेषमृदितकषायतया च ब्रह्मविचारस्य शक्यत्वादधीतत्वमात्रेण हानार्थमपि न कर्मणश्चिन्त्यत्वमपीति भावः। एतेन "धर्मजिज्ञासायाः प्रागप्यधीतवेदान्तस्य ब्रह्मजिज्ञासोपपत्तेः" इति ब्रह्माज्ञानवादिभाष्योक्तमनूदितं मन्तव्यम्। सिद्धान्तिसंमतां प्रधानयुक्तिमप्रधानीकृत्य तत्तद्दृष्टिविधीनां साक्षाद्ब्रह्मविद्यापेक्षितत्वं प्रकल्प्य वा कर्मविचारवृत्तत्वं शङ्कते—**कर्मेति**। **उद्गीथाद्युपासनानीति** पक्षोक्तिः; अनधिगतकर्मणोऽशक्यचिन्तनत्वं साध्योऽर्थः; **कर्माङ्गाश्रयाणीति** हेत्वंशपरम्। आश्रयशब्द इह विषयार्थः; प्रणयनाश्रयगोदोहनादिवदुद्गीथादिकमङ्गमाश्रित्य प्रविशत उपासनस्य फलान्तरार्थतया कर्मानङ्गत्वसूचनपरश्च। आदिशब्देनोद्गीथैकदेशभूतप्रणवस्य पञ्चविधसामादेश्च ग्रहणम्। **अत्रैव**; न तु कर्मकाण्डे चिन्तितानीति भावः। **अनधिगतकर्मण** इत्यनेन कर्मतदङ्गरूपपदार्थानवगमे वाक्यार्थस्य दुर्ग्रहत्वं सूच्यते। ननु "अव्युत्पन्नपदोपेतवाक्यार्थप्रत्यभिज्ञानमुपमानम्" इति कैश्चिदुक्तम्। अन्यैरनङ्गीकारात् तत् तथा न। अथापि प्रकृताविरोधं ब्रूमः—न हि ते 'गोसदृशो गवयः' इत्यादिवाक्ये गवयत्वादिविशिष्टः पिण्डः पदार्थतया अन्वेतीत्याहुः, 'गोसादृश्यवान् गवयशब्दवाच्यः' इत्येतावति तात्पर्यात्; गवयशब्दादयस्तु पदेन बोधितास्तत्रान्वीयेरन्निति। ननु चाद्यव्युत्पत्तिदशायामविदितपदवाक्यभेदस्य वाक्यार्थधीरस्ति। ततः किम्? तत्र हि प्रत्यक्षादिसिद्धे विशिष्टार्थेऽनुमानतो वाक्यस्य बोधकत्वग्रहः, न तु व्युत्पित्सोस्तत्र वाक्याद्वाक्यार्थधीः। कर्मणि विचारिते तदन्तर्गतोद्गीथादिधीः, ततस्तद्विषयोपास्तिधीः स्यात्। न ह्यत्र कर्मानङ्गेषूद्गीथादिषूपास्तिर्विधीयते, गोदोहनादिवद्गुणफलाधिकारत्वादिति भावः। उक्तमशक्यत्वं दुष्परिहरं संछाद्य धाष्ट्र्यात् स्वकपोलकल्पितप्रकारेण समाधित्सुरुपालभते—**अनभिज्ञ इति**। शारीरकस्य खल्विदं शास्त्रम्; अत आत्मविज्ञानप्रधानमिति भावः। "शरीरमेव शरीरकं, तत्र निवासी शारीरको जीवात्मा" इति हि वाचस्पतिः। तद्विज्ञानप्राधान्यं विवृणोति—**अस्मिन्निति**। शुद्धस्याविद्यान्वये हेत्वनुयोगमुपरोद्धुमनादिशब्दः। मत-

भेदादविद्यायाः स्वरूपतः प्रवाहतो वानादित्वम्। प्रवाहपक्षेऽनवस्था बीजाङ्कुरादिनयनिरूढेत्याकूतम्। **भेदः** 'अहमिदं जानामि' इति ज्ञात्रादिरूपः। स प्रत्येकमवान्तरभेदैर्विविधः। तस्य मिथ्यात्वं व्यङ्क्तुमविद्याकृतत्वोक्तिः; तद्दर्शनं वा तत्कृतमित्युच्यते; तदध्यस्तमित्यर्थः। भेददर्शनं निमित्तं येषामिति विग्रहः। निर्विकारस्य जन्मादिकमात्मभ्रान्तिविषयदेहधर्मारोपात्। आदिशब्देन निरयादिग्रहः। तैर्दुःखम्; सांख्यवन्मृषावादिनां तादृशोऽन्तःकरणविकारः। मिथ्यात्वेऽपि प्रतिकूलतया जिहासितव्यत्वाय जन्मादिषु वा दुःखत्वोक्तिः। तद्भ्रान्तिप्रवाहाविच्छेदव्यक्त्यै सांसारिकशब्दः। अनात्मभिरात्मानमेकीकृत्य पौनःपुन्येन सरणं हि संसारः। मोघप्रयत्नत्वपरो निमग्नत्वोपचारः, उन्मिमङ्क्षार्थश्च। मिथ्याज्ञानमिहात्मनि भेदग्रहः, अनिर्वाच्यरूपमज्ञानं वा। अज्ञानतत्प्रतिभासयोस्तत्कार्यप्रतिभासप्रवाहस्य च मिथ्यार्थत्वात् तत्त्वधीमात्रेण बाध्यत्वे किमत्र कर्मणेति भावः। चन्द्रद्वित्वादिधीर्हि तदैक्यधीबाध्या; तद्वदिहेत्यभिप्रायेणात्मैकत्वविज्ञानोक्तिः।

अशुद्धस्य प्रसिद्धत्वाच्छुद्धस्यावाच्यभावतः।
अज्ञातं त्वंतदोरैक्यं ख्याप्यमित्यत्र मन्यते ॥ २८४ ॥
स्वाध्यायस्य हि कार्त्स्न्येन मानत्वे सत्यपि स्वतः।
नाबाधे नानुवाधे च नापवाधे च मानता ॥ २८५ ॥

अविचारितबुद्ध्यादिव्युदासार्थो विज्ञानशब्दः। एवमिहाधिकारिप्रयोजनसाधनानि ज्ञापितानि। **प्रतिपिपादयिषितम्**; प्रदातुं प्रापयितुं वेष्टम्। शब्दजन्यज्ञानादेव ह्यपवर्गः। यद्वा आत्मैक्यज्ञानमवैधमपि मोक्षसाधनतया शारीरके प्रतिपाद्यम्। तस्य प्रधानतात्पर्यविषयत्वाय सम्प्रयोगः। ततः किं प्रकृतस्य? तत्राह—**अस्येति**; हिशब्दोऽनुपयोगस्थैर्यार्थः। **भेदावलम्बीति** विरोधपरम्। कर्मज्ञानमिह विचाररूपं तत्फलरूपं वा। **क** इत्येतत् स्वरूपोत्पत्तौ कार्ये वेति विवरिष्यते। तच्च तत्साधनानुग्राहकस्याप्युपलक्षणम्। द्वैतवासनाहेतुतयात्यन्तहेयत्वाय वैपरीत्यं प्रथयति—**प्रत्युतेति**। अंशतो वा फलसञ्ज्ञादिगुणतो वा निर्वैरत्वं दुर्वचमित्यभिप्रायेणाह—**विरुद्धमेवेति**। उक्तं च नैष्कर्म्यसिद्धौ—

"अयथावस्त्वविद्या स्याद्विद्या तस्या विरोधिनी ।
समुच्चयस्तयोरेवं रविशार्वरयोरिव ॥"

इति,

"तमोऽङ्गत्वं यथा भानोरग्नेः शीताङ्गता यथा ।
वारिणश्चोष्णता यद्वज्ज्ञानस्यैवं क्रियाङ्गता ॥"

इति च । यदि कर्म विरुद्धं, तर्हि तदङ्गाश्रयोपासनचिन्ताप्यत्र विरुद्धत्वान्न संगच्छेत; कर्मचिन्तायामेव तु निविशतामित्यत्राह—**उद्गीथादीति** । इहोद्गीथाद्युपासनं लक्ष्यते, तत्स्वरूपस्यात्रामीमांस्यत्वात् । गुणफलसंबन्धमपहुत्य तद्विचारस्य कर्मशेषत्वोक्तिः, फलान्तरार्थत्वेऽपि न परविद्याङ्गत्वमिति च भावः । यद्वा शिष्यत इति शेषः; कर्मविचारैः परिशिष्ट इत्यर्थः । अत्र विचार्यमाणानामुद्गीथाद्युपासनानां ज्ञानरूपत्वं विवक्षितम्; न तु तद्विचारस्य, अतिप्रसङ्गात् । **इहैव**; विरुद्धशास्त्र एवेत्यर्थः । ननु साजात्याधीनप्रसक्त्यापि समुद्रध्यानवत्प्रधानस्यानुपयुक्तं विरुद्धं च न चिन्त्यम्; अतः परविद्याप्रकरणे पाठाद्विचारणाच्चाश्रमादिवत् गत्यादिवच्च तदुपयुक्तत्वं कल्प्यमित्यत्राह—**स इति** । तु-शब्दौ शङ्कानिवर्तकौ । यद्यपि साक्षात् प्रधानोपयुक्ततया वा न संगतिः, तथापि ज्ञानरूपत्वसाम्यात् तदन्वितस्य वीर्यवत्तरत्वोक्त्या चापरिच्छिन्नफलत्वशङ्कोदयमपाकृत्य धूमादिमार्गवज्जिहासादार्ढ्यमुत्पादयितुमिह तच्चिन्तेति भावः । तर्ह्यत्यन्तानुपयोगाभावात्तदुपयुक्तमपि पूर्ववृत्तमस्तु; तत्राह—**अत इति** । **यत्प्रधानम्**; यदुपपादनप्रधानम् । एवकारेण प्रासङ्गिकापेक्षितमपि प्रधानस्यानुपयुक्तं विरुद्धं च व्यावर्त्यते । प्रधानापेक्षितानुक्तिश्च न युक्ता । अप्रधानापेक्षितस्य च वृत्तत्वे वक्तव्ये दूष्यमतविचारादेरपि तथात्वप्रसङ्ग इति भावः । **किमपि**; त्वदुक्तात्कर्मविचाराद्विलक्षणम् ।

अत्र भास्करादिमतस्थो वा सिद्धान्ती वा सर्वावमर्शी पार्श्वस्थो वा परोक्तेस्तात्पर्यविषयांशानङ्गीकारेण प्रतिवक्ति—**बाढमिति** । भास्करोक्तमत्र हेतुग्रन्थतः साध्यतश्च प्रत्यभिज्ञायते । अनङ्गीकृतमर्थं विशिंषन्ननिष्टं च क्षिपति—**तदिति** । एवकारोऽन्यनैरपेक्ष्यं, प्रासङ्गिकापेक्षितस्यैव प्राधान्येनाप्यपेक्षितत्वं, विरोधाभावं च व्यनक्ति । प्रधानोपपत्त्यादावनुपयुक्तस्य विचारः कथं तद्विचारापेक्षित इत्यत्राह—**कर्मेति** । अयं भावः—

अल्पमधुलाभशङ्कामतिक्रम्य यथाविधि कर्मसमुच्चिते ज्ञाने प्रवृत्तिः केवलकर्मणामनन्तफलसाधनत्वाभावनिश्चयपूर्विकेति। एतेन 'अधीतवेदान्तस्य' इत्यादि प्रागुक्तं प्रत्युक्तम्। इह भास्करपक्षे "तमेतं वेदानुवचनेन" इत्यादिः श्रुतिः। समुच्चितत्वं चात्र "सहयुक्तेऽप्रधाने" इति तृतीयाश्रुत्या गुणप्रधानतया संबन्धः। गुणत्वं च प्रयाजादिवत्। प्रकृतानुपयोगात्तिरोधानेन समुच्चयोक्तिः। यादवप्रकाशमते "सर्वापेक्षा" इति सूत्रमङ्गाङ्गिभावपरम्। "सहकारित्वेन च" इति सूत्रं तु समुच्चयार्थम्। तत्र तु "विद्यां चाविद्यां च" इत्यादिका श्रुतिः। समुच्चितत्वं तु विशदज्ञानोत्पत्तेः पूर्वं तदुपपादकतया कर्मणां ज्ञानाङ्गत्वेन; पश्चात्तु मृत्युतरणब्रह्मप्राप्तिरूपफलभेदात्समत्वेन। सिद्धान्ते तु संनिपत्योपकारित्वविवक्षया समुच्चयशब्दः। स्वरूपेण कर्मणोऽपेक्षितत्वे सूत्रकृत्संमतिमप्याह—**वक्ष्यतीति**। न ह्यस्मिन् सूत्रे साध्यत्वेन विविदिषोपात्ता, येन तदर्थेयमपेक्षोक्तिः स्यात्; विद्या तु प्रकरणसिद्धा। अतो "विविदिषन्ति" इत्यत्र न विविदिषा विवक्षितेति भावः। चकारः क्वचिन्मते सिद्धान्ते च प्रतिपादकं समुच्चिनोति। मतान्तरे तु प्रतिपाद्यमप्रधानत्वं समत्वेन सह संघटयति। अस्तु ज्ञानस्यानुष्ठाने यथामतं कर्मापेक्ष्यम्; तद्विचारे तु किं कर्मविचारेणेत्यत्र दत्तोत्तरत्वेऽपि युक्तिवैभवादुत्तरान्तरमाह—**अपेक्षिते चेति**। यथामतं यथाधिकारमपेक्षितत्वम्। **केन समुच्चयः**; साधनलक्षणसमर्थयिष्यमाणस्वाधिकारानुगुणनित्यनैमित्तिकवर्गेण। **केन न**; निबन्धककाम्येन स्वाधिकारनिषिद्धेन चेत्यर्थः। अयं भावः—अनुष्ठानदशायां समुच्चेतव्यस्य तथा निर्णयाय विमर्शदशायामपि बुद्ध्यारोहोऽवश्यंभावी। अतः पदार्थभूतकर्मविचारपूर्वकस्तदन्वितविद्याविधिवाक्यार्थविचारः। ततश्च विषयविशेषावच्छिन्नब्रह्मोपासनचिन्तनस्य कर्मचिन्तासापेक्षतया कृत्स्नस्य शारीरकचतुरध्याय्यर्थविचारस्य कर्मविचारः प्राग्भावीति। तदिह कर्मनिरूपणस्य फलान्तरार्थकर्मपरिहारः फलं, विद्यानुबन्धेन कर्मस्वरूपमात्रोपादानं चेति न मोघप्रवृत्तित्वम्; नापि विरोधः। यद्यपि विद्यापेक्षितो यज्ञादिपदार्थः साधनलक्षणे स्वयमिह सूत्रकृता चिन्तयितुं शक्यः, तथापि कृत्स्नवेदार्थनिश्चायके मीमांसाशास्त्रे कामाधिकारस्यापि क्वचिच्चिन्त्यत्वादत्र प्राक् चिन्तिते कर्मस्वरूपे लाघवाद्विनियोगपृथक्त्वमात्रस्थापनं युक्तम्। तापत्रयपूर्ववृत्तत्वमतेऽपि विषमत्वेन समत्वेन च कर्मणः समुच्चेतव्यत्वार्थम्। ततः कर्मविचारपूर्ववृत्तत्वं दुस्त्यजमित्यभिप्रायेण मतचतुष्टयेऽपि फलितमाह—**अत इति**। कर्मपरामर्शी तच्छब्दस्तच्चि-

न्तनं लक्षयति ; दूरस्थमपि कर्मविज्ञानं वा परामृशति । अवधारणं विरोधाभावद्योतकम् । अत्रात्यन्तनैष्कर्म्यवादी प्रतिवक्ति—**नैतद् युक्तमिति** । श्रुतिप्रतीतमप्ययुक्तं त्याज्यम् ; अन्यथातिप्रसङ्गादिति भावः । कुत इत्यत्र समुच्चयवादिकल्पितं साधनद्वित्वं तावन्निरस्यति—**सकलेति** । भास्करसिद्धान्तिपक्षयोरिह संप्रतिपन्नस्थापनार्थं स्वकल्पितविकल्पकोटिनिष्कर्षणार्थं वा ब्रह्मेत्याद्युक्तम् । **विशेषाः** ; भेदाः सजातीयविजातीयस्वगताः । स्वगतभेदो हि श्रुतोऽप्याविद्यैरुपासनविधिभिः कल्प्यत इत्यभिप्रायेण सकलशब्दः । प्रत्यनीकत्वमिह शुक्त्यादिवदारोप्यात्यन्ताभावाश्रयत्वं तत्स्वरूपत्वं वा, स्वगोचरज्ञानेन स्वाध्यस्तनिवर्तकत्वं च । ईदृशस्य मानार्हस्य शून्यत्वं परिहर्तुं चिच्छब्दः । चिद्रूपतया स्वप्रकाशस्य मानान्तरापेक्षया च द्वैतप्रसङ्गः। असद्व्यावृत्त्या च भ्रमाधिष्ठानत्वसिद्धिः । मात्रचा चिच्छब्दोत्थापितज्ञातृज्ञेयादिसंबन्धशङ्काव्युदासः । प्रत्यनीकत्वमप्यन्ततः कल्पितमनतिरिक्तं वेति च भावः । ब्रह्मशब्देन "ब्रह्म वेद" इत्यादिसूचनम् । **विज्ञानात्** ; श्रवणाद्यनुगृहीतवाक्यजन्यप्रत्यक्षात् । अवधारणेनाधिष्ठानयाथात्म्यज्ञानस्यासत्यनिवर्तने कर्मनैरपेक्ष्यं व्यज्यते । "तमेव विदित्वा" इत्यादिभिः प्रतिबन्धकमृत्युतरणस्यापि ज्ञानैकसाध्यत्वोक्तेः "अविद्यया मृत्युं तीर्त्वा" इत्येतन्न मोक्षस्य कर्मसाध्यत्वार्थमिति । अत्र 'अविद्यया मृत्युं प्राप्य स्थितः' इति तु योजना । साधनद्वित्वनिदानतयेष्टं साध्यद्वित्वमप्यत्र नास्तीत्याह—**अविद्यानिवृत्तिरिति** । एवकारः कण्ठचामीकरनयात् प्राप्तप्राप्तेरसाध्यत्वं व्यनक्ति ; हिशब्दस्तु मुक्तेर्ज्ञानमात्रसाध्यतया श्रुतिस्मृतिसूत्रप्रसिद्धत्वं मोक्षशब्दस्वारस्यं च ; ज्ञानकार्ये कर्मणोऽनुपयोगं सर्वथा विरोधं च प्रागुक्तं विवृणोति—**वर्णेति** । आदिशब्देन निमित्तगुणादेर्वर्णाद्यवान्तरभेदस्य च संग्रहः । **अनन्त**शब्दो व्यक्त्यानन्त्यं बाहुल्यं वा विवक्षति । **विकल्पः**; भेदः, तद्भ्रमो वा । भ्रमपक्षे त्वास्पदशब्दो विषयार्थः । निवृत्तेरात्यन्तिकत्वव्यक्त्यै सकलशब्दः । कारणनिवृत्तेः कार्यनिवृत्त्यभेदोपचारेण तद्रूपत्वोक्तिः, तन्निरूप्यत्वाद्वा । अविद्ययैव हि भेदधीः । अतस्तया तन्निवृत्त्या च तत्सदसद्भावौ निरूप्यौ । **कथमिव** ; न कथंचित् । अत्यन्तासंभावितं कर्मणामविद्यानिवर्तकत्वम् ; प्रत्युत तदनुवृत्त्या संसारप्रापकत्वमेव स्यादिति भावः ।

## मूलभावप्रकाशिका

परमतं प्रतिक्षेप्तुमुपक्षिपति—**नन्विति**। 'यदेव' इत्यत्रैवकारोंऽशविवक्षाद्योतकः ; एकस्मिन्नप्यर्थे यावानंशोऽपेक्षित इत्यर्थः। ततश्च यदपेक्षितं तदेव पूर्ववृत्तं वक्तव्यमित्येतावतैव चारितार्थ्यात् यच्छब्दान्वित एवकारो व्यर्थ इति शङ्का परास्ता। **अनधिगतकर्मण इति ;** अविचारितकर्मण इत्यर्थः। शङ्कते—**कर्माङ्गाश्रयाणीति**; कर्माङ्गविषयाणीत्यर्थः। अनेन कर्माङ्गेऽन्यदृष्टिरूपाणामन्यस्मिन् कर्माङ्गदृष्टिरूपाणां पुरुषविद्यादीनां संग्रहः। "पृथिवी हिंकारोऽग्निः प्रस्तावोऽन्तरिक्षमुद्गीथ आदित्यः प्रतिहारो द्यौर्निधनम्" इत्यादिषु हिंकारप्रस्तावोद्गीथप्रतिहारनिधनाख्यसामावयवेषु स्तोत्रसाधनतया कर्माङ्गेषु पृथिव्यादिदृष्टयो विहिताः ; तेषां च कर्माङ्गोद्गीथाद्युपासनानां "तन्निर्धारणानियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम्" "अङ्गेषु यथाश्रयभावः" इत्यधिकरणयोः क्रत्वर्थपुरुषार्थत्वचिन्ता क्रियते। तत्र च कर्मस्वरूपमजानानस्य नेयं चिन्ता निर्विचिकित्सं हृदयमधिरोहति। "स्वामिनः फलश्रुतेरित्यात्रेयः" इत्यधिकरणे तेष्वेवोपासनेषु यजमानकर्तृकत्वऋत्विक्कर्तृकत्वचिन्ता क्रियते। "अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम्" इत्यत्र रसतमत्वाद्युपासनानां सर्वशाखागतोद्गीथसाधारण्यमस्ति नेति चिन्त्यते। तथा "पुरुषविद्यायामपि चेतरेषामाम्नानात्" इति सूत्रे "पुरुषो वाव यज्ञस्तस्य यानि चतुर्विंशतिवर्षाणि तत्प्रातःसवनं, यानि चतुश्चत्वारिंशद्वर्षाणि तन्माध्यंदिनं सवनं, यान्यष्टाचत्वारिंशद्वर्षाणि तत्तृतीयसवनं, स यदशिशिषति यत्पिपासति यन्न रमते ता अस्य दीक्षाः, अथ यदश्नाति यत्पिबति यद्रमते तदुपसदैरेति, अथ यद्धसति यज्जक्षति यन्मैथुनं चरति स्तुतशस्त्रैरेव तदेति, तन्मरणमेवावभृथः" इति छान्दोग्योपात्तायाः पुरुषविद्यासंबन्धिषु यज्ञावयवत्वदृष्टिरूपायाः पुरुषविद्यायाः "तस्यैवं विदुषो यज्ञस्यात्मा यजमानः श्रद्धा पत्नी शरीरमिध्ममुरो वेदिर्लोमानि बर्हिर्वेदः शिखा हृदयं यूपः काम आज्यं मन्युः पशुस्तपोऽग्निः शमयिता दक्षिणा वाग्घोता प्राण उद्गाता चक्षुरध्वर्युर्मनो ब्रह्मा श्रोत्रमग्नीद्यावद्ध्रियते सा दीक्षा यदश्नाति यत्पिबति तदस्य सोमपानं यद्रमते तदुपसदो यत्संचरत्युपविशत्युत्तिष्ठते च स प्रवर्ग्यो यन्मुखं तदाहवनीयो यदस्य विज्ञानं तज्जुहोति यत्सायं प्रातरत्ति तत्समिधो यत्सायं प्रातर्मध्यन्दिनं च तानि सवनानि ये अहोरात्रे ते दर्शपूर्णमासौ येऽर्धमासाश्च मासाश्च ते चातुर्मास्यानि य ऋतवस्ते पशुबन्धा ये संवत्सराश्च परिवत्सराश्च तेऽहर्गणाः

सर्ववेदसं वा एतत्सत्रं यन्मरणं तदवभृथः" इति पुरुषसंबन्धिषु यज्ञावयवत्वकल्पनरूपायास्तैत्तिरीयकाम्नातपुरुषविद्यायाश्च भेदाभेदौ विचार्येते। न ह्ययं विचारः कर्मविचारशून्यस्य हृदयमधिरोहति। तथा "पूर्वविकल्पः प्रकरणात् स्यात् क्रिया मानसवत्" इत्यत्र "षट्त्रिंशतं सहस्राण्यपश्यदात्मनोऽग्नीनर्कान्मनोमयान्मनश्चितः, ते मनसैवाधीयन्त मनसैवाचीयन्त मनसैव ग्रहा अगृह्यन्त मनसास्तुवन्त मनसाशंसन्" इत्यादिवाक्यविहितेषु मनोव्यापारविषयकेषु सांपादिकेषु स्थण्डिलाग्न्याधानादिग्रहस्तोत्रलोकंपृणादिषु क्रियमाणः क्रियामयक्रत्वर्थतदभावविचारो वा अविचारितकर्मणां कथं धियमधिरोहेत्? अतः कर्मविचारो ब्रह्मविचारापेक्षित इति भावः। **तदिति**; चिन्तनमित्यर्थः। **अनभिज्ञ इति**; शारीरकशास्त्रजन्यं ज्ञानमेतद्विषयकमिति त्वं न जानासीत्यर्थः। **अनाद्यविद्येति**; अनवस्थापरिहारायाविद्याया अनादित्वविशेषणम्। अनेन भ्रान्तिलक्षणाविद्यापि निरस्ता। **मिथ्याज्ञानेति**; मिथ्या च तदज्ञानं चेति विग्रहः; ज्ञाननिवर्त्यत्वप्रदर्शनाय मिथ्यात्वविशेषणम्। **प्रतिपिपादयिषितमिति**; उत्पिपादयिषितमित्यर्थः। अस्यानर्थहेतोः प्रहाणायात्मैकत्वविद्याप्रतिपत्तेर्व्यवहृतत्वात् विज्ञानं प्रतिपिपादयिषितमित्युक्तमिति द्रष्टव्यम्। **क्वोपयुज्यत इति**; आत्मैकत्वज्ञानस्वरूपे अविद्यानिवृत्तिरूपतत्कार्ये वानुपयोगादित्यर्थः। **प्रत्युत विरुद्धमेवेति**; साध्यसाधनेतिकर्तव्यताद्यनन्तभेदास्पदकर्मज्ञानस्य भेदवासनाजनकत्वादित्यर्थः। नन्वस्त्वात्मैक्यमस्मिन् प्रतिपिपादयिषितम्; तद्वदेवोद्गीथविद्यादीनामपि विचार्यतया तदुपयुक्तत्वेन कर्मविचारोपयोगः किं न स्यादित्यत आह—**उद्गीथादीति**। **कर्मशेषभूत एवेति**; उद्गीथाद्युपासनस्यापि कर्मान्तर्गतत्वात् तद्विचारोऽपि कर्मविचारान्तर्गत एवेत्यर्थः। तर्हि तद्विचारो ब्रह्ममीमांसायामसंगत एव स्यादित्यत आह—**ज्ञानरूपत्वेति**; उद्गीथाद्युपासनस्य कर्मविचारान्तर्गतत्वेऽप्युपासनत्वरूपावान्तरधर्मसामान्यात् ब्रह्मोपासनविचारात्मकेऽस्मिन् शास्त्रे प्रसङ्गात्तच्चिन्ता कृतेत्यर्थः। **तदपेक्षितमेवेति**; प्रासङ्गिकविचारोपयुक्तस्यापि पूर्ववृत्तत्वे "न संख्योपसंग्रहादपि नानाभावादतिरेकाच्च" "एतेन योगः प्रत्युक्तः" "योगिनः प्रति स्मर्यते स्मार्ते चैते" इत्यादिविचारापेक्षितकर्मानुष्ठानस्य विचाराधीननिर्णयाधीनत्वात् कर्मविचारस्य पूर्ववृत्तत्वं युक्तमिति तटस्थश्चोदयति—**बाढमिति**। **अपवर्गश्रुतेरिति**; विद्यां चाविद्यां च यस्तद्वेदोभयं सह" इति श्रुतिस्वारस्याद्विद्याविद्याशब्दितयोर्ज्ञानकर्मणोः समुच्च-

योऽस्तीति भावः । **सर्वापेक्षेति** ; "विविदिषन्ति यज्ञेन दानेन" इति श्रुतेः । ब्रह्मविद्या यज्ञादिसर्वकर्मापेक्षा तज्जन्या, अश्वगमने परिकरापेक्षावदिति सूत्रार्थः । ब्रह्मविद्यास्वरूपोत्पत्तावपि कर्मण उपयोगोऽस्तीति भावः । उत्तरत्र "ब्रह्मज्ञानादेवाविद्यानिवृत्तेः" इति कर्मणो ज्ञानेन समुच्चयस्य, "यदपि चेदमुक्तम्" इत्यादिना ज्ञानं प्रति स्वरूपोपकार्यङ्गत्वस्य च निराकरणात् फले स्वरूपे चोपकारित्वमिह शङ्काग्रन्थे विवक्षितम् । समुच्चयस्य सिद्धान्त्यनभिमतत्वात् तटस्थचोद्यमेवेदमिति द्रष्टव्यम् । ननु कर्मज्ञानस्यापेक्षितत्वं प्रतिज्ञाय कर्मणोऽपेक्षितत्वप्रतिपादनमसंगतमित्याशङ्क्याह—**अपेक्षिते चेति** । कर्मस्वरूपाज्ञाने ज्ञानेन समुच्चेतव्यं कर्म नित्यनैमित्तिकरूपं नान्यदिति कृत्वा अपेक्षितकर्मानुष्ठानासंभवात् समुच्चेतव्यकर्मानुष्ठानोपयोगिकर्मनिर्णयाय कर्मविचारः प्राक् कर्तव्य इत्यर्थः । कर्मसमुच्चयं दूषयति—**सकलेति** । **चिन्मात्रब्रह्मे**त्यनेन निर्विशेषज्ञानस्यानाद्यविद्यानिवर्तकत्वमित्युक्तं भवति । सकलविशेषप्रत्यनीकेत्यनेन मात्रपदं विवृतं भवति । न हि ज्ञानेनाज्ञाने निवर्तनीये उपायान्तरमपेक्षितमिति भावः । ननु यद्यप्यविद्यानिवृत्तिर्ज्ञानैकसाध्या ; मोक्षस्य तु ज्ञानकर्मसाध्यत्वं संभवतीति मन्दाशङ्कां निरस्यति—**अविद्यानिवृत्तिरेव हीति** । अविद्यानिवृत्तेः कर्मसाध्यत्वे को दोष इति शङ्कां निरस्यति—**वर्णाश्रमेति** । **विकल्पास्पदमिति** ; भेदज्ञानगर्भमित्यर्थः । **कथमिवेति** ; भेदवासनाजनकत्वात् प्रत्युत विरुद्धमेवेति भावः ।

**श्रीभाष्यम्**

श्रुतयश्च कर्मणामनित्यफलत्वेन मोक्षविरोधित्वं ज्ञानस्यैव मोक्षसाधनत्वं च दर्शयन्ति—"अन्तवदेवास्य तद्भवति" "तद्यथेह कर्मचितो लोकः क्षीयत एवमेवामुत्र पुण्यचितो लोकः क्षीयते" "ब्रह्मविदाप्नोति परम्" ब्रह्म वेद ब्रह्मैव भवति" "तमेव विदित्वातिमृत्युमेति" इत्याद्याः । यदपि चेदमुक्तं यज्ञादिकर्मापेक्षा विद्येति, तत् वस्तुविरोधात् श्रुत्यक्षरपर्यालोचनया चान्तःकरणनैर्मल्यद्वारेण विविदिषोत्पत्तावुपयुज्यते, न फलोत्पत्तौ ; "विविदिषन्ति"

इति श्रवणात्। विविदिषायां जातायां ज्ञानोत्पत्तौ शमादीनामेवान्तरङ्गोपायतां श्रुतिरेवाह—"शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वात्मन्येवात्मानं पश्येत्" इति। तदेवं जन्मान्तरशतानुष्ठितानभिसंहितफलविशेषकर्ममृदितकषायस्य विविदिषोत्पत्तौ सत्यां "सदेव सोम्येदमग्र आसीत्। एकमेवाद्वितीयम्" "सत्यं ज्ञानमनन्तं ब्रह्म" "निष्कलं निष्क्रियं शान्तम्" "अयमात्मा ब्रह्म" "तत्त्वमसि" इत्यादिवाक्यजन्यज्ञानादविद्या निवर्तते। वाक्यार्थज्ञानोपयोगीनि च श्रवणमनननिदिध्यासनानि। श्रवणं नाम 'वेदान्तवाक्यान्यात्मैकत्वविद्याप्रतिपादकानि' इति तत्त्वदर्शिन आचार्यान्न्याययुक्तार्थग्रहणम्। एवमाचार्योपदिष्टस्यार्थस्य स्वात्मनि 'एवमेव युक्तम्' इति हेतुतः प्रतिष्ठापनं मननम्। एतद्विरोध्यनादिभेदवासनानिरसनायास्यैवार्थस्यानवरतभावना निदिध्यासनम्। श्रवणादिभिर्निरस्तसमस्तभेदवासनस्य वाक्यार्थज्ञानमविद्यां निवर्तयतीत्येवंरूपस्य श्रवणस्यावश्यापेक्षितमेव पूर्ववृत्तं वक्तव्यम्। तच्च नित्यानित्यवस्तुविवेकः, शमदमादिसाधनसंपत्, इहामुत्रफलभोगविरागः, मुमुक्षुत्वं चेत्येतत् साधनचतुष्टयम्। अनेन विना जिज्ञासानुपपत्तेरर्थस्वभावादेवेदमेव पूर्ववृत्तमिति ज्ञायते। एतदुक्तं भवति—*ब्रह्मस्वरूपाच्छादिकाविद्यामूलमपारमार्थिकं भेददर्शनमेव बन्धमूलम्; बन्धश्चापारमार्थिकः; स च समूलोऽपारमार्थिकत्वादेव ज्ञानेनैव निवर्त्यते; निवर्तकं च ज्ञानं तत्त्वमस्यादिवाक्यजन्यम्; तस्यैतस्य वाक्यजन्यज्ञानस्य स्व-

---

* अत्र सुधीभिः प्राचीनश्रीकोशानवलोक्य समीचीनः पाठो निर्णेयः। अधिकं भावप्रकाशिकाटिप्पण्यां द्रष्टव्यम्।

रूपोत्पत्तौ कार्ये वा कर्मणो नोपयोगः; विविदिषायामेव तु कर्मणामुपयोगः; स च पापमूलरजस्तमोनिबर्हणद्वारेण सत्त्वविवृद्ध्या भवतीतीममुपयोगमभिप्रेत्य "ब्राह्मणा विविदिषन्ति" इत्युक्तमिति। अतः कर्मज्ञानस्यानुपयोगादुक्तमेव साधनचतुष्टयं पूर्ववृत्तमिति वक्तव्यम्।

श्रुतप्रकाशिका

"न हि वचनविरोधे न्यायः प्रभवतीति" नयात् श्रुतिसिद्धं कर्मणोऽपेक्षितत्वं न बाध्यमिति शङ्कायामुक्तोपपत्तेः श्रुत्यानुकूल्यं दर्शयति—**श्रुतयश्चेति**। न केवलोपपत्तिः, तदनुग्राह्यमप्यस्तीति चशब्दस्य भावः। पूर्वं भेदावलम्बितया विरोध उक्तः, अत्र तु फलानित्यतया विरोधश्च युक्त्यन्तरत्वेन दर्शितः। **अनित्यफलत्वेनेति**; नित्यफलस्य मोक्षस्य कथमनित्यफलदं कर्म साधनमित्यर्थः। श्रुतय इत्येकस्मादनेकवाक्यानां प्राबल्यं विवक्षितम्। दर्शयन्तीत्यनेनास्फुटार्थात् स्फुटार्थानाम्। **अन्तवदेवास्यति**; कर्मसाध्यत्वे मोक्षस्यानित्यत्वं, नित्यत्वे कर्मणस्तत्साधनत्वं वा न स्यात्; कर्मणोऽन्तवत्फलत्वनियमादिति भावः। अनेन वाक्येन कर्मणामनित्यत्वमुक्तम्। **तद्यथेत्यनेन** कर्मक्षयस्य फलद्वारकत्वमुक्तम्। पूर्ववाक्यमनेककालानुष्ठितसकलकर्मणामन्तवत्त्वज्ञापनार्थम्; "अस्मिन् लोके जुहोति यजते तपस्तप्यते बहूनि वर्षसहस्राण्यन्तवदेवास्य तद्भवति" इति हि श्रूयते। तत एव कर्मनैरपेक्ष्यवादेऽस्य वाक्यस्य प्रथमत उपादानम्। **ब्रह्मविदाप्नोतीति** ज्ञानस्य मोक्षसाधनत्वमुक्तम्। प्राप्यप्राप्तृभेदनिषेधार्थः **'ब्रह्म वेद ब्रह्मैव भवति'** इत्युपात्तम्। **तमेवेति** प्रतिबन्धनिवृत्तेर्ज्ञानफलत्वं ज्ञापितम्। ज्ञानव्यतिरिक्तस्य कर्मादेरुपायत्वनिषेधश्चानेन सिद्धः; "नान्यः पन्थाः" इति ह्यनन्तरवाक्यम्। एवं ज्ञानस्यैव मोक्षोपायत्वपरतर्कानुगृहीतस्पष्टार्थानेकवाक्योपादानेन "विद्यां चाविद्यां च" इति समसमुच्चयपरत्वेन परोक्ता श्रुतिश्चातदर्थेत्युक्तं भवति, तस्या एकत्वादस्फुटार्थत्वादतर्कोपेतत्वाच्च श्रुत्यन्तराविरोधेन वर्णनीयत्वात्। एवं ज्ञानस्यैव मोक्षोपायत्वे प्रमाणतया श्रुतय उपपत्तयश्च दर्शिताः; अथ यज्ञादिश्रुतेः कर्मापेक्षितत्वपरतां व्युदस्यति—**यदपि चेत्यादिना**। सिद्धान्तिभास्करयादवप्रकाशानां त्रयाणामपि कर्माभिमतमितीदृशं प्राधान्यं सूचयत्यपिशब्दः। समुच्चयपरवाक्यस्य

श्रुत्यन्तरानुगुण्येन निर्वाहे सति यज्ञादिश्रुतिश्च निर्वाह्येति समुच्चयाभिप्रायश्चशब्दः। अपिचेत्यखण्डोऽयं शब्दो वा ; तदानीमप्युक्तप्रकारेण समुच्चयपरः। **यदुक्तम्** ; 'यज्ञादिकर्मापेक्षा विद्या' इत्यनया वचनव्यक्त्या समुच्चयेन विद्यापेक्षितं यत्कर्मोक्तमित्यर्थः। **वस्तुविरोधः** ; द्वैतवासनाजनकत्वम्, अनित्यफलदत्वं च। **श्रुत्यक्षरपर्यालोचना** ; सन्प्रत्ययार्थनिरूपणम्। **चः** समुच्चये। विविदिषोत्पत्तावुपयोगप्रकारमाह— **अन्तःकरणेति**। **न फलोत्पत्तौ** ; न मोक्षोत्पत्तौ। "यज्ञेन दानेन तपसानाशकेन ब्राह्मणा विविदिषन्ति" इति हि श्रुतिः ; न तु 'मुच्यन्ते' इतीति भावः। अक्षरपर्यालोचना कथमित्यत्राह—**विविदिषन्तीति श्रवणादिति** ; एवं च यज्ञादिश्रुतिपर्यालोचनया च ज्ञानकर्मणोः समुच्चयः प्रत्युक्तः। 'न फलोत्पत्तौ' इति फलशब्दस्य मोक्षे स्वारस्यादेवं योजना कृता। यद्वा यज्ञादिकर्मापेक्षा विद्येति वचोभङ्ग्या अङ्गतयापेक्षितं यत्कर्मोक्तमित्यर्थः। **न फलोत्पत्तौ**; न वेदनोत्पत्तावित्यर्थः ; विविदिषापेक्षया हि फलं वेदनम्। अन्यत्सर्वं पूर्ववत्। अस्यां योजनायां 'यज्ञादिकर्मापेक्षा विद्या' इति निर्देशस्वारस्यमस्ति, अङ्गाङ्गिभावसूत्रस्मारकत्वादस्य निर्देशस्य। अथवा यज्ञादीति प्रयाजादिवन्निष्पन्नस्य करणस्य फलोत्पत्तिदशायामनुग्राहकतयाङ्ग यत्कर्मोक्तं तन्नोपयुक्तमित्यर्थः। **न फलोत्पत्तौ** ; न मोक्षोत्पत्तौ; करणभूतविद्यानुग्राहकत्वेन नोपयुक्तमित्यर्थः। अस्यां योजनायामङ्गाङ्गिभावसूत्रस्मारकनिर्देशस्य फलोत्पत्ताविति निर्देशस्य च स्वारस्यमस्ति। विविदिषन्तीत्युक्तिः 'असिना जिघांसति' इतिवदिति यज्ञादेर्वेदनोपयोगित्वं स्यादिति शङ्कायां, वेदनोत्पत्तौ हेतुत्वे कर्मण इतिकर्तव्यतात्वं करणत्वं चानुपपन्नमित्याह--**विविदिषायामित्यादिना** वाक्यद्वयेन। तत्र शमादिभिः सह समुच्चयेन विकल्पेन चेतिकर्तव्यतात्वं प्रथमं व्युदस्यति—**विविदिषायामित्यादि**। एवकारद्वयेन कर्मणः समुच्चयो विकल्पश्च व्युदस्यते। शमादीनामिन्द्रियव्यापारोपरतिरूपत्वेन यज्ञादिकर्मणस्तत्प्रवृत्तिरूपत्वेनान्योन्यविरोधित्वान्न समुच्चय उपपद्यत इत्यभिप्रायेण **शमादीनामेवेत्युक्तम्**। तुल्यबलयोर्हि विकल्पः; "भूत्वात्मानं पश्येत्" इति शमादीनामात्मदर्शनं प्रति साक्षात्साधनत्वस्य न्यायनैरपेक्ष्येण शीघ्रप्रतिपन्नतया बलीयस्त्वात् "विविदिषन्ति" इति यज्ञादेरिच्छासाधनत्वे स्वरसतः प्रतिपन्नेऽपि स्वारस्यभङ्गेन 'असिना जिघांसति' इत्यादिदृष्टान्तपर्यालोचनरूपन्यायसापेक्षतया कर्मणो

विद्यासाधनत्वस्य विलम्बेन प्रतिपन्नतया दुर्बलत्वाच्च न विकल्प इत्यभिप्रायेणाह—**श्रुतिरेवाहेति**। तथापि विविदिषापेक्षितत्वात् कर्म च ज्ञानोपयोगि; तत्कथमेतत् त्यज्यते? शमादिरुपादीयते? इति शङ्कायां कर्मणः शमादेर्वैषम्यमाह—**अन्तरङ्गोपायतामिति**; 'भूत्वा पश्येत्' इत्यन्तरङ्गत्वं स्पष्टम्। विविदिषायाः पूर्वं हि कर्मोपयोगः; शमादि तु पश्चादप्युपयुज्यत इत्यभिप्रेत्य जातायामित्युक्तम्। ज्ञानं प्रति कर्मणः करणत्वमपि नास्तीत्याह—**तदेवमिति**; करणत्वं संभवतीत्याशङ्क्य निरस्यते, न त्वभ्युपगतत्वात्। विशुद्धं मनो हि करणम् "मनसा तु विशुद्धेन" इति श्रुतेः। **तत्**; उक्तेभ्यो हेतुभ्यः। **एवम्**; समुच्चयेन विकल्पेन चेतिकर्तव्यतात्वेऽनुपपन्ने। स्वर्गादिसाधनस्य कर्मणो विविदिषासाधनत्वानुपपत्तिपरिहाराय **अनभिसंहितफल**शब्दः। विविदिषाया अपि तत्साध्यत्वेन फलत्वात्तस्यानभिसंहितत्वव्यावृत्त्यर्थं **फलविशेषे**त्युक्तम्। विविदिषासिद्ध्यर्थमिदानीमप्यनुष्ठानाय कर्मज्ञानापेक्षाशङ्काव्यावृत्त्यर्थं **जन्मान्तर**शब्दः। "अनेकजन्मसंसिद्धः" इत्यादिवचनादिदानीमप्यनुष्ठेयमित्याशङ्कापरिहारार्थः **शत**शब्दः। कार्यकल्प्यं हि कारणम्, इदानीं विविदिषोत्पत्तिदर्शनेन जन्मान्तरशतानुष्ठानं कल्पनीयमिति भावः। तेन कर्मणा **मृदितकषायस्य**; नष्टपापस्य;

"कषायपक्तिः कर्माणि ज्ञानं तु परमा गतिः।"
"कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तते॥"

इति हि स्मृतिः। एवं विविदिषोत्पत्तौ सत्यां ज्ञानोत्पत्तिकरणमाह—**सदेवेति**। **सदेवे**त्यादि कारणवाक्यम्। **सत्यं ज्ञानमिति** शोधकवाक्यम्। सत्यज्ञानादिवाक्यफलितव्यावृत्तिविशदीकरणाय **निष्कलमि**त्यादि वाक्यमुपात्तम्। **अयमात्मा ब्रह्म**त्यैक्यवाक्यम्। उपक्रमादिषड्विधतात्पर्यलिङ्गोपेतमैक्यवाक्यं दर्शयति—**तत्त्वमसीति**। अस्मिन्वाक्ये ब्रह्मणा जीवविशेषस्यैक्यं श्रुतम्; श्रुतमैक्यं सर्वात्मनामिति ज्ञापनार्थम् "अयमात्मा ब्रह्म" इति वाक्यम्। इत्यादि वाक्यं ज्ञानोत्पत्तौ करणं, न कर्मेत्यर्थः। वाक्यजन्यज्ञानमविद्यानिवर्तकं चेत् श्रवणादिपूर्वकध्यानविधिवैयर्थ्यमित्याशङ्क्याह—**वाक्यार्थेति**। **चः** शङ्काव्यावर्तकः। तेषां स्वरूपमाह—**श्रवणं नामेति**। **प्रतिपादकानि**; निष्पादनक्षमाणि; 'वाक्यजन्यज्ञानात्' इति ह्युक्तम्। **एतद्विरोधि**; आत्मैकत्वविद्याविरोधि। श्रवणादीन्येवंरूपाणि स्युः; कथमेषां वाक्यार्थज्ञानोपयोगः? इत्यत आह—

**श्रवणादिभिरिति ;** वाक्यार्थज्ञानोत्पत्तिविरोधिनिरसनमुपयोग इत्यर्थः । **इति ;** उक्तहेतोः ; ज्ञानकर्मसमुच्चयाङ्गाङ्गिभावानुपपत्तिहेतुभ्य इत्यर्थः । **एवंरूपस्य ;** बन्धनिवृत्तौ कर्मनिरपेक्षवाक्यार्थज्ञानोपक्रमभूतस्य । **श्रवणस्य ;** न तु प्रासङ्गिकार्थस्य । **अवश्यापेक्षितम् ;** नियमेनापेक्षितम् । अपेक्षितं च किमित्यत आह—तच्चेति । कुत एतदपेक्षितमित्यत्राह—**अनेन विनेति** । **जिज्ञासानुपपत्तेः;** विचारानुपपत्तेः । अनुपपत्तिमुपपादयति—**अर्थस्वभावादिति** । कथमर्थस्वभावः ? इत्थम्—नित्यानित्यवस्तुविवेकादनित्यसांसारिकफलभोगविरागो नित्यपुरुषार्थेच्छा च स्यात् ; ततः श्रवणादौ प्रवृत्तिः ; मनोऽवधानहेतुतया तदुपयोगिनी शमादिसंपत्तिरिति । **अर्थस्वभावादेव ;** पूर्वप्रकृतादेवेत्येवकाराभिप्रायः । ज्ञानस्यैवोपायत्वं कर्मणोऽनपेक्षितत्वं चार्थस्वभावाद्धि पूर्वमुक्तम् । यद्वा 'अनेन विना जिज्ञासानुपपत्तेः' इति शमाद्यर्थस्वभावादित्यर्थः । शमादि पूर्ववृत्तमस्तु ; कर्म च पूर्ववृत्तं स्यादित्यत आह—**अर्थस्वभावादेवेति ;** येनार्थस्वभावेन शमादेः पूर्ववृत्तत्वं, तेनैवार्थस्वभावेनान्यस्य पूर्ववृत्तत्वनिषेध इति प्रथमस्यैवकारस्य भावः । पूर्ववृत्तान्तरस्य व्यावृत्त्यर्थं द्वितीय एवकारः । अत्रार्थस्वभावशब्देन शमाद्यर्थस्वभाव उक्तः । ज्ञानार्थस्वभावः कर्मार्थस्वभावश्चाभिप्रेतः, ज्ञानस्य कर्मनिरपेक्षोपायत्वस्वाभाव्यात्, कर्मणो भेदावलम्बित्वेन विरुद्धस्वभावत्वाच्च । शमादेर्निवृत्तिरूपत्वेन प्रवृत्तिरूपकर्मविरोधिस्वभावत्वाच्च साधनचतुष्टयमेव पूर्ववृत्तं न त्वन्यदित्युक्तं भवति । **इदमेव पूर्ववृत्तमिति ज्ञायत इति ;** इदमेवशब्दावयोगान्ययोगव्यवच्छेदपरौ ; इदंशब्दो हि साधनचतुष्टयपूर्ववृत्तत्वपरः, एवकारः कर्मव्युदासपरः ; शमाद्यर्थस्वभावात्तदयोगव्यवच्छेदः, तस्माज्ज्ञानकर्मणोरर्थस्वभावाच्चान्ययोगव्यवच्छेदः ।

सकलविशेषप्रत्यनीकं ब्रह्म चेत् कथं संसारप्रवृत्तिः ? कथं वाक्यार्थज्ञानादेवाविद्यानिवृत्तिः ? अन्तःकरणस्य केन वा मालिन्यम् ? कथं कर्मणा नैर्मल्यम् ? ते चायोगान्ययोगव्यवच्छेदहेतुभूतार्थस्वभावाः कथम् ? इति शङ्कायामुक्तार्थं संकलय्य दर्शयन् शङ्काश्च परिहरति—**एतदुक्तमिति** । **ब्रह्मस्वरूपाच्छादिकाशब्देन** सकलविशेषप्रत्यनीकत्वेऽपि स्वरूपतिरोधानाद्भेददर्शनं संभवतीत्युक्तम् । **भेदः ;** ज्ञातृज्ञेयादिः । **अपारमार्थिकं भेददर्शनमेव बन्धमूलम् ;** न कर्मेत्यर्थः । कर्मापि भ्रान्तिमूलमिति भावः । यद्वा, **अपारमार्थिकं भेददर्शनमेव ;** न सत्यभूतं किंचिदपीति भावः ; तथा सति हि कर्मा-

पेक्षा। बन्धो जन्मजरामरणादिः। **बन्धश्चापारमार्थिक इति**; अविद्यामूलापारमार्थिकभेददर्शनकार्यत्वादिति भावः। ततः किं कर्मनैरपेक्ष्यस्येत्यत्राह—**स चेति। अपारमार्थिकत्वादेवेति**; पूर्वोक्तादेवापारमार्थ्यात् कर्मनैरपेक्ष्यसिद्धिरित्येवकाराभिप्रायः। **ज्ञानेनैव**; न कर्मणेत्यर्थः। न ह्यपरमार्थसर्पनिवृत्तौ रज्जुज्ञानेन विना वैनतेयोपासनकर्मापेक्षा। एवं समसमुच्चयः प्रत्युक्तः। ज्ञानं प्रत्यपि कर्मणो न साधनत्वमित्याह—**निवर्तकं चेति**; निवर्तकबोधः प्रमाणजन्य इति यावत्; प्रमाणजन्यशुक्तिज्ञानं हि रजतनिवर्तकम्। अत्र शमादेरितिकर्तव्यतात्वेन कर्मण इतिकर्तव्यतात्वमपि विरोधान्नेत्यभिप्रेतम्। ततः किमित्यत्राह—**तस्येति**। **तस्य**; कर्मनिरपेक्षस्य। **एतस्य**; अद्वैतविषयस्य। तदेतच्छब्दयोः प्रस्तुतवाचित्वाविशेषेऽपि दूरस्थान्तिकस्थविशेषणविशिष्टपरामर्शित्वं ह्युचितम्। अद्वैतविषयत्वे हेतुमाह—**वाक्यजन्यस्येति**; तत्त्वमस्यादिवाक्यजन्यत्वादद्वैतविषयत्वमित्यर्थः। **कार्ये**; मोक्षे। तर्हि कुत्रोपयोग इत्यत्राह—**विविदिषायामिति**। तुशब्देन करणेतिकर्तव्यतात्वव्युदासः। उपयोगः कथमित्यत्राह—**स चेति**। **पापमूले**त्यादिना 'अन्तःकरणनैर्मल्यद्वारेण' इति पूर्वोक्तं विवृतं भवति। रजस्तमोनिवर्हणादिकं नास्मिन्वाक्ये श्रुतमित्यत्राह—**इतीममिति**। **अभिप्रेत्य**शब्देन शङ्कापरिहारः। **इतिर्हेतौ**; वस्तुविरोधादितिकर्तव्यतात्वकरणत्वानुपपत्त्यादिहेतुभ्य इत्यर्थः। **इममुपयोगम्**; रजस्तमोनिवर्हणसत्त्वविवर्धनरूपं परंपरयोपयोगमित्यर्थः। **विविदिषन्तीत्युक्तमिति**; एतदुक्तं भवतीत्यन्वयः। प्रकृतमुपसंहरति—**अतः कर्मज्ञानस्येति**। **अतः**; हानार्थमुपादानार्थं च कर्मज्ञानस्यानपेक्षितत्वादित्यर्थः। अत्र व्याख्यातृभिरुक्तौ संग्रहश्लोकौ—

" विरोधादप्रमाणत्वाच्चित्तशुद्ध्युपयोजनात्।
ज्ञानमात्रस्य हेतुत्वश्रुतेः सामर्थ्यतोऽपि च॥
शमाद्यङ्गकताम्नानान्न धीकर्मसमुच्चयः।
श्रवणादिक्रमोन्निद्रवाक्यजा धीर्विमोचिका॥ "

इति। विरोधादिति; कर्मणामनित्यफलतया भेदवासनाजनकतया च विरोधो विवक्षितः। सामर्थ्यत इति; ज्ञानस्य मिथ्यार्थनिवर्तकत्वे कर्मनिरपेक्षत्वरूपं वस्तुसामर्थ्यं विवक्षितम्।

## भावप्रकाशिका

**एकस्मादनेकवाक्यानामिति**; "विद्यां चाविद्यां च" इति वाक्यमेकमिति भावः। **अस्फुटार्थात् स्फुटार्थानामिति**; 'प्राबल्यं विवक्षितम्' इत्यनुषङ्गः। ननु कर्मणोऽन्तवत्त्वे श्रूयमाणे कथं तत्फलस्यान्तवत्त्वमुच्यते? इत्याशङ्क्याह—**अनेन वाक्येनेत्यादिना**। **फलद्वारकत्वमुक्तमिति**; कर्मणः स्वत एवान्तवत्त्वेन तस्यानुपदेष्टव्यत्वात् "तद्यथा" इत्यादिश्रुतिवशाच्च फलस्यैवान्तवत्त्वम् "अन्तवदेवास्य तद्भवति" इत्यादिवाक्यप्रतिपाद्यमित्यर्थः। **समुच्चयपरवाक्यस्य श्रुत्यन्तरानुगुण्येनेति**; यद्यपि 'यदपि चोक्तम्' इत्यत्र 'साध्यसाधनद्वित्ववत् कर्मापेक्षितत्वमपि यदुक्तम्' इत्युक्तिक्रियायामेव समुच्चयः प्रतीयते, न निर्वाहक्रियायाम्, तथाप्येतत्फलितार्थकथनमिति द्रष्टव्यम्। 'यदपि चेदमुक्तं यज्ञादिकर्मापेक्षा विद्येति' इत्यत्र 'यज्ञादिकर्मापेक्षा विद्येति यदुक्तम्' इत्युक्ते 'यद्विद्यायां कर्मसापेक्षत्वमुक्तम्' इति सापेक्षत्वस्यैव यच्छब्दनिर्दिष्टतया स्वरसतः प्रतीयमानत्वात् तस्योत्तरवाक्ये विविदिषोपयोगप्रतिपादनमनुचितमित्याशङ्क्य 'यज्ञादिकर्मापेक्षा विद्या' इत्यनया वचनव्यक्त्या अर्थाद्विद्यापेक्षितत्वेन यत्किंचित्कर्मोक्तमिति कर्मण एव यच्छब्दनिर्दिष्टत्वात् तस्य विविदिषोपयोगप्रतिपादनमविरुद्धमित्यभिप्रायेणाह—**अनया वचनव्यक्त्येति**। **निर्देशस्वारस्यमस्तीति**; फलपदस्वारस्यमात्रं नास्तीत्यर्थः। यादवमतप्रतिक्षेपकतया प्रथमव्याख्यानम्; अस्मिन् पक्षे फलपदस्वारस्यमस्ति, 'यज्ञादिकर्मापेक्षा विद्या' इति निर्देशस्याङ्गाङ्गिभावसूत्रस्मारकस्य न स्वारस्यम्। सिद्धान्तिमतप्रतिक्षेपके द्वितीयव्याख्याने 'यज्ञादिकर्मापेक्षा विद्या' इति निर्देशस्वारस्यमस्ति, फलपदस्वारस्यं नास्ति; अत उभयपदस्वारस्यसिद्ध्यर्थं भास्करपक्षप्रतिक्षेपपरतया व्याचष्टे—**अथवा यज्ञादीति**। **प्रयाजादिवदिति**। ननु भास्करेण यज्ञादिवाक्यस्य वेदनं प्रति फलोपकार्यङ्गत्वमात्रप्रतिपादकत्वाभ्युपगमेऽपि फलार्थत्वानभ्युपगमान्मोक्षार्थप्रतिपादनपरत्वनिषेधेऽप्रसक्तप्रतिषेधः स्यादिति चेत्—न; प्रयाजादीनां करणानुग्राहकाणां करणानुग्रहद्वारा फलपर्यन्तत्वसंभवादित्यभिप्रायान्नात्यन्ताप्रसक्तप्रतिषेध इति ध्येयम्। **असिना जिघांसतीति**; असेर्हनने करणत्वं प्रतीयते, न जिघांसायाम्, एवं "विविदिषन्ति" इति वाक्येन वेदानुवचनशब्दितस्य ब्रह्मयज्ञस्य यज्ञस्य दानस्य कामानशनरूपस्य तपसश्च वेदनहेतुत्वं प्रतीयत इति भावः। **वाक्यद्वयेनेति**; 'विविदिषायां जातायाम्—'

इत्येकं वाक्यम्; 'तदेवं जन्मान्तरशत—' इत्यपरम्। **अन्तरङ्गत्वं स्पष्टमिति**; विद्यासंयोगश्रवणादिति भावः। उक्तं च शांकरभाष्ये सर्वापेक्षाधिकरणे—"विद्यासंयोगात् प्रत्यासन्नानि विद्यासाधनानि शमादीनि; विविदिषासंयोगात् बाह्यतराणि यज्ञादीनि" इति। **विविदिषायाः पूर्वं हि कर्मोपयोग इति**;

"प्रत्यक्प्रवणतां बुद्धेः कर्माण्यापाद्य शुद्धितः।
कृतार्थान्यस्तमायान्ति प्रावृडन्ते घना इव॥"

इति तदुक्तेः। प्राग्बीजावापात्कर्षणं तदनन्तरमकर्षणमिति कर्षणाकर्षणाभ्यामङ्कुरादिनिष्पादनवत्

"आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते।
योगारूढस्य तस्यैव शमः कारणमुच्यते॥"

इत्यादिवचनानुसारेण चेतसः शुद्ध्या विविदिषारूपप्रत्यक्प्रावण्यपर्यन्तं कर्मानुष्ठानं ततः संन्यास इति कर्मतत्सन्यासाभ्यां विद्यानिष्पत्त्युपगमादिति भावः। **इदानीमप्यनुष्ठानायेति**; अत्र केचित्—अनुत्पन्नविविदिषस्य पुंसो यावद्विविदिषोत्पत्त्यस्मिन्नपि जन्मनि कर्मानुष्ठानस्येष्टत्वान्नैतच्छङ्काव्यावर्तको जन्मान्तरशब्दः; अपितु अन्तःकरणशुद्धिरनेकजन्मानुष्ठितनित्यनैमित्तिककर्मसाध्येति दर्शयितुमेवेति वदन्ति। **अनेकजन्मसंसिद्ध इति**; जन्मान्तरशब्दस्वारस्यादव्यवहितजन्मन एव ग्रहणं स्यात्; तत्र चानेकजन्मत्वासंभवादस्यापि जन्मनो ग्रहणं भविष्यतीत्यभिप्रायः। **शोधकवाक्यमिति**; कारणत्वशङ्कितदोषव्युदासकं वाक्यमित्यर्थः। **न कर्मेत्यर्थ इति**; यज्ञादिकं कर्म न करणमित्यर्थः। भाष्ये—**न्याययुक्तार्थग्रहणमिति**; तात्पर्यनिर्णायकोपक्रमादिन्यायानुसंधानपूर्वकं सर्वाण्यपि वेदान्तवाक्यान्यात्मैकत्वतात्पर्यकाणीत्येवं तात्पर्यरूपार्थग्रहणमित्यर्थः; न तु वाक्यार्थग्रहणं, तस्य तन्मते श्रवणफलत्वात्। **पूर्वप्रकृतादेवेत्येवकाराभिप्राय इति**; यद्यपि ज्ञानकर्मार्थस्वभावः प्राक्प्रस्तुतः, न तु शमाद्यर्थस्वभावः, व्यक्तिभेदात्—तथाप्यर्थस्वभावत्वेनैक्यमाश्रित्य एवकारः प्रयुक्त इति द्रष्टव्यम्। जिज्ञासानुपपत्त्युपपादकतया 'अर्थस्वभावादेव' इत्युत्तरग्रन्थं व्याख्याय अधुना 'कर्म च पूर्ववृत्तमस्तु' इति शङ्कापरिहारपरतया व्याचष्टे—**यद्वा अनेन विना जिज्ञासानुपपत्तेरिति**; 'अनेन विना जिज्ञासानुपपत्तेः' इत्यंशस्य फलितमर्थ-

माह—**शमाद्यर्थस्वभावादित्यर्थ इति।** **प्रथमस्यैवकारस्य भाव इति**; अर्थस्वभावातिरिक्तस्य हेतुत्वप्रतिक्षेपक इत्यर्थः। **शमाद्यर्थस्वभाव उक्त इति**; इदमुपलक्षणम्; तयोरपि स्वभाव इत्यर्थः। तत्र ज्ञानकर्मार्थस्वभावद्वयस्यात्यन्ताप्रकृततत्वमभिप्रेत्याभिप्रेतत्वोक्तिः, न त्वर्थस्वभावशब्दानुक्तत्वात्; अत एवार्थस्वभावशब्दितस्येतरनिरपेक्षस्य साधनचतुष्टयपूर्ववृत्तत्वायोगान्ययोगव्यवच्छेदहेतुत्वं वक्ष्यमाणमुपपद्यत इति द्रष्टव्यम्। **इदंशब्दो हि साधनचतुष्टयपूर्ववृत्तत्वपर इति**; 'इदमेव पूर्ववृत्तम्' इतीदंशब्दो हीत्यर्थः। **तस्मादिति**; शमाद्यर्थस्वभावादित्यर्थः। **भाष्ये ब्रह्मस्वरूपाच्छादिकाविद्यामूलमिति**; आच्छादिका च सा अविद्या चेति न कर्मधारयः, येन पुंवद्भावात् 'आच्छादकाविद्या' इति स्यात्, किंतु "धात्वर्थे ण्वुल्" इति भावे ण्वुलि कारिकाशायिकादिवदाच्छादिका; ततस्तादर्थ्यचतुर्थीसमासः; आच्छादनकारिण्यविद्येत्यर्थ इति। एवं निर्वाहान्तरमपि द्रष्टव्यम्[1]। **यद्वा अपारमार्थिकं भेददर्शनमेवेति**; बन्धमूलभेददर्शनमपारमार्थिकमेवे-

---

१. अत्रेदमवधेयम्—"ब्रह्मस्वरूपाच्छादिकाविद्यामूलम्" इत्येवोपलभ्यमानेषु कोशेषु पाठो दृश्यते। श्रुतप्रकाशिकायामपि "ब्रह्मस्वरूपाच्छादिकाशब्देन" इति प्रतीकग्रहणेन 'आच्छादिका' इत्येव पाठ आदृतः। अत्र ब्रह्मस्वरूपाच्छादिका च सा अविद्येति कर्मधारयं कृत्वा सा मूलं यस्येति यदि बहुव्रीहिर्विवक्षितः, तदा ब्रह्मस्वरूपाच्छादकाविद्यामूलमिति स्यात्, आच्छादिकाशब्दस्य भाषितपुंस्कत्वेन "पुंवत्कर्मधारयजातीयदेशीयेषु" इति पुंवद्भावस्य दुर्वारत्वात्। न च "न कोपधायाः" इति निषेधः शङ्कनीयः, "प्रतिषेधार्थोऽयमारम्भः" इति भाष्ये पुंवत्कर्मधारयेत्यस्य प्रतिप्रसवार्थतायाः सिद्धान्तितत्वात्। अत एव 'पाचिका च सा स्त्री च पाचकस्त्री' इति सिध्यति। अतः आच्छादिकाविद्येत्यत्र पुंवद्भावविरहः क्लिष्टगत्या कर्मधारयानाश्रयणेनैव साधनीयः। तत्र द्वयी विधा—आच्छादिकाशब्दो न कर्तरि ण्वुलन्तः; किंतु भावे ण्वुलन्तः; आच्छादनमाच्छादिका; ततस्तादर्थ्ये सबन्धसामान्यषष्ठ्या समास इत्येका। आच्छादिका अविद्या मूलं यस्येति त्रिपदो बहुव्रीहिरित्यपरा। तत्र प्रथमपक्षे "तादर्थ्यचतुर्थीसमासः" इति भावप्रकाशिका यथाकथंचित् संबन्धसामान्यषष्ठीसमासपरतया नेया, तादर्थ्यचतुर्थीसमासस्य प्रकृतिविकृतिभाव एव प्रवृत्तेराकरादौ सिद्धान्तितत्वात्। 'चतुर्थी' इति योगविभागस्तु न भाष्यारूढः। "सुप्सुपा" इति समासवर्णनं तु सुतरामगतिकगतिः। अत एव "सिद्धे शब्दार्थसंबन्धे" इत्यादिवार्तिकं व्याचक्षाणेन भाष्यकृता 'धर्मनियमः' इति पदे 'धर्माय नियमः' इति विगृहीते, तद्भाष्यं "चतुर्थ्या तादर्थ्यं प्रतिपाद्यते;

त्यभिप्रायः । "एषोणुरात्मा चेतसा वेदितव्यः' 'दृश्यते त्वग्र्यया बुद्ध्या' इत्यादिप्रमाणानुसाराद्वाक्यार्थभावनापरिपाकसहितमन्तःकरणं त्वंपदार्थस्यापरोक्षतत्पदार्थतामाविर्भावयति" इति वाचस्पतिवचनानुसारेण मनस एव ब्रह्मसाक्षात्कारकारणत्वमिति मन्यमानमप्यनुगृह्णन्नाह—**निवर्तकबोधः प्रमाणजन्य इति यावदिति । दूरस्थान्तिकस्थविशेषणविशिष्टेति**; 'सोऽयं देवदत्तः' इत्यादिवन्न वैयर्थ्यमित्यर्थः । **अभिप्रेत्यशब्देन शङ्कापरिहार इति**; अनुक्तशङ्कापरिहार इत्यर्थः । "धर्मेण पापमपनुदति" "कषायपक्तिः कर्माणि" इत्यादिप्रमाणान्यभिप्रयन्नाह—**परंपरयोपयोगमिति** ।

---

संबन्धसामान्ये तु षष्ठीं विधाय समासः कर्तव्यः; चतुर्थीसमासस्य प्रकृतिविकृतिभाव एव विधानात्" इति कैयटो व्याख्यत् । तत्त्वटीकायां ब्रह्मजिज्ञासापदं विवृण्वानाः श्रीमन्निगमान्तगुरवोऽपि "तादर्थ्ये चतुर्थ्यास्त्विह समासः प्रतिषिद्धः, तादर्थ्यसमासे प्रकृतिविकृतिग्रहणं कर्तव्यमिति कात्यायनोक्तेः । आहुश्च—

'प्रकृत्या विकृतिर्यस्माच्चतुर्थ्यन्ता समस्यते ।
तादर्थ्ये यूपदार्वादौ तेनास्मिन्न समासता ॥'

इति" इति तत्र चतुर्थीसमासं निरास्थन् । (१२३ पुटे द्रष्टव्यम्) त्रिपदबहुव्रीहिरिति द्वितीयपक्षे यद्यपि "स्त्रियाः पुंवत्" इति पुंवद्भावः शक्यशङ्कः; तथापि स्त्रीलिङ्गोत्तरपदपरकत्वाभावान्न भवति । "अलुगुत्तरपदे" इत्यधिकृत उत्तरपदशब्दो हि समासचरमावयवे रूढः । अत्र समासचरमावयवस्य मूलशब्दस्य न स्त्रियाः परत्वं नापि स्त्रीलिङ्गत्वम् । अविद्याशब्दो यद्यपि परः स्त्रीलिङ्गश्च, तथापि न स समासचरमावयवरूपमुत्तरपदम् । अतएव चित्रा जरत्यो गावो यस्येति त्रिपदे बहुव्रीहौ 'चित्राजरद्गुः' इति भाष्यम् । तथा कृत्वा चिन्तायामपि "न कोपधायाः" इति निषेधो जागर्ति । अयं त्रिपदबहुव्रीहिपक्षोऽपि 'एवं निर्वाहान्तरमपि द्रष्टव्यम्' इति वदतो भावप्रकाशिकाकृतो विवक्षित एव स्यादिति मन्यामहे । मूलभावप्रकाशिकायाम् 'आच्छादिकाहेतुरविद्या आच्छादिकाविद्या' इति मध्यमपदलोपिसमासरूपं प्रकारान्तरमुपन्यस्तम् । तत्तु "समानाधिकरणाधिकारे शाकपार्थिवादीनामुपसंख्यानमुत्तरपदलोपश्च" इति वार्तिकरीत्या ज्ञेयम् । "शाकभोजित्वात् तत्साहचर्यात् तद्व्यपदेशान्नार्थ उत्तरपदलोपेनेत्याहुः" इति कैयटरीत्या तु आच्छादिकाहेतोरप्याच्छादिकाशब्देन व्यपदेशात् कर्मधारय एव । अत एव "धर्मार्थो नियमो धर्मनियमः" इति भाष्यं "धर्मार्थत्वान्नियम एव धर्मशब्देनाभिधीयते" इति कर्मधारयपरतया तेन योजितम् । यद्यपि प्रवृत्तिनिमित्तारोपो लक्षणेति वैयाकरणसिद्धान्तात् आच्छा-

## श्रुतप्रदीपिका

श्रौतोऽर्थो न तर्कबाध्य इत्यत्राह—**श्रुतयश्चेति** । पूर्वं वस्तुविरोध उक्तः । **अनित्यफलत्वेनेति** ; फलद्वारा विरोधः । **अन्तवदिति** ; बहूनां बहुकालानुष्ठितानामप्यन्तवत्त्वम् । **तत्रश्चेति** फलद्वारा विरोधो दर्शितः । ज्ञानस्योपायत्वं, प्राप्तृप्राप्यभेदविरहः, प्रतिबन्धनिवृत्तेरेव साध्यत्वम् , उपायान्तरनिषेधश्च "ब्रह्मवित्" इत्यादिवाक्यैः सिध्यति । एवं तर्कानुगृहीतस्फुटार्थानेकश्रुत्यनुगुणार्था "विद्यां चाविद्यां च" इति श्रुतिरिति भावः । अथ यज्ञादिश्रुतेर्विद्यायाः कर्मसापेक्षत्वपरतां व्युदस्यति—**यदिति** । 'यज्ञादिकर्मापेक्षा विद्या' इति वचनव्यक्त्या समप्रधानतया वाङ्गतया वा यत्कर्मापेक्षितमुक्तं, तद्भेदवासनाहेतुत्वात् सन्नन्तपदश्रवणाच्च मनःशुद्धिद्वारेणेच्छार्थमित्यर्थः । समसमुच्चयप्रतिपादकताव्युदासपरत्वे फलशब्दो मोक्षपरः । अङ्गत्वपरताव्युदासपरत्वे वेदनपरः । "विविदिषन्ति" इत्येतत् 'असिना जिघांसति' इतिवत् स्यादिति शङ्कायां प्रथममितिकर्तव्यतात्वेन ज्ञानोत्पत्त्युपायतां व्युदस्यति—**विविदिषायामिति** । **शमादीनामेव** ; निवृत्तिरूपशमादेः प्रवृत्तिरूपयज्ञादिभिर्विरोधान्न समुच्चय इति भावः । विविदिषन्तीति शब्दस्वारस्यभञ्जकन्यायनिरीक्षणविलम्बेनातुल्यत्वान्न विकल्प इत्यभिप्रेत्य **श्रुतिरेवे**त्युक्तम् । क्त्वाश्रुत्या हि शीघ्रप्रतिपत्तिः । इच्छार्थमपेक्षितत्वेऽपि कथं कर्म त्यज्यते? शमादि स्वीक्रियते ? इत्यत्राह—**अन्तरङ्गेति** ; कर्मापेक्षा ज्ञानस्येच्छाद्वारेण व्यवहिता ; उत्पन्नायामपीच्छायां ज्ञानोत्पत्तौ शमाद्यपेक्षितमिति तदन्तरङ्गमिति भावः । अथ विवि-

---

दनरूपे समाने प्रवृत्तिनिमित्ते पुमांसमप्याच्छादिकाशब्दो भाषितुं समर्थ इति भाषितपुंस्कत्वात् कर्मधारयपक्षे पुंवद्भावः शक्यापादनः, तथापि शक्त्या भाषितपुंस्कत्वस्य विवक्षणान्न दोष इति ज्ञेयम् ।

एतावति विचारपदे जोषंभूयमातस्थुषां श्रुतप्रकाशिकाकृतां तत्त्वटीकाकृतां च को वाभिप्राय इति विमृश्यमाने, ब्रह्मस्वरूपाच्छादकाविद्यामूलमिति वा ; ब्रह्मस्वरूपाच्छादिकाविद्या, अविद्यामूलमपारमार्थिकमितिरीत्या वा ; ब्रह्मस्वरूपाच्छादिकाविद्या, तन्मूलमपारमार्थिकमित्यादिरित्या वा, पाठस्तेषामभिमतः स्यादिति शक्यते वक्तुं, तथापि ऋते मूलभावप्रकाशिकां न कोऽपि श्रीभाष्यकोशो मुद्रितोऽमुद्रितोवा तत्र हस्तावलम्बं ददातीति ततो बिभीमः। मूलभावप्रकाशिकाकारः 'आच्छादकाविद्यामूलम्' इत्येव प्रधानपाठमवालम्बतेति स्पष्टं तद्विदाम् ।

दिषार्थं कर्मज्ञानं पूर्ववृत्तं स्यादिति शङ्कां च व्युदस्यन् ज्ञानोत्पत्तौ करणत्वं व्युदस्यति—**तदैवमित्यादिना**। इदं संभवतीति निरस्यते न त्वभ्युपेतमिति। **एवम्**; उक्तोपपत्तिभिः, समुच्चयेन विकल्पेन चेतिकर्तव्यतात्वेऽनुपपन्न इत्यर्थः। इच्छार्थं तज्ज्ञानस्यास्मिन् जन्मनि संपाद्यताव्युदासाय **जन्मान्तरशब्दः**। अनेकजन्मसंसिद्ध्यपेक्षत्वेनेह जन्मन्यप्यनुष्ठेयत्वशङ्काव्युदासाय **शतशब्दः**। कार्यकल्प्यं हि कारणमिति भावः। स्वर्गादिप्रदस्य कथमिच्छार्थत्वमित्यत्राह—**अनभिसंहितेति**। **मृदितकषायस्य**; मृदितपापस्य। "सदेव" इति कारणवाक्यम्। "सत्यम्" इत्यादि शोधकम्। व्यावृत्तिवैशद्याय **निष्कलमित्यादि**। ऐक्यवाक्यम्—"अयमात्मा" इति। तात्पर्यलिङ्गपुष्कलं—**तत्त्वमसीति**; सामान्यतो विशेषतश्च ऐक्यसिद्धिः। वाक्यं करणमिति न कर्मेत्यर्थः। निदिध्यासनवैयर्थ्यमाशङ्क्याह—**वाक्यार्थेति**। अवैयर्थ्यज्ञापनाय तानि शिक्षयति—**श्रवणमिति**। **विद्याप्रतिपादकानि**; विद्यानिष्पादकानीत्यर्थः। **इति**; समुच्चयाङ्गाङ्गिभावयोरनुपपन्नत्वात्। **एवंरूपस्य**; बन्धनिवृत्तौ कर्मानपेक्षवाक्यार्थज्ञानोपक्रमभूतस्य। तच्च किमित्यत्राह—**तच्चेति**। साधनचतुष्टयस्य वृत्तत्वे हेतुं वस्तुसामर्थ्यमाह—**अनेनेति**। नित्यानित्यविवेकान्नित्येच्छा अनित्यजिहासा च; तदुपयोगी शमादिरिति कथमनेन विना जिज्ञासेति भावः। शमादिकं वृत्तमस्तु; कर्म चापेक्षितमस्त्विति शङ्कायामाह—**अर्थस्वभावादेवेति**। अयोगव्यवच्छेदहेतुरर्थस्वभाव एवान्ययोगव्यवच्छेदस्यापि हेतुरित्यर्थः। शमादिकं हि निवृत्तिरूपत्वात्कर्मप्रतिक्षेपकम्। कर्मणो भेदावलम्बित्वं, ज्ञानस्य कर्मानपेक्षत्वं चेति ज्ञानकर्मणोरर्थस्वभावौ गर्भितौ। कथं विशेषप्रत्यनीकेऽध्यासः? कथं तन्निवृत्तौ कर्मानपेक्षा? मनसः कथं मालिन्यनैर्मल्ये? कश्चार्थस्वभावः? इत्याशङ्कायामुक्तं संकलय्य दर्शयति—**एतदुक्तमिति**। स्वरूपतिरोधेरध्यासः। **भेददर्शनमेव**; न सत्यं किमपि; तथा सति हि कर्मापेक्षा। ततः किं बन्धस्य ज्ञानमात्रनिवर्त्यत्वे? इत्यत्राह—**बन्धश्चेति**। **समूलः**; अविद्याभेददर्शनसहितः। **ज्ञानेनैव**; न तु कर्मणा। न हि सर्पभ्रमनिवृत्तौ रज्जुधीः कर्मापेक्षा। एवं समुच्चयव्युदासः। अथ करणत्वं व्युदस्यति—**निवर्तकं चेति**। **तस्य**; कर्मानपेक्षस्य। **एतस्य**; अद्वैतविषयस्य। तत्र हेतुर्वाक्यजन्यत्वम्। **कार्यम्**; बन्धनिवृत्तिः। तर्हि कुत्रेत्यत आह—**विविदिषायामेवेति**; श्रुतिप्रतिपन्नायामेवेति भावः।

स च कथमित्यत्राह—**स चेति**। नैवं श्रुतमित्यत्राह—**इतीममिति**। इति; वस्तुविरोधादिभिः करणेतिकर्तव्यतात्वायोगात्। **इमम्**; प्रणाड्योपयोगम्; अभिप्रेत्योक्तमित्यर्थः। प्रकृतमुपसंहरति—**अत इति**; **अतः**; हानार्थमुपादानार्थं च कर्मज्ञानस्यानपेक्षितत्वादित्यर्थः। अत्र व्याख्यातार आहुः—

" विरोधादप्रमाणत्वाच्चित्तशुद्ध्युपयोजनात्।
ज्ञानमात्रस्य हेतुत्वश्रुतेः सामर्थ्यतोऽपि च॥
शमाद्यङ्गकताम्नानान्न धीकर्मसमुच्चयः।
श्रवणादिक्रमोन्निद्रवाक्यजा धीर्विमोचिका॥"

इति।

**तत्त्वटीका**

ननु कथं वचनविरुद्धे न्यायःस्यात्? युक्तिविरोधाद्भीतस्य च ते श्रुतिविरोधापत्तिरित्यत्राह—**श्रुतय इति**; युक्तेरनुग्राह्यमप्यस्तीति चकाराभिप्रायः। स्वरूपतो विरुद्धत्वं यौक्तिकं प्रागुक्तम्; फलतस्तु श्रौतमिहोच्यते—अनित्यमेव हि कर्मफलं, नित्यस्तु मोक्ष इति। **ज्ञानस्यैव**; न तु कर्मभिः समुच्चितस्य विकल्पितस्य अनुगृहीतस्य चेत्यर्थः; युक्त्यनुगुणस्यैवेति वा। **दर्शयन्तीत्युक्त्या** स्पष्टस्य तर्केणानुसंधानमप्यधिकम्, अस्फुटार्थश्रुत्यन्तरं च दुर्बलमिति सूच्यते। "अविदित्वा" इत्यस्य वाक्यस्य मोक्षसाधनवित्तिरहितो हि कर्म करोतीति तात्पर्यं मत्वाह—**अन्तवदिति**। बहूनां चिरकालानुष्ठितानामपि कर्मणामनित्यफलसाधनत्वमित्यवधारणाभिप्रायः। **तद्यथेत्यादौ** पुण्यशब्दो न संकोचार्ह इत्याकूतम्। **ब्रह्मविदाप्नोतीति** वाक्येऽप्यवधिः कर्मसमुच्चयश्च न श्रुत इति ज्ञानस्य नैरपेक्ष्यसिद्धिः। नन्वत्रापि वेद्यत्ववेदितृत्वप्राप्यत्वप्राप्तृत्वैर्भेदधीरस्तीत्यत्राह—**ब्रह्म वेदेति**; अनेन नित्यं ब्रह्मभूतस्य भ्रान्तिसिद्धाब्रह्मत्वनिवर्तके वाक्ये कर्मकर्तृव्यपदेशः काल्पनिक इति ख्याप्यते। न केवलं कर्मसमुच्चयस्याश्रुतत्वं, प्रतिबन्धनिवृत्तेर्ज्ञानमात्रनिवर्त्यत्वकण्ठोक्तेर्बाधश्चास्तीत्यभिप्रायेणाह—**तमेवेति**। वेद्यावधारणमप्यत्र वेदनस्य नैरपेक्ष्यमभिप्रैति। सनत्सुजातवाक्यान्मृत्युरिहाविद्या। आदिशब्देन "किमर्था वयं यक्ष्यामहे" "न कर्मणा न प्रजया" इत्यादिसंग्रहः।

एताः सयुक्तिका बह्वयः स्फुटार्थाः प्रतिरुन्धते ।
अन्यामनुपपन्नार्थामव्यक्तविषयां श्रुतिम् ॥ २८६ ॥

विषमसमसमुच्चयद्वये सिद्धान्ते च श्रुतिसूत्राभ्यामुक्तमपेक्षितत्वमनुवक्ति—**यदिति** । अपिरत्र गर्हार्थः ; यथाभिमानं पक्षत्रयपरिग्रहप्रयुक्तप्राधान्यपरो वा । **च**ः प्रतिक्षिप्तश्रुत्यन्तरोक्तसमुच्चये । स्वेष्टश्रुत्यादेर्दुर्वारत्वादत्र तात्पर्यान्तरक्लृप्त्योत्तरमाह— **तदिति** । 'यज्ञादिकर्मापेक्षा विद्या' इति स्वरूपोत्पत्तौ फलोत्पत्तौ वापेक्षितत्वेन यत्कर्मोक्तं तदित्यर्थः । उक्तिमात्रपरामर्शे तु न फलोत्पत्तौ कर्मोपयुज्यत इत्येवंप्रकारेण तत्परिहर्तव्यमिति योज्यम् । उक्तार्थगोचरश्रुतिसूत्रपरामर्शे तु "अविद्यया मृत्युं तीर्त्वा" इत्यादिवदर्थान्तरकल्पनानर्हमपीत्यपिशब्दार्थः । अध्याहारश्च प्राग्वत् । **वस्तुविरोधात्** ; भेदवासनासंवर्धकतयान्तवत्फलतया चात्मद्वैतज्ञानस्य तत्फलस्य च विरुद्धत्वादित्यर्थः ; यद्वा द्वैताद्वैतवासनयोस्तत्फलभूतबन्धमोक्षयोश्च वस्तुनोर्मिथो मिथः प्रातिभटद्यादिति । अधीतस्य सन्प्रत्ययस्य वैयर्थ्यमयुक्तमित्यभिप्रायेण **श्रुत्यक्षरपर्यालोचनये**त्युक्तम् । **अन्तःकरणनैर्मल्यद्वारेणेति** ; इदं तावत् सिद्धान्तिनोऽप्यभिमतम् । तथोत्तरत्राप्युपयुज्यतामित्यत्राह— **न फलेति** ; फलशब्द इह शास्त्रफलं ज्ञानं तत्साध्यमोक्षं च सामान्यतो ब्रूते । विद्याया अपि हि फलत्वं वदन्ति—"ब्रह्मावगतिर्हि पुरुषार्थः, निःशेषसंसारबीजाविद्याद्यनर्थनिबर्हणात्" इति । वित्तिमोक्षयोः कर्मोपयोगे श्रुत्यक्षरविरोधंव्यनक्ति—**विविदिषन्तीति** ; न हि 'विदन्ति' इति श्रूयते, न च 'अपवृज्यन्ते' इति । ननु यदि श्रुतत्वाद्विविदिषासाधनत्वं तर्हि "क्रियावानेष ब्रह्मविदां वरिष्ठः" इत्यादिश्रुत्या विविदिषायाः पश्चात् वेदनसाधनत्वमपि स्यात् ; तत्राह—**विविदिषायामिति** । कर्मणां शमादीनां च विद्यार्थतया श्रुतत्वाविशेषेऽपि श्रुत्यैव व्यवहिताव्यवहितहेतुत्वेन व्यवस्थापनमित्यभिप्रायेण **जातायामि**त्युक्तम् । **शमादीनामेवे**त्यवधारणेन तेषां कर्मनिवृत्तिरूपतया कर्मसमुच्चयानर्हत्वं व्यज्यते । उत्पत्तिशिष्टशमदमादिगुणावरोधे हि न कर्मणां ज्ञाने विनियोगः शक्यः, किं पुनर्विरुद्धगुणावरोधे ; "क्रियावान्" इत्यादि वाक्यं तु कर्मणः स्तावकं, न विनियोजकम् । यद्वा "यज्ञेन" इत्यादौ च वेदनसहयोगलक्षणतृतीयाक्लृप्तिर्न समीचीना ; अतः कर्मणां वित्त्यर्थविनियोगासिद्धौ न तादर्थ्येन सत्त्वशुद्धिलक्षणद्वारक्लृप्तिः ; विविदिषायां तु विनियोगात्तत्क्लृप्तिर्युक्तेति-

भावः । कर्मण इव शमादेर्न द्वारसापेक्षत्वमित्यभिप्रायेण **अन्तरङ्गोपायतामि-**त्युक्तिः । अतोऽपि शमादिभिः कर्मणः समुच्चयक्लृप्त्यनर्हतां श्रुतिरेवाह ; न तु बहिष्ठ-युक्त्या श्रुतेर्लिङ्गादिभिर्वा साध्यत इत्यर्थः । यद्वा श्रुत्या हि कर्मापेक्षत्वशङ्का ; श्रुतिरेव तद्विरुद्धत्वं वक्ति ; अविशिष्टं च श्रुतित्वमनयोः ; युक्त्यनुग्रहात्तु बलीयस्त्वमस्याः "विविदिषन्ति" इत्यत्र वेदनलक्षणा च पदान्तरविमर्शापेक्षिणी वाक्यकक्ष्यानिवेशाद्वि-प्रकृष्टा ; श्रुतिस्तु प्रथमकक्ष्यायां स्थितेति भावः ।

समुच्चयवदेवात्र विकल्पोऽपि न कर्मणः ।
शमाद्यैरव्यवहितैरसाम्यादिति मन्यते ॥ २८७ ॥

भूत्वेति क्त्वाश्रुतेरेषां साक्षादङ्गत्वमीयते ।
हित्वा विविदिषादीनां कल्प्यमन्यत्तु कर्मणः ॥ २८८ ॥

**दान्तः** ; विषयदोषदृष्ट्या काम्यादिषु निवृत्तबाह्याक्षः* । "मनसो दमनं दमः" इति दान्तिः स्मर्यते ; "मनसो विजयः शमः ; विजितस्य तस्य तत्त्वविषयनियोगयोग्यता दमः" इति वाचस्पतिः । **उपरतः** ; देहयात्रायामपि यदृच्छालाभसंतुष्ट्या नाति-प्रवृत्तः । **तितिक्षुः** ; 'दुर्निवाराणि द्वन्द्वानि' इति शेषः । **समाहितः** ; ब्रह्मण्येका-ग्रधीः । **आत्मनि** ; शरीरे ; अवधारणमासत्त्यतिशयपरम् । 'राहोः शिरः' इति-वद्वा भेदक्लृप्त्या 'आत्मन्येवात्मानम्' इत्युच्यते ; न हि वस्तुतः स्वस्मादन्योऽन्यत्र वा मृग्य इति भावः । **पश्येत्** इत्यनेन प्रत्यक्षभ्रमस्य तादृशमेव बाधकमिति सूच्यते । यदि न कर्मणा धीः, केन तर्हि स्यात्? विद्योत्पत्तौ चानपेक्षितमपि कर्म "स खल्वेवं वर्तयन्" इत्यादिश्रुतिबलाद्विद्यया विकल्पतः समुच्चयतः प्रधानतयानुग्राहकत्वेन वा मुक्तावपेक्ष्यतामित्यत्राह—**तदिति** ; स्वरूपफलविरोधादित्यर्थः । **एवम्** ; यज्ञादीनां तृतीयाश्रुत्या विविदिषायां विनियुक्तानां विद्यासाधनत्वासंभवप्रकारेणेति यावत् ।

---

* "दमः बाह्यकरणानामनर्थविषयेभ्यो नियमनम् । शमः अन्तःकरणस्य तथा नियमनम्" इति गीताभाष्यम् । अत्र तात्पर्यचन्द्रिका—शमदमशब्दयोरेकै-कस्योभयाभिधानसामर्थ्येऽपि पौनरुक्त्यपरिहाराय विषयभेदे वक्तव्ये नियमन-क्रमेण दमशमयोर्बाह्यान्तरकरणविषयत्वोक्तिरिति । (गीता. 10. 4).

जन्मान्तरशतेत्यादि क्वचित्तादृशसंभवे ।
अस्मिन् जन्मनि धर्माणामनाघ्राणाय भाषितम् ॥ २८९ ॥

अतो विविदिषार्थत्वं नास्मिन् जन्मनि कर्मणः ।
विचारवृत्तता सूत्रे वक्तव्येत्यभिमन्यते ॥ २९० ॥

ननु फलतो बन्धकं कर्म कथं विविदिषासाधनमपि स्यादित्यत्राह—**अनभिसंहित-फलेति** ।

अनिष्टोऽपि भवेद्दण्डः प्रतिषिद्धेषु लोकवत् ।
काम्येषु तु फलं तत्तद्विनियोगानुसारतः ॥ २९१ ॥

चित्तशुद्ध्यादिव्यवच्छेदाय विशेषशब्दः "कषाये कर्मभिः पक्के ततो ज्ञानं प्रवर्तते" इत्यादि स्मृतिवाक्यं श्रौतविनियोगबाधाद्व्यवधानसहमित्यभिप्रायेणोक्तम्—**मृदितकषायस्य विविदिषोत्पत्तौ सत्यामिति** । कषायः; कल्मषं रागादिश्च । नात्र कर्मणामव्यवधानेन प्रमाजनकत्वम्, प्रमाणेष्वनन्तर्भावात्; अतो निर्विशेषब्रह्मात्मैक्यधीस्तत्त्वावेदकवाक्यजन्ये-त्यभिप्रायेण तादृशवाक्योपादानम् । तत्र कारणत्वेन लक्ष्यत्वाद्ब्रह्मणः प्रथमं कारणवाक्य-माह—**सदेवेति** । अवधारणाभ्यामद्वितीयपदेन चौचित्याद्विजातीयसजातीयस्वगतभेद-निरासः । षड्विधतात्पर्यलिङ्गोपेतसद्विद्याबलाद्गुणोक्तिमत्कारणवाक्यानि स्तुत्यादिपराणि वेति भावः । सद्विद्योक्तमीक्षणादिकमपि बाध्यमित्यभिप्रायेण शोधकैरपि निर्विशेषत्वमाह—**सत्यमिति**; अनृतजडपरिच्छिन्नत्वव्यावृत्तिरिहाभिप्रेता । सत्यादिवाक्यस्य व्यावृत्ति-परत्वव्यक्त्यै शाब्दं विशेषनिषेधमाह—**निष्कलमिति**; निरंशमिति यावत् । **निष्क्रियम्**; निष्पदं निर्व्यापारं वा । **शान्तम्**; वस्तुतः षड्भिर्विकारैरूर्मिभिश्च त्यक्तम् । सर्वजीवोद्देशेन तद्व्यापकतया ब्रह्मैक्यविधिमाह—**अयमिति** । सद्विद्या-यामप्यासतमेन पित्रा पुत्रं प्रति तात्पर्यभूम्ना तद्विधिं वक्ति—**तत्त्वमिति** । आदि शब्देन "आत्मा वा इदमेक एवाग्र आसीत्" "आनन्दो ब्रह्म" "यत्तदद्रेश्यम-ग्राह्यम्" "तद्योऽहं सोऽसौ" इत्यादिग्रहः । वाक्यादेव जन्म यस्य तद्वाक्यजन्म, तस्मात् ज्ञानात्*; प्रत्यक्षरूपादिति शेषः । तत एवाविद्या निवर्तते; राजत्वोपदेशेन व्याधत्वादिभ्रमनिवृत्तिवदिति भावः ।

---

* अनेन 'वाक्यजन्मज्ञानात्' इति मूलपाठ आचार्याभिमत इति प्रतीयते ।

ज्ञानादेवेति निर्धारः कर्मणो मुक्तिसाधने ।
समुच्चयविकल्पाङ्गप्रधानत्वापनुतये ॥ २९२ ॥

"स खलु" इत्यादिकमन्यपरम् । ध्याननियोगजन्यज्ञानपक्षं तु दूषयिष्यति । नन्वदृष्टस्य सर्वकार्यहेतुतया कर्मणो वाक्यसहकारित्वादविधेयज्ञानान्मुक्तिरिति पक्षे श्रवणमननपूर्वकध्यानविधेस्त्रयाणां वा विधीनां वैयर्थ्यं च स्यादित्यत्राह—**वाक्यार्थ इति** । अदृष्टं हि दृष्टोपनायकम्; तत्सिद्धैः श्रवणादिभिः शमादिभिश्च वाक्यं चरितार्थम्; ततो विश्वबाधकज्ञानोत्पत्तौ दृष्टोपकारितया श्रवणादित्रयसाफल्यमित्याशयः । ननु नित्यनिर्विशेषस्वप्रकाशे शास्त्रवैयर्थ्यम्; "ब्रह्मवित्" इत्यादिषु कर्मकर्त्रादिभेदोक्तिविरोधः; ऐक्यतत्त्वदर्शी च न शिष्यं पश्येत्; भेदभ्रमोपेतश्च कथं वाक्यं श्रावयेदित्यत्राह—**श्रवणमिति**; अत्रेत्युपस्कार्यम् । **तत्त्वदर्शिन** इत्यपि स्वाभीष्टविशेषाभिप्रायम् । **प्रतिपादकानि**; प्रदायकानि उत्पादकानीति वा । कर्ममीमांसा ह्यविद्वदर्था कर्तव्यस्थापिका; ब्रह्ममीमांसा तु तत्त्वबोधोत्पादनेन सर्वकर्तव्यनिवर्तिकेति विशेषः । आपातधीव्यावृत्त्या मीमांसाफलव्यञ्जनाय न्याययुक्तत्वोक्तिः । वस्तुतोऽत्र न्याययुक्तत्वं स्वरूपत एव ग्रहणमिति केचित् । भेदभ्रमनिवर्तकधीहेतुतया शास्त्रादेः सफलत्वम् । आविद्यभेदानुवादेन तन्निषेधे तात्पर्यादविरोधः । ऐक्यदर्शिनोऽपि बाधितानुवृत्तेराचार्यत्वाभिमानेन श्रावकत्वमिति भावः । न्याययुक्तग्रहणे किं पुनर्मननेन? अत आह—**एवमिति** । **स्वात्मनि**; स्वचित्ते । **हेतुतः प्रतिष्ठापनम्**; संशयादेरपुनरङ्कुरत्वाय युक्तिसंस्कारपटिम्ना दृढावस्थापनमित्यर्थः । ननु ताभ्यामेव विपरीतविस्रम्भो निवर्तेत, अन्यथा तद्वैफल्यात्; किमत्र ध्यानेनेत्यत्राह—**एतदिति** । एतदुपकृतवाक्यजन्याद्वैतसाक्षात्कारविरोधिनीनां भेदवासनानां निरासकतया ध्यानं सफलमिति भावः । श्रूयते च—"तस्मै मृदितकषायाय तमसः पारं दर्शयति भगवान् सनत्कुमारः" इति । स्यादेतत्—ध्यानपर्यन्तोपकारेण शास्त्रे कृतकृत्ये योगबलान्निवर्तकधीः; अन्यथा चक्रकं स्यादित्यत्राह—**श्रवणादिभिरिति** । निवृत्ते हि प्रतिबन्धे हेतूनां यथावत्कार्यकरत्वम्; हेत्वन्तरान्वेषणे तु गौरवम्; अतो वाक्यत एव वैशद्यवती निवर्तकधीः; श्रवणात्पूर्वमिव श्रवणतोऽप्यविशदधीरेव; तदुपजीवनेन मननादिक्रमेण ज्ञानान्तरस्य साध्यत्वान्न चक्रकमिति भावः । इतिहेतौ; एतेषु पर्वसु कथंचिदपि कर्मनैरपेक्ष्यादित्यर्थः; **एवंरूपस्य** ।

कर्मनिरपेक्षनिवर्तकज्ञानमूलकारणस्येति यावत् । साधारणानियतानुपयुक्तानां व्यावृत्त्यै **श्रवणस्यावश्यापेक्षितम्** इति पदत्रयम् । तादृशं त्वदिष्टं किमित्यत्र हार्दमुद्गिरति— **तदिति** । "नास्त्यकृतः कृतेन" "शान्तो दान्तः" "येनाहं नामृता स्यां किमहं तेन कुर्याम्" "तं मा भगवान् शोकस्य पारं तारयतु" इत्यादिभिरेतच्चतुष्टयसिद्धिः । अस्यावश्यापेक्षितत्वं कुतः? तत्राह—**अनेनेति** । अनित्यजिहासा नित्योपादित्सा च तद्विवेकतः । तत्पूर्वको विचारस्तु स्वरूपफलयोश्चित्तविक्षेपनिवर्तकशमाद्यपेक्षः । अन्यविरागश्च शमाद्यर्थः । एतेषां न कर्मविचारवत् व्यभिचारो व्यवधानं वा । एतदन्यतमवैकल्येऽपि त्याज्योपादेयजिहासोपादित्सयोरसिद्धेरुक्तप्रकारश्रवणं न सिध्येदिति भावः । कर्मविचारोऽपि विवेकोपयोगाद् वृत्तत्वेन वक्तव्य इत्यत्राह—**अथेति** । शमादेः कर्मनिवृत्तिरूपत्वं, कर्मणोऽनुपयुक्तविरुद्धत्वे, तत्त्वज्ञानस्याध्यस्तनिवर्तनेऽन्यनिरपेक्षत्वं चार्थस्वभावः । ज्ञानस्यैवापेक्षितत्वे तत्साधनचतुष्कस्य वृत्तत्वे च यो हेतुस्तस्मादेवेत्याद्यावधारणम् । एवं वाक्यद्वयेन चतुष्कस्यायोगान्ययोगव्यवच्छेदावुक्तौ । नन्वज्ञानादिप्रत्यनीकस्वमात्रप्रकाशे निर्विशेषे नित्यमुक्ते ब्रह्मणि कथमविद्यातिरोधानभेददर्शनबन्धतन्निवृत्तिनिवर्तकादीनां संभवः? कर्मकृतस्य बन्धस्य निष्कृतिनयात् कर्मविशेष एव निवर्तकः स्यात् । निवर्तकज्ञानं च "ततो ज्ञानं प्रवर्तते" इति स्मरणात् कर्मसाध्यम् । कथं च बन्धकस्वभावस्य कर्मणः क्वचिन्मुमुक्षोपयोगः? अन्तःकरणस्य कुतः कीदृङ् मालिन्यम्? कुतश्च कीदृङ् नैर्मल्यम्? कर्मणश्च प्रमाणतन्त्रं ज्ञानं प्रतीत्र विषयानुकूल्यधीनिघ्नां विविदिषां प्रत्यपि कारणत्वं न दृष्टम् । निवृत्तिधर्मस्य मोक्षहेतुत्वाभावे तद्वाक्यवैयर्थ्यप्रसङ्ग इत्यादिशङ्काशङ्कूनुद्धरन् कण्ठोक्तमाभिप्रायिकं च संकलय्य दर्शयति—**एतदिति** ।

प्रपञ्चितस्य संक्षेपः संक्षिप्तस्य प्रपञ्चनम् ।
एतदुक्तंभवतिना समाधिर्व्याकुलस्य च ॥ २९३ ॥

आच्छादकत्वोक्त्या भावरूपत्वं सूच्यते । तत एव तदुपहितस्योपादानत्वसंभवः । अविद्यया मनागिव छन्नत्वाद्ब्रह्मण्यध्यासाद्युपपत्तिः । स्वप्नदृष्टपुरुषान्तरादिभेददर्शनसाम्यसूचनाय **अपारमार्थिकशब्दः** । **भेददर्शनमेवेत्यत्र** देहात्मैक्यबुद्धावपि कर्तृत्वभोक्तृत्वदेवत्वमनुष्यत्वादिभेददर्शनमन्तर्णीयते । तेन देहातिरिक्तत्वज्ञानमेवालं, कि-

मकर्तृत्वादिविशेषितब्रह्मज्ञानेनेति च शङ्का निरस्ता। कर्मणोऽपि न स्वयं बन्धकत्वम्, दृष्टोपनायकसाधारणनिमित्तत्वात्। अतो भेदभ्रमसिद्धस्य कर्मणोऽप्यपारमार्थिकत्वात् भेदभ्रमद्वारेणैव बन्धकत्वाच्चात्र ज्ञानेतरनिवर्त्यं सत्यं किमपि न बन्धकमस्तीत्यवधारणाभिप्रायः। नन्वसत्यात्सत्यसिद्धिस्त्वन्मतेऽस्तीत्यत्राह—**बन्धश्चेति**। बन्धस्याबाधितत्वे हि सत्यत्वशङ्का; ब्रह्मणो नित्यमुक्तत्वविरोधश्चेति भावः। निष्कृतिन्यायपरिहारायाह—**स चेति**। सत्कर्मणा पापनिवृत्तिश्च भ्रान्तिसिद्धा। अतो मूलभूताविद्याप्रभृति बन्धपर्यन्तं कृत्स्नं मन्त्रनिरपेक्षरज्जुसर्पनयात् कर्मनिरपेक्षाद्वैतबुद्ध्यैव बाध्यमित्यभिप्रायेण **ज्ञानेनैवे**त्युक्तम्। मोक्षसाधनस्य कर्मसमुच्चयाभावेऽपि स्मृतिवशात्तदुत्पादकस्य स्यादित्यत्राह—**निवर्तकमिति**। अयं भावः—विगीतं प्रमाणजन्यं निवर्तकज्ञानत्वात् अविगीतवत्; न कर्मजन्यमिति वा साध्यम्। स्मृतिस्त्वन्यपरा। परिशेषाद्वाक्यहेतुकत्वं स्वोक्तयुक्तिबलादिति परोक्तः कर्मोपयोगः प्रमाणशून्य इत्यभिप्रायेणाह—**तस्यैतस्येति**। **तस्य**; अद्वैतगोचरस्य कर्मव्यतिरिक्तकरणतदनुग्राहकवतः। **एतस्य**; स्वविषयविरुद्धबाधे स्वयमेव समर्थस्य। अन्वयव्यतिरेकवतः कारणान्तरव्यपोहाय वाक्यजन्यत्वोक्तिः। "यज्ञेन विविदिषन्ति" इति श्रुतेर्यज्ञादीनां विनियोगपृथक्त्वेन पृथक्फलत्वोपपत्तिरिति ख्यापयति—**विविदिषायामिति**। यथाश्रुतायामित्यवधारणाभिप्रायः। तत्राप्यव्यवहितहेतुत्वं तुशब्देन व्यावर्त्यते। 'असिना जिघांसति' इत्यादिवत् क्लिष्टगतिर्बाधसिद्धौ। अथ मनोमालिन्यादिकं विवृणोति—**स चेति**। धर्मस्य पापनिवृत्त्यादि साध्यान्तरं विहितम्। श्रद्धायाः सत्त्वरूपसाध्यान्तरं च शास्त्रसिद्धम्। सत्त्वस्य ज्ञानसाधनत्वोक्तिश्च परंपरया स्यात्। पापमूलरजस्तमोविवृद्धिर्मनोमालिन्यम्। धर्मेण तदपनुत्त्या सत्त्वशुद्धिर्नैर्मल्यम्।

कर्मभिः शुद्धचित्तस्य तत्त्वे स्यादनुकूलधीः।
निर्णिनीषा ततस्तस्मिन् कर्मजैवं भवेदिति ॥ २९४ ॥

अत्र प्रथम इतिर्हेतौ; सोपबृंहणश्रुतिस्वारस्यानुगुणनिर्वाहादित्यर्थः। **इमम्**; विविदिषोत्पत्तावपि त्रिचतुरकक्ष्याव्यवहितमिति यावत्। **अभिप्रेत्य**; शाब्दत्वाभावेऽपि श्रुत्यन्तरेण स्मृत्या च स्वीकृत्य। ईदृशोपयोगान्निवृत्तिधर्मविधेश्च साफल्यमिति भावः। अत्रोपायशोधने वक्तव्यशेषं न किंचिदित्यभिप्रायेण निगमयति—**अत इति**। उपादातुं हातुं

वा ज्ञानतद्विचाराभ्यां कर्मतद्विचारयोरनपेक्षणादित्यर्थः । अत्रायं संग्रहस्तूलिकास्थः—

"विरोधादप्रमाणत्वाच्चित्तशुद्ध्युपयोजनात् ।
ज्ञानमात्रस्य हेतुत्वश्रुतेः सामर्थ्यतोऽपि च ॥
शमाद्यङ्गकताम्नानान्न धीकर्मसमुच्चयः ।
श्रवणादिक्रमोन्निद्रवाक्यजा धीर्विमोचिका" ॥

इति । विरोधात्; स्वरूपतः फलतश्चेति शेषः । अप्रमाणत्वात्; कर्मणां ज्ञानतत्फलयोः साधनत्वे प्रमाणशून्यत्वात्; यद्वा प्रमाणत्वाभावात् । सामर्थ्यतः; मिथ्याभूतबाधे ज्ञानस्यैव पर्याप्तत्वात् । धीकर्मसमुच्चयः; मतत्रयोक्तप्रकारः । उन्निद्रत्वं प्रतिबन्धनिवृत्त्या पुष्कलत्वम् ।

**मूलभावप्रकाशिका**

"वक्ष्यति च—सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्" इति भाष्योक्तं कर्मणः स्वरूपोपकार्यङ्गत्वं निरस्यति—**यदपि चेदमुक्तमिति**; यच्छब्दः कर्मपरामर्शी; 'कर्मापेक्षा विद्या' इति यत्कर्म विद्याहेतुत्वेनोक्तं तत्कर्मेत्यर्थः । **वस्तुविरोधादिति**; अनन्तविकल्पास्पदं कथमिव साधनं भवेदिति प्रागुपन्यस्ताद्वस्तुविरोधादित्यर्थः । **अन्तःकरणेति**; "कषाये कर्मभिः पक्के ततो ज्ञानं प्रवर्तते" इत्यादिप्रमाणानुसारादिति भावः । **न फलोत्पत्ताविति**; विविदिषाफलभूतज्ञानोत्पत्तावित्यर्थः। श्रुत्यक्षरपर्यालोचनयेत्युक्तं दर्शयति—**विविदिषन्तीति** । न हि विदन्तीत्युक्तमितिभावः । **विविदिषाया**मिति; 'सत्याम्' इति शेषः* । **अन्तरङ्गेति**; विविदिषासाधनकर्मापेक्षयेत्यर्थः । उक्तं च शांकरभाष्ये सर्वापेक्षाधिकरणे—"विद्यासंयोगात् प्रत्यासन्नानि विद्यासाधनानि शमादीनि; विविदिषासंयोगात्तु बाह्यतराणि यज्ञादीनि" इति । **शान्त इति**; शमः; अन्तरिन्द्रियनिग्रहः । दमः; बहिरिन्द्रियनिग्रहः । उपरतिः; कर्मत्यागलक्षणः संन्यासः, परमते उपरतिशब्दस्य संन्यासार्थकत्वात् ।

"आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते ।
योगारूढस्य तस्यैव शमः कारणमुच्यते ॥"

इत्यादिवचनानुसारेण चेतसो विविदिषादिरूपप्रत्यक्प्रावण्योदयपर्यन्तं कर्मानुष्ठानं, ततः कर्मसंन्यासस्यैव विद्यानिष्पादकत्वमित्यभ्युपगमान्न कर्मणो विद्याहेतुत्वप्रसक्तिरिति भावः ।

---

*** अनेन 'विविदिषायां जातायाम्' इति स्थाने 'विविदिषायाम्' इत्येव मूलभावप्रकाशिकाकृदादृतो मूलपाठ इति गम्यते ।**

तितिक्षा ; क्षमा । समाहितत्वम् ; अवहितचित्तता । "आत्मन्येवात्मानं पश्यति सर्वमात्मानं पश्यति" इति प्रसिद्धः श्रुतिपाठः । सर्वमात्मस्थमात्मनमेव पश्यति आत्माभिन्नं पश्यतीति परेषामभिमतोऽर्थः। नन्वस्तु शमदमादिरन्तरङ्गोपायः; किं तदविद्यानिवर्तकब्रह्मप्रमितिकारणम्? इति जिज्ञासायामाह—**तदेवमिति । जन्मान्तरशतेति** ; अत्र "अनेकजन्मसंसिद्धः" इत्यादिवाक्यान्यभिप्रेतानि । **सदेवेति ;** इदं जगत् अग्रे सृष्टेः प्राक् एकमेवाद्वितीयं सजातीयविजातीयभेदरहितं सद्ब्रह्मैवासीदिति पराभिमतार्थः । **सत्यमिति ;** अनृतजडपरिच्छिन्नव्यावृत्तमित्यर्थः । **निष्कलमिति** ; कलोऽवयवः । **शान्तम्** ; अशनायाद्यूर्मिषट्करहितमित्यर्थः । तर्हि श्रवणादिविधिवैयर्थ्यमित्यत्राह—**वाक्यार्थेति । प्रतिपादकानि ;** निष्पादकानीत्यर्थः । **तत्त्वदर्शिन आचार्यात्** इत्येतत् "स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्" इति श्रवणाङ्गोपसदनविधिलब्धमभिप्रेत्योक्तमिति द्रष्टव्यम् । **न्याययुक्तार्थग्रहणमिति** ; तात्पर्यनिर्णायकोपक्रमादिन्यायानुसंधानपूर्वकं सर्वाण्यपि वेदवाक्यान्यात्मैकत्वतात्पर्यरूपार्थप्रतिपादकानीत्येवंरूपार्थग्रहणमित्यर्थः ; न तु वाक्यार्थग्रहणम्, तस्य तन्मते उक्तरूपश्रवणफलत्वात् । आचार्योपदेशजन्यमात्मज्ञानमेव श्रवणम्; "आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यः" इत्यात्मविषयतया निबध्यमानस्य श्रवणस्य तात्पर्यावधारणरूपत्वासंभवादिति वाचस्पतिमतावलम्बनेन न्याययुक्तार्थग्रहणं श्रवणमित्युक्तम् । **हेतुत इति** ; "मन्तव्यश्चोपपत्तिभिः" इति स्मृत्यनुसारादिति भावः । **एतद्विरोधीति** ; श्रुतात्मैकत्वविरोधीत्यर्थः । **निरस्तेति** ; भेदवासनाया असंभावनाविपरीतभावनाख्यचित्तविक्षेपहेतुतया अविद्यानिवर्तकवाक्यार्थावगतिप्रतिबन्धकत्वात्तन्निरासोऽपेक्षितः । अद्वितीये ब्रह्मणि तात्पर्यावधारणरूपेण वा तात्पर्यावधारणानुकूलन्यायानुसंधानात्मकचेतोवृत्तिविशेषरूपेण वा श्रवणेनाद्वैते प्रमाणासंभावना निरस्यते; उपपत्त्यनुचिन्तनात्मकेनानेन प्रमेयासंभावना निरस्यते ; अनवरताभेदभावनालक्षणनिदिध्यासनेन विपरीतभावना निरस्यत इति परेषां मतम् । **एवंरूपस्येति** ; भेदवासनानिरासकस्यात्मैकत्वतात्पर्यावधारणरूपश्रवणस्येत्यर्थः । **शमदमादिसाधनसंपदिति ;** यद्यपि नित्यानित्यविवेकस्य वैराग्यहेतुत्वाद्विवेकानन्तरं वैराग्यस्यैव पाठ उचितः, तथाप्यत्र पाठक्रमो न विवक्षित इति द्रष्टव्यम् । **जिज्ञासानुपपत्तेरिति** ; ब्रह्मजिज्ञासाशब्दितब्रह्मविचारानुपपत्तेरित्यर्थः । ननु साधनचतुष्टयवत्कर्मापि पूर्ववृत्तमस्त्विति शङ्कां निरस्यति—**अर्थस्वभावादेवेदमेवेति** । यथा शम-

दमादेरन्तरङ्गोपायत्वलक्षणार्थस्वभावात् पूर्ववृत्तत्वमवसीयते, एवमेव कर्मणां ब्रह्मात्मैकत्वज्ञान-विरोधित्वलक्षणार्थस्वभावादेव न पूर्ववृत्तत्वमिति भावः। ननु मृषावादिमते ब्रह्मणः 'अहम्' इति भासमानत्वात् कथं तद्विषयकाज्ञानसंभवः? संभवे वा ज्ञानेनाज्ञानमात्रस्य निवृत्तावपि कर्तृत्वादिबन्धस्य कथं निवृत्तिः? कर्मणां कथं विविदिषायामुपयोगः? इति जिज्ञासां शमयन् बुद्धिसौकर्यायोक्तमर्थं निष्कृष्य दर्शयति—**एतदुक्तमिति**। भासमा-नेऽपि चन्द्रे 'कश्चन्द्रः?' इत्यज्ञानकार्यभूतजिज्ञासाया अनुभूयमानत्वाद्भासमानत्वमात्रं नाज्ञानविरोधीति **ब्रह्मस्वरूपाच्छादके**तिभाष्याभिप्रायः। 'आच्छादिकाविद्या—' इति क्वचित्पाठो दृश्यते; तत्पक्षे आच्छादनमाच्छादिका; 'कारिका, शायिका' इतिवत् "धात्वर्थे ण्वुल्" इति भावे ण्वुल्; तद्धेतुरविद्या आच्छादिकाविद्येति मध्यमपदलोपी समासः; न तु कर्मधारयः, येन "पुंवत्कर्मधारयजातीयदेशीयेषु" इति पुंवद्भावादा-च्छादकाविद्येति स्यादिति द्रष्टव्यम्।

। इति लघुपूर्वपक्षः ।

---

# लघुसिद्धान्तः

श्रीभाष्यम्

अत्रोच्यते—यदुक्तमविद्यानिवृत्तिरेव मोक्षः, सा च ब्रह्मविज्ञानादेव भवतीति; तदभ्युपगम्यते। अविद्यानिवृत्तये वेदान्तवाक्यैर्विधित्सितं ज्ञानं किंरूपमिति विवेचनीयम्—किं वाक्याद्वाक्यार्थज्ञानमात्रम्, उत तन्मूलमुपासनात्मकं ज्ञानमिति। न तावद्वाक्यजन्यं ज्ञानम्; तस्य विधानमन्तरेणापि वाक्यादेव सिद्धेः, तावन्मात्रेणाविद्यानिवृत्त्यनुपलब्धेश्च। न च वाच्यम्—भेदवासनायामनिरस्तायां वाक्यमविद्यायानिवर्तकं ज्ञानं न जनयति; जातेऽपि सर्वस्य सहसैव भेदज्ञानानिवृत्तिर्न दोषाय, चन्द्रैकत्वे ज्ञातेऽपि द्विचन्द्रज्ञानानिवृत्तिवत्; अनिवृत्तमपि छिन्नमूलत्वेन न बन्धाय भवतीति—सत्यां सामग्र्यां ज्ञानानुत्पत्त्यनुपपत्तेः, सत्यामपि विपरीतवासनायामाप्तोपदेशलिङ्गादिभिर्बाधकज्ञानोत्पत्तिदर्शनात्। सत्यपि वाक्यार्थज्ञानेऽनादिवासनया मात्रया भेदज्ञानमनुवर्तत इति भवता न शक्यते वक्तुम्, भेदज्ञानसामग्र्या अपि वासनाया मिथ्यारूपत्वेन ज्ञानोत्पत्त्यैव निवृत्तत्वात्। ज्ञानोत्पत्तावपि मिथ्यारूपायास्तस्या अनिवृत्तौ निवर्तकान्तराभावात् कदाचिदपि नास्या वासनाया निवृत्तिः। वासनाकार्यं भेदज्ञानं छिन्नमूलम्, अथ चानुवर्तत इति बालिशभाषितम्। द्विचन्द्रज्ञानादौ तु बाधकसंनिधावपि मिथ्याज्ञानहेतोः परमार्थतिमिरादिदोषस्य ज्ञानबाध्यत्वाभावेनाविनष्टत्वान्मिथ्याज्ञानानुवृत्तिरविरुद्धा; प्रबलप्रमाणबाधितत्वेन भयादि कार्यं तु निवर्तते। अपिच भेद-

वासनानिरसनद्वारेण ज्ञानोत्पत्तिमभ्युपगच्छतां कदाचिदपि ज्ञानोत्पत्तिर्न सेत्स्यति, भेदवासनाया अनादिकालोपचितत्वेनापरिमितत्वात् तद्विरोधिभावनायाश्चाल्पत्वादनया तन्निरसनानुपपत्तेः। अतो वाक्यार्थज्ञानादन्यदेव ध्यानोपासनादिशब्दवाच्यं ज्ञानं वेदान्तवाक्यैर्विधित्सितम्।

## श्रुतप्रकाशिका

राद्धान्तमारभते—**अत्रोच्यत इति**; अस्मिन् पूर्वपक्षे सिद्धान्त उच्यत इत्यर्थः। पूर्वपक्षोक्तेष्वर्थेष्वविरुद्धांशाभ्युपगमेन प्रतिवदति—**यदुक्तमिति। अविद्यानिवृत्तिः**; प्रतिबन्धनिवृत्तिः; साध्यसाधनद्वित्वनिरासोऽभिमत इत्यर्थः। यः प्रतिबन्धनिरासः कर्मसाध्य उक्तः, तस्य "तमेव विदित्वातिमृत्युमेति" इत्यादिषु ज्ञानसाध्यत्वमुक्तम्। ब्रह्मप्राप्तिस्तु स्वतः सिद्धा। एवकाराभ्यां साध्यान्तरं साधनान्तरं च व्यावर्त्यते। यद्यप्यनिष्टनिवृत्तिरिष्टप्राप्तिश्च द्वयमस्ति, तथापीष्टतमब्रह्मप्राप्तेः स्वतः सिद्धायाः पृथगुपायसाध्यत्वाभावात् प्रतिबन्धनिवृत्तिरेव साध्या। स्वत एव सर्वसाक्षात्कारक्षमं ज्ञानं प्रतिबन्धके निवृत्ते सति ब्रह्मस्वरूपरूपगुणविभवादिकं सर्वं साक्षात्करोति, यथा सेतौ भग्ने जलं स्वयमेव गच्छति न केनचिन्नेतव्यं तद्वत्; यथाश्मापनयने मार्गसमीकरणतत्प्रापणे उभे अपि पृथग्यत्नसाध्ये, न तथेत्यर्थः। यद्वा भावान्तरस्यैवाभावत्वादविद्यानिवृत्तिरेव ब्रह्मप्राप्तिरित्यर्थः। साध्यसाधनद्वित्वनिरासोऽभ्युपेतश्चेत्, विप्रतिपत्तिविषयः क इत्यत्राह—**अविद्येति**; साधनस्वरूपविशेषे विप्रतिपत्तिरित्यर्थः। **किंरूपम्**; किं कर्माङ्गत्वानर्हं भवदुक्तं ज्ञानम्, उत कर्माङ्गत्वार्हमस्मदुक्तं ज्ञानमित्यर्थः। किंरूपमित्यभिप्रेतं विवृणोति—**किमिति**; 'किं वाक्यात्' इत्यादिना परमतं स्वमतं चानुवदति, न तु परमतविकल्पः। प्रथमं परपक्षप्रतिक्षेपः क्रियते; स्वपक्षस्थापनं तु पश्चादित्यभिप्रेत्याह—**न तावदिति**; न तु दूष्यशिरसोरन्यतरदूषणं क्रियते। कुत इत्यत्राह—**तस्येति। विधानमन्तरेणापीति**; प्रमाणज्ञानं वस्तुतन्त्रं न पुरुषतन्त्रम्, कर्तुमकर्तुमन्यथा कर्तुं चाशक्यत्वात्; अतः पुरुषतन्त्रत्वाभावान्न तद्विधेयमिति तैरेवोक्तमिति भावः। **वाक्यादेव**; ब्रह्मस्वरूपपरवाक्यादेव। व्युत्पत्तिमन्तं पुरुषं प्रति न्यायानुगृहीतस्य वाक्यस्यार्थबोधकत्वं स्वतः

सिद्धं, न तु विध्यधीनम्; तच्छ्रवणे पुरुषस्य प्रवृत्तिश्च रागादेवेत्युपपादितम्। यद्यपि न रागात्, तदप्यध्ययनविधिरेवाधीतकृत्स्नवेदवाक्यविचारे प्रवर्तक इति "प्रज्ञां कुर्वीत" इत्यादिविधिर्निरर्थक एव। न च प्रमाणजन्यज्ञानस्य श्रेयःसाधनत्वमलौकिकमिति ताद्रूप्येण तस्य विधेयत्वम्, शुक्तिरूप्यादिभ्रमनिवर्तकज्ञानस्येव बन्धनिवर्तकज्ञानस्य दृष्टार्थत्वाभ्युपगमात्। अतो विधिवैयर्थ्यम्। तेनासकृदावृत्तिसाक्षात्कारभक्तिरूपत्वयावज्जीवानुष्ठेयत्वपराणां, "यावन्न विमोक्ष्येऽथ संपत्स्ये" इत्यादीनां मुक्तेः शरीरपातानन्तरभावित्वपराणां, नाडीविशेषनिष्क्रमणवादिनीनां मार्गपराणां चानेकश्रुतीनां नैरर्थक्यं प्रसज्येतेति। एवमनेकश्रुतिविरोधस्य प्रदर्शनार्थं **तस्य विधानमन्तरेणापीत्युक्तम्**। अथ प्रत्यक्षविरोधं दर्शयति—**तावन्मात्रेणेति**। तावदंशस्ततोऽधिकेऽप्यस्तीति तद्व्यावृत्त्यर्थं तावन्मात्रेणेत्युक्तम्। बहुशास्त्रविरोधप्रत्यक्षविरोधरूपमिदं दूषणद्वयं वदता भगवतापस्तम्बेनापि वाक्यार्थज्ञानमात्रस्य मोक्षसाधनत्वं निरस्तम्; यथा—"बुद्धे क्षेमप्रापणं तच्छास्त्रैर्विप्रतिषिद्धम्; बुद्धे चेत् क्षेमप्रापणमिहैव न दुःखमुपलभेत; एतेन परं व्याख्यातम्" इति; शास्त्रैरिति बहुवचनेन पूर्वोदाहृतानेकश्रुतिविरोधोऽभिप्रेतः। विप्रतिषेधोऽधिकबलेन प्रतिषेधः, न तु प्रकरणसमवत्तुल्यबलेन प्रतिरोधः; बहुशास्त्रविरोधः प्रबलतरः; "भूयसां स्याद्बलीयस्त्वम्" इति न्यायादित्यभिप्रायेण विप्रतिषिद्धमित्युक्तम्। यत्तु परैरस्य दूषणस्य प्रतिवचनं द्वेधा कृतं, तदनुभाष्य दूषयति—**न च वाच्यमिति**। वाक्यं ज्ञानोत्पत्तिमिदानीं न जनयतीति कश्चिन्निर्वाहः; तमाह—**भेदेति**। इदानीं ज्ञानोत्पत्तिर्दृश्यत इति चेत्, तत्परिहारायाह—**अविद्यानिवर्तकमिति**। पश्चादपि वाक्यादेवाविद्यानिवर्तकविशदज्ञानोत्पत्तिश्चेदिदानीमेव जनयत्वित्यत्राह—**भेदवासनायामिति**; प्रतिबन्धकाभावश्च सामग्र्यन्तर्भूतः; अतः सामग्रीवैकल्यात् ज्ञानमनुत्पन्नम्; ध्यानादिविधयः प्रतिबन्धनिरासौपयिका इति भावः। अनेन शास्त्रप्रत्यक्षविरोधौ परिहृतौ भवतः। सनकादीनां ज्ञानाधिकत्वेन श्रुतिस्मृतिप्रसिद्धानामपि ज्ञानानुदयोऽनुपपन्न इति शङ्कायां निर्वाहान्तरमाह—**जातेऽपीति**; अविद्याया एकत्वात् प्रपञ्चप्रतिभासस्यैकस्य ब्रह्मणः स्वप्नरूपत्वाच्च सर्वस्येत्युक्तम्। **न दोषाय**; अनिवर्तकत्वं दोषाय न भवति। ज्ञानोदयेऽपि भ्रमानिवृत्तौ दृष्टान्तं दर्शयति—**चन्द्रैकत्व इति**। अनिवृत्तं चेत् भेददर्शनं बन्धकं स्यादित्यत आह—**अनिवृत्तमपीति**। **छिन्नमूलत्वेन**; छिन्नाविद्याख्यमूलत्वेना

कार्यकारि ; यथा दग्धः पटः पूर्वसंनिवेशेन प्रतीयमानोऽप्याच्छादनादिकार्यायोग्यः क्रमेण विनश्येत्, यथा कुलालभ्रमितं चक्रं भ्रमयितृव्यापारोपरमेऽपि पूर्ववेगवशात् कंचित्कालं स्वयमेव भ्रमत् क्रमेणोपरमेत तद्वदिति भावः । अत्रेतिकरणस्य 'न च वाच्यम्' इत्यनेनान्वयः । प्रथमं ज्ञानानुत्पत्तिं दूषयति—**सत्यामिति** । न्यायानुगृहीतवाक्यमेव सामग्री । प्रतिबन्धिका भेदवासनास्तीति चेत्, तत्राह—**सत्यामपीति** । निवर्त्या वासना निवर्तकोत्पत्तिप्रतिबन्धिका न भवतीत्यर्थः । आदिशब्दादिन्द्रियं गृह्यते । यथा चिरतरतिमिरवासितगुहायां प्रदीपो न नोत्पद्यते, तस्मिन् दीप्तिमति दीपिते सद्य एव तमो विनश्येत्, यथा क्वचिद्देशे 'सर्पः' इति वाक्याच्चिरभ्रमितोऽपि पुरुषो 'न तत्र सर्पः' इत्याप्तोपदेशाज्जानाति; यथा च 'वनं न दग्धम्' इति श्रुत्वा चिरं भ्रान्तस्य पश्चात्तत्र गत्वाङ्गारादिलिङ्गदर्शनेन 'दग्धम्' इति ज्ञानं जायते, यथा चिरं सर्पत्वेन वासिते वस्तुनि समीपगमनानन्तरमिन्द्रियव्यापारेण रज्जुज्ञानं सहसैव जायते, तद्वदित्यभिप्रायेणा**प्तोपदेशलिङ्गादिभिर्बाधकज्ञानोत्पत्तिदर्शनादि**त्युक्तम् । वेदान्तवाक्यं हि दार्ष्टान्तिकम्; अत आप्तोपदेशस्य प्रथमोपादानम् । अथ द्वितीयनिर्वाहमनूद्य निरस्यति—**सत्यपीति** । **मात्रया** ; अल्पमित्यर्थः । **भवता**; ब्रह्मव्यतिरिक्तकृत्स्नमिथ्यात्ववादिनेति भावः । भवतेति सूचितमर्थं विवृणोति—**भेदेति** । वासनाया अपि मिथ्यात्वाविशेषात्तस्या अपि ज्ञानेन निवृत्तत्वमवश्याश्रयणीयमिति भावः । किं ज्ञानोत्पत्तावपि वासना न निवृत्तेत्युच्यते, उत तन्निवृत्तावपि निर्हेतुकं भेददर्शनं भवतीति शङ्काद्वयं हृदि निधाय प्रथमां परिहरति—**ज्ञानोत्पत्तावपीति**; ब्रह्मव्यतिरिक्तस्य कृत्स्नस्य मिथ्यात्वाद्वासनापि ज्ञानैकनिवर्त्या, नो चेन्निवर्तकान्तरमपि ज्ञानत्वाविशेषान्न निवर्तयेदित्यर्थः । स्वयमेव वासना नश्यतीति चेत्, तदयुक्तम्; स्वयमेवेति बाधकज्ञाननैरपेक्ष्यस्य विवक्षितत्वे, वासनाया नश्यन्त्या अपि सत्यत्वप्रसङ्गात् । स्वयमेव नश्यतीति स्वेनैव स्वविनाशकरणं विवक्षितं चेत्, व्याघातः । फलोपान्त्यकारणनाशादिनाश्यत्वेऽपि सत्यत्वप्रसङ्गोऽवर्जनीय एव; कर्मशब्दादिषु तथैव वैशेषिकैर्वर्णितत्वात्, तेषां च पारमार्थ्यदर्शनात् । किं च स्वाप्नार्थोत्पत्त्यादिवद्वासनाया अपि मिथ्यात्वेन तदुत्पत्तिस्थिती अपि मिथ्याभूते इति तद्विनाशोऽपि मिथ्याभूतः; अतो विनाशविषयभ्रमः पुनस्तिष्ठतीति निःशेषभ्रमनिवृत्तिर्न स्यात् । अथ द्वितीयां शङ्कां परिहरति—**वासनेति** । **छिन्नमूलम्** ; छिन्नवासनाख्यमूलम् । **बालिशभाषितमिति** ;

अकारणकार्योत्पत्तिप्रसङ्ग इत्यर्थः। यद्यकारणं भेददर्शनं भवति, तर्हि मुक्तिरपि ज्ञाननिरपेक्षा स्यात्; श्रवणादिभिर्विना वाक्यार्थज्ञानं स्यात्; अविद्यया विना जगद्भ्रमश्च स्यात्; अधिष्ठानेन विना अविद्यापि कार्यकरी स्यादिति भावः। कथं सत्यपि बाधकज्ञाने चन्द्रद्वित्वानिवृत्तिरित्यत्राह—**द्विचन्द्रेति**। तुशब्दो विवक्षितार्थवैषम्यपरः। **बाधकसंनिधावपि**; तज्ज्ञानसंनिधावपि। तिमिरादिदोषस्य पारमार्थ्याज्ज्ञानबाध्यत्वाभावः। तत्पारमार्थ्यं च व्यावहारिकतयापि परेणाभ्युपगन्तव्यम्; अन्यथाप्तोपदेशानन्तरं रज्जुसर्पव्यवहारोच्छेदवद्दोषो मिथ्येति वचनानन्तरं दोषनिवृत्त्या चन्द्रद्वित्वादिव्यवहारोच्छेदप्रसङ्गात्; अतो दोषस्य विद्यमानत्वात् भेदभ्रमस्य समूलत्वम्। अनेन—बाधकसंनिधौ बाध्यसद्भावः, अकारणककार्योत्पत्तिश्चेति दूषणद्वयं दृष्टान्ते परिहृतं भवति। परमते तु दूषणद्वयं तिष्ठत्येव। तर्ह्याप्तोपदेशादिवैयर्थ्यमित्यत्राह—**प्रबलेति**। रज्जुसर्पादिभ्रान्तिमत्पुरुषापेक्षया भयादिकार्यनिवृत्तिः फलत्वेनोक्ता। आदिशब्दात् पलायनादि गृह्यते। द्विचन्द्रज्ञाने च स्वस्यादुष्टकरणत्वधीनिवृत्तिरौषधादिप्रवृत्तिश्च फलम्। ऐन्द्रजालिकभ्रमादिषु भ्रमहेतोः प्राबल्यात् वस्तुतो भ्रमत्वेऽप्यसत्यविषयत्वनिश्चयप्रतिबन्धः स्यादिति तद्व्यावृत्त्यर्थः प्रबलप्रमाणशब्दः। **निवर्तत इति**; प्रतिभासे विद्यमानेऽपि विषयसत्यत्वाभावनिश्चयद्वारा भयादिनिवृत्तिहेतुराप्तोपदेशादिरित्यर्थः। यद्वा यथावदर्थस्वरूपापरोक्ष्यप्रवृत्तिद्वारा भयादिनिवृत्तिहेतुरित्यर्थः। तुशब्दः शङ्काव्यावर्तकः। ज्ञानानुत्पत्तिपक्षस्य बह्वभिमतत्वात् सिंहावलोकितकेन तं दूषयति—**अपि चेति**। 'नायं सर्पः, रज्जुः' इतिवत् दृष्टद्वारा हि भेदनिरासः; अदृष्टमुखेन चेद् भेदसत्यत्वप्रसङ्गात्। अतो भूयस्या भेदवासनाया अल्पीयस्याऽद्वैतवासनया निरासोऽनुपपन्न इत्यर्थः। नन्वदृष्टद्वारा निवर्त्यत्वे निवर्त्यसत्यत्वं नानिष्टम्, ध्याननिवर्त्यसर्पवद्व्यवहारदशायां वासनायाः सत्यत्वाभ्युपगमात्; उत्पन्ने तु ज्ञाने तदुत्पत्तिस्थितिविनाशाश्च बाधिताः स्युरिति; नैवम्—ध्याननिवर्त्यसर्पस्यानित्यत्वमेव, न कदाचिदपि बाध्यत्वं सिद्धमिति तद्वदेवादृष्टनिवर्त्यवासनाया अपि वास्तविकसत्यत्वप्रसङ्गात्। नन्वैक्यभावनारूपं निदिध्यासनं प्रतिबन्धनिवर्तकं चेदुक्तदोषः स्यात्; तत्तु न प्रतिबन्धनिवृत्त्यै, किं तु वाक्यार्थज्ञानोदयसहकारीति; नैवम्—स्मृतिरूपस्य निदिध्यासनस्यानुभवसापेक्षतया तस्य वाक्यार्थज्ञानजननसहकारित्वायोगात्। ननु यद्यपि परोक्षानुभवस्य ध्यानमनुपकारकं, तथापि निदिध्यासनसहकृतं वाक्यमपरोक्षधीहेतुः

स्यात्; नैवम्—निदिध्यासनसहकृतत्वेऽपि शब्दत्वादेवापरोक्षधीहेतुत्वायोगात्, ज्योतिष्टोमवाक्यवत्। एवं शास्त्रप्रत्यक्षविरोधात्तदविरोधनिर्वाहानुपपत्त्या च वाक्यार्थज्ञानमात्रस्य निवर्तकत्वासंभवात् पारिशेष्यात् वाक्यार्थज्ञानादन्यदेव मुक्त्युपायज्ञानं विधित्सितमित्याह—**अत इति।**

## भावप्रकाशिका

**पूर्वपक्षोक्तेष्वर्थेष्वविरुद्धांशाभ्युपगमेन प्रतिवदतीति;**

मिथ्या संप्रतिपत्त्या वा प्रत्यवस्कन्दनेन वा।
प्राङ्न्यायविधिसिद्ध्या वा उत्तरं स्याच्चतुर्विधम्॥"

इति संप्रतिपत्तिशब्दितस्याप्युत्तरत्वं संभवतीति भावः। पराभिमतसदसदनिर्वचनीयाविद्यानिवृत्तेरभ्युपगमानर्हत्वादाह—**प्रतिबन्धकनिवृत्तिरिति। कर्मसाध्य उक्त इति;** साध्यद्वित्ववादिनेति शेषः। **मार्गसमीकरणतत्प्रापणे इति;** मार्गे प्रतिबन्धकाभावसंपादनलक्षणसमीकरणमात्रेणाश्मनो विशिष्टदेशप्राप्त्यभावात् तत्प्रापणार्थं तत्र पृथग्यत्नोऽपेक्षित इति भावः। ननु प्रतिबन्धकनिवृत्तिरेव ज्ञानसाध्या, ब्रह्मप्राप्तिस्तु स्वत एवेत्ययुक्तम्, "ब्रह्मविदाप्नोति परम्" इति ब्रह्मस्वरूपप्राप्तेरपि ज्ञानसाध्यत्वावगमादित्याशङ्क्य प्रतिबन्धकनिवृत्तिब्रह्मप्राप्त्योरैक्याश्रयणेन परिहरति—**यद्वा भावान्तरस्येति। परमतं स्वमतं चानुवदतीति;** ननु वाक्यजन्यं ज्ञानमविद्यानिवृत्तये वेदान्तैर्विधित्सितमिति न परमतम्, ज्ञानस्याज्ञाननिवर्तकत्वस्य लोकसिद्धत्वेन विध्यनपेक्षणात्; ज्ञानस्य प्रमाणपरतन्त्रतया पुरुषतन्त्रत्वाभावात् "द्रष्टव्यः" इत्यनुवाद इत्यभ्युपगमाच्च; अत एव 'तस्य विधानमन्तरेणापि वाक्यादेव सिद्धेः' इति भाष्यग्रन्थो न युक्तः, विधानस्यानभ्युपगमे सिद्धवत्कृत्य व्यवहारस्यायुक्तत्वादिति चेत्—सत्यमेतत्; तथापि "द्रष्टव्यः" "आत्मानं पश्येत्" इति विधिप्रत्ययश्रवणात् तन्मतेऽपि विधेयत्वं बलादभ्युपगमनीयमित्यभिप्रेत्यैतदुक्तमिति द्रष्टव्यम्। ननु वाक्यार्थज्ञानस्य प्रमाणपरतन्त्रत्वेन विधेयत्वासंभवेऽपि तदनुकूलश्रवणरूपव्यापारस्य विधेयत्वं भविष्यतीत्याशङ्क्याह—**तच्छ्रवणे पुरुषस्येति; अध्ययनविधिरेवेति;** वाचस्पतिमते अध्ययनविधेरर्थज्ञानपर्यन्तत्वाभ्युपगमादधीतेन स्वाध्यायेनार्थज्ञानसंपादनस्य विचारमन्तरेणासंभवात् प्राप्नोत्येव विचारः। उक्तं च मीमांसकैः

"धर्मे प्रमीयमाणे तु वेदेन करणात्मना ।
इतिकर्तव्यताभागं मीमांसा पूरयिष्यति ॥"

इति । ततश्च पूर्वभागविचारवदुत्तरभागविचारोऽप्यध्ययनविधिवशादेव सिध्यति । यद्यप्यध्ययनविधिरक्षरग्रहणमात्रफलः, तथापि पूर्वभागतुल्यशीलत्वादुत्तरभागविचारोऽपि सिध्यत्येवेति' विधिवैयर्थ्यमिति भावः । **न च प्रमाणज्ञानस्य श्रेयःसाधनत्वमलौकिकमिति**; वेदनादेः रागप्राप्तस्यापि "अक्षैर्दीव्यति" इति क्रत्वपूर्वार्थितया विधानवदिति भावः । **यावन्न विमोक्ष्येऽथ संपत्स्य इति**; "तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये" इति हि श्रुतिः । तस्य; ब्रह्मविदः । तावदेव चिरम्; तावानेव विलम्बः । यावन्न विमोक्ष्ये; यावत् शरीरारम्भकप्रारब्धकर्मणा न विमोक्ष्यत इत्यर्थः । अथ संपत्स्ये; अथ संपत्स्यत इत्यर्थः; पुरुषव्यत्ययश्छान्दसः । यद्वा तस्य; 'मे' इत्यध्याहारः; अतो न पुरुषव्यत्ययः । **नैरर्थक्यं प्रसजेदिति**; वाक्यजन्यज्ञानस्यैव निरपेक्षतया अविद्यानिवर्तकत्वादित्यर्थः । 'विधिवाक्यविशेषकीर्तनं विना 'विधानमन्तरेणापि सिद्धेः' इति सामान्योपदेशस्य प्रयोजनमाह—**अनेकश्रुतिविरोधस्य प्रदर्शनार्थमिति । विप्रतिषेधोऽधिकबलेन प्रतिषेध इति**; विशब्दो हि विशिष्टवाची; विशिष्टः प्रतिषेधो विप्रतिषेधः; तस्य च विशिष्टत्वमधिकबलनिरूपितत्वम् । यद्यपि "विप्रतिषेधे परं कार्यम्" इत्यत्र विप्रतिषेधशब्दस्य परस्परविरोध एव लोकप्रसिद्धोऽर्थ इति भाष्यकैयटयोः स्पष्टीकृतं, तथापि प्रकृते विप्रतिषेधशब्दस्य परस्परविरोधरूपप्रसिद्धार्थाश्रयणे शास्त्रैरिति तृतीयानुपपत्तिरिति भावः । ननु सर्वस्य पुंसोऽज्ञाननिवृत्तेः कः प्रसङ्ग इत्यत आह—**अविद्याया एकत्वादिति । अनिवर्तकत्वं दोषाय न भवतीति**; 'ज्ञानस्य' इति शेषः । ननु—एकैवाविद्या, एकमुक्तौ सर्वमुक्तिः, अथापि कस्यचित् ज्ञानमुत्पन्नम्, अथापीदानीं वर्तमानः सर्वस्य पुंसः प्रपञ्चप्रतिभासो दग्धपटन्यायेनानुवर्तत इति केनापि नाभ्युपगतमिति चेत्—सत्यम्; 'सर्वस्य पुंसः' इत्यत्र सर्वशब्दः कायव्यूहस्थलीयैकाविद्योपाधिकैकजीवसंबन्धिनानान्तःकरणोपाधिकप्रदेशभेदाभिप्राय इत्यदोषात् । केचित्तु 'सर्वस्य' इति पदं न सर्वपुरुषपरम्, अपितु उत्पन्नज्ञानपुरुषमात्रपरमिति व्याचक्षते । **छिन्नाविद्याख्यमूलत्वेनेति**; न च कथं मूलनिवृत्तौ मूलयनुवृत्तिरिति वाच्यम्, अविद्यासंस्कारादपि तदनुवृत्त्युपपत्तेः । न च क्रिया-

ज्ञानयोरेव स इति वाच्यम्, निःसारितपुष्पायां संपुटिकायां पुष्पवासनानुवृत्तिदर्शनात् संस्कारनाशव्यतिरिक्तनाशमात्रस्य संस्कारव्याप्ततया अविद्यानाशस्यापि संस्कारव्याप्ततया अविद्यानाशस्थलेऽपि संस्कारावश्यंभावेन तद्वशेन भेदप्रतिभासोपपत्तेरित्यर्थः । परैर्हि जीवन्मुक्तौ त्रयः प्रकारा वर्णिताः—अविद्या सर्वात्मना नष्टा, संस्काररूपा तद्वासनानुवर्तते, तन्मूलोऽयं देहादिप्रतिभासः कुलालचक्रवदित्येकः । आवरणविक्षेपशक्तिमत्या मूलाविद्यायाः प्रारब्धकर्मणा वर्तमानदेहाद्यनुवृत्तिप्रयोजको विक्षेपशक्त्यंशोऽविद्यालेशरूपोऽनुवर्तते, तन्मूलोऽयं प्रतिभास इत्यपरः । दग्धपटन्यायेन मूलाविद्यैवानुवर्तते, तन्मूलोऽयं प्रतिभास इत्यपरः । एतत्सर्वं 'छिन्नमूलत्वेन' इति भाष्ये 'छिन्नाविद्याख्यमूलत्वेन' इति टीकायां च विवक्षितम् । आप्तोपदेशादीनां क्रमेणोदाहरणान्याह—**क्वचिद्देशे सर्प इति वाक्यादित्यादिना** । **भ्रमित इति**; ण्यन्तात् कर्मणि क्तः । न च कथं वाक्यस्य चिरतरानुवृत्तभ्रमहेतुत्वमिति वाच्यम्, वाक्यार्थस्मृतिपरंपरासंभवेन चिरानुवृत्तभ्रमहेतुत्वसंभवादिति भावः । अत्र साक्षात्कारिभ्रमस्य साक्षात्कारिविशेषदर्शननिवर्त्यत्वेनाप्तोपदेशनिवर्त्यत्वाभावात् 'सर्प इति वाक्याच्चिरभ्रमितः' इत्युक्तम् । **निवर्तकान्तरमपि ज्ञानत्वाविशेषादिति**; न चेष्टापत्तिः, त्वया वासनाया अप्यावृत्तात्मसाक्षात्कारनिवर्त्यत्वाभ्युपगमादिति भावः । **स्वेनैव स्वविनाशकरणं विवक्षितं चेदिति**; पूर्वपक्षे एवकारेण बाधकज्ञानमात्रस्यैव व्यवच्छेद्यत्वम्; इह तु स्वव्यतिरिक्तं सर्वं व्यवच्छेद्यमिति विवेकः । **व्याघात इति**; प्रतियोगिव्यतिरिक्तनिरपेक्षत्वे वासनायाः स्थिरत्वव्याघातः, स्वस्य स्वनाशे निरपेक्षकारणत्वे अपेक्षणीयान्तराभावात् क्षणिकत्वमेव स्यादिति । केचित्तु स्वस्यैव नाश्यत्वनाशकत्वयोरभ्युपगमे कर्मकर्तृव्याघात इत्यर्थ इति वदन्ति । **फलोपान्त्येति**; अपूर्वादिकं फलनाश्यम्; उपान्त्यनाश्यः शब्दः, सुन्दोपसुन्दन्यायेनान्त्योपान्त्यनाश इत्यभ्युपगमात्; आश्रयनाशजन्यरूपादिनाशस्थले कारणनाशनाश्यत्वमिति द्रष्टव्यम् । **विनाशविषयभ्रमः पुनस्तिष्ठतीति**; मिथ्यात्वस्य प्रतीतिव्याप्तत्वादिति भावः । **छिन्नवासनाख्यमूलमिति**; यद्यपि 'छिन्नमूलत्वेन न बन्धाय भवति' इति भाष्ये 'छिन्नाविद्याख्यमूलत्वेन' इत्यर्थ उक्तः, स एवेह दूषयितुमुचितः; तथापि वासनाकार्यत्वकथनात् वासनाया एव मूलत्वं वक्तव्यमिति तथोक्तमिति द्रष्टव्यम् । **व्यावहारिकतयापि परेणाभ्युपगन्तव्यमिति**; यद्यपीदं व्यावहारिकत्वं दार्ष्टान्तिके वासनादावप्य-

स्त्येव, तथापि ब्रह्मात्मैकत्वविज्ञानस्य विश्वबाधकत्ववत् चन्द्रैकत्वविज्ञानस्य तिमिरादिदोषाधिष्ठानयाथात्म्यानवगाहिनस्तिमिरादिदोषनिवर्तकत्वं नास्तीत्यत्र तात्पर्यम्। द्विचन्द्रज्ञानस्य विस्मयादिजनकस्य भयाद्यजनकत्वमभिप्रयन्नाह—**रज्जुसर्पादिभ्रान्तिमत्पुरुषापेक्षयेति**; द्विचन्द्रस्यौत्पादिकतया भयहेतुत्वेऽपि न दोष इत्यपि द्रष्टव्यम्। आप्तोपदेशस्यापरोक्षविषयासत्यत्वनिश्चयाधायकत्वे 'शास्त्रप्रत्यक्षयोर्विरोधे प्रत्यक्षप्राबल्यम्' इति सिद्धान्तो व्याकुप्येतेत्यस्वरसादाह—**यद्वा यथावदर्थस्वरूपेति**; आप्तोपदेशेन संदिहानः सावधाननिरीक्षणे प्रवर्तते; निरीक्षणेनैव तादृशस्थले भ्रमनिवृत्तिरिति भावः। **दृष्टद्वारा हि भेदनिरास इति**; अदृष्टद्वारत्वे ह्यल्पस्यापि निदिध्यासनस्य भूयोवासनानिवर्तकत्वं स्यात्; दृष्टद्वारको हि वासनारूपभेदनिरासः। अतश्चिरानुवृत्तवासनानिवर्तकत्वं न संभवतीत्यर्थः। ततश्च 'नायं सर्पः' इत्यस्य साक्षान्निवर्तकत्वात् दृष्टद्वारत्वं नास्तीति शङ्का पराकृता, अदृष्टाद्वारकत्वमात्रस्यैव दृष्टद्वारेत्यनेन विवक्षितत्वात्। नन्वदृष्टद्वारा निवर्त्यत्वे किं व्यवहारदशायां बाधाभाव आपाद्यते? उत सर्वदा? नाद्यः, इष्टापत्तेः; न द्वितीयः, दृष्टान्तासंप्रतिपत्तेः,

> "तत्त्वमस्यादिवाक्योत्थसम्यग्धीजन्ममात्रतः।
> अविद्या सह कार्येण नासीदस्ति भविष्यति॥"

इत्युक्तरीत्या ध्याननिवृत्तसर्पस्यापि चरमज्ञानेन बाधादिति शङ्कते—**नन्वदृष्टद्वारेति**। **न कदाचिदपि बाध्यत्वं सिद्धमिति**; यद्विषयकज्ञानेन यददृष्टद्वारा निवर्त्यं, न तत् तज्ज्ञानबाध्यमिति हि व्याप्तिः; ततश्चादृष्टद्वारा गरुडध्याननिवर्त्यसर्पस्य तत्त्वमस्यादिवाक्यजन्यचरमज्ञाननिवर्त्यत्वेऽपि न गरुडज्ञानबाध्यत्वम्। बाधो हि मूलभूताज्ञानेन सह निवृत्तिः; न गरुडज्ञानात् सर्पमूलाज्ञाननिवृत्तिः, येन बाधः स्यात्। ततश्च भेदवासनाया अदृष्टद्वारा ध्यानरूपब्रह्मज्ञाननिवर्त्यत्वे चरमवृत्तिरूपब्रह्मज्ञानबाध्यत्वं न स्यात्; इष्यते च त्वया तज्ज्ञानबाध्यत्वमिति भावः। यद्वा भेदवासनाया अदृष्टद्वारा ध्यानरूपब्रह्मज्ञाननिवर्त्यत्वे सत्यत्वमात्रमापाद्यते, उत अदृष्टाद्वारकज्ञाननिवर्त्यत्वलक्षणमिथ्यात्वाभावो वा। नाद्यः, इष्टत्वात्; न द्वितीयः, निवृत्ताया अपि भेदवासनाया अदृष्टाद्वारकचरमवृत्तिनिवर्त्यत्वेन ध्याननिवर्त्यसर्पवन्मिथ्यात्वसंभवादित्याशङ्कते—**नन्वदृष्टद्वारेति**। अदृष्टद्वारा पूर्वनिवृत्तसर्पस्य चरमवृत्तिनिवर्त्यत्ववाचोऽसंगतत्वात्, नष्टस्य नाशनासंभवात्। भेदवासनाया

अदृष्टाद्वारकचरमवृत्तिनिवर्त्यत्वासंभवेन मिथ्यात्वं न स्यात्। न च मुद्गरप्रहरादिविनष्टघटस्यापि सत्यत्वप्रसक्त्या ध्याननिवर्त्यसर्पमात्रदृष्टान्तीकरणमसंगतमिति वाच्यम्, तद्दृष्टान्तस्यापीष्टत्वात्। ततश्च मुद्गरादिनिवर्त्यघटवत् ध्याननिवर्त्यसर्पवच्च सत्यत्वं स्यादित्यभिप्रेत्य परिहरति—**नेति**। **ज्योतिष्टोमवाक्यवदिति**; इतरथा भावनासहकृतज्योतिष्टोमवाक्यस्यापि ज्योतिष्टोमादिधर्मप्रत्यक्षजनकत्वप्रसङ्ग इति भावः।

**श्रुतप्रदीपिका**

अस्मिन् पूर्वपक्षे सिद्धान्त उच्यत इत्याह—**अत्रेति**। साध्यसाधनद्वित्वनिरासमभ्युपगमेन प्रतिवक्ति—यदिति। तर्हि कुत्र विमतिरित्यत्राह—**अविद्येति**। **किंरूपम्**; किं कर्माङ्गत्वार्हं मदुक्तं ज्ञानम्? उत तदनर्हं त्वदुक्तम्? इति साधनप्रकारविशेषे विमतिः। परमतं स्वमतं चाह—**किं वाक्यादिति**; न तु परमतविकल्पः। त्वन्मतमयुक्तमित्याह—**न तावदिति**; न तु दूष्यशिरसोरन्यतरदूषणम्। कुत इत्यपेक्षायां विधिवैयर्थ्यं हेतुमाह—**तस्येति**। न हि व्युत्पन्नशब्दश्रवणादर्थबोधो विध्यपेक्षः। विरोधं च हेतुमाह—**तावदिति**। इदं दूषणमापस्तम्बेन चोक्तम्—"बुद्धे क्षेमप्रापणं तच्छास्त्रैर्विप्रतिषिद्धम्; बुद्धे चेत् क्षेमप्रापणमिहैव न दुःखमुपलभेत" इति। उपासनध्रुवानुस्मृतिदर्शनभक्तियावज्जीवानुष्ठानादिविशेषमार्गविशेषपरबहुशास्त्रविरोधः शास्त्रैरिति विवक्षितः। विशेषतः प्रतिषेधो विप्रतिषेधः, प्रबलैः प्रतिषेधः; न समैरुपरोध इत्यर्थः। अनयोः परिहारद्वयं परोक्तमनूद्य निरस्यति—**न चेति**। इदानीमुत्पद्यमानज्ञानव्यावृत्त्यर्थमाह—**अविद्याया निवर्तकमिति**। पश्चादपि तद्वाक्यतश्चेदद्यैव ततस्तत्स्यादित्यत आह—**भेदेति**। व्यासादीनामपि ज्ञानानुदयः श्रोतृधियो दुरारोह इति बाधितानुवृत्तिमाह—**जातेऽपीति**। सर्वमूलाविद्यैक्यात् सर्वस्येत्युक्तम्। **न दोषाय**; मूलाज्ञानानिवर्तकत्वं न दोषाय। ज्ञानोदयेऽपि भ्रमानिवृत्तौ दृष्टान्तं दर्शयति—**चन्द्रैकत्व इति**। तर्हि बन्धकं स्यादित्यत्राह—**अनिवृत्तमिति**। **छिन्नमूलत्वेन**; छिन्नाविद्याख्यमूलत्वेन। श्रवणादेर्वाक्यार्थज्ञानोपयोगाच्छास्त्रविरोधपरिहारश्चार्थात्सिद्ध इत्यभिप्रेतम्। अनुत्पत्तिपक्षं दूषयति—**सत्याम्-इति**। न्यायानुगृहीतव्युत्पन्नपदपङ्क्तिरूपं वाक्यं सामग्री। प्रतिबन्धस्थित्या तद्वैकल्यमाशङ्क्याह—**सत्यामपीति**। बाधकोत्पत्तौ बाध्या वासना न प्रतिबन्धिकेत्यर्थः। यथा क्वचिद्देशे 'सर्पः' इति वाक्याच्चिरभ्रमितः पुरुषो 'न तत्र सर्पः' इत्याप्तोपदेशाज्ज्ञा-

नाति ; यथा च 'वनं न दग्धम्' इति श्रुत्वा चिरं भ्रान्तस्य पश्चात्तत्र गत्वाङ्गारादि-लिङ्गदर्शनेन 'दग्धम्' इति ज्ञानं जायते, तद्वदित्यभिप्रायेण **आप्तोपदेशलिङ्गादिभिर्बाधकज्ञानोत्पत्तिदर्शनात्** इत्युक्तम्। अथ बाधितानुवृत्तिं दूषयति—**सत्यपीति**। **मात्रया**; अल्पमित्यर्थः। **भवता**; कृत्स्नमिथ्यात्ववादिना। भवतेत्यभिप्रेतं विवृणोति—**भेदेति**। ऐक्यज्ञानोदयेऽपि किं वासना स्थिता, उत तन्निवृत्तावपि भेदधीरिति शिरोद्वये प्रथमं दूषयति—**ज्ञानोत्पत्तावपीति**। स्वयं नाशे तत्कृतिश्रमस्तस्य वितथ इति भावः। द्वितीयं दूषयति—**वासनेति**। **छिन्नमूलः**; छिन्नवासनाख्यमूलम्। **बालिशभाषितमिति**; अकारणककार्योत्पत्तिप्रसङ्ग इत्यर्थः। तथा सति मुक्तिर्विना ज्ञानेन स्यात्, तच्च श्रवणादिभिर्विना स्यात्, विनाप्यविद्यया जगद्भ्रमः स्यात्, सा च विनाधिष्ठानेन स्यादिति भावः। तर्हि कथं सत्यपि बाधकज्ञाने द्विचन्द्रज्ञानानुवृत्तिरित्यत्राह—**द्विचन्द्रेति**। तिमिरं परमार्थं न मिथ्या, तस्य ज्ञानाबाध्यत्वात्। तर्ह्युपदेशवैयर्थ्यमित्यत्राह—**प्रबलेति**। ऐन्द्रजालिककृतभयादिव्युदासाय प्रबलेत्यादि पदम्। रज्जुसर्पादिभ्रान्तिमत्पुरुषापेक्षया भयादिनिवृत्तिः फलत्वेनोक्ता। द्विचन्द्रज्ञाने च स्वस्यादुष्टकरणत्वधीनिवृत्तिरित्यादि फलम्; यथावदर्थापरोक्ष्यार्थप्रवृत्तिद्वारा वा सार्थत्वम्। एवं परपक्षे बाधकस्थितौ बाध्यस्थितिरहेतुककार्योदयश्च; स्वपक्षे तदुभयाभाव इति वैषम्यं दर्शितम्। सिंहावलोकितकेन ज्ञानानुत्पत्तिपक्षं दूषयति—**अपि चेति**। अदृष्टद्वारा चेन्निवर्त्यत्वं सत्यं स्यादिति दृष्टद्वारा अनिवर्त्यत्वे दूषणमिदम्। अतः पारिशेष्यान्मुक्त्युपायज्ञानं वाक्यार्थधियोऽन्यदित्याह—**अत इति**।

**तत्त्वटीका**

*अविरोधविहीनत्वात् ख्यातत्वादुपपन्नवत्।
पक्षेऽस्मिन् दूषणं वाच्यमत्रोच्यत इतीर्यते ॥ २९५ ॥

इह तावत् साध्यसाधनद्वित्वनिरासं विरुद्धांशभङ्गाय 'यदुक्तम्' इत्यादिना सामान्यतोऽनुमन्यते। अविद्यातन्निवृत्तिब्रह्मतद्विज्ञानेषु तत्तत्प्रकारविशेषतो विमतिरस्त्येव। स्वमते ह्यविद्यानिवृत्तिर्नाम स्वाभाविकधीप्रसरप्रतिबन्धकस्य कर्मणोऽत्यन्तोच्छेदः; स च भावान्तररूपः।

---

* 'अविरोध' इत्येव सर्वकोशेषु पाठः। 'अवरोध' इति भाव्यमिति भाति। अवरोधो विरोधः। 'विरोधादप्रमाणत्वात्' इत्यस्योत्तरमिदम्।

प्रतिबन्धनिवृत्त्यंशोऽनिष्टभङ्ग इहोदितः ।
धीविकासः स्वतः सिध्यन्निष्टप्राप्तिर्विवेचकैः ॥ २९६ ॥

अतो नावधारणविरोधः । ब्रह्मतद्विज्ञाने च परमार्थब्रह्माकारे ; न वयं तद्विज्ञानस्य कारणत्वाभावं कर्मसमुच्चितत्वं फले तत्सहकृतत्वं वाभ्युपगच्छाम इत्यभिप्रायेण **ब्रह्मविज्ञानादेवेत्युक्तम्** । अभ्युपगम्यते चेत् किं दूष्यमित्यत्र निवर्तकज्ञानप्रकारे तावद्विगानमाह—**अविद्येति** । **विधित्सितम्** ; स्वमते साधनतया चोदयितुमिष्टं, परमते तृप्तिपादयिषितम् । एवं तन्त्रोक्तं विभजते—**किंरूपमिति** ; कर्मनिरपेक्षतया त्वदुक्तम्, उत कर्माङ्गतयास्मदुक्तमित्यर्थः । **विवेचनीयम्** ; अन्यतरकोटिनिरासेन कोट्यन्तरतया परिशेषणीयमिति यावत् । संकलितं विविङ्क्ते—**किमिति** । वाक्यार्थगोचरस्मृतिरूपविधेयव्यावृत्त्यै **वाक्यादित्युक्तिः** । इन्द्रियसंबन्धाद्वाक्यतस्तत्स्वरूपधीः स्यात्, पुत्राद्यनुमा च; तद्व्यवच्छित्त्यै वाक्यार्थग्रहणम् । ध्यानादिद्वारनैरपेक्ष्यं मात्रचोक्तम् । परस्य वाक्यार्थज्ञानं जीवपरयोरैक्यधीः ; स्वस्य तु प्रकारप्रकारित्वबुद्धिः ; अतस्तन्मूलत्वोक्तिरविरुद्धा । मननादिव्यावृत्त्यर्थमुपासनात्मकत्वोक्तिः । परेष्टं दूषयति—**न तावदिति** । तिष्ठतु पक्षान्तरम् ; इदं तु नैवेत्यर्थः । परकल्पितपश्चिमवाक्यार्थज्ञानस्यासंभवं वक्ष्यन् सर्वसंमतप्रथमवाक्यार्थज्ञानस्योपायत्वे “ द्रष्टव्यः ” इत्यादिविधिवैयर्थ्यप्रसङ्गं विधित्सितपदसूचितमुद्घाटयति—**तस्येति** । विधेः शब्दजन्यज्ञाने निर्व्यापारत्वं परैरेवोक्तम् ; “ प्रमाणजज्ञानं वस्तुतन्त्रं न पुरुषतन्त्रं कर्तुमकर्तुमन्यथा कर्तुं चाशक्यत्वात् ” इत्युक्तेरित्याशयः । **वाक्यात्** ; स्वरूपपरवाक्यादिति यावत् । एवकारो विधिनैरपेक्ष्यं व्यनक्ति । **सिद्धेः** ; उत्पत्तेः । न तावदिह वाक्यबाध्यवासनायाः प्रतिबन्धकत्वायोगं च व्यनक्ति । सिद्धेः ; उत्पत्तेः । न तावदिह वाक्यजन्यं ज्ञानं तत एव वाक्याद्बोध्यम् , संसर्गतया संसृष्टतया वा प्रवेशाभावात् ; नापि “ प्रज्ञां कुर्वीत ” इत्यादिवाक्यान्तरैः , सिद्धस्याविधेयत्वात् । साधनत्वेन बोधनं चानपेक्षितम् , अदृष्टार्थत्वानभ्युपगमात् ; कल्पितबाधे च सामर्थ्यतः साधनत्वावगतेः । अतो विधिवैयर्थ्यमित्याशयः । ननु विध्यनुसारित्वान्न वैयर्थ्यमिति चेत् , तथापि तादृशाज्ञानवैयर्थ्यं दुरतिक्रमम् । विधिवैयर्थ्योक्तिराप्रायणानुष्ठेयविधेयाकारवर्गवादिनां ब्रह्मनाडीनिष्क्रमणदेवयानगत्यादिवादिनां च शास्त्राणां वैयर्थ्यमप्युपलक्षयति । अत्र प्रत्यक्षविरोधमप्याह—**तावन्मात्रेणेति** । न ह्युत्पन्नं ज्ञानमविद्यानिवर्तनेऽन्यदपेक्ष्य विलम्बेत, यतोऽनुप-

लब्धिरबाधिका स्यात्; सा च स्वपरयोः प्रत्यक्षानुमानसिद्धा; प्रत्यक्षविरुद्धं च न शास्त्रवेद्यम्; न च तादृशविज्ञानमात्रादविद्यानिवृत्तिः, अन्वयव्यतिरेकासिद्धेरिति भावः। अत्रैवमापस्तम्बेन शास्त्रविरोध उक्तः—"बुद्धे क्षेमप्रापणम्; तच्छास्त्रैर्विप्रतिषिद्धम्" इति। विशेषेण प्रतिषिद्धमित्यर्थः; न हि तुल्यबलविरोधोऽत्र घटते। प्रत्यक्षविरोधश्चोक्तः—"बुद्धे चेत् क्षेमप्रापणमिहैव न दुःखमुपलभेत; एतेन परं व्याख्यातम्" इति। श्रुतिप्रत्यक्षविरोधयोर्द्विधोत्तरमनूद्य निषेधति—**न चेति**। न्यायोपेतश्रवणे पश्चादिव प्रागपि कथं ज्ञानानुत्पत्तिरित्यत्रोक्तम्—**भेदवासनायामिति**। प्रतिबन्धकवासनानिरासे विधीनामुपयोगः; दिग्भ्रमादयो हि उपदेशलिङ्गाभ्यामनिवृत्ताः कदाचित् कुतश्चिद्वासनाविच्छेदे निवर्तन्ते, तद्वदिहेति भावः। दृश्यमानपरोक्षज्ञानव्यावृत्त्यर्थम् **अविद्याया निवर्तक**मित्युक्तम्*। **न जनयती**त्यनेनाविद्यानिवृत्त्यनुपलब्धिविरोधोऽपि परिहृतः।

अत्रैवमद्वैतसंप्रदायरहस्यम्—आपातिकं ज्ञानमविद्यां न निवर्तयति, अनिश्चयात्मकत्वात्। विचारजन्या तु धीः परोक्षाध्यवसायरूपा भेदसत्यत्वभ्रमजनकमविद्यांशं निवर्तयति। तथाप्यपरोक्षानादिभेदभ्रमोपचिता तद्वासना तादृशं भ्रममाधत्ते। तदवष्टम्भोऽविद्यांशस्त्वद्वैतसाक्षात्कारेण निवर्तते। निवृत्तेऽपि तस्मिन् प्रारब्धकार्यकर्मावष्टम्भः कश्चिदविद्यांशोऽनुवर्तते; तां दशां जीवन्मुक्तिमाहुः। सोऽप्यंशोऽन्तिमाद्भोगसंवेदनादात्मसंवेदनाद्वा निवर्तते। ईदृशाविद्यांशभेदाभिप्रायेण "इन्द्रो मायाभिः पुरुरूपः" इत्युच्यते। उक्तक्रमेण मायांशानां निवृत्तिमभिप्रेत्य "भूयश्चान्ते विश्वमायानिवृत्तिः" "विमुक्तश्च विमुच्यते" इति श्रुतिराहेति। तत्र द्वितीयांश इहाविद्याया इत्युक्तः। अथ परोक्षरूपस्यैव ज्ञानस्य निवर्तकत्वमन्वारुह्यापि प्रत्यक्षविरोधं परिहरति—**जातेऽपीति**। यद्वा सर्वविदां सनकादीनामनुत्पन्नसाक्षात्कारत्वमविद्यावत्त्वं च न युक्तम्; उत्पन्नसाक्षात्काराणां तु शिष्यादिप्रतिभासायोगादुपदेष्टृत्वादिकं न स्यात्। न हि परोक्षज्ञानमात्र-

---

* अनेन 'अविद्याया निवर्तकं ज्ञानम्' इत्येवाचार्याभिमतो मूलपाठ इति गम्यते। "तृजकाभ्यां कर्तरि" इति समासनिषेधात् युक्तोऽयं व्यस्तपाठः। श्रुतप्रकाशिकायां 'अविद्यानिवर्तकमिति' इति प्रतीकग्रहणात् "तत्प्रयोजको हेतुश्च" इत्यादिप्रयोगावगतसमासनिषेधानित्यत्वमूलकः समस्तपाठोऽपि सांप्रदायिको ज्ञेयः।

वानत्रोपदेष्टा, "उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः" इति विशेषणात्। अत उभयतःस्पाशा रज्जुरित्यत्र तृतीयाविद्यांशस्थितिदशानुसारेण प्रतिवक्ति—**जातेऽपीति**। यस्यैकैव ब्रह्माविद्या, एक एव च जीवः, तस्यैकाविद्यानिवृत्तौ न क्वापि जीवपदास्पदभेद-भ्रमानुवृत्तिर्बन्धमुक्तिव्यवस्था च स्यादिति चोद्यानुवादसूचनायान्तःकरणभेदोपाधिका-भिव्यक्तिविकल्पानुसारेण **सर्वस्ये**त्युक्तम्। **सहसैवे**त्येतन्निवृत्त्या योज्यम्। अविद्यां-शान्तरावष्टब्धप्रवृत्तफलकर्मावसाने हि सर्वभेदधीनिवृत्तिरिति भावः। **न दोषाय**; अविद्यानिवृत्तौ भ्रमोऽपि निवर्तेत, अकारणककार्यायोगात्; अतो रागादिदृष्ट्या भ्रमानु-वृत्तेरविद्यापि न निवृत्तेति ज्ञानस्य निवर्तकत्वाभावप्रसक्त्यै न स्यात्, बाधितस्याप्यनु-वृत्तिसंभवादित्यभिप्रायः। स्वेष्टं लोकदृष्ट्या प्रत्याययति—**चन्द्रेति**; अङ्गुल्युपष्ट-म्भादिमतश्चन्द्रैकत्वे वाक्यतो ज्ञातेऽपीति भाव्यम्। इदं निदर्शनमन्वारुह्य वादे सुगमम्; अन्यत्र तु निवर्तकज्ञानस्य प्रत्यक्षत्वं निगृह्य नेतव्यम्, प्रत्यक्षतश्चन्द्रद्वित्वभ्रमे बाधिते पुनस्तदनुवृत्त्ययोगात्।

यद्वा प्राच्यादुपष्टम्भाद् भ्रमे प्रत्यक्षबाधिते।<br>
पुनरङ्गुल्युपष्टम्भाद् भ्रमावृत्तिर्न दृश्यते॥ २९७॥<br>
अविद्याजनिता भ्रान्तिर्वाक्यजाध्यक्षबाधिता।<br>
युक्ता तदनुवृत्तिर्हि भूयः संस्कारशेषतः॥ २९८॥

ननु तत्त्वदर्शनात्प्रागपि भेदज्ञानमेव बन्धमूलम्; पश्चादपि तदनुवृत्तौ रागाद्यनु-वृत्त्या बन्धानिवृत्तिः स्यात्; न हि कारणनिवृत्त्या कार्यं स्वकार्याय घटते; मन्यसे चाविद्याशेषानुवृत्तिमित्यत्राह—**अनिवृत्तमिति**। अपिर्विरोधद्योतकः। मूलच्छेदात् खण्डितलतान्यायेन क्रमाद्विनश्येत्, न पुनः प्ररोहेत्। स्वविषयसत्यत्ववासनारूषितं हि भेदज्ञानं रागादिहेतुः, प्रतिमायोषिदादिषु तथा भावादित्यभिप्रायेण छिन्नमूलत्वोक्तिः। दग्धपटचक्रभ्रमादिन्यायोऽत्राभिप्रेतः। अत्र 'ज्ञानं न जनयति' इत्युक्तं तावन्निरस्यति—**सत्यामिति**। व्युत्पन्नपदमाकाङ्क्षादिविमर्शोपेतं वाक्यमपेक्षणीयान्तररहितमित्यभिप्रायेण सामग्रीशब्दः; अन्यथातिप्रसङ्ग इति भावः। नन्वप्रतिबन्धोऽपि सामग्रीति न्यायाद्भेदवा-सनैव स्वनिवृत्तिरूपकारणाभावात्मा सामग्रीवैकल्यं स्यात्; यद्वा पुष्कलाया अपि साम-ग्र्याः शक्त्यपहारेण प्रतिबन्धिकेत्यत्राह—**सत्यामपीति**। अयं भावः—यदि विपरीत-

वासनैव प्रतिबन्धः प्रतिबन्धिका वा स्यात्, तदा अनिरस्तसंस्कारे रज्जुसर्पादिभ्रमे कदाचिदपि बाधकधीर्नोदियात्; उदेति चासाविति प्रसङ्गतद्विपर्ययाभ्यां व्यतिरेकव्यभिचारदृष्टेर्न विरुद्धवासनानिवृत्तिरत्र हेतुः; रज्जुसर्पवासनानुवृत्तावपि हि 'नायं सर्पः' इत्याप्तवाक्येन दण्डसंवट्टनादिनिरूपितेन निश्चेष्टत्वादिलिङ्गेन च परोक्षं बाधकज्ञानं जायते। चन्द्रभेदवासनानुस्यूतावङ्गुल्युपष्टम्भादिदोषापगमे चन्द्रैक्यप्रत्यक्षधीरपि भवति। न च वाक्यादपरोक्षबुद्ध्युत्पत्तौ विरुद्धवासनानिवृत्तिरपेक्षितेति वाच्यम्, अविशिष्टशक्तेर्वाक्यस्य परोक्षधीजननेऽपि तदपेक्षाप्रसङ्गात्; अभेदवासनया भेदवासनानिवृत्तिं वदतश्चक्रकं च स्यात्—अभेदाध्यवसाये तद्भावना, तया भेदवासनानिवृत्तिः; तत एवाभेदाध्यवसाय इति। अध्यवसाये वासनानिवृत्तिरनपेक्षितेति चेत् साक्षात्कारेऽपि नापेक्ष्येत, अविशेषात्। दशमान्वेषिणश्च दशमाभाववासनास्थितावपि 'दशमस्त्वमसि' इत्युपदेशेन प्रत्यक्षधीजननं च त्वयैवोक्तम् "तत्त्वमसि" 'दशमस्त्वमसि' इत्यनयोर्वाक्ययोरपरोक्षात्मविषयत्वं च समानं त्वमेवात्थेति। अथ प्रत्यक्षविरोधं परिजिहीर्षतो बाधितानुवृत्तेरसंभवमभिप्रेत्याह—**सत्यपीति**। **मात्रया**; न तु कात्स्न्र्येन; आत्मभेदसत्यत्वाध्यवसायादेर्निवृत्तत्वात् बाह्येषु भेदधियः किंचिदिव स्थितत्वादिति भावः। **भवते**त्यशक्यताहेतुगर्भम्; न हि ब्रह्मव्यतिरिक्तं किंचित्सत्यमिच्छसीति भावः। हेतुं विवृणोति—**भेदेति**। सामग्रीशब्द इह प्रारब्धकर्मावष्टम्भपौष्कल्यसूचकः। अविद्याविनाशे कर्मवासना च कथं तिष्ठेत्? न हि मृगतृष्णिकानिवृत्तौ तदीयतरङ्गाद्यनुवृत्तिः; अत उपदेष्टृत्वाद्यनुपपत्तिश्च स्यादिति भावः। ननु मिथ्यात्वाविशेषेऽप्येकाधिष्ठानेषु च भ्रमेषु किंचिदेव केनचिद् बाध्यते; तद्वत्स्यादित्यत्रोक्तम्—**ज्ञानोत्पत्त्यैवेति**। सद्व्यतिरिक्तं सर्वं मिथ्येति बाधकधीः; ईदृशज्ञानोत्पत्तौ वासनास्थितिस्ते विरुद्धा। न च वासनावान्तरभेदाद्गतिः; मिथ्यात्वानपायात्। न हि 'रज्जुः' इत्यवगते सर्पाद्यन्यतमधीरनुवर्तेत। किं च निरस्तायामेव भेदवासनायां बाधकज्ञानोत्पत्तिं वदतस्ते तदुत्पत्तौ कथं सा तिष्ठेत्? स्थिता काचित् केन निवर्तेत? यदि ज्ञानान्तरेण; तन्न, अविशेषात्; अथ भोगक्षयात्, तर्हि ज्ञानबाध्यत्वाभावात् सत्या स्यात्, एवं कर्मापि। अद्वैतसाक्षात्कारेऽपि वासनानुवृत्तावनिर्मोक्षप्रसङ्गमभिप्रेत्याह—**ज्ञानोत्पत्ताविति**। ज्ञानैकनिवर्त्यत्वाय मिथ्यारूपत्वोक्तिः। **निवर्तकान्तराभावात्**; सत्यत्वप्रसङ्गभीतैर्ज्ञानेतरबाध्यत्वस्यानभ्युपगमात् स्वकल्पितान्तिम-

भोगसंवेदनादिज्ञानशतागमेऽपि तेषां पूर्वज्ञानवन्निवर्तकत्वायोगादिति भावः। **अस्याः**; मूलाविद्याबाधकप्रबलज्ञानेनापि दुर्बाधाया इत्यर्थः। अहेतुकविनाशस्तु न क्वापि नैगमिकैरिष्यते। तदभ्युपगमेऽपि तेषां पूर्वज्ञानवासनाविनाशादेर्भ्रान्तिसिद्धत्वेन नित्यं भ्रमानुवृत्त्या पुनरपि वासनासंततेरनिवार्यत्वमभिप्रेत्य **कदाचिदपी**त्युक्तम्। न हि वासनानिवृत्तिः सतः स्वरूपम्, साध्यत्वात्। अतिरिक्ता च न सत्या, अद्वैतभङ्गात्। अभावसत्यत्वेऽपि सदद्वैतं सिद्धमिति चेत्—न, क्वचिद्भेदसत्यत्वे अन्यत्राप्यविशेषाद्भावान्तरसत्यत्वेऽपि तद्वदेव ब्रह्माद्वैतानपायाच्चेति। 'अनिवृत्तमपि' इत्यादिनोक्तं स्वव्याघातेनोपालभते—**वासनेति**। स्वोक्तिविरोधानभिज्ञः किमन्यद्वेत्स्यतीत्यभिप्रायेण बालिशत्वोक्तिः। अयं भावः—छिन्नमूलमित्यत्र किं मूलशब्देनाविद्या विवक्षिता, ? उत भेदवासना ? आद्ये मूलभूताविद्याच्छेदे तत्समानबाधकस्य संस्कारस्यापि बाधाद् भेदभ्रमो दुर्वच इत्युक्तम्। द्वितीये कथं वासनोच्छेदे तत्कार्यं संतन्येत। यदि हेत्वभावेऽपि क्वचित्कार्यं स्यात्, तदा स्वपरमतसाधारणैः स्वाभिमतैश्चाविद्यादिभिर्विनापि तानि तानि कार्याणि स्युः। अतो नेदं यौक्तिकवाक्यमिति। बाधितानुवृत्तौ परोक्तो दृष्टान्तश्छिन्नमूलत्वाभावादसमञ्जस इत्याह—**द्विचन्द्रेति**; तिमिरादिदोषस्य सत्यतया बाधकधीशतैरप्यबाध्यत्वात् त्वया तस्य व्यावहारिकसत्यत्वेनाभ्युपगमात् असत्यत्वेऽपि चन्द्रैकत्वज्ञानस्य तदधिष्ठानगोचरत्वाभावेन तद्बाधकत्वायोगाच्चेति भावः। यथा तत्र दृष्टान्ते भयादिनिवृत्त्या बाधकसाफल्यं, न तथा त्वदिष्टे स्यादिति सूचयन् 'न बन्धाय' इत्युक्तं निरस्यति—**प्रबलेति**; प्रमितप्रामाण्यप्रमाणबाधितत्वादित्यर्थः। अत एवात्र कुहकोत्पादितभयादिव्यावृत्तिः। त्वत्पक्षे तु बाध्यबाधकधियोर्द्वयोरपि दोषोत्थत्वेन ज्ञातत्वान्न बाधफलसिद्धिः। लोके बाधितानुवृत्तेरन्यतरविस्रम्भफलहीनस्य यथावन्निरूपणार्थप्रवृत्तिहेतुत्वं च बाधकस्य फलमित्याशयः। सर्पादिभ्रमापेक्षया भयादिकार्योक्तिः। आदिशब्देन विस्मयादिग्रहणम्। एवं भयाद्यनुत्पादकत्वमभिप्रेत्य न्यायतत्त्वे "बाधितानुवृत्तिदशाज्ञानमकिंचित्करत्वादुदासीनम्" इत्युक्तम्। तुशब्देन परोक्ताद्वैषम्यं द्योत्यते। न ह्यत्र नाशकसामग्र्यां सत्यां नाश्यसद्भावः; न च हेत्वभावे कार्योदय इति। ननु भयाद्यपि क्षणिकत्वाद्भ्रमवन्न बाधकविनाश्यम्; उत्तरभयानुत्पत्तिश्च भ्रमान्तरानुत्पत्तिवत्प्राक् सिद्धैव; तर्हि बाधतः कथं भयादिनिवृत्तिर्भण्यते ? उच्यते—बाधके सति सामग्रीवैकल्याद्भयान्तरानुत्पत्त्यनुवृत्तिमपेक्ष्य

भयादिनिवृत्तिभाषणमिति । 'जातेऽपि' इति पक्षस्य मन्दत्वव्यक्त्यै सिंहावलोकितेन बहुव्याख्यातृसंमतायां ज्ञानानुत्पत्तौ दूषणान्तरमाह—**अपिचेति । कदाचिदपि**; ध्यानात्प्रागिव पश्चादपीत्यर्थः ; कल्पकोटिसहस्रध्यानेऽपीति भावः । ननु यज्ञादिभिः परिमितैरेवानाद्युपचितापरिमितकल्मषनिबर्हणेन ज्ञानोत्पत्तिमिच्छतामिव श्रवणादिभिर्वासनानिरासेन ज्ञानोत्पत्तिः स्यादित्यत्राह—**भेदवासनाया इति** । न ह्यत्र "सकृत्स्मृतोऽपि" इत्यादिन्यायः, अदृष्टद्वारा निवर्तकत्वे निवर्त्यसत्यत्वप्रसङ्गात् । न च मन्त्रनिवर्त्यवत् व्यावहारिकसत्यत्वाददृष्टनिवर्त्यत्वोपपत्तिः, तद्वदेव प्रपञ्चस्यापि तदुपपत्तौ बाधकधीगवेषणवैयर्थ्यात् । स्वरूपत एव निवर्तकत्वे तु तादृशशक्तिवैचित्र्ये प्रमाणाभावेन भूयस्त्वादेर्बलाबलप्रयोजकत्वात् । न च भावना स्वरूपत एव वाक्यस्य सहकारिणी ; परोक्षानुभव इवापरोक्षानुभवेऽपि तदन्वयव्यतिरेकादृष्टेः, अदृष्टद्वारा सहकारित्वस्यानभ्युपगमात् ; अभ्युपगमे तु वाक्यमनपेक्ष्य तस्यैव मनःसहकारिणः साक्षात्कारजनकत्वोपपत्तेः । अतः कथंचिदपि न वाक्याद्बाधकप्रत्यक्षोदय इत्याशयः । किमित्यादिना प्राग्विकल्पिते मतद्वये दूषितस्य दूषणान्तराण्यवधारणेन सूचयन् स्वमतपरिशेषं तावदाह—**अत इति**; वाक्यजन्यज्ञानस्य विधेयत्वनिवर्तकत्वादेर्युक्तिप्रत्यक्षादिविरुद्धत्वादित्यर्थः । **वाक्यार्थज्ञानादन्यदेवेति**; अयं भावः —वाक्यार्थबोधमात्रस्योपायत्वविधाने स्वतस्तत्प्रवृत्तौ दुस्तरं चक्रकम् ; न हि ब्रह्मस्वरूपं तज्ज्ञानं चाविदित्वा तज्ज्ञानकामना स्यात् । तद्रहितस्य च न तदर्थोपायविधिप्रवृत्ती स्तः । न चोपायानुष्ठानमन्तरेण ब्रह्मधीसिद्धिरिति । ननु स्वाध्यायाध्ययनवद्धितैषिप्रेरणया प्रवृत्तिरस्तु ; मैवम्—हितैषिभिरपि 'निर्विशेषचिन्मात्रब्रह्मज्ञानं संपादय' इत्युपदेष्टव्यम् ; तदा ह्येवंविधब्रह्मधीसदसद्भावयोस्तदुपायानुष्ठानं न स्यात् । अस्मत्पक्षे तु बह्वाकारविशिष्टे ब्रह्मण्यावृत्तिनैरन्तर्यादिविशिष्टकालान्तरभाव्यतिशयितज्ञानार्थप्रवृत्तौ यथालोकं न विरोधः । लोकसिद्धप्रक्रियानभ्युपगमे स्वप्रवृत्त्यादिविरोधः स्यात् । न च नित्यप्रत्यक्षनिर्विशेषवस्तुवादिनस्तव वाक्यतोऽन्यतो वा तद्विषयातिशयितधीः शक्येति ।

## मूलभावप्रकाशिका

कर्मनिरपेक्षं वाक्यार्थज्ञानस्य मोक्षहेतुत्वे हि कर्मविचारपूर्ववृत्तत्वासंभवः; कर्माङ्गकोपासनस्य मोक्षसाधनत्वात् कर्मविचारपूर्ववृत्तत्वं संभवतीति सिद्धान्तयति—**अत्रोच्यत इति । विधित्सितमिति** ; ननु—अविद्यानिवृत्तये वेदान्तवाक्यैर्ज्ञानं विधीयत इति

न परमतम्, अनिच्छतोऽपि दुर्गन्धज्ञानादिदर्शनात्प्रमाणवस्तुतन्त्रत्वेनाविधेयत्वाल्लिङादयः श्रूयमाणा अपि शिलातलप्रयुक्तेषुक्षुरतैक्ष्ण्यवत् कुण्ठीभवन्तीति परैर्ज्ञानविधेर्निरस्तत्वादिति चेत्—न; "पत्न्यवेक्षितमाज्यं भवति" इत्यादौ दर्शने विधिदर्शनात्। न च तत्र दर्शनानुकूलेन्द्रियसंयोगो विधेयः, अनिच्छतोऽपि प्रतिकूलविषयेन्द्रियसंयोगदर्शनेन तस्याप्यविधेयत्वप्रसङ्गात्। भक्षमन्त्रे "नृचक्षसं त्वा देव सोम सुचक्षा अवख्येषम्" इत्यवेक्षणप्रकाशकमन्त्रभागस्यावेक्षणे विभज्य विनियोगः, अवेक्षणस्यानुष्ठेयत्वात्, मन्द्राभिभूतिः" इत्यादितृप्तिप्रकाशकमन्त्रभागस्य तु न तृप्तौ विभज्य विनियोगः, तृप्तेरननुष्ठेयत्वादिति शेषलक्षणे स्थितत्वाज्ज्ञानस्वरूपस्यावेक्षणस्य कृतिसाध्यत्वं सिद्धम्। किंच ज्ञानस्याविधेयत्वे 'न चाविहितमङ्गं भवति' इति न्यायेन कर्मज्ञानस्य कर्माङ्गत्वं न स्यात्। विधेयत्वेन पराङ्गीकृतस्य ध्यानस्य ज्ञानानात्मकत्वे ध्यानेन ध्येयविषयव्यवहारस्मृत्योरभावप्रसङ्गात्, तयोर्ज्ञानकार्यत्वात्; "मनो ब्रह्मेत्युपासीत" इति विधेयत्वेन पराङ्गीकृतायामुपासनायां "य एवं वेद" इति ज्ञानार्थविदिधातुप्रयोगस्य बहुश उपलम्भात्, सर्वस्य ज्ञानस्य पुंतन्त्रत्वाभावेऽपि शास्त्रार्थज्ञानस्य पुंतन्त्रत्वदर्शनात्, ब्रह्मणश्च शास्त्रार्थत्वात्, दुर्गन्धादिज्ञानस्येच्छाविषयत्वाभावेऽपि ब्रह्मज्ञानस्य तद्विषयत्वात्, ज्ञानान्तराणामनियमादसाध्यत्वेऽपि ब्रह्मज्ञानस्येच्छाप्रयत्नसाध्यत्वसंभवात्, श्रोत्रगतानेकगकारेषु बुभुत्साप्रयत्नाभ्यामभीष्टगकारज्ञानदर्शनेन ज्ञानविशेषस्येच्छाधीनकृतिसाध्यत्वस्यावश्याभ्युपेयत्वात्, वृथैव वैदिकलिङ्गादेरस्वारस्यकल्पनायोगादिति। न चाक्रियार्थत्वेन ज्ञानस्याविधेयत्वमिति वाच्यम्, ज्ञानस्यापि ज्ञाधात्वर्थक्रियात्वात्; परिस्पन्दरूपक्रियात्वाभावस्य यागादावपि तुल्यत्वात्। तस्मादकामेनापि परेण ज्ञानविधेरभ्युगन्तव्यत्वमभिप्रेत्यैतदुक्तमिति द्रष्टव्यम्। अत एव विधानमन्तरेणेत्युत्तरग्रन्थस्यापि नानुपपत्तिः। वस्तुतो ज्ञानविधेः परानभ्युपगमात् दूषणान्तरमाह—**तावन्मात्रेणेति**। ननु—किं श्रवणादिभिर्निरस्तसमस्तभेदवासनानां शुकवसिष्ठवामदेवापान्तरतपःप्रभृतीनां वाक्यार्थज्ञानादविद्यानिवृत्त्यनुपलब्धिरुच्यते? उतातथाभूतानाम्? नान्त्यः, सत्यां भेदवासनायां वाक्यस्य सत्तानिश्चयरूपाविद्यानिवर्तकज्ञानानुत्पादकत्वात्; दूरे सत्तानिश्चयानात्मकजलप्रत्यक्षे सत्यप्यज्ञानकार्यसंशयादिदर्शनेन सत्तानिश्चयरूपज्ञानस्यैवाज्ञाननिवर्तकत्वात्; भेदवासनादशायां वेदान्तवाक्यजन्यज्ञानस्यापरोक्षब्रह्मविषयत्वेन 'दशमस्त्वमसि' इतिवाक्यजन्यज्ञानस्येवापरोक्ष्ये सत्यपि भेदवासना-

रूपप्रतिबन्धकमहिम्ना सत्तावधारणात्मकाविद्यानिवर्तकज्ञानानुत्पत्तेः । नाद्यः, वसिष्ठादीनामविद्यानिवर्तकज्ञानमुत्पन्नमेव ; अविद्या च नष्टैव । न च सद्यः शरीरतत्प्रतिभासादिनिवृत्तिप्रसङ्गः, नष्टायामप्यविद्यायां तत्संस्काराद्वा देहादिप्रतिभासरूपविक्षेपहेत्वविद्यालेशानुवृत्त्या वा दग्धपटन्यायानुवृत्ताविद्यया वा देहादिप्रतिभासोऽनुवर्तत इति "तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये" इति ज्ञानानन्तरमपि प्रारब्धकर्मणो ब्रह्मप्राप्त्यन्तरायत्वप्रतिपादकशास्त्रमहिम्नाङ्गीक्रियते । दृश्यते च चन्द्रैकत्वनिश्चये सत्यप्यङ्गुल्यवष्टम्भादिदोषमहिम्ना द्विचन्द्रभ्रमानुवृत्तिः । न चैवं नष्टायामप्यविद्यायां तन्मूलदेहप्रतिभासादिलक्षणभेददर्शनानुवृत्तौ तस्य निवृत्तिः कदापि न स्यात् ; तन्मूलः प्रतिभासमानदेहादौ सत्यत्वभ्रमरूपबन्धश्च स्यादिति शङ्क्यम्, अविद्यासंस्कारस्य वा तल्लेशस्य वा भेददर्शनानुवृत्तिहेतुभूतस्य प्रारब्धावसानवृत्त्यभिव्यक्तेन ब्रह्मचैतन्येन वा तत्कालोत्पन्नवृत्त्या वा नाशे भेदप्रतिभासस्यापि नाशान्नानिवृत्तिप्रसङ्गः; सत्यत्वभ्रमहेतुभूताविद्यानाशान्न बन्धप्रसङ्गोऽपीति जीवन्मुक्तिशास्त्रानुसारेणाभ्युपेयते । अत एव श्रूयते— "भूयश्चान्ते विश्वमायानिवृत्तिः" इति ; अनुवृत्ताविद्यालेशस्यापि निवृत्तिर्भवतीति हि तदर्थः इति मृषावादिचोद्यं निरस्यति—**न च वाच्यमिति** । **सर्वस्येति ;** उत्पन्नतत्त्वसाक्षात्कारस्य सर्वस्येत्यर्थः । **छिन्नमूलत्वेनेति** ; अच्छिन्नमूलस्यैव भेददर्शनस्य तत्सत्यत्वभ्रमरूपबन्धहेतुत्वादिति भावः । ननु भेदवासनायाः सत्तावधारणात्मकाविद्यानिवर्तकज्ञानोत्पत्तिप्रतिबन्धकत्वात् सामग्र्येव नास्तीत्याशङ्क्याह—**सत्यामपीति ।** चिरानुवृत्तभ्रमवतः सत्यामपि वासनायामाप्तोपदेशलिङ्गादिना सत्तावधारणात्मकज्ञानोत्पत्तेरित्यर्थः । **मात्रया** ; अल्पश इत्यर्थः । **भवतेति** ; ब्रह्मव्यतिरिक्तसर्वमिथ्यात्ववादिनेत्यर्थः । **निवृत्तत्वादिति** ; ननु संस्कारस्य कार्यत्वेऽपि ध्वंसवन्निरुपादानत्वाभ्युपगमेऽविद्यावच्चिदचिदाश्रितत्वेनाविद्यासापेक्षत्वेऽविद्यासंस्कारत्वभङ्गप्रसङ्गेन चाविद्यानिरपेक्षस्थितिकत्वात् तत्त्वज्ञानेन नष्टायामप्यविद्यायां तत्संस्कारानुवृत्तिः संभवति । न च ज्ञानक्रिययोरेव नाशः संस्कारनियतः, नान्यस्य ; नाशमात्रस्य संस्कारव्याप्तत्वे संस्कारनाशस्यापि तथात्वप्रसङ्ग इति वाच्यम् ; अनवस्थापत्त्या तत्र संस्कारानभ्युपगमेऽपि संस्कारनाशातिरिक्तस्य सर्वस्यापि नाशस्य संस्कारव्याप्तत्वात् ; क्षालितलशुनभाण्डे गन्धोपलम्भेन लशुनद्रव्यसंस्कारानुवृत्तेरभ्युपेयत्वेन ज्ञानक्रिययोरेव संस्कार इत्यस्यासंभवादस्त्येवाविद्या-

संस्कारः, तन्महिम्नैव कुलालचक्रभ्रमानुवृत्तिवत् देहतत्प्रतिभासादेराविद्यकस्यानुवृत्तिरिति चेत्—न; क्षालितलशुनभाण्डे सूक्ष्मलशुनावयवानुवृत्त्यैव गन्धोपलब्ध्युपपत्तेर्ज्ञानक्रियादि-व्यतिरिक्तनाशस्य संस्कारव्याप्तत्वाभावात्, भावकार्यस्य सर्वस्याप्यविद्योपादानकत्वनियमेना-विद्यासंस्कारस्य निरुपादानकत्वकल्पनायोगात्, जीवन्मुक्तस्य निरतिशयानन्दस्फुरणप्रसङ्गात् संस्कारस्यानावारकत्वात्, 'कार्याभिन्नं कारणमुपादानम्, अभिन्नसत्ताकं कारणमुपादानम्' इति वदतां मृषावादिनां मते नष्टेऽप्युपादाने उपादेयसत्तावार्ताया वा उपादेयदेहादिप्रतिभा-सोत्पत्तिवार्ताया वा असंभवादिति। न च कुलालचक्रसंस्कारवत् स्वयमेव वा वृत्त्यभिव्यक्तानु-वृत्तब्रह्मचैतन्येन वा तत्कालोत्पन्नवृत्त्या वा अविद्यासंस्कारनाशः स्यादिति वाच्यम्, स्वय-मेव नाशे ज्ञाननिवर्त्यत्वाभावेन मिथ्यात्वाभावप्रसङ्गात्। न च दण्डनिवृत्तघटस्य ज्ञाना-निवर्त्यत्वेऽपि मिथ्यात्ववत् संस्कारस्य ज्ञानानिवर्त्यत्वेऽपि मिथ्यात्वमुपपन्नमिति वाच्यम्, दण्डनिवृत्तघटस्य स्वोपादानाविद्यायां लीनस्याविद्यया सहैव ज्ञाननिवर्त्यत्वसंभवात्, अविद्यायाः स्वकार्येण प्रविलीनेन वर्तमानेन च सहैव ज्ञानान्निवृत्तिरित्यभ्युपगमात्, अविद्यासंस्कारे ज्ञाननिवर्त्यत्वस्य तथा निर्वोढुमशक्यत्वात्। अज्ञानाधीनप्रतिभासस्य संस्कारस्यात्म-ज्ञाननिवर्त्यत्वायोगेनानुवृत्तसाक्षात्कारेण वा तत्कालोत्पन्नवृत्त्या वा निवर्त्यत्वायोगात्। प्रारब्धावसानसमये नियमेन तत्त्वमसीत्यादिशब्दप्रमाणावश्यंभावेन

" तीर्थे श्वपचगृहे वा नष्टस्मृतिरपि परित्यजन् देहम्।
ज्ञानसमकालमुक्तः कैवल्यं याति गतशोकः ॥"

इति भवदुदाहृतवचनविरोधप्रसङ्गेन च तत्कालोत्पन्नवृत्त्या संस्कारनिवृत्त्ययोगाच्च; प्राथ-मिकवृत्त्यभिव्यक्तब्रह्मचैतन्यस्यैवानुवृत्तस्य कालान्तरेऽज्ञाननिवर्तकत्वे कदाचिदुत्पन्नघटाकार-वृत्त्यभिव्यक्तघटावच्छिन्नचैतन्यस्य कालान्तरेऽपि तद्वृत्तिं विना तदज्ञाननिवर्तकत्वप्रसङ्गात्। न च कालान्तरीयघटावच्छिन्नचैतन्यस्य पूर्वकालावच्छिन्नचैतन्याभिव्यञ्जकवृत्त्यनभिव्यक्त-त्वादज्ञानान्तरेणावृतत्वाच्च कालान्तरेऽज्ञानानिवर्तकत्वेऽपि प्रकृते ब्रह्मसाक्षात्कारेण चैतन्यस्य सर्वात्मनाभिव्यक्तत्वादज्ञानान्तरेणानावृतत्वाच्च कालान्तरेऽप्यज्ञाननिवर्तकत्वं युक्तमिति वाच्यम्, चैतन्यस्य सर्वात्मनानावृतत्वे जीवन्मुक्तस्य निरतिशयानन्दस्फुरणापातात् संस्कारस्यानावारकत्वात्, आवारकत्वे चावृतस्य चैतन्यस्य प्रारब्धावसाने निवर्तकत्वा-संभवात्। **छिन्नमूलमिति**; छिन्नाविद्याख्यमूलमित्यर्थः। ननु संस्कारपक्षे एतद्दोष-

सद्भावेऽपि प्रपञ्चे परमार्थसत्यत्वप्रतिभासहेत्वविद्यांशनाशेऽपि देहादिप्रतिभासहेत्वविद्यांशोऽनुवर्तत इति पक्षे दग्धपटन्यायेनाविद्यानुवर्तत इति पक्षे वा नायं दोष इति चेत्—न; निरवयवे लेशस्य दग्धपटन्यायस्य चासंभवात्, दग्धपटस्य नष्टतयानुवृत्त्यसंभवाच्च, अनुवृत्तस्य ज्ञानानिवर्त्यत्वेन सत्यत्वापाताच्च। ननु लेशो नाम आकार एव; "इन्द्रो मायाभिः" इति श्रुत्या अविद्याया अनेकाकारत्वेन प्रपञ्चे परमार्थसत्यत्वभ्रमहेत्वाकारनिवृत्तावपि देहाद्यपरोक्षप्रतिभासहेत्वाकारोऽनुवर्तते, प्रारब्धवशादिति चेत्—न; आकारिनिवृत्तावाकारानुवृत्त्ययोगात्; किंच आकारस्याविद्याभिन्नत्वे तस्यानुपादानत्वे देहादिप्रतिभासाद्युत्पत्त्ययोगात्, उपादानत्वेऽविद्यात्वप्रसङ्गात, अविद्यारूपत्वे ज्ञानेन निवृत्त्यवश्यंभावात्, अनिवृत्तस्य तस्य तदनधिकविषयेणानुवृत्तेनावृत्तेन वाप्युत्तरेण ज्ञानेन निवृत्त्ययोगात्। अत एव कृतनिदिध्यासनस्य ब्रह्मसाक्षात्कारेण प्रपञ्चे परमार्थसत्यत्वप्रतिभासहेतुभूताविद्याशक्तिमात्रस्य प्रारब्धकर्मणा प्रतिबन्ध इति निरस्तम्, ज्ञानस्याविद्ययैव विरोधात्। पूर्वज्ञानस्य शक्तिमात्रप्रतिबन्धकत्वे तदनधिकविषयस्य चरमस्यापि तत्त्वापत्त्या कदाचिदप्यज्ञाननिवृत्तिर्न स्यात्। न च प्रारब्धकर्मप्रतिबन्धनिवृत्तावप्रतिबन्धसाक्षात्कारेणानुवृत्तस्याज्ञानस्य निवृत्तिरस्त्विति वाच्यम्, ज्ञाननिवृत्तस्य प्रारब्धकर्मणस्तत्प्रतिबन्धकत्वासंभवात्। ननु—प्रारब्धकर्म न ज्ञाननिवर्त्यम्, ज्ञानेनाज्ञाने निवृत्ते उपादाननिवृत्त्या उपादेयप्रपञ्चनिवृत्त्यभ्युपगमात्। न च प्रपञ्चस्य ज्ञानानिवर्त्यत्वे मिथ्यात्वं न स्यादिति वाच्यम्, उपादाननिवृत्तिद्वारा ज्ञाननिवर्त्यत्वेन साक्षात्परंपरासाधारणज्ञाननिवर्त्यत्वस्य मिथ्यात्वप्रयोजकस्य सत्त्वात्। ततश्च ज्ञानानिवर्त्यस्य प्रारब्धकर्मणः स्वोपादानाविद्यालेशनिवृत्तिप्रतिबन्धकत्वसंभव इति चेत्—न; सत्तानिश्चयात्मकज्ञानस्य स्वप्रागभावनिवृत्ताविवाज्ञाननिवृत्तौ प्रतिबन्धासंभवात्। न च दर्पणाद्युपाधिसंनिधानप्रतिबन्धस्य बिम्बज्ञानस्य तदज्ञानानिवर्तकत्वमवश्यं वक्तव्यम्, इतरथा दर्पणस्थत्वप्रत्यङ्मुखत्वबिम्बभेदादिभ्रमो न स्यादिति वाच्यम्; उपाध्यसंनिधिकालीनबिम्बतत्त्वसाक्षात्कारेण निवृत्ततदज्ञानस्यापि पुंसः तदुत्तरक्षण एवोपाधिसंनिधाने भ्रमदर्शनेन सोपाधिकभ्रमस्य बिम्बाद्यावारकावस्थाज्ञानोपादानकत्वासंभवेन मूलाज्ञानोपादानकत्वस्यैव वक्तव्यत्वात्। न चैवं सोपाधिकभ्रमस्य व्यावहारिकत्वापत्तिरिति वाच्यम्, अविद्यातिरिक्तोपाधिसंनिधानादिलक्षणदोषजन्यत्वेन प्रातिभासिकत्वोपपत्तेः। तस्मात् ज्ञानेनाज्ञाननिवृत्तौ प्रतिबन्धस्य

कुत्राप्यदर्शनात् प्रारब्धकर्मप्रतिबन्धकत्ववादो न संभवति । ननु "तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये" इति श्रुतेरज्ञाननिवृत्तौ प्रारब्धस्य प्रतिबन्धकत्वमुपेयत इति चेत्, तदनुसारेण ज्ञानानिवर्त्यस्याज्ञानभिन्नत्वं सत्यत्वं चोपेयताम् । न च "भूयश्चान्ते विश्वमायानिवृत्तिः" इति श्रुतिबलात् किंचिदज्ञानं नश्यति किंचिदनुवर्तते, तस्य च प्रारब्धावसाने निवृत्तिरिति प्रतीयत इति वाच्यम्; "तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ" इति सूत्रोक्तन्यायेन केषांचित्कर्मणां विद्योदये विनाशः, अवशिष्टानां च कर्मणां भगवत्संकल्परूपाणां विचित्राश्चर्यशालितया मायाशब्दवाच्यानां "सांपराये तर्तव्याभावात्" इति सूत्रोक्तरीत्या शरीरपातसमये नाशो भवतीत्यर्थो "भूयश्चान्ते विश्वमायानिवृत्तिः" इति श्रुत्योच्यते । नात्र पराभिहितजीवन्मुक्तिप्रत्याशा । "अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते" इत्यत्रापि विनष्टाश्लिष्टपूर्वोत्तरदुरितत्वलक्षणममृतत्वमत्रत्यब्रह्मसाक्षात्कारश्चोच्यत इति न जीवन्मुक्तौ प्रमाणं पश्यामः । अत एव "तद्यथाहिनिर्ल्वयनी वल्मीके मृता प्रत्यस्ता शयीतैवमेवेदं शरीरं शेते; अथायमशरीरोऽमृतः" इति वाक्यशेषे ब्रह्मविच्छरीरस्य वल्मीकप्राप्तनिष्प्राणसर्पनिर्मोकसादृश्यप्रतिपादनं ब्रह्मविदोऽशरीरत्वप्रतिपादनं च ब्रह्मसाक्षात्कारानन्तरभाविनिरूढदेहात्मविवेकस्तुतिपरमिति न पराभिमतजीवन्मुक्तौ प्रमाणं पश्यामः । अत एव विरोधिसाक्षात्कारोदये लेशतोऽप्यविद्यानुवृत्त्यसंभवं मन्यमानैः कैश्चिदद्वैतिभिर्जीवन्मुक्तिशास्त्रस्यार्थवादत्वमेवाश्रितमित्यलमतिचर्चया* । ननु पारमार्थिकदोषानुवृत्त्या भ्रान्तेरनुवृत्तौ तत्कार्यभय-

---

* **तथा च संक्षेपशारीरकम्—**

**"जीवन्मुक्तिप्रत्ययं शास्त्रजातं**
**जीवन्मुक्ते कल्पिते योजनीयम् ।**
**तावन्मात्रेणार्थवत्त्वोपपत्तेः**
**सद्यो मुक्तिः सम्यगेतस्य हेतोः ॥"** 4-39.

**जीवन्मुक्तिबोधकं "तस्य तावदेव चिरं यावन्न विमोक्ष्ये" इत्यादि शास्त्रं वस्तुतोऽसंभावितेऽपि कल्पिते जीवन्मुक्ते योजनीयम् । श्रुतेः कल्पितविषयत्वेऽप्रामाण्यप्रसङ्ग इति चेत्, नैष दोषः, अस्याः श्रुतेरर्थवादत्वादित्याह—तावन्मात्रेणेति । स्वार्थे फलवत्त्वाभावेऽपि विद्यास्तुत्यर्थत्वेन कल्पितजीवन्मुक्तविषयत्वान्नाप्रामाण्यमिति तदर्थः ।**

**तत्रैवैतदुपरि सप्त कारिका जीवन्मुक्तिविषया अत्रावगन्तव्याः ।**

कम्पादेरप्यनुवृत्तिः स्यादिति तटस्थशङ्कां वारयति—**प्रबलेति**। चन्द्रैकत्वज्ञानस्य प्राबल्यं दोषाजन्यत्वेन निश्चिततत्वम्। बाधितत्वं च भ्रमत्वेन निश्चिततत्वम्। **निवर्तत इति**; एतेन निश्चिताप्रामाण्यदेहेन्द्रियान्तःकरणकर्तृत्वभोक्तृत्वादिलक्षणजगत्प्रतिभासकार्यस्य भिक्षाटनादेरनुवृत्तिर्जीवन्मुक्तस्य न स्यादित्युक्तं भवति। **अतो वाक्यार्थज्ञानादन्यदेवेति**; अनेन वाक्यजन्यब्रह्मज्ञानस्य परोक्षतया अपरोक्षप्रपञ्चाध्यासनिवर्तकत्वं नास्तीति दर्शितं भवति। ननु—"तद्धास्य विजज्ञौ" इति सद्विद्यायां "तमसः पारं दर्शयति" इति भूमविद्यायां चाचार्योपदेशानन्तरमेव ब्रह्मसाक्षात्कारप्रतिपादनात्, "विजज्ञौ" इति शब्देन ज्ञानसाक्षात्त्वस्य प्रतिपादनात्, "आचार्यवान् पुरुषो वेद" "तस्य तावदेव चिरं यावन्न विमोक्ष्ये" इत्यादिश्रुतिष्वाचार्योपदेशानन्तरमेव ब्रह्मसाक्षात्कारोदये जीवन्मुक्तिश्रवणात्, "वेदान्तविज्ञानसुनिश्चितार्थाः" इति ज्ञानान्तरनैरपेक्ष्यश्रवणात्, "तं त्वौपनिषदम्" इति ब्रह्मण उपनिषदेकगम्यत्वश्रवणाच्चौपनिषदं महावाक्यमेव ब्रह्मसाक्षात्कारे करणम्। न च मनसः करणत्वं शङ्कनीयम्, "यन्मनसा न मनुते" इति तस्य ब्रह्मज्ञानकरणत्वनिषेधात्; न च "मनसैवानुद्रष्टव्यम्" इति श्रुतेः "यन्मनसा न मनुते" इत्येतदपक्वमनोविषयं भविष्यतीति वाच्यम्, "येनाहुर्मनो मतम्" इति वाक्यशेषगतमनःशब्दस्य मनोविषयतया "यन्मनसा" इत्यत्रापि मनोमात्रविषयत्वावश्यंभावात्। न च "यद्वाचानभ्युदितम्" इति शब्दस्यापि ब्रह्मज्ञानकरणत्वं निषिध्यत इति शङ्क्यम्, परोक्षज्ञानकरणत्वस्य प्रत्याख्यातुमशक्यत्वात्; "यतो वाचो निवर्तन्ते, अप्राप्य मनसा सह" इति श्रुत्यनुरोधेन शब्दस्यार्थप्राप्तिरूपशक्तिमुखेन तत्करणत्वनिषेधे "यद्वाचानभ्युदितम्" इति श्रुतेस्तात्पर्यस्य वक्तव्यतया शक्यसंबन्धरूपलक्षणामुखेन शब्दस्य ब्रह्मज्ञानकरणत्वाविरोधात्; "मनसैवानुद्रष्टव्यम्" इत्यस्य शब्देन साक्षात्कारे जननीये चित्तैकाग्र्यस्य हेतुत्वमात्रप्रतिपादनपरत्वेन करणत्वप्रतिपादनपरत्वाभावात्। न च चक्षुषः श्रोत्रज्ञान इव शब्दस्य प्रत्यक्षज्ञानजनकत्वं विरुद्धमिति शङ्क्यम्, केवलस्य होमस्यापूर्वाजनकत्वेऽपि शास्त्रीयसंस्कारसंस्कृताग्न्यधिकरणकस्य होमस्यापूर्वजनकत्ववत् श्रवणादिसंस्कृतचित्तानुगृहीतस्य शब्दस्यापरोक्षज्ञानजनकत्वं कल्प्यते। "तरति शोकमात्मवित्" इति शास्त्रानुरोधादपरोक्षस्य कर्तृत्वाध्यासलक्षणशोकस्य परोक्षज्ञानान्निवृत्त्यसंभवादौपनिषदे च ब्रह्मणि मानान्तराप्रवृत्तेः शब्दादप्यपरोक्षज्ञानानुत्पत्तावनिर्मोक्ष एव

स्यात्; भावनाप्रचयसाहित्ये सति बहिरसमर्थस्यापि मनसो नष्टवनितासाक्षात्कारजनकत्वदर्शनात्, निदिध्यासनसाहित्येन शब्दस्याप्यपरोक्षज्ञानजनकत्वस्य युक्तत्वाच्च। किंचापरोक्ष्यं न तावज्जातिः, 'दण्ड्ययमासीत्' इति संस्कारोपनीतदण्डविशिष्टपुरुषविषयस्य चाक्षुषज्ञानस्य दण्डांशेऽपि चाक्षुषज्ञानरूपतया तद्विषयगताज्ञाननिवृत्त्यापत्तेः, 'दण्डं साक्षात्करोमि' इति तदंशेऽप्यापरोक्ष्यानुभवापाताच्च। अननुभवेऽपि संस्कारसंनिकर्षं परिकल्प्येन्द्रियसंनिकर्षजन्यतया तत्र काल्पनिकापरोक्ष्याभ्युपगमेऽनुमित्यादावपि लिङ्गज्ञानादिकं संनिकर्षं परिकल्प्य तदङ्गीकारापत्तेः; दण्डांशे आपरोक्ष्यासत्त्वेऽव्याप्यवृत्तित्वेन जातित्वायोगात्; अवच्छेदकोपाधिभेदानिरूपणेनाव्याप्यवृत्तिजातित्वस्याप्यभ्युपगन्तुमशक्यत्वात्। नाप्युपाधिः, तदनिर्वचनात्। इन्द्रियजन्यत्वं तदिति चेत्, न; साक्षिप्रत्यक्षाव्यापनात्; उपनीतगुरुत्वादिविशिष्टघटादिप्रत्यक्षे विशेषणांशेऽतिव्याप्तेश्च, करणान्तराभावेन तदंशे परोक्षेऽप्युपनयसहकारिसामर्थ्यादिन्द्रियस्यैव जनकत्वात्; अनुगतजन्यतावच्छेदकाग्रहेऽनेकेन्द्रियजन्यत्वस्य दुर्ग्रहत्वात्; तद्ग्रहे तस्यैवापरोक्ष्यरूपत्वोपपत्तौ प्रत्यक्षानुभवयोग्यस्येन्द्रियजन्यत्वस्य तदयोग्यापरोक्ष्यरूपत्वकल्पनायोगात्। एतेन इन्द्रियसंनिकर्षजन्यत्वमापरोक्ष्यम्; उपनयसहकृतेन्द्रियजन्यपरोक्षांशे च न संनिकर्षजन्यत्वम्; अनुमितावप्युपनीतभानत्वेन प्रमाणान्तरसाधनस्योपनयस्यासंनिकर्षत्वादित्यपि शङ्का निरस्ता; संयोगादिष्वनुगतस्य संनिकर्षत्वस्यानिर्वचनात्। किं तर्ह्यपरोक्षत्वं ज्ञानस्येति चेत्, अपरोक्षार्थविषयत्वस्यैव तथात्वात्। अर्थस्यापरोक्ष्यं च तत्तत्प्रमातृचैतन्याभेद एव, अन्तःकरणतद्धर्माणां साक्षिणि कल्पिततया तदभेदसत्त्वात्; बाह्यचैतन्यकल्पितानां घटादीनां बाह्यचैतन्ये वृत्तिगततत्तत्पुरुषीयचैतन्याभेदाभिव्यक्त्या प्रमातृचैतन्याभेदसत्त्वाच्च। न चान्तःकरणधर्माणां ज्ञानादीनामिव धर्माधर्मसंस्काराणामपि साक्षिणि कल्पितत्वाविशेषादापरोक्ष्यापत्तिः, तेषामनुद्भूतत्वात्, उद्भूतस्यैव चैतन्याभेदमापरोक्ष्यमित्यभ्युपगमात्। एवंच सर्वदा सर्वप्रमातृचैतन्याभिन्नत्वात् "यत्साक्षादपरोक्षाद्ब्रह्म" इति श्रुत्युक्तरीत्या स्वत एवापरोक्षं ब्रह्मेत्यपरोक्षब्रह्मविषयत्वात् शाब्दस्यापि ब्रह्मज्ञानस्यापरोक्षत्वं युक्तमेव; तस्माच्छब्दस्यापरोक्षज्ञानजनकत्वे कानुपपत्तिरिति चेत्; उच्यते "तद्धास्य विजज्ञौ" इत्यादेः परोक्षज्ञानेनापि चारितार्थ्यस्य "तद्दर्शयति" इत्यादेश्च मार्गोपदेष्टरि 'ग्रामं दर्शयति' इतिवत् परंपरया साक्षात्कारसाधनत्वेनापि चारितार्थ्यात्; अन्यथा "एषोऽणुरात्मा चेतसा

वेदितव्यः" दृश्यते त्वग्र्यया बुद्ध्या" "मनसैवानुद्रष्टव्यम्" इति मनःकरणत्वप्रतिपादक-बहुश्रुतिविरोधप्रसङ्गात्; विवरणे "मन एव ब्रह्मसाक्षात्कारकारणं, तस्यैव सोपाधिका-त्मन्यहंवृत्तिरूपप्रमाकरणत्वक्लृप्तेः" इति प्रतिपादितत्वात्। "वाक्यार्थभावनापरिपाक-सहितमन्तःकरणं त्वंपदार्थस्यापरोक्ष्यस्य तत्तदुपाध्याकारनिषेधेन तत्पदार्थतामाविर्भावयति" इति वाचस्पत्युक्तेश्च। "अहमेवेदं सर्वोऽस्मीति मन्यते; सोऽस्य परमो लोकः" इति श्रुत्युक्ते स्वप्ने ब्रह्मसाक्षात्कार एव मनसः करणत्वप्रतिपत्तेश्च, तदा करणान्तराभावात्। तस्मात् भावनाप्रचयसंस्कृतं मन एव ब्रह्मसाक्षात्कारकारणं "ज्ञानप्रसादेन विशुद्धसत्वस्त-तस्तु तं पश्यते निष्कलं ध्यायमानः" इति श्रुतौ विशुद्धान्तःकरणस्य दर्शनसाधनत्वप्रती-तेश्च परोक्षज्ञानजननैकस्वभावस्य शब्दस्यापरोक्षज्ञानजनकत्वकल्पने मूलं न पश्यामः। यदुक्तम्—अपरोक्षकर्तृत्वादिलक्षणप्रपञ्चाध्यासस्य ब्रह्मापरोक्षज्ञानैकनिवर्त्यत्वात् ब्रह्मसा-क्षात्कारजनकस्यान्यस्याभावादगत्या शब्दस्यापरोक्षज्ञानजनकत्वं कल्प्यते, "तरति शोक-मात्मवित्" इति श्रुतिबलात्; अन्यथा अनिर्मोक्षप्रसङ्ग इति—तन्न;

"एवं ज्ञाते तु भगवाननादिः पुरुषोत्तमः।
प्रसीदत्यच्युते तस्मिन् प्रसन्ने क्लेशसंक्षयः॥"

इति बन्धस्य परमात्मप्रसादनिवर्त्यत्वात्, मानससाक्षात्कारसंभवाच्च। "यद्वाचानभ्युदि-तम्" "यन्मनसा न मनुते" इत्यनयोश्च "यतो वाचो निवर्तन्ते, अप्राप्य मनसा सह" इति श्रुत्यनुसारेण वाङ्मनसापरिच्छेद्यत्वमर्थः। 'अप्राप्य' इत्यस्य शब्दस्य विषये शक्तिरूपमुख्यसंबन्धनिषेधपरत्वे सहपठितस्य मनसोऽप्युपकरणोपकरणिलक्षणमुख्यसंबन्धस्य वा उपादानभूते ब्रह्मणि जीववत्संयोगलक्षणमुख्यसंबन्धस्य वा निषेधपरतया "यन्मनसा न मनुते" इत्यत्र तदनुरोधेन तेन संबन्धेन मनसो ब्रह्मप्रतीतिहेतुत्वनिषेधेऽपि संबन्धान्तरेण ब्रह्मप्रतीतिहेतुत्वसंभवाच्च; युक्त्यानुचिन्तनात्मकब्रह्ममनने करणान्तराभावेन मनसः करण-त्वस्य निषेद्धुमशक्यतया ब्रह्मपरिच्छेदहेतुत्वस्यैव निषेद्धव्यत्वाच्च। यदुक्तम्—'अप्राप्य' इति शक्तिर्निषिध्यत इति—तन्न; तथा सति लक्ष्यपदाशक्यतया कर्मार्थविहितक्तप्रत्यया-शक्यतया च लक्ष्यत्वस्य कर्मत्वस्याप्यनापाताच्च। यदुक्तम्—"दशमस्त्वमसि" इत्यस्य वाक्यस्य साक्षात्कारहेतुत्वं दृष्टमिति—तन्न; संशयोत्तरप्रत्यक्ष इव समाने विषये प्रत्यक्ष-सामग्र्याः प्राबल्यात् परामर्शसहकृतेन्द्रियस्य प्रत्यक्षजनकत्ववत् प्रत्यक्षसामग्री रक्तत्वप्रत्यक्ष

इव सहकृता प्रत्यक्षं जनयति; प्रत्यक्षसामग्र्यसत्त्वे तु न प्रत्यक्षप्रसक्तिरिति नात्र वक्तव्यमवशिष्यते। यदुक्तम्—प्रमातृचैतन्याभेदोऽर्थस्यापरोक्षत्वम्, अन्यानिरुक्तेरिति—तन्न; पराभिमतवृत्तिक्रमव्यवस्थाया एवाप्रामणिकत्वेन वृत्तिकृतसाक्षिब्रह्मचैतन्याभेदाभिव्यक्तौ प्रमाणाभावात्; तत्संभवेऽपि जडाजडयोरभेदासंभवेन घटादेरर्थस्य प्रमातृचैतन्याभेददर्शनासंभवात्। आरम्भणाधिकरणे भामत्यां "न खलु तदनन्यत्वमित्यभेदं ब्रूमः, किंतु भेदं व्यासेधामः" इत्यभेदस्य प्रतिषिद्धत्वात्। यदुक्तम्—धर्मादिश्रुतिप्रसङ्गवारणार्थमुद्भूतत्वविशेषणं देयमिति—तन्न; उद्भूतत्वस्य त्वदभिमतमात्रवर्तिनो निर्वक्तुमशक्यत्वात्; तस्यानावृतप्रकाशसंसर्गे सत्यप्युद्भूतत्वाभावापराधेन परोक्षत्वे ब्रह्मवृत्त्यापरोक्ष्यं न स्यात्। किंच इदमाकारवृत्त्यभिव्यक्तचैतन्यसंसर्गेण शुक्तिरूप्यप्रकाशवत् चन्दने तद्रूपाकारचाक्षुषवृत्त्यभिव्यक्तचैतन्यसंसर्गिणो गन्धस्यापि प्रकाशापातात्। न च गन्धाकारवृत्त्यभावेन गन्धावच्छिन्नचैतन्यानभिव्यक्त्या तदप्रकाश इति वाच्यम्, चैतन्यस्य द्विगुणीकृत्य वृत्त्यभावेनैकद्रव्यगुणानां स्वाश्रये सर्वत्र व्याप्य वर्तमानानां पृथक् पृथक् गगनावच्छेदकत्वस्येव चैतन्यावच्छेदकत्वस्यासंभवात्; अन्यथा इदमाकारवृत्त्यभिव्यक्तचैतन्येन रूप्यस्याप्यप्रकाशापत्तेः। अत एव—"साक्षादपरोक्षाद्ब्रह्म" इति श्रुतेः स्वतोऽपरोक्षत्वमात्मन एव; विषयस्य च तत्तादात्म्यादपरोक्षत्वप्रतिभासः, जगति सत्ताप्रतिभासवत् रूप्ये इदंत्वप्रतिभासवच्च; न च सर्वस्यापरोक्षब्रह्मतादात्म्यात् सर्वस्य सर्वदा सर्वं प्रत्यपरोक्षत्वं स्यादिति शङ्क्यम्, यज्जडमुद्भूतं यदा यदभिन्नचैतन्याभिन्नं तदा तस्यापरोक्षमित्यभ्युपगमात् वृत्तिकृताभिव्यक्तिदशायामेव तं प्रमातारं प्रति तस्यार्थस्यापरोक्षत्वम्; अपरोक्षार्थविषयतया वृत्तेरापरोक्ष्यमिति वादो निरस्तः। "साक्षादपरोक्षाद्ब्रह्म" इति श्रुतेर्ब्रह्मापरोक्षत्व एव प्रमाणत्वेनात्मसंविदपरोक्षत्वेऽप्रमाणत्वात्। ब्रह्मणश्च वृत्तिव्यवधानमन्तरेण साक्षादेवापरोक्षत्वे सर्वान् प्रत्यपि वृत्तिमन्तरेण ब्रह्मापरोक्ष्यं स्यात्। न चाज्ञानावृतत्वान्नापरोक्ष्यमिति वाच्यम्, स्वतोऽपरोक्षत्वस्याज्ञानावृतत्वाविरोधात्; अनुद्भूतजडे ईश्वरयोगिजनापरोक्षे चैतन्याभेदमनादृत्यान्यस्यैवापरोक्षत्वस्य वक्तव्यतया तस्यैवोद्भूतस्थलेऽपि संभवात्; उद्भूतानुद्भूतयोरपरोक्षत्वभेदकल्पनस्याप्रामाणिकत्वात्; चन्दनाकारचाक्षुषवृत्त्यभिव्यक्तचैतन्याभिन्नगन्धापरोक्ष्यस्य दुर्वारत्वाच्च; 'साक्षात्करोमि' इति ज्ञानस्योद्भूतत्वादिघटितापरोक्षत्वाविषयत्वाच्च; अपरोक्षत्वस्यान्यस्य निर्वक्तुमशक्यत्वा-

चैतन्याभिन्नार्थविषयत्वं वृत्तेरापरोक्ष्यम्, तच्छब्दजन्यज्ञानेऽप्यस्तीति वादस्य प्रतियोगित्वादिघटितव्याप्तेर्निर्वक्तुमशक्यत्वात्सामानाधिकरण्यविशेषो व्याप्तिः, सा च व्यभिचारिण्यप्यस्तीति वादे तुल्यत्वात्; अनुमितित्वशाब्दत्वानधिकरणानुभूतित्वस्यैव जन्याजन्यप्रत्यक्षसाधारणप्रत्यक्षलक्षणत्वस्य वक्तुं शक्यत्वात्। 'सिद्धानुगममात्रं हि कर्तुं युक्तं परीक्षकैः, न सर्वलोकसिद्धस्य लक्षणेन निवर्तनम्' इति न्यायेन लोकमर्यादाविरुद्धलक्षणोक्त्यसंभवाच्च नापरोक्षं शाब्दज्ञानमिति भावः। **ध्यानोपासनादीति**; आदिशब्देन दर्शनादिशब्दा विवक्षिताः।

## श्रीभाष्यम्

तथा च श्रुतयः—"विज्ञाय प्रज्ञां कुर्वीत" "अनुविद्य विजानाति" "ओमित्येवात्मानं ध्यायथ" "निचाय्य तं मृत्युमुखात्प्रमुच्यते" "आत्मानमेव लोकमुपासीत" "आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" "सोऽन्वेष्टव्यः स विजिज्ञासितव्यः" इत्येवमाद्याः। अत्र 'निदिध्यासितव्यः' इत्यादिनैकार्थ्यात् "अनुविद्य विजानाति" "विज्ञाय प्रज्ञां कुर्वीत" इत्येवमादिभिर्वाक्यार्थज्ञानं ध्यानोपकारकत्वात् 'अनुविद्य' 'विज्ञाय' इत्यनूद्य 'प्रज्ञां कुर्वीत' 'विजानाति' इति ध्यानं विधीयते। 'श्रोतव्यः' इति चानुवादः, स्वाध्यायस्यार्थपरत्वेनाधीतवेदः पुरुषः प्रयोजनवदर्थावबोधित्वदर्शनात्तन्निर्णयाय स्वयमेव श्रवणे प्रवर्तत इति श्रवणस्य प्राप्तत्वात्। श्रवणप्रतिष्ठार्थत्वान्मननस्य 'मन्तव्यः' इति चानुवादः। तस्माद्ध्यानमेव विधीयते। वक्ष्यति च—"आवृत्तिरसकृदुपदेशात्" इति। तदिदमपवर्गोपायतया विधित्सितं वेदनमुपासनमित्यवगम्यते; विद्युपास्योर्व्यतिकरेणोपक्रमोपसंहारदर्शनात्—"मनो ब्रह्मेत्युपासीत" इत्यत्र

"भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद"; "न स वेद; अकृत्स्नो ह्येषः। आत्मेत्येवोपासीत"; "यस्तद्वेद यत्स वेद स मयैतदुक्तः" इत्यत्र "अनु म एतां भगवो देवतां शाधि यां देवतामुपास्से" इति। ध्यानं च तैलधारावदविच्छिन्न-स्मृतिसंतानरूपम्, "ध्रुवा स्मृतिः। स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः" इति ध्रुवायाः स्मृतेरपवर्गोपायत्वश्रवणात्। सा च स्मृतिर्दर्शनसमानाकारा,

"भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे॥"

इत्यनेनैकार्थ्यात्। एवं च सति "आत्मा वारे द्रष्टव्यः" इत्यनेन निदिध्यासनस्य दर्शनरूपता विधीयते। भवति च स्मृतेर्भावना-प्रकर्षाद्दर्शनरूपता। *वाक्यकारेणैतत्सर्वं प्रपञ्चितम्। "वेदनमुपा-सनं स्यात्तद्विषये श्रवणात्" इति सर्वासूपनिषत्सु मोक्षसाधनतया विहितं वेदनमुपासनमित्युक्तम्। "सकृत्प्रत्ययं कुर्याच्छब्दार्थस्य कृतत्वात्प्रयाजादिवत्" इति पूर्वपक्षं कृत्वा "सिद्धं तूपासनशब्दात्" इति वेदनमसकृदावृत्तं मोक्षसाधनमिति निर्णीतम्। "उपासनं स्याद्ध्रुवानुस्मृतिर्दर्शनान्निर्वचनाच्च" इति तस्यैव वेदनस्योपासनरूप-स्यासकृदावृत्तस्य ध्रुवानुस्मृतित्वमुपवर्णितम्। सेयं स्मृतिर्दर्शनरूपा प्रतिपादिता। दर्शनरूपता च प्रत्यक्षतापत्तिः।

**श्रुतप्रकाशिका**

न केवलं पारिशेष्यम्, तदनुग्राह्याः श्रुतयश्च सन्तीत्याह—**तथा चेति**। 'विज्ञाय' इत्यादिवाक्यद्वये ज्ञानसामान्यशब्दः। वाक्यद्वयोपादानं चोपसर्गभेदेऽपि

---

* **वाक्यकारोऽत्र ब्रह्मनन्दी।**

विधिप्रत्ययान्तत्वतद्राहित्ययोश्चार्थभेदो नास्तीति ज्ञापनार्थम्। **ध्यायथेति** विशेषशब्दः। **निचाय्येति** ध्यानस्य प्रत्यक्षसमानाकारता दर्शिता; "चायृ दर्शने" इति हि धातुः। **उपासीतेत्यनेन** ध्यानस्योपासनशब्दवाच्यत्वं सिद्धम्। **अन्वेष्टव्य इति** मननशिरस्कश्रवणोक्तिः। 'निदिध्यासितव्यः' 'विजिज्ञासितव्यः' इत्युपादानेन सन्नन्तत्वेऽपीष्यमाणज्ञानपरं वाक्यमिति दर्शितम्। सन्नन्तपदद्वयस्योपादानं सामान्यविशेषशब्दत्वात्। **इत्येवमाद्या इति**; इतिशब्द उपात्तश्रुतिवाक्यस्वरूपमात्रपरः। एवंशब्दः सन्नन्तत्वविधिप्रत्ययान्तत्वतद्राहित्योपसर्गभेदादिप्रकारपरः। उदाहृतवाक्येषु ज्ञानसामान्यवाचिपदानां विशेषाकाङ्क्षायां वाक्यार्थज्ञानरूपो विशेषः पर्यवसानभूमिः स्यादिति शङ्कानिवृत्त्यर्थमाह—**अत्रेति**। **अत्र**; उपात्तेषु वाक्येषु। 'इत्येवमादिभिर्ध्यानं विधीयते' इत्यन्वयः। **निदिध्यासितव्य इत्यादिनेति**; आदिशब्देन सन्निहितज्ञानविशेषवाचि वाक्यान्तरं विवक्षितम्। ऐकार्थ्यं च सर्वशाखाप्रत्ययन्यायात्; स ह्यनुक्ताकाङ्क्षितस्वीकारफलः। तत्र "छागो वा मन्त्रवर्णात्" इति न्यायात् सामान्यवाचिशब्दानां विशेषे पर्यवसानम्। "अनुविद्य विजानाति" "विज्ञाय प्रज्ञां कुर्वीत" इत्यत्र केन पदेन वाक्यार्थज्ञानमनूद्यते? केन वा ध्यानं विधीयते? इत्यपेक्षायामाह—**अनुविद्य विज्ञायेत्यनूद्येति**। अनुवादः किमर्थः इत्यत्राह—**ध्यानोपकारकत्वादिति**। "प्रज्ञां कुर्वीत" "विजानाति" इति वाक्यद्वयोपादानस्य पूर्वोक्तमेव फलम्। एवं स्मृतिष्वपि सामान्यशब्दः सति विशेषोपस्थापके तत्पर्यवसितो दृष्टः।

"निषिद्धभक्षणं जैह्मयमुत्कर्षे च वचोऽनृतम्।
रजस्वलामुखास्वादः सुरापानसमानि तु॥"

इत्यत्र निषिद्धसामान्यस्य भक्षणसामान्यं पातित्यहेतुरवगतम्।

"छत्राकं विड्वराहं च लशुनं ग्रामकुक्कुटम्।
पलाण्डुं गृञ्जनं चैव मत्या जग्ध्वा पतेद् द्विजः॥"

इत्यत्र निषिद्धविशेषस्य भक्षणविशेषः पातित्यहेतुर्दृष्टः; अत्र पूर्वग्रन्थश्चरमग्रन्थार्थे पर्यवस्यति। भवतु सामान्यशब्दो विशेषपर्यवसायी; अत्र तु ज्ञानसामान्यवाचिनः शब्दाः 'श्रोतव्यः' इति श्रवणरूपज्ञानविशेषे पर्यवस्यन्त्वित्यत्राह—**श्रोतव्य इति चेति**; चः शङ्कानिवृत्तौ, समुच्चये वा। 'विज्ञाय' 'अनुविद्य' इतिवदयं चानुवाद इत्यर्थः।

तत्संक्षेपेणोपपादयति—**स्वाध्यायस्येति** । आपातप्रतीत्या स्वतः प्राप्तिः श्रवणस्य स्यात्; मननस्य तादृशहेत्वभावात्तत्र पर्यवसानमस्त्वित्यत्राह—**श्रवणप्रतिष्ठार्थत्वादिति** । **चः** पूर्ववत् । **तस्माद्ध्यानमेवेति**; न तु वाक्यार्थज्ञानमित्यर्थः । ननु "श्रोतव्यः" इति पुस्तकनिरीक्षणादिव्यावृत्त्यर्थो विधिः किं न स्यात्? नैवम्; वेदान्तवाक्यानामपि पुस्तकनिरीक्षणादिव्युदासस्याध्ययनविधिसिद्धत्वात्; ब्रह्ममीमांसाया विलेखनपठनादेरप्रतिषिद्धत्वात्; गुरूपसत्तौ श्रवणशब्दस्य मुख्यार्थत्वाभावात्; तस्याश्चात्राविहितत्वेऽपि "गुरुमेवाभिगच्छेत्" इति वाक्यान्तरसिद्धत्वाच्च । ननु न्यायोपेतवाक्यमात्रानवगम्यकेवलोपदेशगम्यार्थविशेषश्रवणं "श्रोतव्यः" इति विधेयमिति चेत्—न; मननपूर्वभावितयास्य श्रवणस्य न्यायानुगृहीतवाक्यजन्यज्ञानरूपत्वावगमात्, शब्दस्वारस्याच्च । न च "मन्तव्यः" इत्यारम्भणसंशीलनरूपमननविधिरिति वाच्यम्, श्रवणशब्दस्य न्यायोपेतवाक्यजन्यज्ञान इव मन्तव्यशब्दस्य तत्प्रतिष्ठापने प्रसिद्धिप्राचुर्यात्, तस्य चापवादाभावात्; उभयोरप्राप्तार्थद्वयविधायित्वे वाक्यभेदप्रसङ्गात्; सति गत्यन्तरे विशिष्टविधानाश्रयणस्यान्याय्यत्वाच्च । विधिर्हि पदावगतेष्वर्थेष्वेकत्रोपक्षीणशक्तिर्लाघवाय तदितरेषु स्वतोऽनुवादमपेक्षमाणः प्रापकाभावाद्विशिष्टे तात्पर्यं भजते; अत्र त्वनुवादसंभवान्न विशिष्टविषयत्वकल्पनं युक्तम् । तस्मादनुवादः । अनेन श्रवणशब्दस्य यादवमिश्रोक्तनिर्वाहो निरस्तः । अत्र द्रष्टव्यशब्द उपायोपेयदशासाधारणत्वादुपरि नियामकस्फुटार्थवाक्यान्तरेण सह व्याख्यास्यते । ननु न साधारणत्वम्, "द्रष्टव्यः" इति तव्यता दर्शनस्य विधेयत्वप्रतीतेः, फलस्य चाविधेयत्वात्; उच्यते—निदिध्यासनवत् दर्शनस्य च विधाने वाक्यभेदप्रसङ्गात्; निश्चितानुवादश्रवणमननसाहचर्याच्च विधित्वनिश्चयप्रतिबन्धात्; उपायस्य दर्शनरूपत्वविषयप्रमाणादर्शने विशिष्टविधित्वाश्रयणायोगात्; "मनसैतान् कामान् पश्यन् रमते" "य एते ब्रह्मलोके परात्परं पुरिशयं पुरुषमीक्षते" इत्यादिभिः फलदशायां दर्शनस्य प्रामाणिकत्वाच्च । "श्रोतव्यः" इतिवत् तव्यदर्थमनादृत्य फलसमर्पकत्वं द्रष्टव्यशब्दस्य शङ्कितुं युक्तमित्यत उपरिष्टाद्व्याख्येयत्वम् । अथोपासनस्य विधित्सितत्वद्रढिम्ने सूत्रकारोक्तिं दर्शयति—**वक्ष्यति चेति** । तादृशसूत्रासंभवव्युदासाय सूत्रमुपादत्ते—**आवृत्तिरिति** । उपासनशब्दाश्रवणात् सूत्रस्य तत्परत्वमस्फुटमिति तस्यार्थमाह—**तदिदमिति** । आवृत्तिद्वयत्रयव्यावृत्त्यर्थम् 'असकृत्' इति

सौत्रं पदम् । कस्यावृत्तिरित्यपेक्षायामाह—**तदिदं वेदनमिति ; तदिदम्** ; तृतीयाध्यायावसाने "एवं मुक्तिफलानियमस्तदवस्थावधृतेः" इति प्रस्तुतं मोक्षफलं ज्ञानमित्यर्थः । यद्वा "प्रज्ञां कुर्वीत" इत्यादिसामान्यशब्दोक्तं वेदनमसकृदावृत्तिरूपमुपासनमित्यर्थः । **अवगम्यते** इत्यन्तेन 'आवृत्तिरसकृत्' इति सूत्रांशो व्याख्यातः । 'उपदेशात्' इति पदं व्याचष्टे—**विद्युपास्योरिति** । स्थलत्रयमुदाहरति—**मन इति** । "मनो ब्रह्म" इति वाक्यं "रात्रीरुपेयात्" इतिवत् "प्रतितिष्ठन्ति ह वा एते य एता रात्रीरुपयन्ति" इत्यत्र "य एता रात्रीः" इति सत्रानुवादवत् "य एवं वेद" इति पूर्वविहितोपासनस्य फलार्थमनुवादः । वितरणविक्रमादिहेतुभेदात् कीर्तियशसोर्भेदः । "मनो ब्रह्मेत्युपासीत" इत्यादिप्रकरणे "यस्तद्वेद" इत्यादिप्रकरणे च वेदनोपासनवाचिशब्दयोर्विप्रकर्षात् प्रकरणैकत्वज्ञापनाय **अत्रे**त्युक्तम् । **अनु म इति** ; यां देवतामुपास्से एतां देवतां मेऽनुशाधि; अनुपूर्वः शासिर्विविच्य ज्ञापनार्थः; विविच्य ज्ञापयेत्यर्थः । "व्यवहिताश्च" इति सूत्रेण छन्दस्युपसर्गाणां व्यवहितप्रयोगः । "न स वेद" इत्यत्र संनिकर्षात् 'अत्र'शब्दाप्रयोगः । "न स वेद" इत्यस्य "अथ योऽन्यां देवतामुपास्ते" इत्येतद्वाक्योपक्रमत्वादुपक्रमोपसंहारयोरुपासनशब्दः, मध्ये वेदनशब्दः । इदं च पूर्वस्मिन्वाक्ये उपक्रमोपसंहारदर्शनादित्यनेनाभिप्रेतम् । **यस्तद्वेद** ; तस्य ब्रह्मणो वेदिता यो रैक्वः, **यत् स वेद** ; तस्य रैक्वस्य वेद्यं यद् ब्रह्म, **सः** वेदिता रैक्वः, **एतत्** वेद्यं च, उभयं तव मयोक्तमित्यर्थः । सामान्यविशेषन्यायेन प्रकरणान्तरोक्तज्ञानसामान्यवाचिनां शब्दानां प्रकरणान्तरोक्तविशेषपर्यवसायित्वं पूर्वमेव स्वयमेव भाष्यकारेण दर्शितम् । सूत्रव्याख्याने त्वेकैकप्रकरणे व्यतिकरेणोपक्रमोपसंहारदर्शनम् 'उपदेशात्' इति पदस्यार्थत्वेनोक्तम् । उभयत्रोभयं हेतुत्वेन वाच्यम् ; तथाप्यविस्तरार्थमेकैकमुक्तम् । अत एव हि चतुर्थाध्याये उभयमपि हेतुत्वेन वक्ष्यते । 'तदिदम्' इत्यादिकं सूत्रव्याख्यानम् ; अन्यथा 'तदिदमपवर्गोपायतया विधित्सितं वेदनम्' इति नोच्येत ; किंतु 'ध्यानमुपासनम्' इत्येवोच्येत ; इतरथा शृङ्खलितोक्तिप्रकरणानौचित्यात् ; पश्चादपि 'ध्यानं च तैलधारावदविच्छिन्नस्मृतिसंतानरूपम्' इति पूर्वप्रकृतध्यानशब्देन निर्देशात् । पूर्वग्रन्थे ध्यानस्योपासनरूपत्वं विवक्षितं चेत्, पश्चात् 'उपासनमविच्छिन्नस्मृतिसंतानरूपम्' इत्युपासनशब्देनोच्येत । एवं प्रकृतसूत्रार्थेऽवधृते पूर्वप्रकृतस्य ध्यानस्य

ध्रुवानुस्मृतित्वमुपपादयति—**ध्यानं चेति** । वेदनस्यासकृदावृत्तिं वदतः सूत्रकारस्यायं भावः—यथा ज्ञानसामान्यवाचिनां शब्दानां विशेषपर्यवसायित्वेनासकृदावृत्तिरूपज्ञानपरत्वं सिद्धम्, एवं विशेषान्तरोपस्थापकेषु सत्सु तत्तद्विशेषपर्यवसायित्वं न्याय्यमिति। तस्मात् सूत्रकारेण कण्ठोक्तां ज्ञानस्यासकृदावृत्तिरूपतामुपपाद्य, तेनाभिप्रेतं श्रुत्यन्तरोपस्थापितं विशेषान्तरमाह --**ध्यानं चेति** । अनेन ग्रन्थेनासकृदावृत्तेर्व्यवहितत्वशङ्कानिरासार्थं विजातीयप्रत्ययान्तराव्यवहितत्वमुक्तम् । अत्र विच्छिन्नाविच्छिन्नस्मृतिसंततिसाधारणो ध्यानशब्दश्चेत् 'ध्यानं च' इत्यादिना विशेषान्तरे पर्यवसानमुक्तं भवति; ध्यानशब्दस्याविच्छिन्नस्मृतिसंतत्यसाधारणत्वे ध्यानशब्दो व्याख्यातो भवति । अविच्छिन्नस्मृतिसंततित्वे वचनमाह—**ध्रुवेति** । स्मृतेर्ध्रुवत्वं नाम विजातीयप्रत्ययान्तराव्यवहितसंततित्वम्, स्मृतिव्यक्तीनां क्षणिकत्वात् । **अपवर्गोपायत्वश्रवणादिति** ; तत्रापवर्गोपायभूतवेदनस्यासकृदावृत्तिरुक्ता ; अत्रापि तदुपायत्वप्रत्यभिज्ञानात्तस्यैवाविच्छिन्नस्मृतिरूपत्वं विवक्षितमिति भावः । तस्या दर्शनरूपत्वमुच्यते--**सा चेति** । न केवलं विषयैक्यतः साम्यम्, अपि त्वापरोक्ष्येणापीत्याकारशब्दस्य भावः । **हृदयस्य** मनस, ग्रन्थयोः रागादयः । यद्वा 'मञ्चाः क्रोशन्ति' इतिवत् हृदयशब्दस्तत्स्थजीवपरः, हृत् स्थानमयतीति व्युत्पत्तेर्वा; तस्य ग्रन्थिः प्रकृतिसंबन्धः ; हृदयशब्दोपलक्षितं वा शरीरं ग्रन्थिः । **संशयशब्दो** विपर्ययस्यापि प्रदर्शनार्थः ; देहात्माभिमानादिरूपाविद्येत्यर्थः । **कर्माणि** पुण्यपापरूपाणि ; अविद्यासंचितकर्मकृतप्रकृतिसंबन्धनिवृत्तिर्दर्शनसमानाकारोपासनेनेत्यर्थः । **एवं च सतीति** ; उपायदशापन्नज्ञानस्य दर्शनरूपत्वे स्फुटार्थवाक्यान्तरसिद्धे सतीत्यर्थः । **च**शब्दो द्रष्टव्यशब्दस्य फलदशाभिप्रायत्वशङ्कानिवृत्त्यर्थः । दर्शनशब्दस्य ज्ञानसामान्यपरत्वसंभवेऽपि "द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" "आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञात इदं सर्वं विदितम्" इति श्रवणादीनां पृथगुक्तत्वात् 'द्रष्टव्यः' इति पदं साक्षात्काररूपत्वपरम्; दृष्टशब्दश्च तत्तुल्यार्थः ; स चोपायदशाभिप्रायः, तस्मिन् दृष्टे हृदयग्रन्थिर्भिद्यत इत्युक्तत्वात्; "येनाहं नामृता स्याम्" "अमृतत्वस्य तु नाशास्ति वित्तेन" "एतावदेवारे खल्वमृतत्वम्" इति पूर्वापरवाक्येषु फलस्य निर्दिष्टत्वात्; प्रकरणान्तरोक्तस्य साक्षात्कारत्वस्येहापि वक्तुमपेक्षितत्वात्; अपेक्षितविधेरनपेक्षितविधानदौर्बल्याच्च । ननु ध्रुवानुस्मृतेरेव दर्शनरूपत्वविधिरयुक्तः, ध्रुवानुस्मृतिदर्शनयो-

भिन्नप्रकरणाम्नातयोर्दहरशाण्डिल्यादिवेदनानामिव परस्परनिरपेक्षोपायत्वं हि प्रतीयते; नैवम् ; 'द्रष्टव्यो निदिध्यासितव्यः' इत्येकवाक्यविहितत्वात् । न च तत्रापि विद्याद्वयविधानं शङ्क्यम्, रूपभेदाभावात्; तत एव वाक्यैकत्वे संभवति वाक्यभेदाश्रयणायोगात्; विद्यान्तराणामिव तयोर्विकल्पप्रसङ्गाच्च । तयोर्निरपेक्षोपायत्ववादिनो विकल्प इष्ट इति चेत्—न ; तस्याष्टदोषदुष्टस्य सति गत्यन्तरेऽभ्युपगन्तुमयुक्तत्वात् । दृश्यते हि व्रीहि-यवशास्त्रयोस्तस्याष्टदोषदुष्टत्वम्---व्रीह्यनुष्ठाने यवशास्त्रस्य प्रामाण्यत्यागः (१), अविद्य-मानाप्रामाण्यकल्पनम् (२), यवानुष्ठाने तस्य त्यक्तप्रामाण्यस्वीकारः (३), स्वीकृता-प्रामाण्यत्यागश्च (४) इति यवशास्त्रे चत्वारो दोषाः । यवानुष्ठानवेलायामेव प्रथम-प्रयोगे स्वीकृतव्रीहिशास्त्रप्रामाण्यत्यागः (१), तदप्रामाण्यकल्पनं च (२), तृतीये प्रयोगे व्रीहिषूपादीयमानेषु द्वितीयप्रयोगे स्वीकृतव्रीहिशास्त्रप्रामाण्यत्यागः (३),, त्यक्तप्रामाण्य-स्वीकारश्च (४) इति व्रीहिशास्त्रे चत्वारो दोषाः । इहापि यथासंभवं दोषप्राप्तिः । यद्वा प्रतिपत्तिबाधः (१), अनुष्ठानबाधः (२); अपूर्वबाधः (३), फलबाधश्च (४) इत्येकैकशिरसि दोषचतुष्टयादष्टदोषदुष्टत्वम् । अतो गत्यन्तरे सति विकल्पायोगाच्च न ध्रुवा-नुस्मृतिदर्शनयोः पृथगुपायत्वम् । नापि समुच्चयः ; चशब्दाश्रवणात्, दर्शपूर्णमास-योरिव द्वन्द्वनिर्देशाभावाच्च । परमात्मनोऽतीन्द्रियत्वात् तत्साक्षात्कारस्य चक्षुषा शब्दग्रह-णस्येव प्रक्रान्तयोगं प्रत्यशक्यविधानत्वाच्च शब्दविषययोः स्मरणचाक्षुषज्ञानयोरिव समुच्च-योऽनुप पन्नः । ननु परमात्मनो योगपरिशुद्धमनोग्राह्यत्वान्न तद्दर्शनस्य चक्षुषा शब्दज्ञान-तुल्यतेति दर्शनोपायभूतस्य व्यापारस्य विधेयत्वोपपत्तेः समुच्चयः संभवति—सत्यम् ; कस्तद्दर्शनोपायः ? "ततस्तु तं पश्यते निष्कलं ध्यायमानः" इति श्रुतेर्ध्यानमेवेति चेत्, तर्हि द्रष्टव्यनिदिध्यासितव्यपदयोः पुनरुक्तिः स्यात्; उभयोरपि दर्शनोपायध्यानविधिपरत्वा-विशेषात् । 'द्रष्टव्यः' इति दर्शनोपाये विहिते 'क उपायः?' इत्यपेक्षायां निदिध्यासनं विधीयते ; द्रष्टव्यपदाभावे निदिध्यासनस्य तदुपायत्वं न ज्ञायत इति तज्ज्ञापनार्थत्वान्न पुनरुक्तिरिति चेत्—न; द्रष्टव्यपदश्रवणेऽपि दर्शनस्य ध्यानसाध्यत्वाप्रतीतेः । न हि दर्शनकामेनेति श्रूयते ; तथा सति हि स्वर्गयागयोरिव साध्यसाधनभावावगमः स्यात् । न च ध्यानं प्रति श्रवणमननयोरिव दर्शनं प्रति ध्यानस्य दृष्टकिंचित्कारः । अतो न मानान्तरेण तयोः साध्यसाधनभावावगम इति वैयर्थ्यम् । किं च ध्यानसाध्यं दर्शनं

चेत्, ध्यानदर्शनयोः समुच्चयश्च न संभवति; दर्शनं प्रति समुच्चये दर्शनस्य दर्शनं साधनमित्यात्माश्रयप्रसङ्गात्। न च मोक्षं प्रति समुच्चयसंभवः; ध्यानस्य स्वसाध्यदर्शनव्यवहितस्य मोक्षं प्रति दर्शनेन सहाव्यवहितकिंचित्करायोगात्; न हि यागनिष्पत्त्यर्थानां प्रोक्षणावघातादीनामपूर्वनिष्पत्तौ यागेन सह समुच्चयः। यदि साक्षात्कारं प्रति ध्यानेन सहाव्यवहितकिंचित्कारोपपत्तये दर्शनसमानाकारं ज्ञानान्तरं विधेयमित्युच्यते; तदयुक्तम्, स्वर्गं प्रति ज्योतिष्टोमस्येव निदिध्यासनस्य स्वसाध्यं प्रति निरपेक्षोपायताप्रतीतिस्वारस्यभङ्गप्रसङ्गात्; न हि "ज्योतिष्टोमेन स्वर्गकामो यजेत" इति वाक्यप्रतिपन्नं ज्योतिष्टोमस्य स्वर्गसाधनत्वं कर्मान्तरसापेक्षमवगम्यते। न चात्र चशब्दो द्वन्द्वसमासो वा। अतो दर्शनसमानाकारतारूपविशेषणस्य 'किं विशेष्यम्?' इत्याकाङ्क्षायां विशेष्यान्तरं च न दृश्यते; निदिध्यासनं च संनिहितम्; अतस्तदेव दर्शनसमानाकारतया विधित्सितमिति युक्तमभ्युपगन्तुम्। ततश्च वाक्यभेदोऽपि न स्यात्; निदिध्यासनस्य निरपेक्षोपायताप्रतीतिस्वारस्यं च न बाध्येत। ननु विशिष्टविध्याश्रयणं चेदुपदेशैकगम्यार्थश्रवणशुभाश्रयमननदर्शनरूपताविशिष्टनिदिध्यासनविधिः किं न स्यात्? नैवम्; चतुर्ष्वंशेषु तात्पर्यकल्पनादपि द्वयोस्तत्कल्पनस्य लघुत्वात्, लघुपक्षसंभवे गुरुपक्षाश्रयणायोगाच्च। न चास्मिन् वाक्ये विधानाभावादौपदेशिकार्थाधिगमारम्भणसंशीलनयोरसिद्धिः शङ्कनीया, "तस्माद् ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेद् बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिः" इत्यनन्यथासिद्धवाक्यान्तरसिद्धत्वात्। तद्धि निरूपयिष्यते—"सहकार्यन्तरविधिः" इति सूत्रेण। तस्माद्दर्शनसमानाकारत्वगुणविशिष्टनिदिध्यासनविधिः। नन्वेवमपि न सर्वोपासनानां दर्शनसमानाकारनिदिध्यासनरूपतासिद्धिः, "द्रष्टव्यो निदिध्यासितव्यः" इति वाक्यस्य मैत्रेयीब्राह्मणे सत्त्वात्; अतस्तत्र प्रतिपाद्यस्यैवोपासनविशेषस्य तादृग्रूपता प्रतिपाद्या स्यात्——नैवम्; "आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विदितम्" इति तत्रत्येनैव वाक्येन जगत्कारणविषयसर्वोपासनानां दर्शनसमानाकारनिदिध्यासनरूपतावगमात्। न हीदं वाक्यं विद्याविशेषविधायकम्, कारणज्ञानेन सर्वज्ञातताप्रतिज्ञापरत्वात्। कारणमेव सर्वविद्योपास्यम्, "कश्च ध्येयः?" इत्युपक्रम्य "कारणं तु ध्येयः" इति कारणस्यैव ध्येयत्वविधानात्। कारणविषयं चोपासनमत्र दर्शनसमानाकारनिदिध्यासनरूपमवगम्यते।

अस्मिन्वाक्ये विज्ञातशब्दो हि निदिध्यासनपरः ; "द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" "दृष्टे श्रुते मते विज्ञाते" इति स्थानप्रामाण्यात् । अतोऽस्य वाक्यस्य सर्वविद्यासाधारणकारणमात्रविषयत्वात् जगत्कारणोपासनं चेत् दर्शनसमानाकारनिदिध्यासनरूपमित्यवगम्यते । किंच--नानाविद्यानां विकल्पस्य वक्ष्यमाणत्वात् गुरुपक्षविषयशास्त्रवैयर्थ्यप्रसङ्गेन गुरुलघुयत्नविकल्पायोगात् वस्तुसामर्थ्यस्य प्रकरणाद्बलीयस्तया च ध्रुवानुस्मृतिरूपत्वं दर्शनरूपत्वं वक्ष्यमाणभक्तिरूपत्वं च सर्वविद्यासाधारणाकारा भवितुमर्हन्ति । नन्विन्द्रियजन्मनोऽनुभवस्य ह्यपरोक्षरूपत्वम् ; तत्कथं स्मृतेः संभवतीत्यत्राह—**भवति चेति** । **भावना** ; वासना । **दर्शनरूपता** ; दर्शनसमानाकारता । "वृक्षे वृक्षे च पश्यामि" इत्यादिष्वपि दर्शनसमानाकारत्वं स्मृतेश्च दृष्टमिति भावः । तच्च विशदतरावभासरूपत्वम् । न चैतदनुभवासाधारणम्, स्मृतेरपि तत्स्वाभाव्यस्य प्रामाणिकत्वात् । ननु दर्शनसमानाकारत्वविधानमयुक्तम् ; दर्शनवाचिशब्देन तत्समानाकारोपस्थानस्यामुख्यत्वात् ; "न विधौ परः शब्दार्थः" इति न्यायविद इति चेत्—न ; तैरेव "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इत्यत्र दर्शपूर्णमासशब्दयोर्लक्षणया, श्येनादिवाक्ये श्येनादिशब्दानां गौण्या वृत्त्या कर्मनामधेयत्वाभ्युपगमात् ; "अर्धमन्तर्वेदि मिनुयादर्धं बहिर्वेदि" इत्यत्रापि मध्यदेशलक्षणाया अङ्गीकृतत्वाच्च । विशदतरत्वस्य फलरूपत्वादपुरुषतन्त्रस्य कथं विधानमिति चेत्—न ; आज्यावेक्षणस्येव विधानोपपत्तेः । तत्राज्यसाक्षात्कारहेतुभूतव्यापारविषयो विधिरिति चेत्, इहापि विशदतरत्वावहस्मृतिसंततिविषयमनोव्यापारविधिरित्युपपन्नम् । अथ सूत्रकाराभिप्रायविदां वचनं दर्शयति—**वाक्यकारेणेति** । **एतत्सर्वमिति** ; सूत्रकारेण कण्ठोक्तमभिप्रेतं चेत्यर्थः । **प्रपञ्चितमिति** ; पूर्वपक्षसिद्धान्तरूपेणोक्तमित्यर्थः । प्रपञ्चनं च "वेदनमुपासनं स्यात्" इत्यादिना वाक्यचतुष्टयेन । वाक्यमेकैकं व्याचष्टे—**सर्वासूपनिषत्स्विति** ; न केवलं छान्दोग्य इत्यर्थः । मोक्षसाधनतया विहितं वेदनमिति घटादिज्ञानव्यावृत्तिः । विहितमित्यनूदितश्रवणादिव्यावृत्तिः । अस्यार्थस्य पूर्वपक्षसिद्धान्तरूपेण स्फुटीकरणार्थं, "सकृत्प्रत्ययं कुर्यात्" इति वाक्यश्रवणेन "वेदनमुपासनं स्यात्" इति वाक्यस्य पूर्वपक्षपरत्वशङ्काव्यावृत्त्यर्थं च "सकृत्" इत्यादिकं व्याचष्टे—**सकृदिति** । "सकृत्" इत्यादि वाक्यमेव पूर्वपक्षपरं, न तु "वेदनमुपासनं स्यात्" इति वाक्यम् ; अनन्तरमेवोपासनरूपत्वस्य सिद्धान्ति-

तत्वादिति भावः। तथा सिद्धान्तितत्वं दर्शयति—**सिद्धं त्विति**। **सिद्धं तु**; सिद्धान्तस्त्वित्यर्थः। यद्वा वेदनमुपासनं सिद्धमित्यर्थः। उपासनशब्दादित्येतद्व्याचष्टे—**वेदनमसकृदावृत्तमिति**। अस्याविच्छिन्नस्मृतिसंतानरूपत्वं सूत्रकाराभिप्रेतं वाक्यकारेण कण्ठोक्तं दर्शयति—**उपासनं स्यादिति**। **दर्शनात्**; लोके दर्शनात्। **निर्वचनात्**; श्रुतिवाक्यात्। **तस्यैवेति**; मोक्षसाधनतया विहितस्येत्यर्थः। **उपासनरूपस्येति** हेतुगर्भम्; उपासनरूपत्वात् उपासनशब्दवाच्यत्वादसकृदावृत्तस्येत्यर्थः; असकृदावृत्तं ज्ञानं ह्युपासनम्। एवमविच्छिन्नस्मृतिसंततिरूपत्वमुपपादितम्। सूत्रकारकण्ठोक्तमसकृदावृत्तिरूपत्वं तदभिप्रेतं च वदतो वाक्यकारस्यायं भावः—एतत्तुल्यन्यायतया विशेषान्तरोपस्थापकवाक्ये सति वेदनादिशब्दास्तत्पर्यन्ताः स्युरिति; तस्मात् पूर्वोक्तं दर्शनसमानाकारत्वमपि वाक्यकाराभिप्रेतमित्यभिप्रयन्नाह—**सेयमिति**। **सेयम्**; असकृदावृत्तिरूपा ध्रुवानुस्मृतिरूपा चेत्यर्थः। दर्शनशब्दस्य 'अर्थदर्शी तत्त्वदर्शी' इत्यादिप्रयोगात् परोक्षापरोक्षसाधारण्यमाशङ्क्याह—**दर्शनरूपता च प्रत्यक्षतापत्तिरिति**; प्रत्यक्षसमानाकारतापत्तिरित्यर्थः। "आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञात इदं सर्वं विदितम्" "आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इति श्रवणादिपरोक्षज्ञानपर्वसूक्तेष्वपि पृथङ् निर्देशादिति भावः।

### भावप्रकाशिका

**ध्यानस्य प्रत्यक्षसमानाकारता दर्शिता**; "**चायृ दर्शने**" **इति हि धातु**रिति; "चायृ पूजानिशामनयोः" इति पठितत्वादिति भावः। **सन्निहितज्ञानविशेषवाचि वाक्यान्तरं विवक्षितमिति**; "ओमित्यात्मानं ध्यायथ" इति वाक्यं विवक्षितमिति भावः। **सर्वशाखाप्रत्ययन्यायादिति**; ननु नानाशाखापठितानामग्निहोत्रज्योतिष्टोमादीनां संभवत्यैक्यम्, संयोगरूपचोदनाख्याविशेषात्; इह चोदनाया अविशेषाभावादाख्यैक्याभाच्च कथमेतन्न्यायप्रवृत्तिः? इतरथा "श्रोतव्यः" इत्यनेनैकार्थ्यं किं न स्यादिति चेत्—न; सर्वशाखाप्रत्ययन्यायस्य प्रत्यभिज्ञापकसद्भावो हि मूलयुक्तिः; अस्ति चेहापि मोक्षरूपफलसंयोगसाम्यं, ब्रह्मविषयत्वलक्षणरूपसाम्यं च; तथा "मन्तव्यो निदिध्यासितव्यः" "विज्ञाय प्रज्ञां कुर्वीत" इति निदिध्यासनप्रज्ञाशब्दयोः स्थानसाम्यम्; अतस्तदेव प्रत्यभिज्ञायते। अत एवेक्षत्यधिकरणे "सदेव सोम्येदमग्र आसीत्" इति सच्छब्द-

शब्दितं ब्रह्मैव, गतिसामान्यात्; सर्ववेदान्तेषु "आत्मा वा इदमग्र आसीत्" "ब्रह्म वा इदमग्र आसीत्" इत्येवं गतिसाम्यादिति वर्णितम्। तदेव गतिसामान्यं सर्वशाखा-प्रत्ययन्यायः। किंच प्रज्ञाशब्दितज्ञानसामान्यस्य ब्रह्मप्राप्तिसाधनत्वे ध्यानलक्षणगुरू-पासनानर्थक्यप्रसङ्गश्च; तस्मात्तत्र पर्यवसानं वक्तव्यमित्यैकार्थ्यं संभवतीति भावः। **स ह्यनुक्ताकाङ्क्षितस्वीकारफल इति;** न तूक्तपरित्यागफलः; एवं च "निदिध्या-सितव्यः" इत्यत्र ज्ञानमात्रविधावुक्तपरित्याग एव सिध्येत्। अतो ज्ञानसामान्यवाचि-नापि शब्देन विशेष एव विधेय इति भावः। ननु सामान्यवाचिशब्देन विशेषाभिधाने लक्षणा स्यादित्याशङ्क्य सामान्यस्य प्रतिव्यक्ति पर्यवसितत्वात् सामान्येन विशेषाभिधानं न दोषायेति "छागो वा मन्त्रवर्णात्" इत्यत्र निर्णीतमित्यभिप्रयन्नाह—**तत्र छागो वा मन्त्रवर्णादिति**। "छागो वा मन्त्रवर्णात्" इत्यत्र विधिवाक्यस्थसामान्यशब्दानां मन्त्रवर्णप्रतिपाद्यविशेषे पर्यवसानमात्रं विषयः; अतः कथं विधिवाक्यस्थसामान्यशब्दानां विधिवाक्यस्थविशेषे पर्यवसानमित्याशङ्क्य न्यायस्य न केवलं विधिमन्त्रमात्रविषयत्वम्, अपि तु सर्वसामान्यविषयत्वमिति दर्शयितुं स्मृतिष्वपि सामान्यशब्दानां विशेषपर्यवसानं दृष्टमित्याह—**एवं स्मृतिष्वपीति**। **विलेखनपठनादेरप्रतिषिद्धत्वादिति;** अप्रतिषे-ध्यत्वादित्यर्थः; एतद्वाक्यबोध्यनियमेनाव्यावर्त्यत्वादिति यावत्। यद्वा अप्रतिषिद्ध-त्वादिति; अनुमतत्वादित्यर्थः। अत्र लेखनोपन्यासो दृष्टान्तार्थः। ननु गुरु-मुखानधीनविचारव्यावृत्त्यर्थः श्रवणविधिर्भविष्यतीत्याशङ्क्याह—**गुरूपसत्ताविति**। ननु श्रवणशब्दस्य गुरूपसत्त्यर्थकत्वाभावेऽपि श्रवणस्य गुरूपसदनाङ्गकत्वादङ्गविध्युपेत-श्रवणविधिबलादेव गुरुमुखानधीनविचारव्यावृत्तिः सिध्यतीत्यरुचेराह—**तस्याश्चात्रावि-हितत्वेऽपीति**। न चाङ्गिविध्यभावे कथं तदनुवादेनोपसदनविधिरिति वाच्यम्, 'स्नात्वा भुञ्जीत' इत्यत्र रागप्राप्तभोजनानुवादेन स्नानविधानवदुपपत्तेरिति भावः। "सहकार्यन्तरविधिः" इत्यत्र विधेयत्वेन समर्थयिष्यमाणयोः पाण्डित्यमौनयोः "श्रोतव्यो मन्तव्यः" इत्याभ्यां विधिरस्त्वित्याक्षिप्य परिहरति—**न्यायोपेतेत्यादिना**। **सति गत्यन्तरे विशिष्टविधानाश्रयणस्यान्याय्यत्वाच्चेति;** ननु श्रवणमननयोः पाण्डित्यमौनरूपयोः परस्परविशेषणत्वं न सिद्धम्, येन विशिष्टविधिः स्यात्; यदि हि 'श्रुत्वा मन्तव्यः' इत्याकारा वचनव्यक्तिः स्यात्, तदा विशिष्टविधि-

शङ्का; इतरथा "विष्णुरुपांशु यष्टव्यः" "प्रजापतिरुपांशु यष्टव्यः" "अग्नीषोमावुपांशु यष्टव्यौ" इत्यादावपि यागद्वयविशिष्टतृतीययागविधिसंभवात् वाक्यभेदेन सिद्धान्तोऽनुपपन्नः स्यात्; "समिधो यजति" इत्यादावपि समिदादिचतुष्टयविशिष्टस्योत्तमप्रयाजस्य विधिरित्यापाद्येतेति चेत्—अत्र केचित्—"आर्षेयं वृणीते त्रीन् वृणीते" इत्यत्राख्यातभेदसत्त्वेऽपि त्रित्वविशिष्टार्षेयवरणविधानवत् "श्रोतव्यो मन्तव्यः" इत्यत्रापि श्रवणविशिष्टमननविधिशङ्काया उत्थितिसंभवादिति वदन्ति। **यादवमिश्रोक्तनिर्वाह इति**; श्रवणमनने अदृष्टार्थतया विधीयेते इति निर्वाह इत्यर्थः। स तु "नानाशब्दादिभेदात्" इत्यत्र स्पष्टीभविष्यति। **व्याख्यास्यतीति**; अधुना भाष्ये तदव्याख्यानं न दोषायेति भावः। **द्रष्टव्य इति तव्यतेति**; यद्यपि तव्येनापि रूपं सिध्यति, अथापि स्वरविशेषमभिप्रेत्याचार्यैस्तव्यत्प्रत्यय उपात्तः। केचित्तु—बृहदारण्यकवाक्ये स्वरासंप्रतिपत्तेस्तव्यतेति तित्त्वमविवक्षितम्; तव्यत्तव्ययोरन्यतरस्मिन् प्रत्यय उपादातव्येतव्यतः प्रथमोपदिष्टत्वात्तदुपादानमिति मन्यन्ते। **आवृत्तिद्वयत्रयव्यावृत्त्यर्थमसकृदिति सौत्रं पदमिति**; यद्यप्यसकृच्छब्दोऽनेकत्वमात्रपरः; अनेकत्वं च द्वित्रादिसाधारणम्; तथापि बहुतरेष्वेव प्रसिद्धिप्राचुर्यादेवमुक्तमिति द्रष्टव्यम्। अत्र 'सूत्रमुपादत्ते—आवृत्तिरिति। आवृत्तिद्वयत्रयव्यावृत्त्यर्थमसकृदिति सौत्रं पदम्। उपासनशब्दाश्रवणात् सूत्रस्य तत्परत्वमस्फुटमिति तस्यार्थमाह—तदिदमिति' इति पाठः समीचीनः। केचित्तु सिंहावलोकितकेनाह—आवृत्तिद्वयत्रयेतीति वदन्ति। **रात्रीरुपेयादितिवदिति**; यद्यपीदं वाक्यं नास्त्येव; "ज्योतिर्गौरायुः" इत्येव रात्रिसत्रोत्पत्तिवाक्यम्; तत्रापि सत्रविषये उपेयादित्येकवचनं च न संभवति, उपेयुरित्येवं बहुवचनान्ततयैव वाक्यस्य कल्पनीयत्वात्—तथापि नोदाहरणमादरणीयमिति न्यायेन "वैश्वानरं द्वादशकपालं निर्वपति" "यस्मिन् जात एतामिष्टिं निर्वपति" इति वाक्यद्वयं दृष्टान्ततयोदाहर्तव्यम्। **एतद्वाक्यपूर्वकत्वादिति**; "अथ योऽन्यां देवतामुपास्ते 'अन्योऽसावन्योऽहमस्मि' इति न स वेद। अकृत्स्नो ह्येषः, आत्मेत्येवोपासीत" इति हि श्रुतिः। सिंहावलोकितकेनाव्याख्यातच्छान्दोग्यवाक्यांशं व्याचष्टे—**यस्तद्वेदेत्यादिना**। "यथा कृतायविजितायाधरेऽयाः संयन्त्येवमेनं सर्वं तदभिसमेति यत्किंच प्रजाः साधु कुर्वन्ति यस्तद्वेद यत्स वेद स मयैतदुक्तः" इति हि श्रुतिवाक्यम्। इदं च "यो नु कथं सयुग्वा

रैक्वः ?" इति हंसेन रैक्वस्वरूपं पृष्टस्य हंसान्तरस्य प्रतिवचनम् । यथा कृतायविजिताय, कृतो नामायो द्यूतसमये प्रसिद्धः ; स यदा जयति तदा इतरे त्रिद्व्येकाङ्काः अधरे अयाः संयन्ति संगच्छन्ते, अन्तर्भवन्ति ; चतुरङ्के अये कृते त्रिद्व्येकाङ्कानां तत्र विद्यमानत्वात् तस्मिन्नन्तर्भवन्तीत्यर्थः । एवमेनं रैक्वं कृतायस्थानीयं सर्वं तदभिसमेति संगच्छते । यत्किंच लोके सर्वाः प्रजाः साधु शोभनं कर्म कुर्वन्ति धर्मजातं कुर्वन्ति, तत्सर्वमेतस्य धर्मेऽन्तर्भवति ; तस्य फले सर्वप्राणिफलमन्तर्भवतीत्यर्थः । **यस्तद्वेदेत्यादि** ; अत्रायमन्वयः—यत्स वेद ; स रैक्वो यद्वेद्यं वेद तद्वेद्यं योऽन्योऽपि वेद, एनमपि रैक्वमिव सर्वशुभधर्मजातफलमप्यभिसमेतीत्यनुषङ्गः । स मयैतदुक्तः ; स रैक्वः मया एतत् इत्थमुक्त इत्यर्थ इति रैक्ववेद्यब्रह्मवेदितृमाहात्म्यकथनाद्रैक्वस्य ब्रह्मणश्च माहात्म्यं कथितं भवतीत्यभिप्रायेणाचार्यैः रैक्वस्तद्वेद्यं ब्रह्म चोभयं मयोक्तमित्यर्थ इत्युक्तम् ; न तु स मयैतदुक्त इति शब्दार्थतयेति द्रष्टव्यम् । **असकृदावृत्तेर्व्यवहितत्वशङ्कानिरासार्थमिति** ; 'मासस्य द्विरधीते ' इति न्यायेन विच्छिद्य विच्छिद्य कृतस्मृतेर्न ध्यानत्वमिति भावः । रागादीनां जीवधर्मत्वेनान्तःकरणधर्मत्वाभावादित्यस्वरसादाह—**यद्वा मञ्चाः क्रोशन्तीतिवदिति** । " स वा एष आत्मा हृदि तस्यैतदेव निरुक्तं हृद्ययमिति तस्माद्धृदयम् " इति वाक्यमभिप्रयन्नाह—**हृत्स्थानमयतीति** । हृदयग्रन्थिशब्दे कर्मधारयमभिप्रयन्नाह—**हृदयशब्दोपलक्षितमिति** । ननु " तस्मिन् दृष्टे परावरे " इत्येतदुपायदशायां ज्ञानस्य दर्शनरूपतां कथमवगमयेत् ? तत्रत्यदर्शनशब्दस्य ' शास्त्रार्थदर्शी ' इत्यादाविव ज्ञानसामान्यपरतयाप्युपपत्तेरित्यत्राह—**दर्शनशब्दस्य ज्ञानसामान्यपरत्वसंभवेऽपीति । श्रवणादीनां पृथगुक्तत्वादिति** ; ततश्च सामान्यवाचिपदस्य वैयर्थ्यप्रसङ्ग इति भावः । न चैवं निदिध्यासनदर्शनयोरपि " न वायुक्रिये पृथगुपदेशात् " इति न्यायेन पार्थक्यापत्तिः, परमात्मनो दर्शनायोग्यत्वात् दर्शनशब्दस्य चाक्षुषज्ञान एव मुख्यत्वात् गौणत्वस्याश्रयणीयत्वादिति भावः । **दृष्टशब्दश्च तत्तुल्यार्थ इति** ; " तस्मिन् दृष्टे परावरे " इत्यत्र दृष्टशब्दश्च तत्तुल्यार्थः साक्षात्कारार्थः, तत्प्रत्यभिज्ञानात् । न च " तस्मिन् दृष्टे " " द्रष्टव्यः " इत्यनयोरर्थनिर्णये परस्परसापेक्षत्वेनान्योन्याश्रय इति वाच्यम्, " तस्मिन् दृष्टे " इत्यत्र दृष्टशब्दस्य न ज्ञानसामान्यपरत्वमित्यत्र द्रष्टव्यादिपदसापेक्षत्वम्, द्रष्टव्यादि शब्दस्योपायदशापन्नवृत्तित्वमित्यत्र " तस्मिन् दृष्टे " इति वाक्यसापेक्षत्वमिति

द्वारभेदेनान्योन्याश्रयस्यादोषत्वात् । **पूर्वापरवाक्येषु फलस्य निर्दिष्टत्वादिति ;** "आत्मा वारे द्रष्टव्यः" इत्यस्य पूर्वापरवाक्येष्वमृतत्वस्यैव फलस्य निर्दिष्टतया न साक्षात्कार एव फलमित्यर्थः । **तस्याष्टदोषदुष्टत्वमिति ;** विकल्पस्येत्यर्थः । व्रीहियवयोरेकेनानुष्ठात्रा प्रयोगभेदेनोपादानसंभवाद्युक्तमष्टदोषदुष्टत्वम् ; एकेन विद्याद्वयोपादानायोगात् कथमत्राष्टदोषदुष्टत्वमित्याशङ्क्याह—**इहापि यथासंभवं दोषप्राप्तिरिति ;** अनुष्ठातृभेदेनैकैकस्मिन् दोषद्वयप्राप्त्या चतुष्टयसंभव इति भावः । **तद्दर्शनोपायभूतव्यापारस्येति ;** यद्यपि दर्शनस्यैव विधेयत्वसंभवात् दर्शनध्यानयोः समुच्चयः संभवतीत्याक्षेप एवोचितः; न च दर्शनस्य विधानायोग्यत्वम्, "पत्न्यवेक्षितमाज्यम्" इत्यादाविव ज्ञानविधेरभ्युपेतत्वात् ; तथापि पररीतिमनुसृत्य व्यापारविधेयत्वमुपक्षिप्तमिति द्रष्टव्यम् । **अतो न मानान्तरेण तयोः साध्यसाधनभाव इति ;** मानान्तरसत्त्वे तत एव साध्यसाधनभावप्रतीतेस्तत्सापेक्षमिदं व्यर्थमित्यत्र तात्पर्यम् । **यदि साक्षात्कारं प्रति ध्यानेन सहेति;** साक्षात्कारमित्युपलक्षणम्, साक्षात्कारं मोक्षं प्रति वा ध्यानेन सह समुच्चित्य दर्शनसमानाकारज्ञानान्तरं दृष्टमित्यनेन विधेयमिति यद्युच्येतेत्यर्थः । तस्य च ध्यानस्य द्वारद्वारिभावानापन्नतयैकत्र किंचित्कारान्वयः संभवतीति समुच्चयसंभवः । न च दर्शनसमानाकारज्ञानस्य ध्यानसाध्यतया द्वारद्वारिभावापन्नत्वादेकत्र किंचित्कारान्वयः कथं सिध्येदिति वाच्यम्, तन्नास्तीत्यभिमानवतः शङ्केयमिति संभवादिति । **चतुर्ष्वंशेषु तात्पर्यकल्पनादपीति ;** औपदेशिकार्थाधिगमारम्भणसंशीलनदर्शनसमानाकारत्वध्यानरूपेष्वित्यर्थः । ननु "द्रष्टव्यः" इति दर्शनसमानाकारध्यानविधाने "निदिध्यासितव्यः" इत्यत्रापि निदिध्यासनसमानाकारं मननं विधीयत इति किं न स्यात्? "स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः" इतिवत् "मत्वा धीरो न शोचति" इति मननानन्तरमेव मोक्षप्रतिपादनात् । यदि मनननिदिध्यासनशब्दयोर्भिन्नार्थत्वादेकस्य गौणत्वे प्रमाणाभावान्न निदिध्यासनशब्दस्य गौणत्वमाश्रयणीयमिति, तर्हि "निचाय्य तं मृत्युमुखात्प्रमुच्यते" "तं दृष्ट्वा मुच्यते योगी" "तस्मिन् दृष्टे परावरे" "ततस्तु तं पश्यते निष्कलं ध्यायमानः" इत्यादिश्रुत्यनुग्रहाय विशुद्धमनोजन्यसाक्षात्कारस्यापि विधेयत्वसंभवात् "विधिस्तु धारणेऽपूर्वत्वात्" इति न्यायेन विधेः स्वीकर्तव्यात् प्रकृते विस्पष्टविधिश्रवणाच्चेति चेत्—न; मानससाक्षात्कारे चाक्षुषज्ञानवाचिनो दृशेर्गौणत्वस्य तथाप्यविशेषात् मान-

ससाक्षात्कारस्य मोक्षकालसाक्षात्कारसदृशस्य फलरूपत्वेनाविधेयत्वाच्च ध्यानं दर्शनसमानाकारं विधीयत इत्येव युक्तमिति भावः। **जगत्कारणविषयं चेत् दर्शनसमानाकारनिदिध्यासनरूपमित्यवगम्यत इति**; ननु कथमनेन वाक्येनास्यार्थस्य प्रतीतिः? आत्ममननश्रवणादिकमेव सर्वविषयम्, उपादानोपादेययोरभेदादित्यर्थः परमनेन प्रतीयते, न तु जगत्कारणविषयं सर्वं दर्शनसमानाकारमितीति चेत्—न; आत्मनि दृष्टे विज्ञाते दर्शनसमानाकारध्यानविषये सत्येव सर्वं विदितं भवति, सार्वज्ञ्यं भवति, मोक्षो भवतीत्यस्यार्थस्य प्रतीयमानतया तथोक्त्युपपत्तेः। एतदस्वरसादेवाह—**किं च नानाविद्यानामिति। सामर्थ्यस्य प्रकरणाद् बलीयस्तया चेति**; अत एव सत्यत्वज्ञानत्वादीनां विद्याविशेषप्रकरणपठितानामपि "आनन्दादयः प्रधानस्य" "अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्याम्" इत्यधिकरणेषु सर्वविद्यासाधारण्यं वक्ष्यति। **दर्शपूर्णमासशब्दयोर्लक्षणयेत्यादि**; कालविशेषवाचिनो दर्शपूर्णमासशब्दयोः कर्मलक्षकत्वदर्शनात्; तथा "श्येनेनाभिचरन् यजेत" इत्यादौ श्येनादिशब्दानां 'यथा वै श्येनो निपत्यादत्ते" इति वाक्यशेषेण निपत्यादानरूपगुणयोगेन कर्मणि श्येनशब्दो गौण इत्यभ्युपेतत्वाच्चेत्यर्थः। **मध्यदेशलक्षणाया अङ्गीकृतत्वाच्चेति**; "अर्धमन्तर्वेदि मिनोत्यर्धं बहिर्वेदि" इत्यत्रान्तर्वेदीति वेद्येकदेशो यूपाङ्गत्वेन चोद्यते, उत बहिर्वेदिसहितो यूपमानदेशं लक्षयतीति विशये, वेद्येकदेशो यूपाङ्गत्वेन विधीयते, लक्षणाया अन्याय्यत्वात्; "अर्धं बहिर्वेदि" इति चार्थसिद्धानुवाद इति पूर्वपक्षं कृत्वा, "अर्धमन्तर्वेदि" इत्येकस्य यूपार्धस्यान्तर्वेदिमाने यूपार्धान्तरस्यान्तर्वेदि बहिर्वेदि वा मानमिति शास्त्रस्याभावेनार्धान्तरमपि कदाचित्पुरुषेच्छावशादन्तर्वेद्यपि प्राप्नोति। न चेष्टापत्तिः, "अर्धं बहिर्वेदि" इत्यस्य पाक्षिकानुवादत्वप्रसङ्गात्; तस्यापि विधाने वाक्यभेदः; अतो यस्मिन् देशे मीयमाने अन्तर्वेद्यर्धं भवति बहिर्वेद्यर्धं च, तादृशे देशे मिनुयात्; "डुमिञ् प्रक्षेपणे" इति हि धातुः; प्रक्षिपेदित्यर्थ इति देशविशेषलक्षणेति पूर्वतन्त्रे शेषलक्षणे स्थितमिति भावः। **वाक्यचतुष्टयेनेति**; "वेदनमुपासनं स्यात् तद्विषये श्रवणात्" "सकृत्प्रत्ययं कुर्याच्छब्दार्थस्य कृतत्वात् प्रयाजादिवत्" "सिद्धं तूपासनशब्दात्" "उपासनं स्याद् ध्रुवानुस्मृतिर्दर्शनान्निर्वचनाच्च" इति वाक्यचतुष्टयं द्रष्टव्यम्। **न केवलं छान्दोग्य इत्यर्थ इति**; "ध्रुवा स्मृतिः। स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः" इति छान्दोग्ये भूमवि-

द्यायां श्रूयते, । संवर्गविद्यायां "यां देवतामुपास्ते" इति श्रूयते । तेन तत्रैव तदिति न मन्तव्यमित्यर्थः ।

## श्रुतप्रदीपिका

**तथा चेति**; न परं पारिशेष्यादवगम्यते, श्रूयते चेत्यर्थः । उपसर्गविशेषसन्निविधिप्रत्यययोगायोगयोरप्यैकार्थ्यज्ञापनार्थं सामान्यशब्दानां छागपशुन्यायाद्विशेषपर्यवसानज्ञापनार्थं चानेकवाक्योपादानम् । **निचाय्येति**; "चायृ दर्शने" इति धातुः । **इत्येवमाद्या इति**; एवंशब्द उपसर्गयोगादिप्रकारे । "प्रज्ञां कुर्वीत" इत्यादिषु ज्ञानमात्रं विधेयं प्रतीयते, न ज्ञानविशेष इत्यत्राह—**अत्रेति** । **अत्र**; उदाहृतवाक्यसमुदाये । आदिशब्दात् "आत्मानं ध्यायथ" इत्यादेर्ग्रहणम् । छागपशुन्यायाद् ध्यानरूपविशेषे पर्यवसानमित्यर्थः । तर्हि ल्यबन्तपदाभ्याम् "अन्वेष्टव्यः" इत्यनेन च किमुच्यत इत्यत्राह—**वाक्यार्थेति** । सामान्यशब्दः श्रवणे विशेषे पर्यवस्येदित्यत्राह—**श्रोतव्य इति** । श्रवणादिपर्यवसाने विध्यानर्थक्यादप्राप्तस्य ध्यानस्य विधेयत्वमाह—**तस्मादिति** । उक्तार्थस्य सौत्रतामाह—**वक्ष्यतीति** । सूत्रार्थमाह—**तदिदमिति** । तृतीयलक्षणावसाने प्रकृतं श्रुतिषु सामान्यशब्दोक्तं वा तदिदमित्युक्तम् । हेतुमाह—**विदीति** । स्थलत्रयमुदाहरति—**मन इति** । "न स" इत्यादौ व्यवधानाभावान्न 'अत्र'शब्दः । अत्रादौ चोपासिः श्रुतः । "अथ योऽन्यां देवतामुपास्ते" इति क्वचिदादौ क्वचिदाद्यन्तयोः क्वचिदन्ते च विशेषशब्दः; क्वचिदन्ते क्वचिन्मध्ये क्वचिदादौ च सामान्यशब्द इत्युदाहरणत्रयविभागः । इदं वाक्यं रात्रिसत्रवाक्यवद् द्रष्टव्यम्; तत्र हि विधिवाक्यनिर्दिष्टा रात्रीरर्थवादे "य एता रात्रीः" इत्यनूद्य फलत्वेन प्रतिष्ठा समाप्यते; तद्वदत्रापि विधिवाक्यनिर्दिष्टमुपासनमर्थवादे "य एवं वेद" इति विदिनानूद्य तत्फलत्वेन "भाति च" इत्यादिना भानतपने समाप्येते । **यस्तादिति**; यो वेदिता रैक्वः, यत्तद्वेद्यं ब्रह्म, स एतच्चोभयं तवोक्तमित्यर्थः । 'मे अनुशाधि' इत्यन्वयः । कस्मिंश्चित्प्रकरणे सामान्यशब्दनिर्दिष्टस्य तत्तुल्यप्रकरणान्तरे विशेषशब्देनोक्तिः । प्रागुक्तैकैकस्मिन् प्रकरणे व्यतिकरेणोक्तिरत्रोक्ता । एतद् द्वयमपि सूत्रे पूर्वत्र च हेतुतया विवक्षितम् । एकत्रैकैकोक्तिर्लाघवाय । तदिदमित्यादि सूत्रव्याख्यानम्; न चेत् अपवर्गोपायतया विधीयमानं ध्यानमित्युच्येत, न तु वेदनमिति; अन्यथा

शृङ्खलितोक्तिप्रकरणवैरूप्यात् । पूर्वप्रकृतं ध्यानं विशिनष्टि—**ध्यानं चेति** । स्मृतीनां ध्रुवत्वं विजातीयस्मृत्यव्यवधानम् । अपवर्गोपायत्वश्रवणात् "निदिध्यासितव्यः" इत्यादिविहितं ध्यानमेव ध्रुवा स्मृतिरित्यपि फलैक्यादवगतमित्यर्थः । कतिपयविशेषं प्रदर्शयतः सूत्रकृतोऽभिप्रेतं विशेषान्तरमाह—**सा चेति** । समानाकारत्वं विशदावभासरूपत्वम् । कुत इत्यत्राह—**भिद्यत इति** । हृदयग्रन्थिरज्ञानम्; यद्वा **हृदयः** हृद्गत आत्मा; तस्य ग्रन्थिः प्रकृतिसंबन्धः । उपायफलानुभवदशासाधारण्यात् प्रागविवृतस्य "द्रष्टव्यः" इति पदस्यार्थमाह—**एवं सतीति**; निर्णायकवाक्यान्तरे सतीत्यर्थः । कथं स्मृतेर्दर्शनरूपतेत्यत्राह—**भवतीति** । "वृक्षे वृक्षे च पश्यामि" इतिवदिति भावः । अयमर्थः सूत्रतात्पर्यज्ञैरप्युक्त इत्याह—**वाक्येति** । **प्रपञ्चितम्**; पूर्वपक्षसिद्धान्तरूपेणेत्यर्थः । **तद्विषते श्रवणात्**; व्यतिकरेण प्रयोगादित्यर्थः । वाक्यं व्याचष्टे—**सर्वास्विति**; न परं छान्दोग्य इति भावः । **मोक्षसाधनतया विहितमिति**; अर्थान्तरधीश्रवणादिव्युदासः । उक्तार्थस्य पूर्वपक्षत्वशङ्काव्युदासायाह—**सकृदिति** । **सिद्धम्**; सिद्धान्तः । द्वित्रावृत्तिमात्रव्युदासायासकृच्छब्दः । सूत्राभिप्रेतस्य वाक्यकारकण्ठोक्तिं दर्शयति—**उपासनमिति** । **तस्यैव**; मोक्षसाधनस्यैव । उपासनशब्दवाच्यत्वादसकृदावृत्तत्वं वाक्यकृतोऽप्यभिप्रेतम् । विशेषान्तरं प्रागस्मदुक्तमित्याह—**सेयमिति** । वाक्यकारैरेव तुल्यन्यायतयार्थादुक्तमिति वार्थः । **सेयम्**; असकृदावृत्ता ध्रुवा च । 'दीर्घदर्शी' इतिवत् दर्शनशब्दस्य धीसामान्यपरत्वं मा भूदित्याह—**दर्शनेति**; प्रत्यक्षसमानाकारतापत्तिरित्यर्थः । "श्रोतव्यः" इत्यादिधीविशेषान्तरवाचिपदैः समभिव्याहारात् "द्रष्टव्यः" इत्यस्यापरोक्षरूपधीविशेषपरत्वमेव न्याय्यमिति भावः ।

## तत्त्वटीका

ननु मोक्षोपाये विधित्सितत्वोक्तिरयुक्ता, विधिशब्दानामिह पुरुषार्थभूतवाक्यजन्यज्ञानानुवादनिष्ठत्वात्; ध्यानादेस्तु तदर्थतया चोदनात्; न चान्यानुपपत्तिमात्रात्तदन्यत्सर्वमुपपद्यते; विविधानि च ज्ञानानि स्मृतिदर्शनादिशब्दैर्व्यपदिश्यन्त इत्यत्राह—**तथा चेति** । यथा वाक्यजन्यज्ञानादन्यो मोक्षोपायो "द्रष्टव्यः" इत्यादिभिर्विधित्सितः, स च ध्यानाद्यनेकशब्दोपात्तोऽप्येकतया सिध्येत्, तथैवेत्यर्थः । चः पारिशेष्येण सह समुच्चयार्थो वा । अत्र वेदनादिशब्दानां ध्यानादिशब्दोक्तविशेषपरतामुपसर्गभेदसन्निधि-

प्रत्ययसदसद्भावैरर्थभेदाभावं च व्यङ्क्तुमीदृशबहुवाक्योपादानम् । उपात्तवाक्यप्रकारवैचित्र्यपर **इति**शब्दः । तेषां विधिपरत्वसाम्यार्थ **एवं**शब्दः । अनुपात्तेष्वपि न्यायसंचारार्थम् **आद्यो**क्तिः । "प्रज्ञां कुर्वीत" "विजानाति" इत्यादौ न वाक्यार्थज्ञानादन्यत्वं भातीत्यत्र "छागो वा मन्त्रवर्णात्" इति न्यायमभिप्रेत्याह—**अत्रेति**; श्रुतेषु तेषु वाक्येष्वित्यर्थः; निर्धारणे सप्तमी । ऐकार्थ्यमिहैकप्रयोजनत्वमेकविषयत्वं वा । तच्चात्र शाखान्तरनयपुरस्कारेण सामान्यविशेषन्यायसिद्धम् । प्रथमेनादिशब्देन "ध्यायथ" इत्यादेः, द्वितीयेन "विजिज्ञासितव्यः" इत्यादेश्च ग्रहणम् । अनुवादे तात्पर्यसिद्ध्यर्थमनुवाद्यस्य विधेयान्वयार्थं च ध्यानोपकारकत्वोक्तिः । तच्च ध्येयोपस्थापकत्वम् । नन्वत्र "अनुविद्य" इत्यादौ "दध्ना" इत्यादिवद्गुणविधिरस्तु; सगुणकर्मश्रवणे हि वाक्यं गुणपरमिति नीतिविदः; विशिष्टविधौ गौरवात्, कर्ममात्रविधौ गुणश्रुतिवैयर्थ्यात्; कर्मपदं तु विधेयस्य गुणस्याश्रयार्पणेन सार्थकं स्यादिति—मैवम्; होमवदिह ज्ञानार्थस्य प्राप्तत्वे ह्यनूद्य गुणो विधीयेत । तद्भङ्गत्या विशिष्टविधिरस्त्विति शङ्कानिरासार्थम् **अनूद्ये**त्युक्तम् । अयं भावः—क्त्वान्तस्याख्यातान्तस्य चैकार्थ्ये पौर्वापर्यविरोधः । कस्य च केन वैशिष्ट्यम्? सजातीयाभ्यासे तु ज्ञानमभ्यस्येदित्येवालम् । उपसर्गभेदश्च विफलः स्यात् । भिन्नार्थत्वे "विजानाति" इत्यादेरप्राप्तविषयस्य ध्यानवत् पश्चात्पठितस्य पश्चाद्भाविनि विधेये ध्याने विश्रान्तिर्न्याय्या । वाक्यार्थधीस्तु प्राप्तत्वान्न विधेयो गुणः । तत एव न तदर्थं श्रवणादि; तत्प्रधानध्यानविधानस्य युक्ततमत्वाच्च । न चान्यत्किमपि ज्ञानमिह गुणत्वेन विधेयतया शङ्कनीयम् । यदि तु "विजानाति" इत्यादेर्वाक्यार्थज्ञाने विश्रमः, तदा "अनुविद्य" इत्यादेर्न विधेयमनुवाद्यं वा ज्ञानान्तरं दृश्यते । न च ध्यानं तद्गुणतया विधेयम्, परोक्षं प्रत्यक्षं वा वाक्यार्थज्ञानं प्रति तत्साधनत्वासंभवस्य दर्शितत्वादिति । स्थानैक्याद्विधिप्रत्ययरहितेऽपि विधिपरत्वव्यक्त्यै बुद्धिस्थक्रमेण "प्रज्ञां कुर्वीत" इत्यस्य पूर्वं पाठः । ध्यानस्य "निचाय्य" इत्याद्युक्तवैशद्यविशिष्टत्वादुपास्युक्तप्रकर्षविशिष्टत्वाच्चोपसर्गद्वयसाफल्यम् । अनुवादयोरप्युपसर्गद्वयमनुवाद्यस्याभ्यासं स्पाष्ट्यं च व्यनक्ति । "अविज्ञातं, विज्ञातम्" इति विज्ञानशब्दस्य "निदिध्यासितव्यः" इत्यस्य स्थाने पाठात् श्रवणानन्तरभाविमननविषयान्वेषणशब्दानन्तरपाठाच्च "विजिज्ञासितव्यः" इत्ये-

तन्निदिध्यासनस्थानापन्नम्। उपायविषयविज्ञानवेदनादिसामान्यशब्दानां तव्यप्रत्ययान्तोक्तश्रवणरूपज्ञानविशेषे विश्रमः किं न स्यादित्यत्राह—**श्रोतव्य इति**। कथमत्राहेतुकस्तव्यप्रत्ययबाध इत्यत्राह—**स्वाध्यायस्येति**। अयं भावः—श्रुतेरर्थपरत्वाभावाद्वा विचारस्य प्रवर्तकाभावाद्वा तदवसराभावाद्वा मीमांसानारम्भेति शङ्का निरस्ता। 'श्रोतव्यः' इत्यस्य च गुर्वभिगमनादौ शब्दशक्तिर्नास्ति। अतो निर्णयार्थव्यापारपरत्वे प्राप्तार्थत्वमिति। नन्वस्ति विधेयमारम्भणसंशीलनरूपं मननम्; तच्च "मन्तव्यः" इति विवक्षितुं युक्तम्; तत्र वेदनादीनां विश्रान्तिः स्यादित्यत्राह—**श्रवणेति**। अप्रतिष्ठितस्य श्रवणस्य ध्यानानुपकारित्वात्तत्प्रतिष्ठापकतयाकाङ्क्षितं तदनन्तरपठितं यौक्तिकं मननम्। अतस्तदपि रागाद्यनुवृत्त्या प्राप्तत्वादनुवाद्यमेवेति भावः। एतेन श्रवणादित्रिकं दर्शनसाधनतया विधीयत इति कैश्चिदुक्तस्य युक्तिविरोधः ख्यापितः। ननु "श्रोतव्यो मन्तव्यः" इत्येताभ्यामुपदेशैकगम्यार्थश्रवणमात्रं विधेयस्तु; आहुश्च केचित्—"सांख्ययोगोपदेशश्रवणादिकम्" इति; अत्राह—**तस्मादिति**। प्राप्ताप्राप्तविवेकात् तत्सिद्धाद्वा परिशेषादित्यर्थः। **एवकारः** श्रवणमननयोर्ज्ञानमात्रस्य सन्प्रत्ययवाच्येच्छायाश्च व्यवच्छेदार्थः; "द्रष्टव्यः" इत्यस्यापि ध्यानविशेषणवादितया पृथग्विधितात्पर्यव्युदासार्थो वा। अयं भावः—"श्रोतव्यो मन्तव्यः" इत्यनयोरवैधप्रसिद्धोपकारकत्वसंभवे तद्विपरीतक्लृप्तेरयुक्तत्वात्, "श्रोतव्यः" इत्यादेः श्रवणादिचतुष्टयविधिपरत्वे वाक्यभेदापत्तेः, अत्र विकल्पस्याष्टदोषदुष्टतया गुरुलघुविषयतया चात्यन्तासंभवात्, क्रमभाव्युपकारस्य श्रवणादेः समाधिरूपाङ्गिना समुच्चयासंभवात्, विशिष्टविधेर्गत्यन्तराभावनियतत्वात्, ध्यानस्य दर्शनरूपतायाः श्रुत्यन्तरानुसारेण साधयिष्यमाणत्वात्, अत एव निपूर्वस्यापि ध्यायतेरिह पदान्तरस्फुटोपात्तदर्शनरूपतावैशिष्ट्योक्तावुदासीनत्वात्, "द्रष्टव्यः" इत्यस्यानुवादसमभिव्याहारेऽपि स्वरसावगतविधिपरत्वप्रहाणेन फलानुवादपरत्वकल्पनानुपपत्तेः, "श्रोतव्यः श्रुतिवाक्येभ्यः" इत्यादिश्लोकेऽपि श्रवणादित्रिकस्य क्रमाद्दर्शनहेतुत्वमात्रोक्तौ साध्यस्यापि विधेयत्वे विरोधाभावाच्च रागप्राप्तश्रवणादिपूर्वकं विधिपदान्तरोपात्तदर्शनाकारविशेषितध्यानमेवात्र विधेयमिति। एवं वेदनादिशब्दानां स्वोक्तविशेषविधिविश्रमानभ्युपगमे सूत्रविरोधमपि सूचयति—**वक्ष्यति चेति**। चिन्तनार्थो हि ध्यायतिरेकविषयमसकृदावृत्तं ज्ञानं वक्ति। अतो ध्यानविषये उपदिष्टं वेदनं ध्यानमेवेति

प्रकृतसिद्धिः । तथोपास्तिरपि "तस्मिन्यदन्तस्तदुपासितव्यम्" इत्यादिभिरुपात्तः । अतो यज्ञादिसापेक्षत्वानुगुणम् 'उपदेशात्' इत्यनेनैव संगृहीतम् । प्राक् प्रतिज्ञातमुपासनाख्यविशेषे वेदनादिसामान्यशब्दानां विश्रममाह—**तदिति** । **तत्**; तदुक्तावनिर्धारितविशेषम् । **इदम्**; गुरुतरध्यानादिसाध्यसाधनतया विधानाद्विशेषदृष्टौ तदेकतापत्त्यर्हम् । तद्धेतुं व्यनक्ति—**अपवर्गोपायतया विधित्सितमिति** । **उपासनमित्यवगम्यत इति**; तुल्यप्रकरणस्थोपासिसमानविषयवेदनादिशब्दनिर्दिष्टत्वादिति भावः । "उपदेशात्" इति सूत्रितमेकप्रकरणस्थविशेषमन्यमपि हेतुमाह—**विद्युपास्योरिति** । "मनः" इत्यादावुपासिरादौ, विदिरन्ते । "यस्तत्" इत्यत्र तु तद्विपरीतम् । "न स वेद" इत्यत्र तूभयत उपास्तिः, "अथ योऽन्यां देवतामुपास्ते" इत्युपक्रमात् । एवं मिथः स्थानाक्रान्तिरिह व्यतिकरः । नन्वत्र 'मनो ब्रह्म' इति दृष्टिविधिः; अन्यच्च वाक्यद्वयं विद्याविशेषस्थम् ।

एकत्र शब्दवृत्तिर्या स्थिता सान्यत्र संचरेत् ।
तत्तुल्येऽपीत्यभिप्रेत्य दर्शनादिति भाष्यते ॥ २९९ ॥

"य एवं वेद" इति न शास्त्रार्थवेदनमात्रोक्तिः; विहितस्याकाङ्क्षितं फलमनिर्दिश्याविहितान्यानुवादेन तत्फलोक्तेरयुक्तेः । ननु भूमविद्योपक्रमे "स यो ब्रह्मेत्युपास्ते यावन्मनसो गतं तत्रास्य यथाकामचारो भवति" इति फलविशेष उक्तः; तेनैव नैराकाङ्क्ष्यं स्यात्—नैवम्; तृतीयप्रपाठकस्थस्यास्योपासनप्रकरणभेदात् पुनः श्रुतिवैयर्थ्याच्च विधेयान्तरत्वे सिद्धे संनिहितफलेनैव समन्वयोपपत्तेः । अतोऽस्मिन्नर्थवादे विदिनोपासनमनूद्य तत्फलविधिर्युक्तः । रात्रिसत्रन्यायश्चात्राभिप्रेतः । दानादिजन्या प्रथा कीर्तिः । पराक्रमादिजन्या तु यशः । कीर्त्या यशसा च भाति, ब्रह्मवर्चसेन तपतीति योज्यम् । मध्यमवाक्ये 'अत्र' इत्यनुक्तिरासन्नत्वात् । "यस्तत्" इत्यादौ यस्तत् ब्रह्म वेद, यच्च ब्रह्म स वेद स वेदिता रैक्वः तद्वेद्यमेतत् ब्रह्म चेति द्वितयं तवोक्तमित्यर्थः । "गामश्वं पुरुषं जगत्" इत्यादिष्विव चकारानुक्तिः । नपुंसकसमभिव्याहारादुक्तमिति विपरिणमनीयम् । वेद्यं प्रति स वेदितृत्वेनोक्त इति वा नेयम् । अथवा यत् स रैक्वो वेद, तदेवान्यो यो वेद, एनं सर्वं तदभिसमेति यत्किंचित्प्रजाः साधु कुर्वन्तीति पूर्वत्रान्वयः; "स मयैतदुक्तः" इत्यत्र 'एतत्' इति क्रियाविशेषणम्; स मयैवमुक्त

इत्यर्थः। अस्यां व्याख्यायां प्रकरणानुगुण्यात् रैक्वशिष्येण भवितव्यमिति जानश्रुतेः सूच्यते। **अनुशाधि ;** विविच्य ज्ञापयेति यावत्। एवं वेदनस्य प्रस्तुतध्यानोपासनशब्दवाच्यत्वमित्युक्तम् ; न तु ध्यानस्योपासनत्वमिहोच्यते ; 'वेदनमुपासनमित्यवगम्यते' 'विद्युपास्योः' इत्यादिभाषणात्, "वेदनमुपासनं स्यात्" इति प्रदर्शयिष्यमाणवाक्यसंवादाच्च। ध्यानोपासनशब्दयोरेकविषयत्वं ध्यानस्य प्रतिकूलध्यानाद्व्यावृत्तिश्चेहार्थादेव सिध्यतः। यदि ध्यानमिहोपासनत्वेन शब्दतो विशेष्यते, तदा ध्यानस्य पुनराकारान्तरोक्तौ शृङ्खला भज्येत। ननु ध्यानशब्दः चिन्तामात्रवाची व्यवहितस्मृतिसंतानेऽपि स्यात् ; स्मृतिमात्रे च क्वचित्प्रयुज्यते ; सूत्रे च ध्यानोपासनशब्दाभ्यामसकृदावृत्तिमात्रमुक्तमित्यत्र तदभिप्रेतं श्रौतं नैरन्तर्यरूपविशेषमाह––**ध्यानं चेति**। यावज्जीवाग्निहोत्रनयाद्वा स्वरूपेण चिरकालस्थायितया वा ध्रुवत्वं स्यादिति शङ्कानिरासाय सदृष्टान्तः संतानशब्दः। एवं विच्छिन्नाविच्छिन्नवेदनसाधारणस्य ध्यानस्य विशेषे विश्रम उक्तः ; अविच्छिन्नासाधारण्यं वा स्थापितम्। स्वस्थाने चैतत् सूत्रयिष्यति—"ध्यानाच्च। अचलत्वं चापेक्ष्य" इति। "उपासनशब्दस्याविच्छिन्नविषयत्ववत् ध्यानशब्दस्याप्यविच्छिन्नविषयत्वमिह स्थाप्यते" इति तूलिका। उक्तं श्रुत्योपपादयति––**ध्रुवेति**। स्मृतेर्ध्रुवत्वं विसदृशबुद्धिव्यवधानरहितप्रवाहत्वम् ; "तद्रूपप्रत्यये चैका संततिश्चान्यनिस्पृहा" इत्यादिना तथोक्तेः। यद्यपि "नाना शब्दादिभेदात्" इत्यत्र फलसंयोगैक्यमात्रान्न विद्यैक्यमिति वक्ष्यते ; ध्यानत्वोपासनत्वध्रुवत्वादयश्च विशेषा विद्यान्तरपठिताः—तथापि साधारणानां वेदनादिशब्दानां विशेषविषयत्वाभावे फले च तारतम्यरहिते गुरुलघूपायभेदविधिदौस्थ्यम् ; गुरुलघुविकल्पायोगलक्षणं च वस्तुसामर्थ्यं प्रकरणाद्बलीयः ; अतः स्मृतेर्ध्रुवत्वमिदमेकत्र श्रुतमपि सर्वासु विद्यासु योज्यमित्यभिप्रायेण **अपवर्गोपायत्वश्रवणात्** इत्युक्तम्। **स्मृतिलम्भे ;** आहारशुद्ध्यादिक्रमेण प्रस्तुतध्रुवानुस्मृतिसिद्धावित्यर्थः। ग्रथ्यत एभिः क्षेत्रीति ग्रन्थयः—धर्माधर्मरागद्वेषमोहादयः कर्मोपनीताश्च त्रिगुणविकारभेदाः ; ते च मायापाशग्रन्थितयागमोक्ताः। **विप्रमोक्षः ;** विभज्यात्यन्तिकमोचनम्। ननु भ्रान्त्या बन्धः सर्वेष्टः, तस्य कथमप्रमा स्मृतिर्बाधिका ? भ्रान्त्यधीनकर्मजन्यस्य स्वयं भ्रान्तिविषयत्वासिद्धेर्भ्रमोत्थस्यापि भयशङ्काविषजन्यज्वरादेरिव बन्धस्य सत्यतया

युक्तोऽयमीदृशः प्रतीकारविधिः । मिथ्यात्वपक्षेऽपि प्रायश्चित्तादिन्यायो दुस्त्यजः । अतो निवर्त्यस्य सत्यमिथ्यात्वे निवर्तकस्य मानामानत्वे अनादृत्य चोदितत्वात् स्वफल-साधनत्वं ग्राह्यम् । भेदवासनायाश्च ध्यानरूपा स्मृतिर्नाशिनी त्वयैवोक्ता । तदत्र शुक्तिरजतवन्न बन्धस्य बाधः ; नाशस्तु यथाविधि स्मृत्या प्रमित्या वा स्यात् । न चेयं स्मृतिरप्रमाण्ययथार्था, स्वहेतुप्रमित्यनन्यविषयत्वात् । उक्तं च सामान्यतः श्रीमद्गीता-भाष्ये—"स्मृतिर्नाम पूर्वानुभूतविषयमनुभवसंस्कारमात्रजं ज्ञानम्" इति । पूर्वानुभूत-विषयत्वं न लक्षणप्रविष्टम् ; किं तु विषयसत्यत्वासत्यत्वयोः स्वहेतुधीसामान्यज्ञप्त्यर्थम् ।

निवृत्ततदवस्थस्य तदवस्थतया स्मृतौ ।
याथार्थ्यं न प्रतिक्षेप्यं भूतभाविप्रमाक्रमात् ॥ ३०० ॥
स्मृतिप्रमोषे चार्थस्य तादवस्थ्यं न भासते ।
अयाथार्थ्यं कथं तत्र तत्रेदंताविवर्जिते ॥ ३०१ ॥
अतो मूलानुसारेण यथादर्शनमिष्यताम् ।
यथार्था चायथार्था च स्मृतिरप्यनुभूतिवत् ॥ ३०२ ॥
अन्यदृष्टिस्तथान्यत्र क्ष्वेलध्वंसादिकृन्मता ।
परविद्यास्वपि ह्येषा क्वचिदंशेषु गृह्यते ॥ ३०३ ॥
अतः श्रुतिस्मृतिशतैश्चोदिना स्मृतिरूपिणी ।
भाष्यते परविद्येयं भवारम्भस्य निष्कृतिः ॥ ३०४ ॥

ननु ध्यानमेवेत्याद्ययुक्तम् ; तदपि धारणावत्समाध्यर्थतयोक्तम् ; समाधिरेव तु दर्शनात्मकः "आत्मानं पश्येत्" इत्यादिभिर्मुक्तिहेतुरुक्तः ;न च योगिप्रत्यक्षमनभ्युपग-तम् , तस्य बहुषु प्रदेशेषु भाषिष्यमाणत्वादित्यत्राह—**सा चेति** ; ध्रुवत्वविशेषितेत्यर्थः । आकारान्तरेणापि सूत्रसूचितगत्या विशेष्यत इति व्यक्त्यै चकारः, एवार्थो वा । सैव हि स्मृतिर्वैशद्यातिशयात्समाध्याख्या ; न तु ध्यानफलमन्यद् दर्शनं "पश्येत्" इत्यादिषु च विधेयमित्यर्थः । स्मृतेर्दर्शनत्वव्याघातशमनाय समानत्वोक्तिः ; परोक्षेऽप्यपरोक्षत्वो-पचार इति भावः ।

परोक्षा चापरोक्षा च स्मृतिर्द्वेधा स्वमूलवत् ।
कृत्स्ना वा स्यात्परोक्षैव द्विधाप्यत्रापरोक्षता ॥ ३०५ ॥

विधौ च परशब्दार्थो गत्यभावेऽनुमन्यते ।
लक्षणेष्टा हि दर्शादौ गौणी श्येनादिनामसु ॥ ३०६ ॥
अर्धमन्तर्बहिर्वेदि मिनुयादिति च श्रुतौ ।
मध्यदेशस्य लक्ष्यत्वं सर्वत्रैवं यथायथम् ॥ ३०७ ॥

नन्वत्र स्ववाक्ये ध्रुवत्वं न दर्शनरूपत्वं विशेषणतयोपात्तम्; यतः समावेः पार्थक्यं परिह्रियेतेत्यत्राह—**भिद्यत इति** । अत्र ग्रन्थिशब्द उपात्तकर्मादिव्यतिरिक्तविषयः; हृदयस्य मनसः सम्यक्प्रवृत्तिप्रतिबन्धकतया ग्रन्थयो रागाद्याः । यद्वा हृच्छब्दोक्तं स्थानमयतीति हृदयो जीवः; तात्स्थ्याद्वासौ तच्छब्देन लक्ष्यते; तस्य ग्रन्थिः पूर्वोक्तस्त्रिगुणविकारवर्गः । हृदयं वा ग्रन्थिः; उपलक्षणमिदम् । यत्तु निरुच्यते छान्दोग्ये—"स वा एष आत्मा हृदि तस्यैतदेव निरुक्तं हृदयमिति तस्माद्धृदयमहरहर्वा एवंवित्स्वर्गं लोकमेति" इति, तदुपास्यब्रह्मपरम् । न च तदेवात्र हृदयशब्दवाच्यमिति भ्रमितव्यम्; ग्रन्थिसंशयादिविरुद्धधर्माध्यासात् । सर्वविषयाः संशयाः, सर्वे वा संशयाः; संशयशब्दोऽत्र विपर्ययस्याप्युपलक्षकः; ते **छिद्यन्ते** हेतूच्छेदान्न संतन्यन्त इत्यर्थः । **कर्माणि**; बन्धकसुकृतानि दुष्कृतानि च । प्राप्तिविरोधिक्षयस्यात्र विवक्षितत्वान्न विद्योत्पत्तिकर्मनिवृत्त्योरन्योन्याश्रयः । **परावरे**; परत्वं सर्वातिशायिता; अवरत्वं सौलभ्यार्थेन्द्रानुजत्वाद्यैः । यद्वा "सद्ब्रह्म" "ब्रह्म दाशाः" इत्याद्युक्तपरावरजन्तुशरीरके । अपरावरे वा; निम्नोन्नतविश्वविलक्षणे । अथ वा परा एवावरा भूत्या यस्य स परावरः ।

इदमत्राकूतम्—"दृष्टे" इत्यत्र दर्शनशब्दो न तावन्मुक्त्यवस्थाभाविदर्शनपरः, ध्रुवस्मृतिशब्दवत् ग्रन्थिमोक्षसाधनविषयत्वात् । न च साधनविषयत्वेऽपि स्मृतिदृष्ट्योरपवर्गं प्रति समुच्चयः, दर्शपूर्णमासादिवत् द्वन्द्वस्य चकारस्य वानुपलब्धेः । न चात्र समुच्चयः शक्यः, प्रक्रान्तयोगेन ब्रह्मणः साक्षात्कर्तुमशक्यत्वात्; शक्यत्वेऽपि यौगपद्यस्यासंभवात्; क्रमस्य च व्यवस्थापकाभावात् । न च प्राचीनं ध्रुवस्मरणं पश्चिमं च योगिप्रत्यक्षं करणतया समुच्चीयेत, धारणावत्तादर्थ्योपपत्तौ समुच्चयक्लृप्त्ययोगात्; अन्यथातिप्रसङ्गात्; ध्रुवस्मृतेर्व्यवहितसाधनत्वक्लृप्तौ श्रुतहानादिप्रसङ्गाच्च । प्रमाणफलं च दर्शनं न स्वरूपेणोपादातुं शक्यम्, येन समुच्चित्य विधीयेत । ननु संस्कारोद्बोधफले स्मर-

णेऽपि समानमेतत् ; अत आज्यावेक्षणन्यायात्तदुपायभूतशक्यव्यापारार्थो दर्शनविधिरिहास्त्विति चेत्—न ; तथा सत्येकस्मिन्वाक्ये द्रष्टव्यनिदिध्यासितव्यपदयोः पुनरुक्तिप्रसङ्गात्, अन्ततो निदिध्यासनार्थचित्तप्रेरणस्यैव पुरुषतन्त्रस्य दर्शनोपायतया विधातव्यत्वात्, अन्यस्य चादृष्टेः। नन्वेक एव दर्शनोपायः सामान्यतो विशेषतश्च पदद्वयोक्त इत्यपुनरुक्तिः स्यात्; हन्तैवं सति समुच्चयं त्यक्त्वास्मत्पदवीमासीदसि, "द्रष्टव्यो निदिध्यासितव्यः" इत्युभाभ्यामेकस्यैव विधेयत्वात्। अस्मदुक्ते तु ध्यानं वैशद्यतो विशेष्यत इति वैषम्यम्। न च दर्शनसमानाकारध्यानान्तरेण ध्रुवस्मृतेः समुच्चयः, तादृशस्यान्यस्यादृष्टेः ; तत्क्लृप्तौ च गौरवात्; ध्रुवस्मृतेर्निरपेक्षसाधनत्वश्रुतिभङ्गाच्च। न च मोक्षे साध्ये साक्षात्कारस्मृत्योरनेकदोषदुष्टो विकल्पः स्वीकार्यः।

विकल्पबुद्ध्यनुष्ठानापूर्वतत्फलबाधतः।
कोटिभ्यामष्टदोषत्वं प्रयोगद्वितयेऽब्रुवन् ॥ ३०८ ॥
प्रामाण्यत्यागतोऽन्यस्य स्वीकृतेस्त्यक्तसंग्रहात्।
स्वीकृतत्यागतश्चान्ये प्रयोगद्वितये विदुः ॥ ॥ ३०९ ॥

गुरुलघुवैषम्याच्चात्र न तत्संभवः ; अन्यथातिप्रसङ्गात्, विषमफलेष्वेव तद्धेतुत्वदृष्टेः। न चात्र द्वारद्वारिता, मानाभावात्। न हि श्रवणमननयोर्ध्यानोपकारकत्ववत् ध्यानस्य दर्शनोपकारकत्वं दृष्टम्। परोक्तं भावनाबलजप्रत्यक्षं तु शास्त्रयोन्यधिकरणे निरसिष्यते। न चात्र श्रुतम्, एवं क्रमाद्यनुक्तेः। "ततस्तु तं पश्यते निष्कलं ध्यायमानः" "ध्याननिर्मथनाभ्यासाद्देवं पश्येन्निगूढवत्" इत्यादिकमस्तीति चेत्—सत्यम् ; ध्यानफलं ह्येतद्दर्शनमणिमादिवत्सिद्ध्यन्तरमस्तु ; न साधनम्, तथानुक्तेः। परविद्याप्रकरणे क्वचित्तदुक्तिस्तु तत्तत्प्रभावप्रदर्शनार्था "तमक्रतुं पश्यति वीतशोकः" "पुरिशयं पुरुषमीक्षते" इतिवत् ध्यानसाध्यतयोक्तं दर्शनं मुक्तस्यास्तु ; ध्यानसाध्यतयोक्तं दर्शनं मुमुक्षोश्चेत् विशदध्यानरूपं स्यात्; तथाहि—दर्शनशब्दस्य श्रावणज्ञानादिष्वप्रयुज्यमानस्य चाक्षुषज्ञानमेव हि मुख्यम्; तत्तु "न चक्षुषा गृह्यते नापि वाचा" "मनसा तु विशुद्धेन" इत्यादिभिरिह प्रतिक्षिप्तम् ; अतो मनोजन्यज्ञानविशेषे दर्शनत्वोपचार इति वाच्यम् ; तथासति वरं मोक्षसाधनतया कण्ठोक्तस्यैव ध्रुवानुस्मरणस्य तादृशवैशद्यविवक्षया तदुपचार इति। ननु दर्शनशब्दः स्मृतिं साक्षात्काररूपत्वेन विशिनष्टु ;

मैवम्—तस्य स्मृतावसंभवात्; मूलभेदानुसारेण संभवाभिमानिनामपि परोक्षानुभवसाध्यस्मृतौ तदसिद्धेः। "मनसा ध्याननिष्पाद्यं समाधिः सोऽभिधीयते" इति समाधेर्ध्याननिष्पाद्यत्वोक्तिश्च विशदाविशदवैषम्यात्। उक्तं च समाधाववस्थाद्वयं तस्यैव योगाङ्गत्वमङ्गित्वं च निर्वहद्भिः। अस्त्वेवमिह स्मृतिदर्शनवाक्ययोरैकार्थ्यम्; तथापि स्मृतिशब्देन दर्शनमुपचर्यताम्; तन्न—मुख्यार्थबाधाबाधाभ्यां विपरिवर्तस्यैव स्थापितत्वात्। किं च स्मृतिर्हि वैशद्योक्त्या स्तूयेत, दृष्टिस्तु स्मृतित्वोक्त्या निन्दिता स्यात्। परोक्षज्ञाने च वैशद्यविवक्षया "तमसः पारं दर्शयति" इत्युच्यते। लोके च 'पारदर्शी, दूरदर्शी' इत्यादि। नन्वपरोक्षस्य संसारस्य दर्शनसमानयापि परोक्षया स्मृत्या कथं बाधः; न कथंचित्, मिथ्यात्वासिद्धेः। अपरोक्षस्यापि ज्वालैक्यदेहात्मत्वचन्द्रद्वित्वादेरनुमानादिना बाधो दृष्टः, सर्वैश्चाभ्युपगतः। अतः "तस्मिन् दृष्टे" इत्यनेनापवर्गोपायविषयेण स्मृतेर्वैशद्यलाभात्तादृशी सैव समाधिरिति नाष्टमलोपप्रसङ्गश्चेति। तथापि "द्रष्टव्यः" इत्यादौ ध्यानसामर्थ्याक्षिप्तश्रवणमननयोर्ध्यानार्थत्ववत् अग्र्यप्रायन्यायेन ध्यानस्यापि दर्शनार्थबुद्ध्यन्तरत्वोपपत्तेर्न दर्शनशब्दस्तद्विषयः स्यादिति शङ्कायां 'ध्यानमेव' इत्यत्राभिप्रेतं विवृणोति—**एवं च सतीति**; ध्रुवस्मृतित्वेनेव दर्शनसाम्येनापि निदिध्यासनस्य विशेषितत्वे श्रुत्यन्तरसिद्धे सतीत्यर्थः। चः शङ्कानिवृत्त्यै, स्वतः प्राप्तविधिपरत्वयुक्त्या सह स्फुटार्थश्रुत्यन्तरानुगुण्यसमुच्चयार्थो वा। अयं भावः—ध्यानस्यापि श्रवणादिवदविधेयत्वे यज्ञादिभिरेवादृष्टद्वारेण दर्शनसिद्धिः कल्प्येत; तथा च मध्ये ध्यानं विफलं स्यात्, भावनाबलजप्रत्यक्षानुपपत्त्या तादृशदृष्टोपकारकाभावात्। विधेयत्वे तु 'एकत्र निर्णीतः शास्त्रार्थः सर्वत्र स्वतः प्राप्तः' इति न्यायात् ध्रुवानुस्मृतिवाक्यवदिहापि निदिध्यासनं दर्शनसमानतया विशेष्टव्यम्। "द्रष्टव्यः" इत्यत्र परोक्ते फलपरत्वे तु प्रत्ययवैघर्थ्यम्। पूर्वापरवाक्येषु च "येनाहं नामृता स्याम्" "अमृतत्वस्य तु नाशास्ति वित्तेन" "एतावदेव खल्वरे अमृतत्वम्" इति फलस्योक्तत्वात्तदुक्तिरत्रानपेक्षिता। वैशद्यं त्वन्यत्रोक्तमत्राप्याकाङ्क्षाबलायत्तम्। अत उपायपरतया "तस्मिन् दृष्टे" इतिवद्विधेयविशेषकत्वे संभवति विकल्पसमुच्चयश्रुतहानादेरयोगादेकफलसिद्ध्यर्थविशिष्टैकसाधनविधितात्पर्यसंभवे पृथक् फलविधिभेदस्याग्राह्यत्वात् "दध्ना" इतिवदनूद्य विधाने विशिष्टविधेयैक्यसंभवाच्च वैशद्यविशेषितध्यानविधिपरमिदं 'द्रष्टव्यः' इत्यादि वाक्यमिति। अत एवास्य युगप-

देकस्य विध्यनुवादशङ्काप्यपास्ता । स्वानन्दसाक्षात्काररूपस्यात्मदर्शनस्य स्वयमेवेप्सितस्य कथं विधेयत्वमिति चोद्यं विशदस्मृतिविधानोक्त्या प्रत्युक्तम् । एतेन "निचाय्य तं मृत्युमुखात्प्रमुच्यते" "यदा पश्यः पश्यते रुक्मवर्णम्" "तद्विज्ञानेन परिपश्यन्ति धीरा आनन्दरूपममृतं यद्विभाति" इत्याद्यपि यथार्हं निर्व्यूढम् । नन्वेवं योगिप्रत्यक्षमेव लुप्येत, तत्तद्वाक्येषु दर्शनादिशब्दानां योगिप्रत्यक्षसद्भाववचनानामपि प्रत्यक्षसमानाकारविषयतया नेतुं शक्यत्वात् । न च 'धर्मादयः कस्यचित्प्रत्यक्षाः, प्रमेयत्वात्' इत्यादिभिस्तत्सिद्धिः, ईश्वरप्रत्यक्षेणार्थान्तरापत्तेः । 'इन्द्रियग्राह्याः' इति साध्यप्रयोगेऽपि शास्त्रवेद्यस्यापि मनोविषयत्वेन सिद्धसाधनात्; 'इन्द्रियसाक्षात्कर्तव्याः' इत्यत्राप्यतीन्द्रियाणामप्यनुव्यवसायवेद्यत्ववादिनामर्थान्तरत्वेन दत्तोत्तरत्वात्; सुखादिवदाहत्य साक्षात्कार्यत्वविवक्षायां विपक्षे बाधकासंभवेन प्रतिबन्धासिद्धेः; अन्यथा बौद्धवद्धर्मादीनां चाक्षुषत्वस्यापि साधनप्रसङ्गात् । शक्यं हि 'विगीतं कस्यचित् चाक्षुषं प्रमेयत्वात्' इत्यादि प्रयोक्तुम् । किंच 'योगीन्द्रियं न धर्मादिप्रत्यक्षजनकम्, इन्द्रियत्वात् अस्मदादीन्द्रियवत्' इति प्रतिप्रयोगः सुलभ इति । मैवम्—

मुक्त्युपाये हि कथिता दर्शनोक्तेरमुख्यता ।
अन्यत्र बाधकाभावाद्यथाश्रुतपरिग्रहः ॥ ३१० ॥

संयमिनां ह्यतीतानागतातीन्द्रियादिवेदनं कण्ठोक्तम् । न च स्मरणमेतत्, अननुभूतविषयत्वात् । अत एव न तत्र वैशद्यमात्रेण प्रत्यक्षत्वोपचारसंभवः । न च तत्रानुमानाद्यवकाशः, "तत्सर्वं धर्मवीर्येण यथावत्संप्रपश्यति" इत्यादिभिस्तत्प्रतिक्षेपात्; "पाणावामलकं यथा" इत्यादि च निर्दिश्यते; धर्मोपचयभेदैरनधीतसूक्तकाण्डमन्त्रसाक्षात्कारश्च कीर्त्यते; "दिव्यं ददामि ते चक्षुः" इत्यादि च प्रसिद्धम्; अतो नासिद्धिर्योगिप्रत्यक्षस्य, बाह्येन्द्रियाणां मनसश्च सुकृतविशेषैर्यथार्हं लोकोत्तरातिशयाधानात् । न चातिप्रसङ्गः; यथाश्रुतातिलङ्घने हेत्वभावात्, अनुमानस्य विपक्षे बाधकाभावाच्च । न चानुमानतः श्रुतभङ्गः, तस्यागमेनैव बाधात्; अन्यथातिप्रसङ्गात् । ननु शास्त्रं शक्ये शक्तं विनियुङ्क्ते; स्मृतेस्तु दर्शनसाम्यं न पुरुषतन्त्रम्; न च तदपि तस्याः संभवि; दर्शनत्ववदेवासंभावितं च न विधिराघ्रातुमर्हति; न दृष्टाधिकारो विधिरसंभावितदृष्टफले भवतीत्यत्राह—**भवतीति** । **भावना**; अनुभवजन्यः संस्कारः, चिन्तैव वा । सा

च सादरं निरन्तरं च कर्तुं शक्या। ततः स्मृतिवैशद्यसिद्धिः। 'दर्शनस्य रूपमिव रूपं यस्याः सा' इत्युपमानबहुव्रीहिरत्र ग्राह्यः। भीतकामुकादिप्रतिभाश्चात्र निदर्शयितव्याः। परैरप्युच्यते—"दृष्टं परोक्षमपि ध्यायमानं साक्षाद्भावमापन्नं कामाद्युपप्लवे" इति। "वृक्षे वृक्षे च पश्यामि" इत्यादिषु भ्रान्तिमिश्रत्वं दोषायत्तम्; इह तु यथाश्रुतचिन्तनान्न दोषबाधाविति भावः।

यदि स्याद्भावनाभूम्ना स्मृतेर्दर्शनतुल्यता।
किमत्र कर्मणा मैवं मानसिद्धोभयग्रहात्॥ ३११॥

उक्तस्य न्यायवर्गस्य दाढर्ढ्याय सूत्रे शाब्दमार्थं च सर्वं मुखभेदेन तदभिप्रायविद्भिर्विमृश्य निर्धारितमित्याह—**वाक्यकारेणेति**। **तद्विषये श्रवणात्**; उपासनशब्दस्थाने वेदनशब्दस्यैकत्रान्यत्र च प्रकरणे प्रयोगादित्यर्थः। अत्रोक्तस्य प्रायिकत्वशङ्काव्युदासाय वाक्यं व्याचष्टे—**सर्वास्विति**। "मनो ब्रह्मेत्युपासीत" इति दृष्टिविधावुक्तमपि न्यायसाम्यात्परविद्यास्वपि योज्यम्; किं पुनस्तास्वेवैकत्र दृष्टमिति व्यक्त्यै **मोक्षसाधनतया विहितमित्युक्तम्**। एतेनापातधीश्रवणमनननिर्णयादेर्व्यवच्छेदः। "वेदनमुपासनम्" इत्युक्तस्योत्तरवाक्यासत्त्या मन्दानां पूर्वपक्षत्वशङ्कां स्पष्टोक्त्या निवर्तयितुमाह—**सकृदिति**। विधिर्हि स्वतः प्रवृत्त्युन्मुखं पुरुषं प्रेरयन् स्वसिद्ध्यै प्रयाजादिशास्त्रेष्विवात्रापि सकृत् प्रवर्तयेत्; विशेषवचने सति खल्वावृत्तिभरः सोढव्य इत्यभिप्रायेणोक्तम्—**शब्दार्थस्य कृतत्वादिति**; विधिविषयस्य धात्वर्थस्य तावतैव पूर्णानुष्ठितत्वादित्यर्थः। उत्तरवाक्यस्थेन तुशब्देन सूचितमाह—**पूर्वपक्षं कृत्वेति**। तत्प्रतिक्षेपोक्तिं दर्शयति—**सिद्धमिति**; न्यायत उपासनं सिद्धमित्यर्थः। **सिद्धम्**; सिद्धान्त इति वा। **उपासनशब्दात्**; न हि सकृद्बुद्धावुपासनशब्दस्य प्रख्यातिरिति भावः। एतद्वाक्यं व्याचष्टे—**वेदनमित्यादिना**। उपासनशब्दादित्यनेन "वेदनमुपासनम्" इति वाक्यस्यापि शब्दप्रत्यभिज्ञया सिद्धान्तपरत्वं दर्शितं भवति। ध्यानस्य ध्रुवत्वं सूत्रानुक्तमपि न्यायसाम्यात्सूचितं प्राक् स्वेन विवृतम्। वाक्ये तु ध्यानादभिन्नस्योपासनस्यापि तदुक्तमुपादत्ते—**उपासनमिति**। **दर्शनम्**; स्वारसिकी लोकदृष्टिः। **निर्वचनम्**; निर्णायकतया प्रागुक्तं श्रुतिवाक्यम्। यद्वा **दर्शनम्**; प्रत्यक्षश्रुतिः। **निर्वचनम्**; निष्कृष्य वचनमुपबृंहणम्। **तस्यैव**;

मुक्तिसाधनतया विहितस्यैव, न तु परेष्टस्य मुक्तिसाधनहेतोरित्यर्थः । सकृदावृत्तावुपासेः प्रयोगाभावात् 'उपासनरूपस्यासकृदावृत्तस्य' इति वाक्यस्थोपासनशब्दविवक्षितत्वोक्तिः । ननु 'एतत्सर्वं प्रपञ्चितम्' इति पूर्वोक्तम्; तत्र दर्शनरूपत्वं न दृष्टमित्यत्र तस्यानुक्तस्यापि तदुक्ताभ्यामावृत्तिरूपत्वध्रुवत्वाभ्यां तुल्यन्यायत्वव्यक्त्यर्थमन्यविधानार्थं चानुभाषते—**सेयमिति**; ध्यानत्वोपासनत्वाभ्यामसकृदावृत्ता वाक्यान्तरेणोक्तध्रुवत्वविशिष्टा चेत्यर्थः । **प्रतिपादिता**; दर्शनरूपत्वमपि वाक्यकारेणार्थादुक्तमिति भावः । यद्वा न्यायसाम्यादभिप्रेतमिदमस्माभिः प्रागुक्तमिति । ननु यद्यप्यन्यस्यान्यत्वं न विधातुं शक्यम्; स्मृतिदर्शनयोश्च सामग्रीनियमात् विरुद्धजातीययोरन्यत्रैक्यमसंभवि, तथापि संस्कारमात्रजन्ये स्वप्नज्ञानेऽदृष्टविशेषसहकारात्साक्षात्काररूपत्वमिवात्रापि चक्षुर्जन्यत्वासंभवेऽपि तदविनाभूतप्रत्यक्षत्वेऽपि ध्रुवानुस्मृतेर्धीत्वमात्रसाम्यात् दर्शनशब्दोपचारः कथं न स्यादित्यत्राह—**दर्शनरूपतेति** । **प्रत्यक्षतापत्तिः**; न तु साक्षात्प्रत्यक्षत्वम्, असंभवात् । अयं भावः—स्वप्नधीरपि न तावन्मुख्यदर्शनम्, चक्षुर्व्यापाराभावात्; किंतु तत्र बाह्यकरणवृत्तिनिरोधे सत्यनन्यसंचारिणा मनसा संस्कारपटिम्ना प्रागनुभूतेषु विशदस्मृतिराधीयते, तदतिरिक्तधीकल्पनेऽनन्यथासिद्धहेत्वभावात् । तत्र चक्षुराद्यजन्येऽपि तज्जन्यत्वधीरसंसृष्टधीश्च दोषवशान्मानसभ्रान्तिः । संध्याधिकरणानुरोधे तु संस्कारमात्रजन्यत्वाभावादसंकीर्णं दर्शनत्वम् । अतो न स्वप्ननिदर्शनेन प्रस्तुते प्रत्यक्षत्वक्लृप्तिः शक्या । धीत्वमात्रेण दर्शनसाम्यादुपचारश्च वाच्यासन्नतमस्तुत्यनुगुणविशेषसिद्धौ न युक्त इति ।

## मूलभावप्रकाशिका

**निचाय्येति**; दृष्ट्वेत्यर्थः; "चायृ पूजानिशामनयोः" इति हि धातुः । **अनुविद्य विज्ञायेत्यनूद्येति**; अनुवादार्हत्वात् श्रवणमननात्मकं वाक्यार्थज्ञानं 'विज्ञाय अनुविद्य' इत्यनूद्य विधानार्हं निदिध्यासनमेव "प्रज्ञां कुर्वीत" "विजानाति" इति विधीयते । "श्रुते मते विज्ञाते" "येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम्" इत्यादौ विपूर्वस्य जानातेर्निदिध्यासने प्रसिद्धत्वाच्च 'विजानाति' इति निदिध्यासनमेव विधीयत इति भावः । **श्रवणस्य प्राप्तत्वादिति**; अध्ययनविधेरक्षरग्रहणपर्यन्तत्वेन कर्मविचारे यथा रागत एव प्रवृत्तिः, तथा कर्मणामल्पास्थिरफलत्वप्रतीतौ सत्यामनन्तस्थिर-

फलरागादेव ब्रह्मविचारस्य प्राप्तत्वादित्यर्थः । न च गुरुमुखानधीनविचारव्यावृत्त्यर्थं श्रवणविधिः किं न स्यादिति शङ्क्यम्, "तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्" इति गुरूपसदनविधिनैव गुरुमुखानधीनविचारव्यावृत्तिसिद्धेः । न चैवमुपनयनविधिनैव लिखितपाठादिव्यावृत्तिसिद्धेरध्ययनविधिर्व्यर्थः स्यादिति शङ्क्यम्, अध्ययनविध्यभावे विधीयमानस्योपनयनस्याक्षरावाप्त्यर्थत्वेनाविधानात् गुरुमुखोच्चारणानूच्चारणासिद्धेः । प्रकृते तु "तद्विज्ञानार्थम्" इति विज्ञानार्थत्वश्रवणादेव गुरुमुखाधीनविचारस्य द्वारत्वसिद्धेः भाषाप्रबन्धपुराणादिविचारव्यावृत्तेरपि कर्मकाण्डे कल्पसूत्रादिव्यावृत्तिवत् सिद्धेः श्रवणविधिवैयर्थ्यमिति भावः । **ध्यानमेव विधीयत इति** ; ननु विषयानुकूल्यात् कामिनीध्यानवद्भगवद्ध्यानमपि प्राप्तमेव ; न च ध्यानमात्रस्य प्राप्तत्वेऽपि सत्यकामत्वहिरण्यश्मश्रुत्वादिगुणविशेषविशिष्टस्याप्रयाणमनुवर्तनीयस्य दर्शनाकारस्याप्राप्तत्वाद्ध्यानविधिरुपपद्यत इति वाच्यम्, तथा सति ध्यानानुवादेन तेषां गुणविधित्वप्रसङ्गेन ध्यानस्याविधेयत्वादिति चेत्—न ; कामिनीवदत्यन्तानुकूलविषय एव ध्यानप्राप्तेर्भगवतोऽत्यन्तानुकूलत्वस्य ध्यानानन्तरभावित्वात् । अतो ध्यानं विधेयमिति भावः । ननु "ब्रह्मविदाप्नोति परम्" "ब्रह्म वेद ब्रह्मैव भवति" "तमेव विदित्वातिमृत्युमेति" "तमेवं विद्वानमृत इह भवति" इति वेदनमात्रं श्रूयते ; कथं ध्यानं विधीयत इत्याशङ्क्य छागपशुन्यायेन वेदनं ध्याने विश्रान्तम् ; ध्यानं च ध्रुवस्मृतौ ; सा च दृष्टित्वमभ्येति ; दृष्टिर्भक्तित्वमृच्छतीति प्रतिपादयति—**वक्ष्यति चेत्यादिना** । "आवृत्तिरसकृत्" इति सूत्रार्थमाह—**तदिदमिति** । **उपासनमित्यवगम्यत इति** ; इदमुपलक्षणम्—ध्यानमित्यप्यवगम्यत इत्यपि द्रष्टव्यम्, 'तस्माद्ध्यानमेव विधीयते' इति पूर्वं भाषितत्वात् 'ध्यानं च तैलधारावदविच्छिन्नस्मृतिसंतानरूपम्' इति भाषिष्यमाणत्वात् तन्मध्यपातिनोऽस्य भाष्यस्य ध्यानत्वसमर्थनार्थत्वावश्यंभावात् ; "आवृत्तिरसकृदुपदेशात्" इति सूत्रभाष्ये "निदिध्यासितव्यः" "निष्कलं ध्यायमानः" इत्यादिवाक्योदाहरणपूर्वकं वेदने ध्यानरूपत्वस्यापि समर्थनाच्च । **विद्युपास्योरिति** ; "मनो ब्रह्म" इत्यत्रोपासिनोपक्रम्य विदिनोपसंहारस्य "न स वेद" "यस्तद्वेद" इत्यनयोर्विदिनोपक्रम्योपासिनोपसंहारस्य च दर्शनादित्यर्थः । वितरणविक्रमरूपहेतुभेदात् कीर्तियशसोर्भेदः । **न स वेदेति** ; "योऽत एकैकमुपास्ते न स वेद ; अकृत्स्नो ह्येषोऽत एकैकेन भवत्यात्मेत्येवोपासीत ; अत्र ह्येते

सर्वं एकं भवति" इति बृहदारण्यकश्रुतिः । नामप्रपञ्चविषयत्वात् ब्रह्मण एकैकं विशेषणांशं विशेष्यांशं वा पृथक्सिद्धतया य उपास्ते न स वेद, एकैकोपासनमुपासनमेव न भवति ; कुत इत्यत्राह—**अकृत्स्नो ह्येष इति** ; एष विशिष्टः पदार्थ एकैकेन विशेषणांशेन विशेष्यांशेन वा अकृत्स्नः अपूर्णो भवति ; आत्मेत्येवोपासीत ; अतो नामरूपात्मकप्रपञ्च-शरीरकतयोपासीत ; अत्र ह्येते सर्व एकं भवति ; अत्र हि विशिष्टे पदार्थे सर्वे पदार्था अन्तर्भवन्तीत्यर्थः । **यस्तद्वेदेति** ; "यथा कृतायविजितायाधरेऽयाः संयन्त्येवमेनं सर्वं तदभिसमेति यत्किंच प्रजाः साधु कुर्वन्ति यस्तद्वेद यत्स वेद स मयैतदुक्तः" इति छान्दोग्यश्रुतिः । इदं च "यो नु कथं सयुग्वा रैकः ?" इति हंसेन रैकस्वरूपं पृष्टस्य हंसान्तरस्य प्रतिवचनम् । यथा लोके कृतनामायः द्यूतसमयप्रसिद्धः चतुरङ्कादिः, तत्र विजितं जयो यस्य स कृतायविजितः पुरुषः, अथवा विजितं विजयस्तस्मा इत्यर्थः । तदर्थमितरे त्रिद्व्येकाङ्का अधरे अयाः संयन्ति संगच्छन्ते अन्तर्भवन्ति, चतुरङ्के कृताये एकाङ्क-द्व्यङ्कत्र्यङ्कानां 'शतं सहस्रे संभवति' इति न्यायेन विद्यमानत्वात् ते तत्रान्तर्भवन्ति ; चतुरङ्कविजयिन एकाङ्कादिविजयोऽप्यस्तीति भावः । एवमेव लोके प्रजा यच्छोभनं कर्मानु-तिष्ठन्ति तत्सर्वमेनं कृतायस्थानीयं रैकमभिसमेति संगच्छते ; तत्कर्मणि सकलं शोभनं कर्मान्तर्गतमिति यावत् । यस्तद्वेद यत्स वेद ; स रैको यद्वेद तदेवान्योपि यः कश्चिद्वेद ; तज्ज्ञातमेवान्ये जानन्ति तज्ज्ञाने सर्वज्ञानमन्तर्गतमित्यर्थः । स मयैतदुक्त इति ; तादृशो रैको मया 'सयुग्वानमिव रैकमात्थ' इत्येतेन वाक्येनोक्त इत्यर्थः । वक्ष्यति च भगवान् भाष्यकारोऽपशूद्राधिकरणे—"लोके यत्किंचित् साध्वनुष्ठितं कर्म यच्च सर्वचेतनगतं विज्ञानं तदुभयं यदीयज्ञानकर्मान्तर्गतं स रैक इत्याह" इति । **अनु म इति** ; हे भग-वन् यां देवतामुपास्से तां देवतां मे अनुशाधि उपदिशेत्यर्थः । विच्छिन्नाविच्छिन्नस्मृ-तिसंतानसाधारणस्य ध्यानशब्दस्याविच्छिन्नस्मृतिसंताने पर्यवसानं दर्शयति—**ध्यानं चेति । ध्रुवा स्मृतिरिति** ; "आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिः स्मृतिलम्भे सर्व-ग्रन्थीनां विप्रमोक्षः" इति भूमविद्यावाक्यम् । सात्त्विकाहारेणान्तःकरणशुद्धिर्भवति ; शुद्धे चान्तःकरणेऽविच्छिन्नस्मृतिसंततिर्भवति ; तस्यां च सत्यां ग्रन्थिवद्दुर्मोचानां प्रकृति-संबन्धप्रयुक्तरागद्वेषादीनां नाशो भवति, मुक्तिर्भवतीति श्रुत्यर्थः । **भिद्यत इति** ; हृदयस्य मनसो ग्रन्थयो रागादयः । 'मञ्चाः क्रोशन्ति' इतिवत् हृदयशब्दः तत्स्थजीवपरः,

हृत्स्थानमयतीति व्युत्पत्तेर्वा ; तस्य ग्रन्थिः प्रकृतिसंबन्धः ; हृदयशब्दोपलक्षितं शरीरं ग्रन्थिः; संशयशब्दो विपर्ययस्यापि प्रदर्शनार्थः ; देहात्माभिमानरूपाविद्येत्यर्थः । **कर्माणि** ; पुण्यपापरूपाणि । **परावरे** ; परे ब्रह्मादयः यस्मादवरे अपकृष्टास्तस्मिन्, सर्वोत्कृष्ट इति यावत् ; परावरात्मक इति वार्थः । **दृष्टे** ; दर्शनसमानाकारज्ञानविषयीकृत इत्यर्थः । ननु मुख्यस्यैव दर्शनस्य संभवात् दर्शनसमानाकारत्वं दृशेः कुतः समाश्रीयत इति चेत्, उच्यते—"दृशिर् प्रेक्षणे" इति दृशिधातोर्मुख्यार्थस्य चाक्षुषज्ञानस्य "न चक्षुषा गृह्यते" इति चक्षुरग्राह्यत्वेन श्रुते परमात्मन्यसंभवेन चाक्षुषज्ञानसमानाकारार्थत्वस्यावश्याश्रयणीयत्वात् । ननु "दर्शनरूपता च प्रत्यक्षतापत्तिः" इति दर्शनसमानाकारत्वस्य प्रत्यक्षत्वरूपताया अनुपदमेव भाष्ये वक्ष्यमाणत्वात् प्रत्यक्षत्वस्य च स्मृतावसंभवात् कथं सा स्मृतिर्दर्शनसमानाकारेत्युच्यत इति चेत्—न ; "स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः" "ध्याननिर्मथनाभ्यासात् पाशं दहति पण्डितः" "ध्यात्वा देवं मुच्यते सर्वपाशैः" "यः पुनरेतं त्रिमात्रेणोमित्यनेनैवाक्षरेण परमपुरुषमभिध्यायीत स सामभिरुन्नीयते ब्रह्मलोकम्" इत्यादिना ध्यानस्य मोक्षहेतुत्वप्रतिपादकवाक्यानां भूयस्त्वात् अल्पीयसां दर्शनस्य मोक्षहेतुत्वप्रतिपादकवाक्यानां भावनाप्रकर्षकृतवैशद्यातिशयेन दर्शनसमानाकारस्मृतिपरत्वमेव युक्तम्, भूयोऽनुग्रहन्यायात् । 'प्रत्यक्षतापत्तिः' इति भाष्यस्यापि वैशद्यापत्तिरित्येवार्थः । केचित्तु—"तस्मिन् दृष्टे परावरे" "निचाय्य तं मृत्युमुखात् प्रमुच्यते" निचाय्येमं शान्तिमत्यन्तमेति" इति मोक्षस्य दर्शनहेतुकत्वस्यापि बहुप्रमाणसिद्धत्वात्, "द्रष्टव्यो निदिध्यासितव्यः" "आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते सर्वमिदं विदितं भवति" इति दर्शनस्य श्रवणमननवद् भेदेन प्रतिपादनात्, "ततस्तु तं पश्यते निष्कलं ध्यायमानः" इति ध्यानदर्शनयोः साध्यसाधनभावश्रवणात्, जीवस्वरूपसाक्षात्कारे तद्ध्यानहेतुत्वस्य

"श्रुतिविप्रतिपन्ना ते यदा स्थास्यति निश्चला ।
समाधावचला बुद्धिस्तदा योगमवाप्स्यसि ॥"

इति गीतायां प्रतिपादितत्वात्, "मनसैवानुद्रष्टव्यम्" "दृश्यते त्वग्र्यया बुद्ध्या" "य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते" इति विप्रतिपन्नयोगजब्रह्मसाक्षात्कारस्य दुरपह्नवत्वात्, दर्शनसमानाकारध्यानस्य मोक्षहेतुत्ववादेऽपि दर्शनसमानाकारत्वरहितध्यानस्य विधेयत्वसिद्ध्यर्थं विधिगतध्यानशब्दस्य दर्शनसमानाकारध्यानविश्रान्तत्वस्य

वक्तुमशक्यत्वाच्च दर्शनमेव विधीयते। न च---दर्शनसमानाकारध्यानमेव विधीयते, तद्धेतुभूतं दर्शनाकारं ध्यानं तु रागप्राप्तमिति शक्यं वक्तुम्; अग्निहोत्राद्यङ्गकस्य गुणविशेषविशिष्टविषयकस्याप्राप्तत्वात्। न च दर्शनसमानाकरध्यानमेव मोक्षसाधनं, तत्पूर्वभाव्यतदाकारध्यानं तु "ततस्तु तं पश्यते निष्कलं ध्यायमानः" इति वाक्येन तदुद्देशेन विधीयत इति वाच्यम्; तर्हि तद्वाक्यस्वारस्यानुरोधेन दर्शन एव ध्यानस्य हेतुत्वमस्तु, किं गौणदर्शनाश्रयणेन? न च "स्मृतिलम्भे" इति स्मृतिर्दर्शनव्यवधानं न सहते; तस्माद्ध्यानस्याव्यवहितहेतुत्वं वक्तव्यमिति वाच्यम्, तर्हि अत एव दर्शनशब्दस्यापि तत्रैव विश्रमोऽस्त्विति वाचालवचसोऽप्यवकाशप्रसङ्गात्। ध्यानसाध्यसाक्षात्कारध्यानस्य तु "ततस्तु तं पश्यते निष्कलं ध्यायमानः" इत्यादिप्रमाणानुसारात् तद्द्वारा हेतुत्वम्। अत एव "दर्शनरूपता च प्रत्यक्षतापत्तिः" इति भाष्यमपि स्वरसम्। न च प्रत्यक्षरूपत्वे दर्शनत्वस्यैव संभवात् दर्शनसमानाकारेति भाष्यं कथमुपपद्यतामिति शङ्क्यम्, दर्शनशब्दस्य चाक्षुषज्ञानप्रसिद्धिमभिप्रेत्य तदुक्त्युपपत्तेः। तथापि स्मृतेर्दर्शनसमानाकारत्वप्रतिपादकानेकभाष्यविरोध इति चेत्---न; मृद्द्रव्यस्य पिण्डत्वावस्थाप्रहाणेन घटत्वप्राप्तावपि मृत्पिण्डस्य घटत्वापत्तिरिति व्यवहारवत् स्मृतित्वावस्थाप्रहाणेन ज्ञानद्रव्यस्य दर्शनसमानाकारत्वलक्षणप्रत्यक्षावस्थाप्राप्तावपि स्मृतेः प्रत्यक्षतापत्तिरिति व्यवहारे दोषाभावात्; सिद्धान्ते ज्ञानद्रव्यगतत्वात् स्मृतित्वप्रत्यक्षयोरिति न कस्यापि भाष्यस्य विरोध इति वदन्ति। ननु "द्रष्टव्यो निदिध्यासितव्यः" इति पृथङ् निर्दिष्टयोर्ध्यानदर्शनयोः "न वायुक्रिये पृथगुपदेशात्" इति न्यायेन भेदो वक्तव्य इत्याशङ्क्याह—**एवं च सतीति**। "स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः" इति स्मृतेरपवर्गाव्यवहितोपायत्वप्रदर्शकवाक्यानुसारेण "क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे" इत्यपवर्गाव्यवहितोपायत्वप्रतिपादकवाक्यस्थितस्य 'दृष्टे' इत्यस्य दर्शनसमानाकारार्थत्वनिर्णये सति तेनैव न्यायेन 'द्रष्टव्यः' इत्यस्यापि दर्शनसमानाकारत्वमेवार्थः। पृथगाख्यातयुक्ताभ्याम् "आर्षेयं वृणीते, त्रीन् वृणिते" इत्याभ्यां त्रित्वविशिष्टार्षेयवरणविधानवत् पृथक् तव्यप्रत्यययुक्ताभ्यां "द्रष्टव्यो निदिध्यासितव्यः" इत्याभ्यां दर्शनसमानाकारत्वविशिष्टध्यानविधानानुपपत्त्यभावात्। केषांचित्पक्षे तु ध्यानस्य दर्शनरूपता प्रत्यक्षतेत्यर्थः। 'घटं कुर्यात्' इत्यनेन मृत्पिण्डस्य घटता विधीयत इतिवदयं निर्देशः।

स्मृतेः कथं दर्शनरूपत्वमित्याशङ्क्याह—**भवति चेति**। **दर्शनरूपतेति**; वैशद्यमित्यर्थः। नष्टवनिताध्याने भावनाप्रकर्षात् वैशद्यदर्शनादिति भावः। "वेदनमुपासनं स्यात्तद्विषये श्रवणात्" "सकृत्प्रत्ययं कुर्याच्छब्दार्थस्य कृतत्वात्प्रयाजादिवत्" "सिद्धं तूपासनशब्दात्" "उपासनं स्याद्ध्रुवानुस्मृतिर्दर्शनान्निर्वचनाच्च" इति वाक्यचतुष्टयेन वाक्यकृतायमर्थः समर्थित इत्याह—**वाक्यकारेणेति**। **इत्युक्तमिति**; प्रथमवाक्येन प्रतिज्ञातमित्यर्थः। 'तद्विषये श्रवणात्' इति वाक्यखण्डस्य "मनो ब्रह्मेत्युपासीत" इति श्रुत उपासनाविषये "य एवं वेद" इति विदिधातुश्रवणादित्यर्थः। प्रथमवाक्येन सिद्धान्तः प्रदर्शित इति भावः। प्रयाजादिविधिवत् "ब्रह्मवेद ब्रह्मैव भवति" इति वेदनविधेरपि सकृदनुष्ठानेन चारितार्थ्यात् क्वचिदुपासने विधिशब्दः प्रयुक्त इत्येतावता सर्वत्र विदेरुपासनार्थत्वे प्रमाणाभावात् सकृदेव ब्रह्म ज्ञातव्यमिति द्वितीयवाक्येन पूर्वपक्षं कृत्वा वेदनमात्रस्य मोक्षहेतुत्वे गुरुतरोपासनविधेरननुष्ठानलक्षणाप्रामाण्यप्रसङ्गात् 'वेदनमुपासनं सिद्धम्' इति तृतीयवाक्येन प्रतिपाद्य तच्चोपासनं ध्रुवस्मृतिरूपमेव, लोक उपासनस्य ध्रुवस्मृतित्वदर्शनात् "सत्त्वशुद्धौ ध्रुवा स्मृतिः" इति निर्वचनशब्दितात् श्रुतिवाक्याच्चेति चतुर्थवाक्येनोपासनस्य ध्रुवस्मृतित्वं च वर्णितमित्याह—**सकृत्प्रत्ययमि**त्यादिना **ध्रुवानुस्मृतित्वमुपवर्णित**मित्यन्तेन। ननु वाक्यकारेण ध्रुवानुस्मृतिविश्रान्तिमात्रं प्रदर्शितम्, न तु दर्शनसमानाकारविश्रान्तिरित्याशङ्क्य न्यायसाम्यात्तदपि प्रतिपादितमेवेत्याह—**सेयं स्मृतिरिति**। **प्रतिपादितेति**; अर्थादिति शेषः। **प्रत्यक्षतापत्तिरिति**; प्रत्यक्षसमानाकारतापत्तिरित्यर्थः। केषांचित्पक्षे तु मुख्य एवार्थः।

**श्रीभाष्यम्**

एवं प्रत्यक्षतापन्नामपवर्गसाधनभूतां स्मृतिं विशिनष्टि—

"नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन।
यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्॥"

इति। अनेन केवलश्रवणमनननिदिध्यासनानामात्मप्राप्त्यनुपायत्वमुक्त्वा 'यमेवैष आत्मा वृणुते तेनैव लभ्यः' इत्युक्तम्।

प्रियतम एव हि वरणीयो भवति । यस्यायं निरतिशयप्रियः स एवास्य प्रियतमो भवति । यथायं प्रियतम आत्मानं प्राप्नोति तथा स्वयमेव भगवान् प्रयतत इति भगवतैवोक्तम्—

" तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् ।
ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥ "

इति ; " प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः" इति च । अतः साक्षात्काररूपा स्मृतिः स्मर्यमाणात्यर्थप्रियत्वेन स्वयमप्यत्यर्थप्रिया यस्य, स एव परेणात्मना वरणीयो भवतीति तेनैव लभ्यते पर आत्मेत्युक्तं भवति । एवंरूपा ध्रुवानुस्मृतिरेव भक्तिशब्देनाभिधीयते, उपासनपर्यायत्वाद्भक्तिशब्दस्य । अत एव श्रुतिस्मृतिभिरेवमभिधीयते—" तमेव विदित्वातिमृत्युमेति " " तमेवं विद्वानमृत इह भवति । नान्यः पन्था अयनाय विद्यते "

" नाहं वेदैर्न तपसा न दानेन न चेज्यया ।
शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा ।
भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन ॥
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परंतप । "
" पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया ॥ "

इति । एवंरूपाया ध्रुवानुस्मृतेः साधनानि यज्ञादीनि कर्माणीति " यज्ञादिश्रुतेरश्ववत् " इत्यभिधास्यते । यद्यपि " विविदिषन्ति " इति यज्ञादयो विविदिषोत्पत्तौ विनियुज्यन्ते, तथापि तस्यैव वेदनस्य ध्यानरूपस्याहरहरनुष्ठीयमानस्याभ्यासाधेयातिशयस्याप्रयाणादनुवर्तमा-

नस्य ब्रह्मप्राप्तिसाधनत्वात्तदुत्पत्तये सर्वाण्याश्रमकर्माणि यावज्जीवमनुष्ठेयानि ; वक्ष्यति च "आप्रयाणात्तत्रापि हि दृष्टम्" "अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात्" "सहकारित्वेन च" इत्यादिषु। वाक्यकारश्च ध्रुवानुस्मृतेर्विवेकादिभ्य एव निष्पत्तिमाह—"तल्लब्धिर्विवेकविमोकाभ्यासक्रियाकल्याणानवसादानुद्धर्षेभ्यः संभवान्निर्वचनाच्च" इति। विवेकादीनां स्वरूपं चाह—"जात्याश्रयनिमित्तादुष्टादन्नात्कायशुद्धिर्विवेकः" इति। अत्र निर्वचनम्—"आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिः" इति। "विमोकः कामानभिष्वङ्गः" इति। "शान्त उपासीत" इति निर्वचनम्। [1]"आरम्बणसंशीलनं पुनः पुनरभ्यासः" इति। निर्वचनं च स्मार्तमुदाहृतं भाष्यकारेण[2]—"सदा तद्भावभावितः" इति। "पञ्चमहायज्ञाद्यनुष्ठानं शक्तितः क्रिया" इति। निर्वचनम्—"क्रियावानेष ब्रह्मविदां वरिष्ठः" "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसानाशकेन" इति च। "सत्यार्जवदयादानाहिंसानभिध्याः कल्याणानि" इति। निर्वचनम्—"सत्येन लभ्यः" "तेषामे-

---

१. 'आरम्भण' इति क्वचित्पाठः। 'आरम्बण' इत्येव बहुषु प्राचीनतालपत्रकोशेषु पाठो दृश्यते। "रबिलबि" इति लबिसमानार्थो रबिरपि धातुपाठे पठ्यते। तत एव "आरम्बणमालम्बनम्" इति प्रसिद्धपदेन व्याख्यासु विवरणं क्रियते। आलम्बनपदं च विभावभेदे नायकादौ आलंकारिकसमयप्रसिद्धम्। प्रायिकं रलयोरभेदमाश्रित्य आरम्बणमालम्बनमिति द्विधा प्रयोग उपपद्यते। आरम्भणपदस्यालम्बनपदेन विवरणं तु नातीव चारु।

२. भाष्यकारोऽत्र द्रमिडाचार्य इति व्याख्यातारः। ब्रह्मनन्दिकृतानां छान्दोग्योपनिषद्वाक्यानां भाष्यं द्रमिडाचार्यकृतमिति मीमांसापादुकापरित्राणे श्रीवरदनाथपादाः।

वैष विरजो ब्रह्मलोकः" इत्यादि। "देशकालवैगुण्याच्छोकवस्त्वाद्यनुस्मृतेश्च तज्जं दैन्यमभास्वरत्वं मनसोऽवसादः" इति। तद्विपर्ययोऽनवसादः। निर्वचनम्—"नायमात्मा बलहीनेन लभ्यः" इति। "तद्विपर्ययजा तुष्टिरुद्धर्षः" इति। तद्विपर्ययोऽनुद्धर्षः। अतिसंतोषश्च विरोधीत्यर्थः। निर्वचनमपि "शान्तो दान्तः" इति। एवंनियमयुक्तस्याश्रमविहितकर्मानुष्ठानेनैव विद्यानिष्पत्तिरित्युक्तं भवति। तथा च श्रुत्यन्तरम्—

"विद्यां चाविद्यां च यस्तद्वेदोभयं सह।
अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते॥"

इति। अत्राविद्याशब्दाभिहितं वर्णाश्रमविहितं कर्म। अविद्यया; कर्मणा। मृत्युम्; ज्ञानोत्पत्तिविरोधि प्राचीनं कर्म। तीर्त्वा; अपोह्य। विद्यया; ज्ञानेन। अमृतम्; ब्रह्म। अश्नुते; प्राप्नोतीत्यर्थः। मृत्युतरणोपायतया प्रतीता अविद्या विद्येतरद्विहितं कर्मैव। यथोक्तम्—

"इयाज सोऽपि सुबहून् यज्ञान् ज्ञानव्यपाश्रयः।
ब्रह्मविद्यामधिष्ठाय तर्तुं मृत्युमविद्यया॥"

इति। ज्ञानविरोधि च कर्म पुण्यपापरूपम्। ब्रह्मज्ञानोत्पत्तिनिरोधित्वेनानिष्टफलतयोभयोरपि पापशब्दाभिधेयत्वम्। अस्य च ज्ञानविरोधित्वं ज्ञानोत्पत्तिहेतुभूतशुद्धसत्त्वविरोधिरजस्तमोविवृद्धिद्वारेण। पापस्य च ज्ञानोदयविरोधित्वम्—"एष एवासाधु कर्म कारयति तं यमधो निनीषति" इति श्रुत्यावगम्यते। रजस्तमसो-

र्यथार्थज्ञानावरणत्वं सत्त्वस्य च यथार्थज्ञानहेतुत्वं भगवतैव प्रतिपादितम्—"सत्त्वात्संजायते ज्ञानम्" इत्यादिना। अतश्च ज्ञानोत्पत्तये पापं कर्म निरसनीयम्। तन्निरसनं चानभिसंहितफलेनानुष्ठितेन धर्मेण। तथा च श्रुतिः—"धर्मेण पापमपनुदति" इति। तदेवं ब्रह्मप्राप्तिसाधनं ज्ञानं सर्वाश्रमकर्मापेक्षम्। अतोऽपेक्षितकर्मस्वरूपज्ञानं केवलकर्मणामल्पास्थिरफलत्वज्ञानं च कर्ममीमांसावसेयमिति सैवापेक्षिता ब्रह्मजिज्ञासायाः पूर्ववृत्ता वक्तव्या।

### श्रुतप्रकाशिका

सूत्रकारवाक्यकारयोः कतिपयविशेषं वदतोः सति विशेषान्तरोपस्थापके तत्पर्यवसायित्वस्याभिप्रेतत्वात् श्रुत्यन्तरसिद्धं विशेषान्तरमस्तीत्याह—**एवमिति**। अनेन श्रवणादीनां मुक्त्युपायत्वनिषेधान्नोपासनस्य मोक्षोपायत्वमिति शङ्काव्युदासश्च भवति। **एवम्**; उक्तेन प्रकारेण; सामान्यविशेषन्यायेन प्रत्यक्षतापन्नामित्यर्थः। **अपवर्गसाधनभूतामिति** प्रतीकोपासनव्यवच्छेदः। **नायमात्मेति**; प्रवचनशब्देन मननं लक्षयति, मननफलत्वात् प्रवचनस्य, मननस्याचार्यप्रवचनफलत्वाद्वा; प्रोच्यतेऽनेनेति करणव्युत्पत्त्या वा प्रवचनं मननम्। मेधा निदिध्यासनम्; परिशेषात्। अस्मिन् वाक्ये श्रवणादीनामनुपायत्वं प्रतीतम्; ध्रुवानुस्मृतिविशेषणत्वेन न किंचित्प्रतिपन्नम्; अतस्तद्व्याचष्टे—**अनेनेति**। **केवलश्रवणमनननिदिध्यासनानाम्**; वक्ष्यमाणविशेषरहितानामित्यर्थः। यथा "न पृथिव्यामग्निश्चेतव्यः" इत्यत्र हिरण्योपधानरहितपृथिव्यां चयनं निषिध्यते न तु पृथिवीमात्रे, तद्वदिति भावः। विवक्षितं विशेषं वाक्यतात्पर्यनिरूपणेन दर्शयिष्यन् वाक्यस्यार्थान्वयं दर्शयति—**यमेवैष आत्मा वृणुते तेनैव लभ्य इत्युक्तमिति**। वरणीयेन लभ्योऽस्तु; ततः कथं ध्रुवानुस्मृतेर्विशेषितत्वमिति शङ्कायां तद्दर्शयितुं लोकसिद्धप्रतीतिमाह—**प्रियतम एव हीति**। प्रीतिविषयमात्रस्य न वरणीयत्वम्, किंतु स्वयमुपस्थितस्य स्वीकार एव; अतस्तद्व्यावृत्त्यर्थं प्रियतम इत्युक्तम्। ततः किमित्यत्राह—**यस्येति**; यस्योपासकस्यायं परमात्मा निरतिशयप्रीतिविषयः, स एवास्य परमात्मनो निरतिशयप्रीतिविषयो भवति। चेतनत्वे सति भगवता वरणीयत्वं भगवति निर-

तिशयप्रीतिमत एव भवति। यद्वा स्वतः प्रियत्वं वरणीयत्वं च स्वस्मिन् प्रीतिमत एव। पुण्यक्षेत्रादिषु भगवतः प्रीतिः स्वस्मिन् प्रीतिमत्पुरुषवरणार्था; पत्रपुष्पफलादिषु तत्संबन्धनिबन्धना। **स एवेति**; एवकारेण केवलश्रवणादिमद्व्यावृत्तिः। भगवति प्रीतिमत एव भगवत्प्रीतिविषयत्वमिति कथमिदमवगम्यत इत्यपेक्षायामत्र प्रमाणतया स्मृतिवचनमर्थोपन्यासपूर्वकं दर्शयन् वरणप्रकारमपि विवृणोति—**यथेति**। **अयम्**; भगवति निरतिशयप्रीतिमान्। **प्रियतमः**; निरतिशयभगवत्प्रीतिविषयो भवन्नित्यर्थः। "ददामि बुद्धियोगं तम्" इत्यस्यार्थविवक्षया **स्वयमेव भगवान् प्रयतते** इत्युक्तम्। अनेन वरणप्रकारो दर्शितः। **भगवतैवोक्तमिति**; एवकारेण भगवदाप्त्यतिशयः सूचितः। **सततयुक्तानाम्**; सततयोगं काङ्क्षमाणानाम्; "आशंसायां भूतवच्च" इति कर्तरि क्तः। **प्रीतिपूर्वकं ददामीत्यन्वयः**[1]; अनेन परस्परविषयप्रीतिरुपास्योपासकयोर्दर्शिता। सततयुक्तशब्दार्थस्फुटीकरणायाह—**प्रियो हीति**। **अत्यर्थम्**; अतिक्रान्ताभिधेयम्; प्रियत्वं वाचामगोचरमित्यर्थः। 'ध्रुवानुस्मृतिं विशिनष्टि' इति हि पूर्वमुक्तम्; अत्र यो भगवति प्रीतिमान् भवति, तस्मिन्नुपासके भगवतः प्रीतिमत्त्वमुक्तम्; तत्कथं ध्रुवानुस्मृतेर्विशेषितत्वमित्यत आह—**अत इति**। **अतः**; उक्तार्थस्य लोकस्मृतिभ्यां सिद्धत्वादित्यर्थः। यद्वा ध्रुवानुस्मृतिवचनात् वरणीयत्ववचनात् वरणीयस्य च भगवति निरतिशयप्रीतिमत्त्ववचनाच्चेत्यर्थः। **साक्षात्काररूपा स्मृतिरिति**; अनेन पूर्वोक्ताकारविशिष्टाया एव विशेषान्तरमिति दर्शितम्। **स्मर्यमाणात्यर्थप्रियत्वेन स्वयमप्यत्यर्थप्रियेति**; "[2]अर्थेनैव विशेषो हि निराकारतया धियाम्" इति भावः। **स्वयमप्यत्यर्थप्रिया**;

---

१. सततयुक्तानामिति सततयोगाशंसयैव भजने प्रीतिरूपत्वस्य फलितत्वात् प्रीतिपूर्वकमित्यस्य भजतामित्यनेनान्वये कृतकरत्वं मा प्रसाङ्क्षीदिति ददामीत्यनेनान्वयो वर्णितः। अनेन भजनावान्तरव्यापारकथनं परमोदारत्वादिभगवद्गुणप्रकाशनं च महत् प्रयोजनं सिध्यति।

२. अत्रेदमवधेयम्—भगवद्विषयकस्मृतिसंततावाकारद्वयमस्ति; शेषित्वस्वामित्वादिनात्यर्थप्रियभगवद्विषयस्मरणरूपत्वं स्वाश्रयायात्यन्तानुकूलत्वलक्षणमानन्दत्वं चेति। तत्र स्वानुभवादिपराणामानन्दत्वेन रूपेणैव भगवच्चिन्तनमत्यर्थप्रियं भवति—यथा सुषुप्तेर्ब्रह्मसंपत्तिरूपत्वेऽप्यात्मानुकूलत्वरूपेणैव प्रियत्वम्। ज्ञानिनां तु भगवदत्यर्थप्रियभगवत्स्वरूपविषयत्वेनैव प्रियं भवति। स्वानुकूल्यलक्षणमानन्दत्वं तु आनुषङ्गिकमेव। तथा च स्मर्यमाणात्यर्थप्रियत्वेनेति भाष्ये अभेदे प्रयोज्यप्रयोजकभावे वा तृतीया। तत्र भगवतः प्रियत्वं स्रक्चन्दनादीनामिव

'अनुभूयमानोऽनुभवः' इतिवदयं निर्देश औपचारिकः ; अत्यर्थप्रीतिरूपेत्यर्थः । यद्वा **अत्यर्थप्रिया** ; अत्यर्थानुकूलस्वरूपा ; स्मर्यमाणस्य भगवद्विषयस्य निरुपाधिकनिरवधिकानुकूलत्वेन तद्विषयत्वात् स्मृतिरपि हि निरतिशयानुकूला भवति । यद्वा ध्रुवानुस्मृतिः स्वयमत्यन्तानुकूलत्वादयुक्तावस्थायामपि प्रीतिरूपज्ञानेन प्रतिसंधीयत इति प्रिया । अत एव हि "या प्रीतिरविवेकानाम्" इत्यादिना सा प्रार्थ्यते । प्रीतिरूपध्रुवानुस्मृतेरपवर्गोपायत्वमुक्तम् ; अन्यत्र भक्तेरुपायत्वं दृश्यते ; कथमनयोरैकार्थ्यम् ? इत्यत्राह—**एवंरूपेति** । यद्वा 'शेमुषी भक्तिरूपा' इति भक्तिरूपज्ञानस्योपायत्वं प्रागुक्तम् ; कथमिदानीं प्रीतिरूपध्रुवानुस्मृतेरुपायत्वं प्रतिपाद्यते ? इत्यत्राह—**एवंरूपेति** । **एवंरूपा ;**

---

प्रीतिरूपज्ञानविषयत्वम् । स्मृतेः प्रियत्वं नाम प्रीतिरूपत्वं प्रियविषयकत्वं प्रीतिरूपज्ञानान्तरविषयत्वं वा । तत्र विषय आनन्दः प्रीतिश्चेति त्रयमप्यनुकूलमेव ; तत्र विषयः स्रक्चन्दनादिः । आनन्दः स्रक्चन्दनादिस्तदनुभवश्च "तस्येयं पृथिवी सर्वा वित्तस्य पूर्णा स्यात् ; स एको मानुष आनन्दः" इति भोगोपकरणानामप्यानन्दत्वश्रुतेः । प्रीतिः सुखरूपं ज्ञानम् । अत्र विषयत्वलक्षणमनुकूलत्वमानन्दत्वलक्षणमनुकूलत्वं च स्मर्यमाणपरमात्मतत्स्मृत्युभयसाधारणे । प्रीतित्वलक्षणमनुकूलत्वं तु स्मरणमात्रासाधारणम् । तत्र प्रीतिसामान्यस्य प्रियवस्तुविषयकत्वं प्रीतित्वस्य विषयगतप्रियत्वप्रयोज्यत्वं च सर्वलोकप्रसिद्धमेवेति नात्र तद्वचने किंचित्प्रयोजनमस्ति । अतोऽब्भक्षादिवत् स्मर्यमाणात्यर्थप्रियत्वेनैव स्वयमप्यत्यर्थप्रियेत्यवधारणं विवक्षितम् । एतेन स्वात्मसंतोषकारिणां स्वार्थानुभवादिपराणां भावनात्रयान्वितानां स्मृतिसंततिर्न वरणीयताप्रयोजिकेति न तेषां परमात्मलाभ इति सिद्धम् । एतत्सर्वमभिप्रेत्य प्रकृतभाष्यं चतुर्धा योजितं श्रुतप्रकाशिकायाम्—अर्थेनैवेत्यादिना । **इति भाव इति** ; स्मर्यमाणात्यर्थप्रियत्वेनेत्यभेदे तृतीयां प्रयुञ्जानस्य भाष्यकृतो भाव इत्यर्थः । 'घट इत्याकारकं ज्ञानम्' इत्यादिज्ञानाकाराभिलापदर्शनेन विषयाकार एव ज्ञानस्याप्याकार इति स्मर्यमाणभगवत्स्वरूपरूपगुणविभूतिगतमत्यर्थप्रियत्वमेव स्मृतिसंतानस्याप्याकार इति स्वयमप्यत्यर्थप्रियेति निर्दिश्यत इति भावः ।

अथ स्मृतिसंतानस्यात्यर्थप्रियत्वं नात्मात्मीयविषयकत्वप्रयोज्यं, किंतु भगवत्स्वरूपरूपगुणविभूतिविषयकत्वप्रयोज्यमिति दर्शयितुं द्वितीययोजनामाह—अनुभूयमानोऽनुभव इतिवदिति । पूर्वयोजनायां विषयगताकारस्य विषयिणि ज्ञाने स्वाश्रयघटितपरंपरासंसर्गेण निर्वाहः कृतः । अत्र तु परंपरासंसर्गं परित्यज्य निरुह्यते । यथा सिद्धान्ते स्वयंप्रकाशस्यानुभवस्यानुभवान्तरविषयत्वतात्पर्यमन्तरेणैव स्वात्मसाक्षिकत्वद्योतनार्थं स्वतोग्राह्यत्वतात्पर्येणोपचारादनुभूयमानत्वं व्यपदिश्यते, तथैव प्रियशब्दस्य प्रीतिविषयेष्वर्थेष्वेव मुख्यत्वेऽपि प्रीतेः स्वात्मसाक्षिकत्वज्ञापनार्थं स्वतोग्राह्यत्वतात्पर्येण प्रीतावेवोपचारात् प्रियत्वनिर्देश इति भावः ।

साक्षात्कारप्रीतिरूपत्वपर्यन्ता ध्रुवानुस्मृतिरेव भक्तिशब्दवाच्येत्यर्थः । कुत इत्यत्राह— **उपासनपर्यायत्वादिति** ; उपासनादिशब्दस्य चैकार्थवृत्तित्वं विवक्षितम् , न तु घटकुम्भ-शब्दयोरिव पर्यायत्वम् । एकार्थवृत्तित्वं च "सेवा भक्तिरुपास्तिः" इति नैघण्टुकोक्तेरवगम्यते ।

"स्नेहपूर्वमनुध्यानं भक्तिरित्यभिधीयते ।
भज इत्येष धातुर्वै सेवायां परिकीर्तितः ॥
तस्मात्सेवा बुधैः प्रोक्ता भक्तिशब्देन भूयसी ।"

इत्यादि चानुसंधेयम् । यद्यपि साक्षात्काररूपत्वभक्तिरूपत्वादिपराणां वाक्यानां विद्या-विशेषविषयप्रकरणप्रगृहीतत्वेऽपि सर्वोपासनसाधारणत्वं लघुगुरुयत्नविकल्पानुपपत्तेः प्राप्तं, तथापि प्रपदने तु लघुगुरुयत्नविकल्पानुपपत्तिरूपन्यायो वचनबलप्रतिक्षिप्तः; न हि वचन-विरोधे न्यायः प्रभवति ; वचनविरोधाभावादुपासनेषु तस्य प्रवृत्तिः । वेदान्तेषूपासन-पराणां वाक्यानामैकार्थ्यसिद्ध्यर्थं भक्तिदशापन्नोपासनस्यैवापवर्गोपायवेदनत्वमुक्तम् ; स्मृति-वचनप्रदर्शनं च श्रुत्यर्थवैशद्याय कृतम् ; इदानीं तु श्रुतिस्मृत्योरैकार्थ्येन मुक्त्युपायवेदनस्य भक्तिरूपोपासनत्वमुपपाद्यते—**अत एवेति** । **अत एव** ; अपवर्गोपायवेदनस्य भक्ति-रूपोपासनत्वादेवेत्यर्थः । "तमेव विदित्वा" इति वाक्यं श्वेताश्वतरोपनिषदि श्रूयते ;

---

एवं भाष्यगतात्यर्थप्रियेतिपदद्वयस्यापि स्मर्यमाणविषयगतात्यर्थप्रियत्वपरतयैव प्रथमयोजना । द्वितीयात्यर्थप्रियशब्दस्यौपचारिकार्थान्तरपरतया द्वितीययोजना कृता । अथोभयोः पदयोरेकयैव मुख्यवृत्त्या तृतीययोजनामाह—यद्वा अत्यर्थप्रिया अत्यर्थनुकूलेति । अयं भावः— "प्रियो हृद्येऽन्यवत्पुंसि वृद्धिनामौषधे धवे" इति कोशबलात् प्रियशब्दस्यानुकूलत्वं प्रवृत्तिनिमित्त-मादाय हृद्यसामान्ये रूढिरिति ।

अथानुकूलत्वशक्तेः प्रीत्येकनिरूपणीयत्वात् यया प्रीत्या शक्तिर्निरूप्यते तादृशप्रीतिविषयक-त्वस्यैव निमित्तत्वे शीघ्रोपस्थितिः स्यादिति तुरीयां योजनामाह—यद्वा ध्रुवानुस्मृतिरित्यादि । अस्यां योजनायां प्रियशब्दः प्रीतिविषय एव वर्तते । न च प्रीतिरूपायाः स्मृतेः प्रीतिविषयत्वा-नुपपत्तिः, तस्याः प्रीतिरूपस्मृतेर्वर्तमानदशायां स्वतो भासमानत्वेऽपि अतीतानागतदशयोर्ज्ञाना-न्तरग्राह्यत्वसंभवात् । ग्राहकज्ञानान्तरस्यापि ग्राह्यगतानुकूलत्वशक्त्या प्रीतिरूपत्वापत्तिसंभ-वात् ध्रुवानुस्मृतेरत्यर्थप्रियाया अत्यर्थप्रीतिरूपज्ञानान्तरग्राह्यत्वलक्षणमत्यर्थप्रियत्वं नानुपपन्नमिति भावः ।

तत्र "तस्मात्सर्वगतः शिवः" इति शिवशब्दग्रहणात् शिवस्य परमात्मविषयत्वभ्रमः कस्यचिन्मन्दधियः स्यादिति तन्निवृत्त्यर्थं "वेदाहमेतं पुरुषं महान्तम्" "महान् प्रभुर्वै पुरुषः सत्त्वस्यैष प्रवर्तकः" इत्युपक्रमोपसंहारयोरवगतपरमपुरुषपरैव सोपनिषदिति पुरुष-सूक्तैकार्थ्यं दर्शयितुं **तमेवं विद्वानिति** वाक्यमुपात्तम्। "तमेवं विद्वान्" इति वाक्येन "नान्यः पन्थाः" इति परमपुरुषवेदनव्यतिरिक्तोपायनिषेधः कृतः; "नाहं वेदैः" इत्यादिना तद्भक्तिव्यतिरिक्तोपायनिषेध उक्तः। उभयोरप्युपबृंहणोपबृंहणीयवच-नयोः प्रमाणतमत्वेन सर्वाविगीतयोरैकार्थ्यं वेदनादिशब्दानां भक्तिपर्यन्तत्वे सिध्यतीति भावः। उपायान्तरनिषेधकण्ठोक्त्या भक्तेरेव ज्ञानदर्शनप्राप्तिसाधनत्वकण्ठोक्त्या च "नाहं वेदैः" इति वचनमुपात्तम्। ननु "भक्त्या मामभिजानाति" "ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्" इति भक्तिजन्यज्ञानस्यैवाव्यवहितोपायत्वमवगम्यते, न तु भक्तेरिति शङ्का च "नाहं वेदैः" इत्यनेन परिहृता भवति; अत्र ज्ञानदर्शनयो-रिव प्राप्तेरपि भक्तिसाध्यत्वावगमात्; 'भक्त्या प्रवेष्टुं च शक्यः' इति ह्यन्वयः। "भक्त्या माम्" इति वचनेऽपि "ततो मां विशते" इति तच्छब्दपरामृष्टाया भक्ते-रेव प्राप्त्युपायत्वमवगम्यते; "ततः" इति भक्तिपरामर्शाभावे "तदनन्तरम्" इत्यनेन पौनरुक्त्यप्रसङ्गात्। ततश्च भक्तिरेवाव्यवहितोपायः। "पुरुषः स परः पार्थ" इत्यत्र च "भक्त्या लभ्यः" इति भक्तेः प्राप्तिसाधनत्वं स्वरसतोऽवगम्यते। अनेन पुरुषशब्दप्रत्यभिज्ञापितपुरुषसूक्तप्रतिपाद्यवस्त्वैक्यवत् तत्प्रतिपाद्योपायैक्यं न्याय्यमिति सूचितम्। अस्त्वेवं वेदनस्य भक्तिरूपोपासनत्वसिद्धिः; ततः प्रकृतस्य कर्मापेक्षित-त्वस्य किमायातमित्यत्राह—**एवमिति**। **एवंरूपायाः**; आपरोक्ष्यप्रीतिरूपत्वविशेषण-विशिष्टायाः; वाक्यकारसूत्रकाराभ्यामभिप्रेताः कण्ठोक्ताश्च मोक्षोपायज्ञानावस्थाविशेषाः कर्मसाध्या इति भावः। **ध्रुवानुस्मृतेः साधनानीति**; यथा "आसिना जिघांसति" इत्यत्रासेर्हननसाधनत्वं न त्विच्छासाधनत्वं, तथा "यज्ञेन विविदिषन्ति" इत्यत्रापि विद्यासाधनत्वमेवोक्तं न तु तदिच्छासाधनत्वम्, यज्ञादेर्वेदनेच्छासाधनत्वेन विनियोगा-योगादिति भावः। तथाहि—सर्वेषां पुरुषाणामवान्तरसाध्योपाये प्रवृत्तिः परमसाध्येच्छया विना नोपपद्यते; यथा यागाद्युपायभूतद्रव्यार्जनादौ प्रवृत्तिर्यागादिसाध्यापूर्वादिविषयेच्छया विना नोपपद्यते, तथेच्छासिद्ध्यर्थमनुष्ठानमिच्छासंपाद्यवेदनेच्छया विना नोपपद्यते। अतो

वेदनेच्छायां जातायां वेदनोपायभूतेच्छासिद्ध्यर्थानुष्ठानम् ; तस्यां जातायां च तदर्थमनुष्ठानमनपेक्षितमिति तदनुष्ठानविधिवैयर्थ्यं स्यात्। किंच स्वसिद्ध्यपेक्षा स्वसिद्धिरित्यात्माश्रयः ; वेदनेच्छया इच्छासिद्ध्यर्थकर्मनुष्ठानम् , इच्छासिद्ध्यर्थकर्मानुष्ठानाद्वेदनेच्छासिद्धिरित्यन्योन्याश्रयणं वा। अतो विविदिषासाधनत्वं कर्मणां न युक्तम् । ननु—इच्छासिद्ध्यर्थकर्मानुष्ठानस्यात्माश्रयादिग्रस्तत्वे क्वचिदपीच्छा न संभवेत्, इच्छाहेतुभूतकर्मानुष्ठानायोगात् ; न चेच्छाया विषयवैलक्षण्यज्ञानमात्राधीनत्वम् , विषयवैलक्षण्ये ज्ञातेऽपि कस्यचिदिच्छानुत्पत्तिदर्शनात् ; अतः कस्यचिदिच्छोत्पत्तेः कर्महेतुकत्वमाश्रयणीयम् ; तच्च तवानुपपन्नम्—नैवम् ; भोगादृष्टोद्बोधितपूर्ववासनासचिवाद्विषयवैलक्षण्यज्ञानादिच्छोत्पत्त्युपपत्तेः। न चाज्ञातसुकृतवशाद्धर्मरुचिवद्यज्ञादिना वेदनेच्छासिद्धिरिति वाच्यम् , बह्वर्थव्ययायाससाध्यानां यज्ञादीनामज्ञातसुकृतरूपत्वासंभवात् , “ यज्ञेन विविदिषन्ति ” इति वाक्यस्य ह्यर्थश्चिन्त्यते। अतो बुद्धिपूर्वकमेव यज्ञाद्यनुष्ठानम् । तत्र मोक्षोपायवेदनेच्छाया अभावे बह्वर्थयत्नसाध्यकर्मणां फलान्तराभिसंधिपूर्वकत्वनियमान्न विविदिषां साधयति । फलान्तराभिसंधिविधुरं तु यज्ञादिकं वेदनेच्छया विना नोपपद्यते, प्रयोजनानुद्देशेन प्रेक्षावतः प्रवृत्त्ययोगात् ; प्रकृष्टप्रयोजनतदुपायेच्छाविरहे क्षुद्रप्रयोजनपरित्यागायोगाच्च । अतोऽवान्तरसाध्येच्छासिद्ध्यर्थमनुष्ठानं परमसाध्यवेदनेच्छया विना नोपपद्यत इति स्वसिद्ध्यर्थधर्मानुष्ठानस्य स्वसिद्धिसापेक्षत्वादात्माश्रयादिदोषः स्यादेव । **अभिधास्यत इति** ; तत्रोपपादयिष्याम इत्यर्थः । विविदिषासाधनत्वे यज्ञादेरात्माश्रयादिदोषाभावमभ्युपगम्याह—**यद्यपीति** । **तस्यैव** ; इच्छाविषयभूतस्यैव । **ध्यानरूपस्येति** वाक्यार्थज्ञानव्युदासः । ध्यानस्याप्येकदिनानुष्ठेयत्वव्युदासार्थमाह—**अहरहरिति** । अहरहरनुष्ठानफलमाह—**अभ्यासेति** । अहरहरनुष्ठानेऽपि मासर्त्वयनवत्सराद्यवधित्वव्यावृत्त्यर्थमाह—**आ प्रयाणादिति** । आ प्रयाणादनुवर्तमानत्वेऽपि द्वित्रदिनान्तरव्यावृत्त्यर्थमहरहरनुष्ठीयमानस्येत्युक्तम् । तत्रापि स्मृतिविच्छेदव्युदासार्थं ध्यानरूपस्येत्युक्तम् । **तदुत्पत्तये** ; विविदिषोत्पत्तये । वेदनस्याव्यवहितप्रकृतत्वेऽप्यर्थवशात्तच्छब्दो विविदिषापरः; विविदिषासाधनत्वं ह्यभ्युपगम्योच्यते । आ प्रयाणादहरहरुपासनानुवृत्तौ यावज्जीवं कर्मणोऽपेक्षितत्वे च किं प्रमाणमित्यत्राह—**वक्ष्यति चेति** । **चः** शङ्कानिवृत्तौ । सूत्रसंदर्शनेन तद्विषयभूतश्रुतिवाक्यमपि दर्शितं भवतीत्यभिप्रायेणोपासनानुवृत्तिपरं सूत्रं दर्शितम्—**आ प्रयाणादिति** ।

" स खल्वेवं वर्तयन् यावदायुषम् " इति श्रुतिः । यावच्छब्दस्य साकल्यार्थत्वादहरहरनुष्ठानसिद्धिः । तावत्कर्मापेक्षामाह—**अग्निहोत्रेति** । आश्रमधर्माणामाश्रमशेषत्वेऽपि विद्याङ्गत्वमप्यस्तीत्याह—**सहकारित्वेन चेति** । इत्यादिषु सूत्रेष्विममर्थं वक्ष्यतीत्यर्थः । उक्तं कर्मणो विद्याङ्गत्वमुपासनस्य शमाद्यङ्गकत्वविरोधान्नोपपद्यत इत्याशङ्क्य विरोधं परिजिहीर्षुस्तद्विषयश्रुतिवाक्यप्रदर्शनेनाप्रमाणतां च निराचिकीर्षुराह—**वाक्येति**; सूत्रकाराभिप्रायज्ञैरप्येवमुक्तमिति भावः । **ध्रुवानुस्मृति**शब्देन " तल्लब्धिः " इत्यत्र तच्छब्दो व्याख्यातः । **विवेकादिभ्य एव** ; न तु केवलकर्मणा केवलशमादिना वेत्यर्थः । वाक्यकारग्रन्थ उपादीयते—**तल्लब्धिरिति** । " उपासनं स्याद् ध्रुवानुस्मृतिः " इति हि प्रकृतम् ; अतो ध्रुवानुस्मृतिलब्धिरित्यर्थः । **विवेकविमोकाभ्यासक्रियाकल्याणानवसादानुद्धर्षेभ्य** इति द्वन्द्वसमासः ; स चेतरेतरयोगार्थे ; एष्वन्यतमेन तल्लब्धेर्दुष्करत्वात्; समुच्चये संभवति पाक्षिकबाधगर्भविकल्पो ह्ययुक्तः; तस्याष्टदोषदुष्टत्वात्; समुच्चयस्य चात्र संभवात् । एवं विवेकादिविधायिनां वाक्यानां समुच्चये तात्पर्यमिति दर्शयितुमितरेतरयोगद्वन्द्वेन वाक्यकारनिर्देशः । ननु—समुच्चयादर्थान्तरमितरेतरयोगः ; तत्कथमितरेतरयोगद्वन्द्वेन समुच्चयलाभः ? उच्यते—अन्वाचयसहपठितात् समुच्चयात् विकल्पप्रतिसंबन्धी समुच्चयोऽर्थान्तरम् । एकस्मिन्नेव कार्ये मिथो निरपेक्षसाधकानामन्वयोऽन्वाचयसहपठितः । विकल्पसमभिव्याहृतसमुच्चयस्तु एकस्मिन् कार्ये मिथः सापेक्षाणामन्वयः ; स एव चेतरेतरयोग इत्यविरोध इति । निवृत्तिरूपशमादेः प्रवृत्तिरूपयज्ञादेश्च विरोधान्न समुच्चय इति चेत्—न, भिन्नविषयत्वेन विरोधाभावात् ; अविहिताप्रतिषिद्धनिषिद्धकाम्यविषया हि शमादयः । **संभवात्** ; उपपन्नत्वात् । **निर्वचनाच्च** ; श्रुतिवचनाच्च ; प्रमाणोपपत्तिभ्यामित्यर्थः । विवेकादयः किंरूपाः ? कथं वा शमादेः कर्मणश्चाविरोधः ? इत्यत्राह—**विवेकादीनां स्वरूपं चाहेति** । न केवलं परिगणनमात्रम् , तत्स्वरूपं च वाक्यकार एवाहेत्यर्थः । प्रथमं विवेकस्वरूपविषयवाक्यमुदाहरति—**जात्याश्रयेति** । आहारविषयविवेचनं विवेकशब्देन विवक्षितं भवति । दुष्टाहारात् सात्त्विकाहाराणां विवेचनं विवेकः । जातिदुष्टाः कलञ्जगृञ्जनादयः । आश्रयो द्रव्यस्वामी पुरुषः ; अभिशस्तपतितचण्डालादिद्रव्यमाश्रयदुष्टम् । उच्छिष्टकेशाद्युपहतं निमित्तदुष्टम् । एत-

त्रिविधदोषरहिताहारविवेचनफलभूतकायशुद्धौ विवेकशब्द उपचरितः। यद्वा विविक्ताहारसेवया राजसतामसाहाराप्यायितदेहात् स्वदेहस्य विवेचनं विवेकः; अशुद्धेभ्यो विवेचनं हि शुद्धिः। इतिशब्दो भाष्यकारीयः। **अत्र निर्वचनमिति** च भाष्यग्रन्थः। निर्वचनं निष्कृष्टं वचनम्; अप्रमाणेभ्यो निष्कृष्टं प्रमाणभूतं वचनमित्यर्थः। "आहारशुद्धौ" इत्यादि निर्वचनम्। **कामानभिष्वङ्गः**; विषयमभुक्त्वा स्थातुं न शक्नोति येन, स विकारोऽभिष्वङ्गः। "कामात्क्रोधोऽभिजायते" इत्यादिवचनात् क्रोधाद्यभावश्चात्र फलितः। **शान्त उपासीतेति** निर्वचने शान्तशब्देन रागद्वेषाद्यभावो विवक्षितः। **आरम्बणम्**; आलम्बनम्, शुभाश्रयः; तस्य संशीलनम्। कथमेतत् साधनम्? साध्यं हीदम्। न; "शुचौ देशे प्रतिष्ठाप्य" इत्याद्युक्तदेशकालविशेषाभ्यसनीययोगशब्दवाच्या ध्रुवानुस्मृतिर्हि साध्या; इदं तु योगकालकर्तव्यध्यानानुग्राहकं सदा संशीलनम्; "सदा तद्भावभावितः" इति हि वक्ष्यति। सदा भगवत्संशीलनाभावे योगकालेषु कालान्तरसंशीलितं विषयान्तरं बुद्धिस्थं स्यात्। अतो न साध्याविशिष्टत्वमारम्बणसंशीलनस्य। **निर्वचनं च स्मार्तमुदाहृतं भाष्यकारेणे**त्यनेन पूर्वोपात्तान्यपि निर्वचनानि द्रमिडभाष्योक्तानीति ज्ञायते। "अथ मुनिः" इति श्रौतनिर्वचनम्। तस्य न्यायोपन्याससापेक्षत्वेन "सहकार्यन्तरविधिः" इत्यधिकरणे व्याख्येयत्वात् स्मार्तनिर्वचनस्य स्पष्टार्थत्वाच्च स्मार्तनिर्वचनमुदाहृतम्। "तस्मात्सर्वेषु कालेषु मामनुस्मर" इत्येवमन्तं वचनजातमिहाभिप्रेतम्। **पञ्चमहायज्ञेति**। **शक्तितः**; न हि शास्त्रमशक्यं विदधाति। **क्रियावानेष इति** सन्निहितवचनम्। **ब्रह्मविदां वरिष्ठः**; ब्रह्मविदां मध्ये वरिष्ठः; न हि ब्रह्मविविदिषूणामित्युक्तम्। क्रियाशब्दार्थविशदीकरणायाह—**तमेतमिति**। **सत्यम्**; भूतहितम्। **आर्जवम्**; मनोवाक्कायानामैकरूप्यम्। **दया**; स्वार्थनिरपेक्षपरदुःखासहिष्णुत्वम्। **अहिंसा**; करणत्रयेण परपीडानिवृत्तिः। **दानम्**; लोभराहित्यम्। अभिध्या; परकीये स्वत्वबुद्धिः; यद्वा निष्फलचिन्ता; अथवा परकृतापकारचिन्ता; तद्राहित्यम् **अनभिध्या**। **इत्यादी**त्यादिशब्देनार्जवादिप्रतिपादकवाक्यजातं क्रोडीकृतम्। **देशेत्यादि**; अनवसादानुद्धर्षयोरवसादोद्धर्षविपर्ययरूपत्वात् अवसादोद्धर्षलक्षणमात्रमुक्तं वाक्यकारेण। तद्विपर्ययरूपो नञर्थोऽर्थात्सिध्यतीति वाक्यकाराभिप्रायः। **शोकवस्तु**; शोकनिमित्तवस्तु—अतीतपुत्रमरणादि। आदिशब्देन भयनि-

मित्तमागामि विवक्षितम् । अतीतविषयो हि शोकः ; आगामिविषयं च भयम् । **अभास्वरत्वमिति**; दैन्यशब्दविवरणम् । अभीष्टकार्यप्रवृत्त्यक्षमत्वरूपं दैन्यमित्युक्तं भवति । भास्वरत्वविरोधीति वा दैन्यविशेषणम् । चशब्दो भिन्नक्रमः । **तज्जं च**; दैन्यजदैन्यं चेत्यर्थः; बन्धुजनदैन्ये दृष्टेऽपि हि दैन्यं स्यात् । देशकालवैगुण्यशोकवस्त्वाद्यनुस्मृतिहेतुकं मनसो भास्वरत्वाभावरूपं भास्वरत्वविरोधि वा दैन्यं दैन्यजदैन्यं च मनसोऽवसाद इत्यर्थः । यद्वा भिन्नवाक्यतया योजनीयम्—देशकालवैगुण्यशोकवस्त्वाद्यनुस्मृतिजनितं मनसोऽभास्वरत्वमवसादः । *किमुक्तं भवतीत्यत्राह—**तज्जं दैन्यमिति** ; तच्चाभास्वरत्वं **तज्जम्** उक्तहेतुजं दैन्यमिति व्याख्येयव्याख्यानरूपं वाक्यद्वयमिति । **तद्विपर्यय** इत्यादिर्भाष्यग्रन्थः । **बलहीनेन** ; मनोबलहीनेन । **तद्विपर्ययजा** ; देशकालसाद्गुण्यप्रियवस्त्वाद्यनुस्मृतिजा तुष्टिरुद्धर्ष इत्येतावदेव वाक्यम् । **तद्विपर्ययोऽनुद्धर्ष** इत्यर्थसिद्धकथनम् । कथं "स्वाध्यायशौचसंतोषतपांसि नियतात्मवान्" इत्यपेक्षितस्य संतोषस्य त्याज्यत्वमित्यत्राह—**अतिसंतोषश्च विरोधीत्यर्थ इति** । न केवलमसंतोष एव विरोधी, अतिसंतोषश्च विरोधीति **चार्थः** । यथान्यविषयेष्वेव प्रवृत्तिः स्यात्तथा संतोषोऽतिसंतोषः ; स त्याज्य इत्युक्तं भवति । **निर्वचनमपीति** ; अपिशब्दः सर्वनिर्वचनसमुच्चये । एवं पदार्था व्याख्याताः ; "तल्लब्धिः" इत्यादेर्वाक्यकारग्रन्थस्य वाक्यार्थमाह—**एवमिति** । **एवंनियमयुक्तस्याश्रमविहितकर्मानुष्ठानेनेति** ; पृथङ् निर्देशेन प्रवृत्तिनिवृत्तिरूपकोटिद्वयविभागो दर्शितः । एतेन पदद्वयेन केवलशमादि केवलकर्म च व्यावर्तितम् । शमादिः कर्म च समुच्चित्याङ्गमित्यर्थः । यद्विविदिषासाधनमिति त्वयोक्तं तेनैव विद्यानिष्पत्तिरित्येवकाराभिप्रायः । **इत्युक्तं भवति** ; इति वाक्यार्थो भवतीत्यर्थः । "विद्यां चाविद्यां च" इति श्रुतेः शंकरयादवप्रकाशाभिमतयोजनाव्युदासार्थं तां व्याचिख्यासुरुपादत्ते—**तथा चेति** । अनेन कर्मणोऽपेक्षितत्वे सन्निहितश्रुत्यन्तरं च दर्शितं भवति । तथाच श्रुत्यन्तरं यदन्यथा भवद्भिर्व्याख्यातं तच्चास्मदुक्तार्थानुगुणमिति तथाशब्दमन्तरशब्दं च प्रयुञ्जानस्य भावः । सन्निहिततया यज्ञादिवाक्यवैलक्षण्यं चान्तरशब्दाभिप्रेतम् । अस्मिन्वाक्ये न कर्मवाची शब्दः श्रूयत इत्यत्राह—**अत्रेति** । **अत्र** ; श्रुतिवाक्ये; न तु "अनात्मन्यात्मबुद्धिर्या" इत्यादिषु । अविद्याशब्दाभिहितं वर्णाश्रमविहितं कर्मास्तु ;

---

* **अवसादस्वरूपमभास्वरत्वं किंरूपमुक्तं भवतीत्यर्थः ।**

ततः किमुक्तं भवतीत्याशङ्कायां पदान्तराण्यपि विवृण्वन् वाक्यार्थमाह—**अविद्ययेति**। **अविद्यया कर्मणा विद्यया ज्ञानेनेति** ; अत्र च कर्मज्ञानशब्दाभ्यां

"कषायपक्तिः कर्माणि ज्ञानं तु परमा गतिः ।
कषाये कर्मभिः पक्के ततो ज्ञानं प्रवर्तते ॥"

इति स्मृतिः स्वोपजीव्यार्था स्मारिता भवति । कर्माणि कषायपक्तिः ; कषायपक्तिनिमित्तानि । कषायशब्दः पापपरः ; "धर्मेण पापमपनुदति" इत्यनेनैकार्थ्यात् । कषायशब्दस्य रागादिपरत्वेऽपि तत्पक्तिहेतुत्वं पापनिबर्हणद्वारा । ज्ञानं परमा गतिः ; परमगत्युपायः । उभयत्र कारणे कार्योपचारः । कर्मभिः कषाये पक्के ततो ज्ञानं प्रवर्तते ; प्रसरतीत्यर्थः । अत्रोपायविरोधिनिरासकत्वं कर्मणः स्पष्टम् ; न हि 'विविदिषा प्रवर्तते' 'मोक्षः प्रवर्तते' इति वोक्तम् ; अपितु 'ज्ञानं प्रवर्तते' इत्येवोक्तम् । अस्य वाक्यस्यार्थमुपजीव्याह—**मृत्युं ज्ञानोत्पत्तिविरोधीति** ; न तु ब्रह्मप्राप्तिविरोधि, न च विविदिषाविरोधीत्यर्थः । उपेयविरोधिकर्मणो ज्ञाननिवर्त्यत्वं श्रुतिस्मृतिशतसिद्धम् ; यथा—"तमेव विदित्वातिमृत्युमेति ; नान्यः पन्थाः" "एवमेवंविदि पापं कर्म न श्लिष्यते" "क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे" "निचाय्य तं मृत्युमुखात्प्रमुच्यते" "ज्ञात्वा देवं मुच्यते सर्वपाशैः" "ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा" इति । एवमुपेयविरोधिनो ज्ञाननिवर्त्यत्वश्रवणेन परिशेषात्, "नान्यः पन्थाः" इत्युपेयविरोधिनिरासे उपायान्तरनिषेधस्वारस्यात्, समसमुच्चयपक्षे कर्मणोऽप्युपायतया वेदनव्यतिरिक्तकृत्स्नगोचरान्यशब्दस्य संकोचप्रसङ्गात्, "यज्ञेन विविदिषन्ति" इति कर्मण उपायहेतुत्वस्य कण्ठोक्त्या, "कषाये कर्मभिः पक्के ततो ज्ञानं प्रवर्तते" इति स्मृत्यानुगुण्याच्च सामान्येन मृत्युशब्देन प्रतिपन्नमपि निरसनीयमुपायविरोधिकर्मरूपे विशेषे पर्यवस्यति । तथा विविदिषासाधनत्वस्य च प्रागुक्तान्योन्याश्रयनिरस्तत्वेन परिशेषात्, "विविदिषन्ति" इत्यत्र प्रकृतिप्रत्ययार्थयोर्वेदनतदिच्छयोरविशेषेण यज्ञादीनां साधनत्वे प्रतीतेऽपि "ततो ज्ञानं प्रवर्तते" इति स्मृत्यानुगुण्यात्, इष्यमाणप्रकृत्यर्थप्राधान्यस्य नीतिविद्भिर्निर्णीतत्वाच्च प्रकृत्यर्थभूतवेदनसाधनत्वं सिद्धम् । तस्मादुपायविरोधि कर्मैवात्र मृत्युशब्दवाच्यमविद्यानिवर्त्यमित्यभिप्रायः । उपासनरूपं न्यासरूपं चोपेयविरोधिनिरासकं ज्ञानमुत्तरपूर्वाघयोरुभयोरपि निरासकं स्यदिति तद्व्यावृत्त्यर्थं **प्राचीन**मित्युक्तम् । उपायविरोधिनिरासककर्म प्राचीनमेव पापं शमयति,

न तूत्तराघमित्यर्थः । तीर्त्वेति पदं व्याचष्टे--**अपोह्येति** ; न तु "एतं सेतुं तीर्त्वा" इतिवत् प्राप्तिवचन इत्यर्थः । अविद्यया तीर्त्वेति पदद्वयव्याख्यानेन शंकरमतयोजना-व्यावृत्तिः ; 'अज्ञानेन संसारं प्राप्य स्थितः' इति हि तद्योजना ; तन्मते अविद्याया ज्ञातव्यत्वं च हेयत्वेन । अविद्याशब्दो विविदिषाविरोधिनिवर्तककर्मवाचीति वा शंकराभिमतयोजना स्यात् । अविद्याशब्द उपेयविरोधिनिवर्तककर्मवाचीति यादवप्रकाशाभिमतयोजना । ज्ञानोत्पत्तिविरोधीति मृत्युशब्दव्याख्यानेन तदुभयव्युदासः । अयमविद्याशब्दः संसार-हेतुभूताज्ञानपरः किं न स्यात् ? कथं च तस्य कर्मवाचित्वम् ? इत्यत्राह—**मृत्युतरणेति** । तरतेरुत्तरणवाचित्वं स्वरससिद्धम् ; प्राप्तिवाचित्वे तु स्वारस्यभङ्ग इत्यभिप्रेतम् । अविद्या-शब्दस्य कर्मवाचित्वं दर्शयति—**विद्येतरदिति** ; तदन्यार्थे नञिति भावः । **विहितं कर्मैवे**त्येवकारेणाज्ञानमविहितं कर्म च व्यावर्त्यते । अत्र "विद्यां चाविद्यां च" इति चशब्दावनुक्तसमुच्चयपरौ । विद्यानुबन्धि कर्मानुबन्धि च यदनुक्तं तत्समुच्चेतव्यम् । विद्यानुबन्धि शमदमादिकम् ; कर्मानुबन्धि फलाभिसंधिकर्तृत्वाभिमानराहित्यादिकम् । तदुभयं चशब्दसमुच्चेतव्यम् । यद्वा "धर्मे चार्थे च कामे च मोक्षे च भरतर्षभ" इत्यत्र चशब्दवदत्राप्युक्तार्थविरोधिसमुच्चयपरौ चशब्दौ स्याताम् । विद्याविरोधि कर्मविरोधि च चशब्दाभ्यां हानार्थं ज्ञातव्यतया समुच्चिते भवतः । विद्या ब्रह्मविद्या ; तद्विरोधि तदितरविषयज्ञानतद्विषयरागद्वेषादिकम् ; अविद्या विद्याङ्गं कर्म ; तद्विरोधि संसरणहेतुभूतं फलाभिसंध्यादिसहितं कर्म पापं च ; तदुभयं हानार्थं ज्ञातव्यमिति चशब्दयोरभिप्रायः । यद्वा प्रतिपदद्योतकौ चशब्दौ स्याताम् ; यथा "धर्मे चार्थे च कामे च" इति; प्रतिपदं यदभिधेयं तस्य समुच्चयद्योतकत्वं प्रतिपदद्योतकत्वं, तदत्रापि स्यात् । अस्मिन् वाक्ये अविद्यातरणशब्दयोरुक्तार्थपरत्वस्थापनायोपबृंहणवचनं च दर्श-यति—**यथोक्तमिति** । **ज्ञानव्यपाश्रयः**; आगमोत्थज्ञानवान् । **ब्रह्मविद्यामधिष्ठाय**; उपासनात्मकज्ञानं साध्यत्वेनावलम्ब्येत्यर्थः । ज्ञानविद्याशब्दयोरर्थभेदबुभुत्सायामागमोत्थ-विवेकादिजन्यज्ञानयोः प्रकृतत्वात् तत्परत्वाश्रयणं हि युक्तम् । **तर्तुं मृत्युमित्यनेन** तरतेः प्राप्तिवाचित्वशङ्का व्युदस्ता ; न हि संसारं प्राप्तुं ब्रह्मविदा केशिध्वजेन नृपेण यज्ञादिकर्मानुष्ठीयते । मृत्युशब्दस्य विविदिषाविरोधिकर्मपरत्वमपि न शङ्कनीयम् ; 'ज्ञानव्य-पाश्रयः' इत्यनेन शास्त्रजन्यज्ञानवत्ताया अभिहितत्वात् , 'ब्रह्मविद्यामधिष्ठाय' इत्युक्तत्वाच्च ।

न हि 'ब्रह्मविद्येच्छामधिष्ठाय' इत्युक्तम् । कथं 'ज्ञानोत्पत्तिविरोधि प्राचीनं कर्म' इति पुण्यपापसाधारणकर्मशब्देन कर्ममात्रं निरसनीयमित्युक्तम्? श्रुतिर्हि "धर्मेण पापमपनुदति" इति पापरूपकर्मविशेषस्य निरसनीयत्वमाहेति शङ्कायां तत्रापि पापशब्दस्य पुण्यपापपरत्वं दर्शयितुं पुण्यपापयोरुभयोरपि पापशब्दवाच्यत्वोपपादनाय तयोर्ज्ञानोत्पत्तिविरोधित्वमाह—**ज्ञानविरोधि चेति** । **च**: शङ्कानिवृत्तौ । पुण्यपापे उभे अपि ज्ञानविरोधिनी चेत् कथं तयोरन्यतरस्य पापस्य निरसनीयत्वमन्यतरस्य पुण्यस्य निरासकत्वं च श्रूयते? इत्यत्राह—**उभयोरपीति** । तयोर्द्वयोरपि निवर्त्यत्वं फलाभिसंध्यादिरहितस्य धर्मान्तरस्यैव निवर्तकत्वं च विवक्षितमिति भावः । कथमुभयोः पापशब्दवाच्यत्वमित्यत्राह—**ब्रह्मज्ञानोत्पत्तीति** । **अनिष्टफलतयेति** प्रवृत्तिनिमित्तसूचनम् । अलौकिकत्वे सत्यनिष्टफलासाधारणकारणत्वं पापत्वमिति भावः । अत एव शस्त्रादावीश्वरे च नातिव्याप्तिः ।

"वासुदेवे मनो यस्य जपहोमार्चनादिषु ।
तस्यान्तरायो मैत्रेय देवेन्द्रत्वादिकं फलम् ॥"
"एते वै निरयास्तात स्थानस्य परमात्मनः ।"

इत्यादिभिः पुण्यस्यापि मुमुक्षुं प्रत्यनिष्टफलप्रदत्वं सिद्धम् । श्रुतिश्च दुष्कृतेन सह पूर्वनिर्दिष्टं सुकृतमपि पाप्मशब्देन निर्दिशन्ती निगमयति—"नैतं सेतुमहोरात्रे तरतो न जरा न मृत्युर्न शोको न सुकृतं न दुष्कृतं सर्वे पाप्मानोऽतो निवर्तन्ते" इति । न चानुक्तपापान्तरविषयः पाप्मशब्दः; दुष्कृतशब्दस्य संप्रतिपन्नसमस्तपापसाधारणतयानुक्तपापान्तरासंभवेन तद्विषयत्वायोगात् । संभवेऽपि न तन्मात्रपापान्तरविषयः पाप्मशब्दः, उक्तसर्वहेयनिवृत्तिसंवादितयोपात्ते "अपहतपाप्मा ह्येष ब्रह्मलोकः" इत्यनन्तरवाक्ये पाप्मशब्दस्य सर्वहेयविषयत्वदर्शनात्; न ह्यनुक्तकतिपयपापनिवृत्त्युक्तावुक्तसर्वहेयनिवृत्तिसंवादसिद्धिः । शोकादिषु पाप्मशब्दस्यामुख्यत्वेऽपि सुकृतदुष्कृतयोः प्रवृत्तिनिमित्तसंभवान्न मुख्यत्वं त्याज्यम्, क्वचिदमुख्यस्य सर्वत्रामुख्यत्वनियमाभावात् । अतः "सर्वे पाप्मानः" इत्यत्राजहल्लक्षणा छत्रिन्यायात्; "धर्मेण पापम्" इत्यत्र तु मुख्यत्वमेव । कथं पापस्य ज्ञानविरोधित्वम्? रजस्तमसोर्हि तदवगम्यत इति शङ्कायां द्वारद्वारिभावादविरोधमाह—**अस्येति** । पापस्य रजस्तमसोश्च ज्ञानविरोधित्वे प्रामाणिके सति हि द्वारद्वारिभावः कल्प्येतेत्यत्राह—**पापस्य**

चेति । नन्वियं श्रुतिर्निरयनिनीषाविषया किं न स्यात्? उन्नयनप्रत्यनीकत्वादधोनयनस्येति ब्रूमः । अत्र विवक्षितमुन्नयनहेतुत्वं ह्युपासननिष्पादनरूपम् । न चोन्नयनमपि नाकादिनयनमिति शङ्कनीयम्, "यमेभ्यो लोकेभ्य उन्निनीषति" इत्यवगतस्य समस्तलोकेभ्य उन्नयनस्यापवर्गप्रापणरूपत्वात् । तर्हि गर्भजन्मजरामरणादिसंसारप्रापणमधोनयनं स्यात्, न तूपासननिरोध इति चेत्—न; उन्नयनस्य ज्ञानोत्पादनद्वारकत्वावगमात् । "यं त्वं मनुष्याय हिततमं मन्यसे" इत्युपक्रमवाक्येन "मामुपास्स्व" इति विधित्सितस्योपासनस्य ह्यव्यवहितोपायत्वमवगतम् । "नान्यः पन्थाः" इत्यादीनि च श्रुत्यन्तराणि तथावगमयन्ति; तच्च कर्मणामपवर्गं प्रत्यव्यवहितोपायत्वे विरुध्येत । अत उपक्रमाद्यविरोधात् साधुकर्मणामपवर्गं प्रत्युपायत्वमुपासनद्वारकमवसीयते । अतः कर्मणामुन्नयनहेतुत्वमुपासननिष्पादनरूपमिति तद्विपरीतमधोनयनमुपासनप्रतिबन्धरूपमिति स्फुटतरमवगम्यते । किंच यद्यप्युन्नयनाधोनयने स्वर्गनरकप्रापणरूपे, तथाप्यसाधुकर्मणां ज्ञानविरोधित्वं सिध्यति; तथा हि—उन्निनीषाधोनिनीषयोर्निर्हेतुकत्वे परमात्मनो वैषम्यनैर्घृण्यप्रसङ्गात् नेतव्यचेतनगोचरं यद्वृत्तद्वयं गतिद्वयनिनीषानिमित्तातिप्रभूतपुण्यपापकर्तृविषयं विज्ञायते । तत्र च गतिद्वयपर्याप्तोत्तरोत्तरसाध्वसाधुकर्मकारयितृत्वमीश्वरस्य न भूतावेशादिवज्जीवबुद्ध्यनपेक्षितं भवति; तथा सति ज्ञानचिकीर्षाद्यभावाद्वायूदकादिनुन्नतृणादेरिव संसारिणां शास्त्रवश्यत्वाभावेन कर्मफलभोगानुपपत्तेः । एवं संसारिणां कर्मफलभोक्तृत्वान्यथानुपपत्तिरूपन्यायानुगृहीतम् "एष एव" इत्यादिकं वाक्यद्वयं ज्ञानप्रदानद्वारककारयितृत्वविषयमवसीयते; तथा सति स्मृत्यनुग्रहश्च भवति—

"न देवा यष्टिमादाय रक्षन्ति पशुपालवत् ।
यं हि रक्षितुमिच्छन्ति बुद्ध्या संयोजयन्ति तम् ॥

यस्मै देवाः प्रयच्छन्ति पुरुषाय पराभवम् ।
बुद्धिं तस्यापकर्षन्ति सोऽपनीतो न पश्यति ॥"

इति ह्युच्यते । तथा—

"पुण्यं प्रज्ञां वर्धयति क्रियमाणं पुनः पुनः ।
वृद्धप्रज्ञः पुण्यमेव नित्यमारभते नरः ॥

पापं प्रज्ञां नाशयति क्रियमाणं पुनः पुनः ।
नष्टप्रज्ञः पापमेव नित्यमारभते नरः ॥ "

इति च । तत्र " बुद्धिमपकर्षन्ति " " प्रज्ञां नाशयति " इति च सम्यग्ज्ञानहानिपूर्वकतद्विपरीतज्ञाननिष्पत्तिर्विवक्षिता, अन्यथा कर्मान्तरप्रारम्भानुपपत्तेः । यद्यपीदं वचनजातं सर्वकर्मदेवतासामान्यविषयं, तथापि भगवज्ज्ञानस्य सम्यग्ज्ञानसामान्याबहिर्भावादसाधुकर्मणस्तद्विरोधित्वसिद्धिः । तथा विशेषतश्चोच्यते—

" ददामि बुद्धियोगं तं येन मामुपयान्ति ते ।
आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि ॥
मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम् । "

इति च । एवं न्यायस्मृत्युपबृंहितयानया श्रुत्या सामान्येन ज्ञानविरोधित्वमसाधुकर्मणां सिद्धम् । अस्मादपि निर्वाहात् पूर्वोक्त उपपन्नतरः, प्रकरणानुगुण्यात्[1] । एवं पापस्य ज्ञानविरोधित्वे प्रमाणं दर्शितम् ; अथ रजस्तमसोर्ज्ञानविरोधित्वे सत्त्वस्य ज्ञानहेतुत्वे च प्रमाणं दर्शयति—**रजस्तमसोरिति** । ततः किं प्रस्तुतस्य कर्मापेक्षितत्वस्येत्यत्राह—**अतश्चेति** । **अतः**; पापस्य ज्ञानविरोधित्ववचनात् । ततोऽपि किमित्यत्राह—**तन्निरसनं चेति** । पापशब्दाभिधेययोः पुण्यपापयोरुभयोरपि निरसनीयत्वेन पापनिरासककर्मासंभवमाशङ्क्योक्तम्—**अनभिसंहितफलेनेति** । अनेन स्वर्गादिफलप्रदकर्मव्यावृत्तिः । **अनुष्ठितेन**; न तु ज्ञातमात्रेणेति भावः । तत्र किं प्रमाणमित्यत्राह—**तथाच श्रुतिरिति** । इदानीं निरासकविशेषे प्रमाणतयोदाहृतस्य वाक्यस्यार्थनिर्णयोपयोगितयैतद्वाक्यस्थनिरसनीयवाचिपदस्यार्थः पूर्वमेव शिक्षितः ; निरासकवाचिपदस्यार्थोऽनन्तरमुक्तः । नन्वयं धर्मशब्दः कृच्छ्रचान्द्रायणादिप्रायश्चित्तरूपधर्ममात्रविषयः किं न स्यात् ? अनभिसंहितफलधर्मविषय इति कुतो निर्णीयते ? उच्यते—" यज्ञेन दानेन तपसानाशकेन " " शान्तो दान्त उपरतस्तितिक्षुः "

" कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तते । "
" यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तत् ।
यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् ॥"

---

१. पापशब्दवाच्यसुकृतदुष्कृतयोर्ज्ञानविरोधित्वप्रकरणानुगुण्यात् ।

" शमो दमस्तपः शौचम् " इत्यादिश्रुतिस्मृतिभिर्मुमुक्षोरपेक्षितत्वेनोक्तानां यज्ञदानतपःशमादीनामत्र श्रूयमाणत्वात् " विज्ञानादानन्दो ब्रह्मयोनिः " इत्यादिनास्य प्रकरणस्य ब्रह्मविद्याविषयत्वावगमाच्चायं धर्मशब्दो मुमुक्ष्वपेक्षितानभिसंहितफलधर्मविषय इत्यवगम्यते। अत्र यज्ञदानादिपर्यायेषु " दानेन द्विषन्तो मित्रा भवन्ति " इत्यादिना सांसारिकफलकीर्तनम् "अन्नवानन्नादो भवति" इत्यादिवत् ब्रह्मवेदनानुगुणानुषङ्गिकफलविषयं मन्तव्यम्, " भूयो न मृत्युमुपयाहि विद्वान् " इति प्रधानफलश्रवणात्। किंच यद्यपीदं वाक्यं न मुमुक्षुमात्रविषयं, तथाप्यमुमुक्षुमात्रविषयं च न भवेत्; प्रवृत्तिनिमित्तसाधारण्यात्। न हि काम्यफलदत्वं धर्मशब्दार्थः; अलौकिकेष्टासाधारणसाधनेनालौकिकानिष्टासाधारणकारणमपनुदेदिति ह्यर्थः स्यात्; ततश्च मुमुक्षुं प्रति काम्यकर्मणोऽनिष्टफलत्वेन धर्मशब्दवाच्यत्वायोगात् पापशब्दवाच्यान्तर्भावाच्च पक्षधर्मताबलादनभिसंहितफलेन धर्मेण पुण्यपापयोरुभयोरपनोद्यत्वमुक्तं स्यात्। ज्ञानस्य कर्मसापेक्षत्वं निगमयति—**तदेवमिति**। **तत्**; श्रुतिस्मृतितदनुग्राहकोपपत्तिसूत्रवाक्यकारवचनेभ्यः। **एवम्**; उपायप्रतिबन्धनिरासार्थम्। सर्वाश्रमिणां तत्तदाश्रमधर्माङ्गकोपासनाधिकारस्य वक्ष्यमाणत्वं हृदि निधाय **सर्वाश्रमकर्मापेक्ष**मित्युक्तम्। ततः किं कर्मविचारस्य ब्रह्मविचारपूर्ववृत्तत्व इत्यपेक्षायामनुष्ठानस्य ज्ञानापेक्षत्वात् ज्ञानस्य मीमांसाधीनत्वाच्च तदधिगमः पूर्ववृत्त इत्याह—**अत इति**। **अतः**; ब्रह्मज्ञानस्य फलाभिसंधिरहिताश्रमकर्मसापेक्षत्वात्। ज्ञानं हि हानार्थम्, उपादानार्थं वा; अत्र तूभयार्थमित्याह—**अपेक्षितेति**, फलद्वारकं हानम्; स्वरूपेणोपादानम्। मीमांसाशब्दस्य पूर्वोत्तरसाधारणत्वात् **कर्ममीमांसावसेय**मित्युक्तम्। **सैव**; या त्वया विरुद्धेति निरस्ता सैवेत्यर्थः।

### भावप्रकाशिका

**स्वयमुपस्थितस्य स्वीकार एवेति**; अप्रियत्वे स्वयमुपस्थितमपि परित्यज्यते; प्रियत्वे स्वयमुपस्थितं गृह्यते; प्रियतमत्वे तु प्रार्थनीयत्वरूपं वरणीयत्वमिति भावः। ननु पत्रपुष्पादीनां भगवति प्रीतिरहितानामपि प्रीतिविषयत्ववरणीयत्वयोर्दर्शनात् कथं 'यस्य' इत्यादि भाष्यमुपपद्यत इत्याशङ्क्याह—**चेतनत्वे सति भगवता वरणीयत्वमिति**; चेतनत्वे सति भगवत्प्रियतमत्वमित्यर्थः, तस्यैव तस्मिन् वाक्ये प्रस्तुतत्वात्। यद्वा प्रियतमत्वपूर्वकं वरणीयत्वमित्यर्थः। **स्वतः प्रियत्वं स्वस्मिन् प्रीतिमत एवेति**। यस्य च

स्वतः प्रियत्वं तस्यैव स्वतो वरणीयत्वमिति भावः । **आशंसायां भूतवच्चेति कर्तरि क्त इति ;** "गत्यर्थाकर्मक—" इत्यकर्मकत्वविवक्षायां यः क्तो विहितः सः " आशंसायां भूतवच्च " इत्यनेनाशंसायां भविष्यतीति भावः । ननु " आशंसायां भूतवच्च " इति प्रयोक्त्राशंसायामेव दृष्टम् ; यथा—'देवश्चेद्वृष्टः, संपन्नाः शालयः' 'उपाध्यायश्चेदागतः, अधीतं व्याकरणम्' इति ; यथा "आशिषि लिङ्लोटौ" इति लिङ्लोटौ प्रयोक्त्राशंसाविषयावेव तद्वदिति चेत्—न ; प्रयोक्त्राशंसायामेवेति ग्रन्थकृतां व्यवहारादर्शनात् , उदाहरणमात्रप्रदर्शनेन तद्विषयत्वस्य निश्चेतुमशक्यत्वात् । लिङ्लोड्विषये तु प्रयोक्त्राशंसायामेव प्रयोगात् तथात्वमुचितमिति भावः । **अनुभूयमानोऽनुभव इतिवदिति ;** प्रियशब्दस्य प्रीतिविषयत्वमेवार्थ इति प्रथमतृतीयपक्षयोः समानम् ; प्रथमपक्षे प्रीतावेव प्रीतिविषयत्वनिर्देश औपचारिकः ; तृतीये आगामिप्रीतिरूपज्ञानस्यापि प्रीत्यन्तरविषयत्वसंभवान्मुख्य इति विवेकः । द्वितीयपक्षे तु 'प्रिया' इत्यस्यानुकूलत्वमेवार्थः, न प्रीतिविषयत्वमिति भिदा । यद्यपि प्रियशब्दः " इगुपधज्ञाप्रीकिरः कः " इति कर्त्रर्थकप्रत्ययान्तः, " कर्तरि कृत् " इति विधानात् ; तथापि 'देवदत्ताय रोचते मोदकः' इतिवत् विषयत्वपर्यवसित एवेति विषयत्वार्थकत्वे नानुपपत्तिरिति द्रष्टव्यम् । इदं त्ववशिष्यते—प्रीतिरूपत्वस्यैव समर्थनीयतया " स्वायत्ते शब्दप्रयोगे " इति न्यायेन 'स्वयमपि प्रीतिरूपा' इत्येव निर्देष्टव्ये भाष्ये 'प्रिया' इति निर्देशो न युक्तः ; अतः 'प्रिया' इति निर्देशस्यानुकूलत्वमेवार्थ इति द्वितीयपक्ष एव युक्त इति प्रतिभाति । **यद्वा ध्रुवानुस्मृतिः स्वयमत्यन्तानुकूलत्वादिति ;** 'प्रीतिरूपा' इति शेषः । ततश्च " अत एव हि या प्रीतिरित्यादिना सा प्रार्थ्यते " इति युज्यते, । 'प्रीतिरूपा' इति शेषाभावे 'सा प्रार्थ्यते' इत्युक्ते ध्रुवानुस्मृतिः प्रार्थ्यत इति प्रतीयेत ; न च तद्युक्तम् , " या प्रीतिः " इति श्लोके प्रीतेरेव प्रार्थ्यत्वदर्शनेन ध्रुवानुस्मृतेः प्रार्थ्यत्वादर्शनादिति द्रष्टव्यम् । ननु " या प्रीतिः " इति श्लोके प्रीतिरूपापन्नध्रुवानुस्मृतेः प्रार्थ्यत्वं न प्रतीयत इति चेत्—न ; " त्वामनुस्मरतः सा मे " इति स्मृतिसमभिव्याहारात् प्रीतिरूपस्मृतिः प्रार्थ्यत इत्यर्थलाभसंभवात् । **प्रीतिरूपध्रुवानुस्मृतेरिति ;** न च " स्वयमत्यर्थं प्रिया " इत्यत्र भाष्यस्थप्रियशब्दस्य प्रीतिविषयार्थकत्वपक्षे प्रीतिरूपत्वस्य ध्रुवानुस्मृतावलाभात् कथं प्रीतिरूपा ध्रुवानुस्मृतिरित्युच्यत इति शङ्क्यम्, प्रीतिविषयत्वप्रतिपादनस्यापि प्रीतिरूपत्व-

प्रतिपादनफलकत्वेन प्रीतिरूपत्वोक्तौ विरोधाभावात् । ननु नैघण्टुकोक्त्या पर्यायत्वमेवावगतं स्यात्; न त्वेकार्थपर्यवसानमात्रमित्यत्राह---**एकार्थवृत्तित्वं चेति ; च** एवार्थः ; एकार्थवृत्तित्वमेवावगम्यते, न तु पर्यायत्वमपि ; तथाहि सति सेवाया अपि पर्यायत्वे 'भूयसी सेवा भक्तिशब्दवाच्या' इत्यभियुक्तव्यवहारविरोधादिति भावः । **वचनबलप्रतिक्षिप्त इति ;**

"भक्त्या त्वनन्यया वापि प्रपत्त्या वा महामते ।
प्राप्योऽहं नान्यथा प्राप्यः ॥"

इति वचनबलेन "सकृदेव हि शास्त्रार्थः" इति वचनबलेन च प्रतिक्षिप्तः ; शक्ताशक्तभेदेन च व्यवस्था कृतेति भावः । **इदानीं तु श्रुतिस्मृत्योरैकार्थ्येनेति ;** उपायान्तरनिषेधकश्रुतिस्मृत्योरविरोधसिद्ध्यर्थमित्यर्थः । इदं चोपबृंहणोपबृंहणीययोरित्युत्तरत्र स्पष्टम् । **पुरुषसूक्तैकार्थ्यं दर्शयितुमिति ;** पुरुषसूक्तैकार्थ्यमुपजीव्यावगतपरमपुरुषतात्पर्या श्वेताश्वतरोपनिषदिति दर्शयितुमित्यर्थः । **नाहं वेदैरिति वचनमुपात्तमिति ;** "नाहं वेदैः" "भक्त्या त्वनन्यया" इति श्लोकद्वयमुपात्तम् ; तत्तुल्यार्थत्वमभिप्रेत्य "पुरुषः स परः" इति श्लोकोऽप्युपात्तः ।

"नाहं वेदैर्न तपसा न दानेन न चेज्यया ।
शक्य एवं विधो ज्ञातुं दृष्टवानसि मां यथा ॥
भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन ।
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परंतप ॥"
"पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया ।
यस्यान्तःस्थानि भूतानि येन सर्वमिदं ततम् ॥"

इति त्रयः श्लोकाः । **तदनन्तरमित्यनेन पौनरुक्त्यप्रसङ्गादिति ;**

"भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः ।
ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम् ॥"

इति श्लोके 'ततः' इत्यनेन ज्ञानस्य परामर्शे 'तदनन्तरम्' इत्यनेन पौनरुक्त्यमित्यर्थः । ननु 'तदनन्तरम्' इत्यत्र तच्छब्दो ज्ञानपरः ; 'ततः' इति तच्छब्दो ज्ञानहेतुभूतभक्तिपरः; 'ततः भक्त्या मां तत्त्वतो ज्ञात्वा ज्ञानानन्तरं मां विशते' इत्युक्तौ न पौनरुक्त्य-

मिति चेत्—न; भक्तेर्ज्ञानहेतुत्वस्य “भक्त्या मामभिजानाति” इत्यनेनैव सिद्धतया पुनरुक्तिप्रसङ्गात् ‘ततो विशते’ इत्यन्वयस्यैव वक्तव्यत्वादिति भावः। न च “भक्त्या मामभिजानाति” इति पूर्वनिर्दिष्टभक्तेः प्राप्तिहेतुत्वाभावात् कथं ‘ततः’ इत्यनेन तस्या भक्तेः परामर्श इति वाच्यम्, ‘ततः’ इत्यस्य तद्व्यक्तिपरामर्शित्वासंभवादेव तज्जातीयव्यक्तिपरामर्शित्वमित्यदोषः। **अन्योन्याश्रयणं वेति**; वा शब्दः समुच्चये, अन्योन्याश्रयणे आत्माश्रयस्यापि सिद्धत्वात्। **अज्ञातसुकृतवशादिति**; स्ववृत्त्यर्थं व्याधकृतव्याघ्रमरणेन संपादितं गोरक्षणादिकमज्ञातसुकृतमित्युच्यते। **यज्ञेन विविदिषन्तीति वाक्यस्य ह्यर्थश्चिन्त्यत इति**; न तु स्वल्पायाससाध्यकर्मविधायकवाक्यार्थ इति भावः। **आत्माश्रयादिः स्यादेवेति**; नन्वन्नद्वेषेण कार्श्यं प्राप्तस्य तत्परिहारायान्नविषयौन्मुख्यलक्षणेच्छायां सत्यामप्युत्कटाजीर्णादिप्रयुक्तधातुवैषम्यदोषात् तत्र प्रवृत्तिपर्यन्ता रुचिर्न जायत इति तद्रोचकौषधवत्, ‘निरतिशयानन्दं ब्रह्म; तत्प्राप्तौ विद्या साधनम्’ इत्यस्मिन्नर्थे प्राचीनानन्तजन्मशतानुष्ठितानभिसंहितफलनित्यनैमित्तिककर्मोपसंजातचित्तप्रसादमहिम्ना संपन्नविश्वासस्य पुरुषस्य ब्रह्मावाप्तौ तद्विद्यायां चौन्मुख्यलक्षणेच्छायां सत्यामप्यनादिभवसंचितानेकदुरितदोषेण विषयप्रावण्यं संपादयता प्रतिबन्धात् विद्यासाधने श्रवणादौ प्रवृत्तिपर्यन्ता रुचिर्न जायत इति प्रतिबन्धकनिरासपूर्वकतादृशरुचिसंपत्त्यर्थं कर्मसु प्रवृत्तिरुपपद्यत एव; इतरथा “या प्रीतिरविवेकानाम्” इत्यादिष्ववगतेरिति चेत्—न; यद्यनन्यथासिद्धं विविदिषासाधनत्वग्राहि प्रमाणमुपलभ्येत, स्यात्तदा यथा कथंचिन्निर्वाहः; न त्वेतदस्ति; “प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थस्य प्राधान्यम्” इति सामान्यन्यायापेक्षया ‘सन्प्रत्ययाभिहितेच्छाविषयस्य प्राधान्यम्’ इति विशेषन्यायस्य ‘अश्वेन जिगमिषति’ इत्यादौ दृष्टस्य प्रबलत्वादिति भावः। अभिधानमात्रस्य प्रागपि कृतत्वात् तन्मात्रमप्रयोजकमित्यभिप्रेत्याह—**उपपादयिष्याम इत्यर्थ इति**। **तच्छब्दो विविदिषापर इति**; न च ध्यानोपक्रमात् प्रागेव विविदिषायाः सिद्धत्वात् पुनस्तदनुष्ठानं व्यर्थमिति शङ्क्यम्; प्रत्यहमनुष्ठेयोपासनाया हेतुभूतविविदिषाया अपि प्रत्यहमनुवृत्त्यर्थं कर्मणामपेक्षितत्वादिति भावः। **यावज्जीवं कर्मणोऽपेक्षितत्वे चेति**; साक्षाद्वा परंपरया वा कर्मणस्तदपेक्षितत्व इत्यर्थः। ततश्च विविदिषार्थत्वपक्षेऽप्यपेक्षितत्वमात्रसत्त्वात् प्रमाणजिज्ञासायां श्रुतिवाक्ये प्रदर्शनीये तदुपेक्ष्य सूत्रसंदर्शनस्य प्रयोजनमाह—**सूत्रसंदर्शनेनेति**। **आश्रम-**

**शेषत्वेऽपि विद्याङ्गत्वमपीति** ; विद्यापेक्षितत्वमित्यर्थः । ततश्च विविदिषार्थत्वपक्षेऽप्य-पेक्षितत्वमात्रसत्त्वान्नानुपपत्तिरिति भावः । **वाक्यकारनिर्देश इति** ; इतरेतरद्वन्द्वस्य साहित्यरूपसमुच्चयावगमकत्वात् । अत एवैकादशाद्ये " दर्शपूर्णमासाभ्याम् " इति द्वन्द्वावगतं साहित्यं मा बाधीति समुच्चितानामेव षण्णां यागानां फलसाधनत्वमिति समर्थितमिति भावः । **समुच्चयोऽर्थान्तरमिति** ; यद्यपि समुच्चयान्वाचयेतरेतरसमाहाराश्चत्वारोऽपि चार्था वाशब्दार्थभूतविकल्पप्रतिद्वन्द्विसमुच्चयरूपा एव ; न हि 'गामश्वं चानय' इति समुच्चये वा 'भिक्षामट गां चानय' इत्यन्वाचये वा 'देवदत्तयज्ञदत्तौ कुरुतः' इतीतरेतरयोगे वा 'छत्रोपानहमानय' इति समाहारे वा वाशब्दार्थभूतविकल्पप्रतीतिरस्ति—तथापि वाशब्दवत् समुच्चयशब्दोऽन्वाचयसहपठिते समुच्चयावान्तरविशेषे विकल्पप्रतिद्वन्द्वि-समुच्चयसामान्ये च वर्तत इति भावः । " जात्याश्रय—" इत्यत्र " कायशुद्धिर्विवेकः " इति सामानाधिकरण्यं कथमित्याशङ्क्य " जात्याश्रयनिमित्तादुष्टादन्नात् " इति वाक्ये दुष्टेभ्यो विविक्तादन्नात् कायशुद्धेः साध्यत्वावगमात् कारणवाचिना विवेकशब्देन कार्यभूता शुद्धिर्लक्ष्यत इत्याह—**आहारविषय इत्यादिना । जातिदुष्टाः कलञ्जगृञ्जनाद्य इति** ;

" लशुनं गृञ्जनं चैव पलण्डुं कवकानि च ।
वार्ताकनालिकालाबून् जानीयाज्जातिदूषितान् ॥ "

इत्यादि द्रष्टव्यम् । मुख्ये संभवत्युपचारस्यान्याय्यत्वादाह—**यद्वेति** । देहविवेचनं विवेकोऽस्तु ; सामानाधिकरण्यं कथमित्यत्राह—**अशुद्धेभ्य इति । मामनुस्मरेत्येवमन्तमिति** ;

" यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेबरम् ।
तं तमेवेति कौन्तेय सदा तद्भावभावितः ॥ "
" तस्मात्सर्वेषु कालेषु मामनुस्मर युध्य च । "

इति हि श्लोकक्रमः । **सत्यं भूतहितमिति** ;

" सत्यं भूतहितं प्रोक्तमार्जवं समचित्तता ।
दया भूतहितैषित्वं क्षमा द्वन्द्वसहिष्णुता ॥ "

इत्यादि प्रमाणं द्रष्टव्यम् । **आर्जवादिप्रतिपादकवाक्यजातं क्रोडीकृतमिति** ;

" दानं यज्ञःसतां पूजा वेदधारणमार्जवम् ।
एष धर्मः परो ज्ञेयः फलवान् प्रेत्य चेह च ॥ "

इति वचनजातमिति भावः । भावान्तरमेवाभाव इत्यभिप्रेत्याह—**अभास्वरत्वमिति दैन्यशब्दविवरणमिति** । भास्वरत्वाभावो दैन्याद्भिद्यत इति मतमालम्ब्याह—**भास्वरत्वविरोधीति** । **च शब्दो भिन्नक्रम इति**; 'तज्जं च' इत्ययं भिन्नक्रम इत्यर्थः । देशकालवैगुण्यात् शोकवस्त्वाद्यनुस्मृतेर्दैन्यं तज्जं चेत्यर्थः । दैन्यशब्दस्य तज्जशब्दात् प्राक् प्रयोगाभावे तच्छब्दस्य दैन्यपरामर्शाभावप्रसङ्ग इति द्रष्टव्यम् । **यद्वा भिन्नवाक्यतयेति**; अस्मिन् पक्षे 'तज्जं दैन्यम्' इत्यस्य वाक्यस्य भेदः, तस्य च पश्चात् प्रयोगः, 'तच्च तज्जं दैन्यम्' इति तच्चेत्यस्याध्याहारदोष इत्याद्यस्वरसो बोध्यः । **अस्य वाक्यस्यार्थमुपजीव्येति**; "कषायपक्तिः कर्माणि" इति वाक्यस्यार्थमित्यर्थः । **उभयोरपि निरासकं स्यादिति तद्व्यावृत्त्यर्थमिति**; उभयोरपि निरासकं दृष्टम्; तद्वत् कर्मापि स्वप्राचीनं कर्मेव स्वोत्तराघमपि निरस्यत्विति शङ्काव्यावृत्त्यर्थमित्यर्थः । केचित्तु—'प्राचीनम्' इत्येतत् न कर्मापेक्षया प्राचीनपरम्; अनेकजन्मशतानुष्ठीयमानकर्मजातमनुद्भूतावयवभेदम् 'अविद्यया' इति परामृश्यते; तत्र च यदि प्राचीनपदं तत्प्राचीनपरामर्शि, तदा तादृशस्यैव कर्मणो विनाशे तदनन्तरभाविनां विनाशो नास्तीत्युपपादितं स्यात्; न चैतदिष्टम् । न चाविद्याशब्दोऽन्त्यकर्ममात्रपरामर्शीति शक्यं वक्तुम्, कषाये "कर्मभिः पक्के" इत्यादिविरोधात् । तैस्तैः कर्मभिस्तत्तत्पूर्वभाविनां विनाश इत्येतत्परमपि न वाच्यम्, तथा हि सति आद्येनैव कर्मणा तत्पूर्वभाविनां विनाशप्रसङ्गात्; 'तीर्त्वा' इत्युक्ते उत्तराश्लेषशङ्काया अप्यभावेन तच्छङ्काया अप्यव्यावर्त्यत्वात्; तदुत्तरक्षण एव ज्ञानोत्पत्तिप्रसङ्गाच्च । अतो भाष्ये प्राचीनपदमनेकजन्मार्जितमपि सर्वं ज्ञानप्राचीनं कर्म व्यपोह्येति साकल्यसूचनार्थमेव; न तु कर्मप्राचीनपरतया केषांचिन्मृत्युशब्दितानां निवर्त्यत्वपरम्, तस्यानुपयुक्तत्वादिति मन्यन्ते । **प्राप्य स्थित इति हि तद्योजनेति**; तन्मते तरतिः प्राप्तिवचन इति भावः । **इति वा शंकराभिमतयोजना स्यादिति**; संभावनायां लिङ्; संभवार्थिकेत्यर्थः । ततश्च विद्याम् अन्तःकरणवृत्तिम्, अविद्यां तत्कारणं च कार्यकारणरूपेण सहिते यो वेद सः अविद्योपादानकत्वेन तन्मय्या अन्तःकरणवृत्त्या तदुपादानं मृत्युमविद्यां तीर्त्वा विद्यया स्वरूपभूतज्ञानेनोपलक्षितममृतत्वमश्नुत इति

परैर्योऽर्थो वर्णितः सोऽनुवादस्याप्यनर्ह इति सूच्यते । अङ्गिज्ञातव्यत्वोक्तावङ्गज्ञातव्यत्वस्यानुक्तसिद्धत्वात् तत्समुच्चये प्रयोजनमान्द्यादन्यथा व्याचष्टे—**यद्वा धर्मे चेति** । समुच्चेतव्ययोर्विरोधिनोः क्लेशगम्यत्वादुक्तार्थसमुच्चयपरतया व्याचष्टे— **यद्वा प्रतिपद्द्योतकाविति** । " धर्मे चार्थे च " इति श्लोके चशब्दस्य विरोधिसमुच्चयपरत्वमुक्तसमुच्चयपरत्वं च व्याख्यातृभिर्व्याख्यातमिति तस्य दृष्टान्ततयोभयत्राप्युपादानं युक्तमिति द्रष्टव्यम् । **पुण्यपापे उभे अपीति**; " ज्ञानविरोधि च कर्म पुण्यपापरूपम् " इति भाष्यावतारिकानुसारात् " ब्रह्मज्ञानोत्पत्तिविरोधित्वेन " इत्युत्तरभाष्यस्य ततः किमित्यत्राहेत्यवतारिका देयेति मन्यते । **न तन्मात्रपापान्तरविषयः पाप्मशब्द इति** ; " सर्वे पाप्मानः " इत्यत्र पाप्मशब्दस्य दुष्कृतशब्दानुक्तपापमात्रविषयत्वसंभवेऽपि पापशब्दस्य तन्मात्रविषयत्वासंभवात् " अपहतपाप्मा ह्येष इति " सकलहेयनिवृत्तिसंवादिसमनन्तरवाक्ये सुकृतविषयत्वावश्यंभावात् तावताप्यस्माकं समीहितसिद्धेरिति भावः । केचित्तु—" सर्वे पाप्मानः " इत्यत्र पाप्मशब्दो न दुष्कृतशब्दानुक्तपापान्तरवाचीत्येवार्थः, शब्दस्वारस्यात् । न चैवं समनन्तरवाक्यस्थपाप्मशब्दस्य सर्वपरत्वं पूर्ववाक्यस्थपाप्मशब्दस्य सर्वपरत्वे कथं हेतुः स्यादिति वाच्यम्, एकप्रकरणस्थयोः शब्दयोर्वैरूप्यस्यासति बाधकेऽयुक्तत्वादिति वर्णयन्ति । ननु " अपहतपाप्मा ह्येषः " इति वाक्येऽपि पाप्मशब्दस्यानुक्तकतिपयपापनिवृत्तिरित्यर्थोऽस्त्वित्याशङ्क्याह --**न ह्यनुक्तकतिपयपापनिवृत्ताविति** । **शोकादिषु पाप्मशब्दस्यामुख्यत्वेपीति** ; "अपहतपाप्मा विरजो विमृत्युर्विशोकः" इति वाक्ये शोकादीनां पाप्मशब्दापेक्षया पृथक्कीर्तनादनुगतप्रवृत्तिनिमित्ताभावाच्च शोकादिषु पाप्मशब्दस्य गौणत्वसंभवेऽपि सुकृतेऽनुगतप्रवृत्तिनिमित्तसत्त्वेन गौणत्वासंभवात् । न च छत्रिन्यायेन लक्षणास्वीकारे वृत्तिद्वयविरोधान्न कस्यापि मुख्यत्वमिति वाच्यम् ; तथापि " सृष्टीरुपदधाति " इत्यादाविव भूम्ना लक्षणासंभवे " प्राणभृत उपदधाति " इत्यादिवत् लिङ्गसमवायमात्रेण गौण्या वृत्त्या अनाश्रयणीयत्वादिति भावः । केचित्तु वृत्तिद्वयविरोधो न दूषणमित्यभिप्रेत्यैतदुक्तमिति वदन्ति । अन्ये तु " कालजरामृत्युशोकादयः संख्यातत्वात् " इति वाक्यकारवचनानुसारात् शोकादिष्वपि पापशब्दस्य मुख्यत्वमेव । अमुख्यत्वेऽपि न क्षतिः, तावता पाप्मशब्दप्रयोगविषयत्वसाधारण्यस्य हेतुत्वाभावेऽपि प्रवृत्तिनिमित्तसाधारण्यात् " धर्मेण पापम् " इत्यत्र मुख्यत्वमेवेत्यर्थ इति वदन्ति । **यद्वृत्तद्वयमिति** ;

"यमुन्निनीषति यमधो निनीषति" इति यच्छब्दद्वयमित्यर्थः। **ज्ञानप्रदानद्वारककारयितृत्वविषयमवसीयत इति।** यद्तद्वयाभिप्रेतस्य पुण्यपापाख्यस्य कर्मणः स्वर्गनरकहेतुभूतकर्मकारयितृत्वप्रयोजकोन्निनीषाहेतुत्वमस्माद्वाक्यात् प्रतीयत इत्यर्थः। ततश्च कर्मणां कर्मप्रयोजकत्वं ज्ञानद्वारकमिति सिध्यतीत्यर्थः। नन्वेतावता पापशब्दितस्यासाधुकर्मकर्तव्यताज्ञानद्वारा नरकहेतुभूतकर्मानुष्ठानहेतुत्वसिद्धावपि न सम्यग्ज्ञानोत्पत्तिप्रतिबन्धकत्वं सिध्येदिति चेत्, निषिद्धे कर्मणि बलवदनिष्टजनकत्वलक्षणसम्यग्ज्ञानप्रतिबन्धकत्वाभावे तत्र प्रवृत्तेरेवानुदयप्रसङ्गेनावश्यं सम्यग्ज्ञानप्रतिबन्धकत्वस्य वक्तव्यत्वात् ब्रह्मज्ञानप्रतिबन्धकत्वमपि सिध्यति; इतरथा दुरितकर्मप्रवृत्तेरेवासंभवात्। **सर्वकर्मदेवतासामान्यविषयमिति**; "बुद्ध्या संयोजयन्ति तम्" इति बुद्धेर्वेद्यरूपकर्मविशेषानुपादानात् सर्वविषयकज्ञानप्रतिबन्धकत्वमेव सिध्येत्, न तु भगवद्विषयमोक्षहेतुज्ञानप्रतिबन्धकत्वम्; तथा "न देवा यष्टिमादाय" इति देवतासामान्योपादानात् "एष ह्येव" इति विवक्षितस्य भगवत एव कारयितृत्वस्य न लाभ इत्यर्थः। **सम्यग्ज्ञानसामान्याबहिर्भावादिति**; इदमुपलक्षणम्—भगवतोऽपि देवतासामान्याबहिर्भावादित्यपि द्रष्टव्यम्। **पूर्वमेव शिक्षितमिति**; अत इदानीमनुक्तिर्न दोषायेति भावः। **अत्र श्रूयमाणत्वादिति**; "धर्मेण पापमपनुदति" इति प्रकरणे "तस्माद्यज्ञं परमं वदन्ति" "तस्मात्सत्यं परमं वदन्ति" इत्यादिवाक्येषु श्रूयमाणत्वादित्यर्थः। **अपनुदेदिति ह्यर्थः स्यादिति**; ननु पापशब्दस्य तादात्विकानिष्टसाधनत्वरूपार्थाश्रयणे स्वर्गार्थेन कर्मणा कस्यचित् पुंसस्तत्कालविशेषेऽनिष्टपुत्रपश्वादिसाधनकर्मणामपि विनाशप्रसङ्ग इति चेत्—न; फलान्तरार्थमनुष्ठितस्य कर्मणस्तस्मिन्नेव प्रयोगेऽनिष्टपश्वादिसाधनपापनिवर्तकत्वासंभवात्। प्रकृते च "यज्ञेन" इत्यादिवाक्येन विनियुक्तानां यज्ञादीनां द्वारविशेषाकाङ्क्षायां "धर्मेण पापमपनुदति" इत्यस्य द्वारविशेषसमर्पकतया विद्यार्थमनुष्ठितेनापि पापनिवृत्त्युपपत्तेः। **पापशब्दवाच्यान्तर्भावाच्चेति**; ननु धर्मत्वेन प्रसिद्धानां ज्योतिष्टोमादीनां मुमुक्षुं प्रत्यनिष्टसाधनत्वेन तं प्रति पापत्वे यस्य पुंसो यदा यदनिष्टं तं प्रति तदा तस्याधर्मत्वप्रसङ्गेन व्यवस्था न स्यादिति चेत्—न; इष्टापत्तेः, पुरुषविशेषं प्रत्येव धर्माधर्मव्यवहारात्। 'तत्' इत्यस्य तस्मादित्यर्थकत्वमभिप्रेत्य व्याचष्टे—**श्रुतिस्मृतीति।** अत्र 'एवम्' इति व्याख्येयं

50

पदम् । उपायप्रतिबन्धकनिरासार्थमिति छेदः । **ब्रह्मज्ञानस्य फलाभिसंधिरहिताश्रमकर्मसापेक्षत्वादिति** ; नन्वेतावता ब्रह्मोपासनस्य कर्मसाध्यस्य तद्विचारसापेक्षत्वेऽपि न ब्रह्मविचारस्य तदपेक्षेति चेत्—न ; कर्मोपासनयोः शेषिणोरनुष्ठानक्रमेणैव शेषभूतयोस्तद्विचारयोरपि क्रम इत्याशयात् । ब्रह्मविचारापेक्षिताधिकारिविशेषणीभूतकर्मास्थिरफलत्वज्ञानादिनिष्पादकत्वमप्यस्तीत्याह—**ज्ञानं हीत्यादिना** ।

## श्रुतप्रदीपिका

विशेषान्तरपरा श्रुतिरस्तीत्याह—**एवमिति** । **एवम्** ; सामान्यविशेषनयादिति भावः । **प्रवचनम्** ; मननम् ; कारणे कार्योपचारः । अत्र कथं स्मृतेर्विशेषितत्वम् ? ध्यानादेरनुपायत्वमेव हि प्रतीयत इत्याशङ्कायां प्रथमप्रतीतमर्थमाह—**अनेनेति** । "न पृथिव्यामग्निश्चेतव्यः" इतिवदिति केवलशब्दस्य भावः । ततः किमित्यपेक्षायां लोकनीतिं दर्शयति—**प्रियेति** । ततोऽपि किमित्यत्राह—**यस्येति** । **यस्य**; उपासकस्य । **अयम्** ; परमात्मा । परमात्मविषयप्रीतिमत एव तत्प्रीतिविषयत्वमित्यत्र मानतया प्रियतमत्वकार्यवरणविवरणाय स्मृतिमर्थपूर्वकं दर्शयति—**यथेति** । **अयम्** ; भगवति प्रीतिमान् । **सततयुक्तानाम्** ; आशंसायां क्तः । तद्विवरणायाह—**प्रियो हीति** । लोकस्मृत्यनुगृहीतश्रुत्या ध्रुवानुस्मृतेर्विशेषितत्वं दर्शयति—**अत इति** । **स्मर्यमाणात्यर्थप्रियत्वेन** ; "अर्थेनैव विशेषो हि निराकारतया धियाम्" इति भावः । **अत्यर्थप्रिया** ; अत्यर्थानुकूला । तर्हि कथं भक्तेरुपायत्वोक्तिरित्यत्राह—**एवमिति** । "सेवा भक्तिरुपास्तिः" इति हि नैघण्टुकाः । बहुश्रुत्यैकार्थ्यान्मोक्षोपायवेदनस्य भक्तिरूपत्वमुपपाद्य श्रुतिस्मृत्यैकार्थ्यादेतदुपपादयति—**अत एवेति** । **अतः** ; भक्तिरूपोपासनस्य मुक्त्युपायवेदनत्वात् । "यस्मात्परं नापरमस्ति किंचित्" "महान् प्रभुर्वै पुरुषः" इति पूर्वापरावगतभगवत्परो मध्यस्थशिवशब्दः पुरुषसूक्तैकार्थ्यादिति ज्ञापनाय श्वेताश्वतरवाक्यमुपात्तम् । उपायान्तरनिषेधकण्ठोक्त्या "ततो मां तत्त्वतः" इति वाक्यार्थनिश्चायकतया ज्ञानदर्शनप्राप्तीनां भक्तिसाध्यत्वकण्ठोक्त्या च "नाहं वेदैः" इत्युदाहृतम् । विषयैक्यप्रत्यभिज्ञायां तद्वदुपायैक्यमिति ज्ञापनाय "पुरुषः स परः" इत्याद्युपात्तम् । एवमस्तु ; ततः किं कर्मसापेक्षत्वस्येत्यत्राह—**एवंरूपाया इति** । **एवंरूपायाः** ; उक्तानेकविशेषणविशिष्टायाः ; तत्तदवस्थाभेदः कर्मसाध्य इति भावः । **ध्रुवानुस्मृतेः** ;

न तु विविदिषाया इत्यर्थः । परमसाध्येच्छोरेवावान्तरसाध्ये प्रवृत्तेर्वेदनेच्छोरेव तदर्थेच्छार्थमनुष्ठानमित्यात्माश्रय इति भावः । अभ्युपेत्याह—**यद्यपीति** । **तदुत्पत्तये**; विविदिषोत्पत्तये । विद्यायाः कर्मणश्च यावज्जीवानुवृत्तावाश्रमशेषस्य विद्याङ्गत्वे च सूत्राणि दर्शयति—**वक्ष्यति चेति** । अथाप्रमाणतां शमादिविरोधं च परिजिहीर्षन्नाह—**वाक्येति** । ध्रुवानुस्मृतेरित्यनेन वाक्यस्थतच्छब्दो व्याख्यातः । केवलस्य यज्ञादेः शमादेश्च व्युदासायैवकारः । इतरेतरयोगे द्वन्द्वः । तेन विकल्पव्युदासः । स हि प्रतीत्यनुष्ठित्यपूर्वफलानां पाक्षिकबाधैरष्टदोषः । **संभवः**; युक्तिः । **निर्वचनम्**; आगमः । के पुनस्ते ? कथं च शमाद्यविरोधः ? इत्यत्राह—**विवेकेति** । **इतीति** भाष्योक्तिः; **अत्रे**त्यादि च । विषयानभुक्त्वा स्थातुमशक्तिर्येन स विकारोऽभिष्वङ्गः; अनभिष्वङ्गेण क्रोधाद्यभावश्च फलितः; कामाद्धि क्रोधः । **आरम्बणम्**; आलम्बनं शुभाश्रयः । नात्र साध्याविशिष्टता, कालान्तरसंशीलनस्य योगोपकारकत्वात् । **भाष्यकारो** द्रमिडाचार्यः । अतः सर्वं निर्वचनं तेन दर्शितमिति विज्ञायते । **स्मार्तमिति**; श्रौतस्य "अथ मुनिः" इत्यस्यास्फुटार्थत्वात् स्फुटार्थं स्मार्तं दर्शितम् । **शक्तितः**; न ह्यशक्यं विधीयते । **ब्रह्मविदाम्**; न तु ब्रह्मविविदिषूणाम् । क्रियाशब्दविवरणमाह—**तमेतमिति** । **अभिध्या**; परकीये स्वत्वबुद्धिः, परकृतापकारानवरतस्मरणं वा, निष्फलचिन्ता वा । आदिशब्दः "अमानित्वमदम्भित्वमहिंसा क्षान्तिरार्जवम्" इत्याद्यार्जवादिपरवाक्यपरः । **शोकवस्तु**; शोकनिमित्तं वस्तु । आदिशब्देन भयनिमित्तं वस्तूक्तम् । अतीतागाम्यनिष्टज्ञाननिमित्तविकारौ शोकभये । चशब्दो भिन्नक्रमः । **तज्जं च**; बन्धुजनदैन्यदर्शनजं च दैन्यमित्यर्थः । **अभास्वरत्वम्**; स्वप्रवृत्त्यक्षमत्वं दैन्यशब्दविवरणम्; भास्वरत्वविरोधीति दैन्यविशेषणं वा । यद्वा भिन्नवाक्यतया योजनीयम्—देशकालवैगुण्यात् शोकवस्त्वाद्यनुस्मृतेश्च जनितमभास्वरत्वं मनसोऽवसादः । किमुक्तं भवतीत्यत आह—**तज्जं दैन्यमिति** । देशकालवैगुण्यादिजनितं मनसो दैन्यं मनसोऽवसाद इत्युक्तं भवति । अवसादलक्षणमात्रं वाक्योक्तम्; **तद्विपर्यय** इति तु भाष्यम् । **बलम्**; मनोबलम् । **तद्विपर्ययजेति**; देशकालसाद्गुण्यातीतानागतप्रीतिनिमित्तवस्तुज्ञानादिजा । उद्धर्षलक्षणेन तद्विपर्ययः फलित इति नोक्तः । कथं "स्वाध्यायशौचसंतोष" इत्यादिषु योगाङ्गतयोक्तस्य संतोषस्य हेयत्वमित्यत्राह—**अतीति** । पदेषु व्याख्यातेषु

वाक्यार्थमाह—**एवमिति**। प्रवृत्तिनिवृत्तिरूपताविभागात् पृथङ् निर्देशः। त्वदनभिमतेनैवेत्येवकाराभिप्रायः। अविहितनिषिद्धकाम्यनिवृत्तिरूपशमादेर्विहितप्रवृत्तिरूपयज्ञादेश्चाविरोध इत्यभिप्रायः। मानं च दर्शितम्। अथ स्वमते श्रुत्यन्तरं च प्रमाणयन् शंकरयादवप्रकाशमतयोजने च व्युदस्यन् "विद्यां च" इति श्रुतिमुपादाय व्याचष्टे—**तथा च श्रुत्यन्तरमित्यादिना**। **श्रुत्यन्तरमिति**; सन्निहिततया यज्ञादिश्रुतिविलक्षणा समसमुच्चयवादिभिश्च तत्परतया च स्वीकृता श्रुतिरित्यर्थः। अत्र किं कर्मवाचीत्यत्राह—**अत्रेति। अत्र**; न तु "श्रूयतां चाप्यविद्यायाः" इत्यादौ। पदद्वयेन विहितकर्मज्ञानव्युदासः। वाक्यार्थं योजयति—**अविद्ययेति**। **ज्ञानोत्पत्तिविरोधि**; न तु फलविविदिषाविरोधीति भावः। **प्राचीनम्**; न तु विद्यावदुत्तरपूर्वाघविरोधित्वमिति भावः। **अपोह्य**; "प्राप्य स्थितः" इत्यस्वारस्यम्; अध्याहारश्च गत्यन्तरसद्भावान्न युज्यत इति भावः। कर्मज्ञानशब्दाभ्यां "कषाये कर्मभिः पक्के ततो ज्ञानं प्रवर्तते" इति स्मृतिः फलोपायविरोधिसाधारणस्य मृत्युशब्दस्य प्रकृतिप्रत्ययार्थवेदनतदिच्छाहेतुसाधारणस्य यज्ञादिवाक्यस्य चार्थनिष्कर्षार्थं स्मारिता। अस्यां स्मृतौ हि "ततो ज्ञानं प्रवर्तते" इति कर्मसाध्यतया ज्ञानमेवोच्यते, न तु मोक्षो वा विविदिषा वा। अविद्याशब्दस्य कर्मवाचित्वं सहेतुकं दर्शयति—**मृत्युतरणेति**। **प्रतीता**; प्रतीतिस्वारस्यादित्यर्थः। **विद्येतरत्**; तदन्यार्थे नञित्यर्थः। न त्वविहितं कर्म ज्ञानं चेति भावः। उक्तं स्पष्टयितुमाह—**यथोक्तमिति**। ज्ञानमागमोत्थम्। विद्या विवेकादिजा। **तर्तुमिति**; तरतेः प्राप्त्यर्थत्वव्युदासः। "प्राचीनं कर्म" इति कर्ममात्रस्य निरसनीयत्वोक्तिरयुक्ता, पापमेव हि धर्मनिरसनीयं श्रूयत इत्याशङ्क्याह—**ज्ञानेति**। कथं पुण्यपापरूपस्य कर्मणः "पापमपनुदति" इति पापशब्देन निर्देश इत्यत्राह—**ब्रह्मेति**। एतेन "न सुकृतं न दुष्कृतं सर्वे पाप्मानः" इति प्रयोगोऽप्यभिप्रेतः। रजस्तमसी हि तद्विरोधिनी इत्यत्राह—**अस्य चेति**। अस्य तयोश्च तादृशत्वे प्रामाणिके हि द्वारद्वारिभावक्लृप्तिरित्यत्राह—**पापस्य चेति**। अधोनयनमुपास्तिवैमुख्यकरणं संसारपतनहेतुतया तत्रोक्ता। रजस्तमसोस्तथात्वं दर्शयति—**रजस्तमसोरिति**। **एवे**त्याप्ततमत्वसूचनम्। ततः किमित्यत्राह—**अतश्चेति**। **च**स्त्वर्थः शङ्कानिवृत्तिपरः; अन्वयव्यतिरेकसमुच्चयपरो वा। केन निरास इत्यत्राह—**तदिति**। **अनुष्ठितेन**; न तु ज्ञातमात्रेण।

अविद्याशब्दार्थस्य निरासकस्य धर्मत्वं मृत्युशब्दार्थस्य निरसनीयस्य च पापत्वं स्पष्टयन्तीं श्रुतिं दर्शयति—**तथा चेति**। ततः किमित्यत्राह—**तदेवमिति**। **तत्**; श्रुतिस्मृत्युपपत्तिसूत्रकारवाक्यकारवचनैः। **एवम्**; स्वोत्पत्तिविरोधनिरासाय। ततः किं ब्रह्मविचारस्य कर्मविचारापेक्षत्वे? इत्यत्राह—**अत इति**। **अतः**; ब्रह्मविद्यायाः कर्मसापेक्षत्वात्। **अपेक्षितेति**; हानायोपादानाय चेत्यर्थः। सैव; त्वत्प्रतिक्षिप्तैवेति भावः।

**तत्त्वटीका**

ननु "नायमात्मा" इत्यादौ श्रवणादि त्रिकं प्रतिषिध्य, अपर्यनुयोज्यस्वतन्त्रवरणमात्रेण तल्लाभ इत्युक्तम्; तस्मात्, 'दैवमेव वरं मन्ये पौरुषं तु निरर्थकम्" इति न्यायादुक्तं सर्वं वितथमित्यत्र सूत्रवाक्ययोर्ध्रुवत्वादिविशेषितायाः स्मृतेरुपासनशब्दार्थतयाऽभिप्रेतं भक्तिरूपत्वविशेषणमेव तत्र विवक्षितमित्याह—**एवमिति**। सामान्यशब्दानां सूत्राद्युक्तेन विशेषविश्रमप्रकारेणेत्यर्थः। **प्रत्यक्षतापन्नाम्** इत्येतत् वक्ष्यमाणस्य भक्त्यात्मकत्वस्य न्यायसाम्यसूचनार्थम्। अहेतुकवरणमयुक्तम्; तस्यादिमत्त्वे निर्हेतुकत्वायोगात्; अनादित्वे मुक्तेरप्यनादित्वापातात्, मुक्त्युपायविधेश्च वैयर्थ्यप्रसङ्गात्; जीवव्यापाररूपभेदविशेषनिषेधपरस्य वैषम्यनैर्घृण्यनिषेधकसूत्रादेर्विरोधापत्तेश्चेत्यभिप्रायेण **अपवर्गसाधनभूता**मित्युक्तम्। फलान्तरार्थोपास्तिपरत्वशङ्का चानेन निरस्ता। परो ह्यात्मात्र लभ्य इष्यते। **विशिनष्टि**; न तु प्रमाणप्राप्तं निवर्तयतीत्यर्थः; अन्यथा उपायान्तरविधानवैयर्थ्यम् "मत्वा धीरो न शोचति" "प्रज्ञानेनैनमाप्नुयात्" इति पूर्वापरविरोधश्च स्यात्। **नायमात्मे**त्यादौ ब्रह्मशब्देन श्रवणमुपात्तम्; मेधाशब्दश्च ध्यानार्थः स्यात्; "मेधामनीषे मा विशतां समीची भूतस्य भव्यस्यावरुद्ध्यै" इति श्रुत्यनुसारात्; "धीर्धारणावती मेधा" इति च निघण्टुः। पारिशेष्यात्प्रवचनशब्दः श्रवणध्यानसहोक्तमननपरः, प्रोच्यतेऽनेनेति करणव्युत्पत्तेः। शिष्यमननार्थगुरुप्रवचनेन वा मननलक्षणा; प्रवचनहेतौ वा तत्कार्योपचारः। ननु स्वरूपनिषेधकस्य कथं तद्विधायकत्वम्; अत्र च क्वचिदङ्गाङ्गिप्रतिषेधाद्वैयर्थ्यम्, क्वचित्तु विहितप्रतिषेधाद्विरोध इति शङ्कायां श्रवणादिवैयर्थ्यप्रसङ्गं च परिहरन्वाक्यस्य ध्रुवानुस्मृतिविशेषकत्वं व्यनक्ति—**अनेनेति**। यथा "न पृथिव्यामग्निश्चेतव्यः" इत्यत्र निषेधस्य हिरण्यवैकल्यपरिहारार्थतया हिरण्योपहितत्वविधौ तात्पर्यम्, तथात्रापि पृथिव्या इव श्रवणादेर्यथार्हं प्रणाड्या साक्षाच्चावश्यं-

भावित्वात्प्रीतिवैकल्यनिषेधमुखेन त्रिष्वपि प्रीतिविशेषविधौ तात्पर्यमित्यभिप्रायवान् **केवल**-**शब्दः**। यद्वा "नान्तरिक्षे न दिवि" इत्यभागिप्रतिषेधेन सह पठितः "न पृथिव्याम्" इति प्राप्तप्रतिषेधो यथा केवलपृथिव्या अन्तरिक्षादिवदधिकरणत्वव्युदासेन हिरण्योपधान-त्ववैशिष्ट्यविधौ विश्राम्यति, तथानुपायभूतश्रवणमननाभ्यां सहोपायभूतनिदिध्यासनस्य प्रतिषेधः केवलनिदिध्यासनस्य श्रवणादिवदनुपायत्वोक्तिमुखेन भक्त्यात्मकत्वविधौ पर्यवस्य-तीति। अनियमेन यथेष्टं स्वतन्त्रवरणशङ्काव्युदासाय यद्वृत्तानूक्तिबलेन नियतविषयवरण-व्यक्त्यर्थं **यमेवे**त्युपादानम्; वैषम्यादिदोषानाघ्रातसर्वसुहृद्वरणस्य नियतविषयत्वायोगात्। "यदाग्नेयः" इति वाक्यस्थभवतिवत् 'वृणुते' इत्यस्य प्रयोजकव्यापारविधौ तात्पर्यं 'लप्स्यमानवरणप्रयोजकव्यापारवता भवितव्यम्' इति। ननु हिरण्योपधानस्य पृथि वीस्थत्वावश्यंभाववदेतद्वाक्यस्थयद्वृत्तव्यङ्ग्यवरणीयताहेतुगुणविशेषस्य ध्रुवानुस्मृतिसंबन्धनियमादृष्टेर्न तस्यास्तेन वैशिष्ट्यलाभ इत्यत्राह--**प्रियतम इति**। फलान्तरार्थभक्त्याभासव्यव-च्छेदार्थं तमप्प्रयोगः। **हिः** शास्त्रतो लोकतश्च परावरपुरुषस्वभावप्रसिद्धौ। नन्वेता-वतापि वरणीयस्य प्रियतमत्वापादकः कश्चिदन्यो व्यापारः सिध्यतु; ध्रुवानुस्मृतेर्विशेषितत्वं तु न लब्धमित्यत्राह---**यस्येति**। **स एव**; सुकृतान्तरवान्; न च केवलध्रुवानु-स्मृतिमान्, नापि निर्व्याजप्रियः कश्चिदिति भावः। **अस्य**; "समोऽहं सर्वभूतेषु" इत्यादिना स्वेनैवोक्तस्वभावस्येति यावत्। अयं भावः--अन्येषां स्वप्रीतिहेतुव्यापारा-णां स्वलाभार्थवरणहेतुत्वाभावात् स्वविषयनियतात्यन्तिकप्रीतिमानेव परस्य प्रियतमो भवन् स्वप्रापणाय वरणीयः स्यात्। इयं च निरतिशयप्रीतिरूपा बुद्ध्यवस्था मुक्तिसमुत्पादने विकल्पसमुच्चयविद्वेषिण्यनन्यगतिकप्रमाणवशान्मुक्तिसाधनतया स्थापितध्रुवानुस्मृतिमाश्र-यन्ती तां विशिनष्टीति। ननु स्वशेषतया नित्योपात्तस्य किमद्य वरणम्? सर्वव्या-पितया नित्यप्राप्तस्य किं वेदानीं लभ्यत्वम्? प्रियतम एवास्य वरणीय इति च कुतस्त्यम्? इत्यत्र तत्सर्वमुपबृंहणेन स्पष्टयति---**यथेति**। **अयम्**; भगवति निरुपाधिकभोग्यता-विभवेन निरतिशयप्रीतिमान्। अत एव **प्रियतम आत्मानं प्राप्नोति**; रमते स्वात्मनि। प्रसेदुषस्तस्यापवर्गाव्यवहितहेतुभूतबुद्धियोगादिप्रदानेऽन्येषामिव परसापेक्षत्वं नास्तीति व्यक्त्यै **स्वयमेवे**त्युक्तम्; उपासितुरचिन्त्यमेव हितमाचरतीति वा सूच्यम्। **भगवतैव**; "यमेवैष वृणुते" इति वरणकर्तृतया श्रुतेनैव। एतेन स्वतः सर्वज्ञतया

परमाप्तत्वमपि व्यज्यते । **सततयुक्तानाम्** ; सततयोगमाशंसमानानाम् ; " आशंसायां भूतवच्च " इति क्तः । 'सततयुक्तानां भजताम्' इत्यनेनैवोपासकबुद्धेः प्रीतिरूपत्वस्य सिद्धत्वात् 'प्रीतिपूर्वकं ददामि' इत्यन्वयः ।

उपचारापचाराभ्यां प्रीतिद्वेषौ परस्य न ।
निमित्तशक्त्या तु फलं तयोरिति नयोज्झितम् ॥ ३१२ ॥

वरणं चोन्निनीषा चाधोनिनीषा च शासितुः ।
श्रुतत्वादनिषिद्धानि तत्तत्कर्मफलार्पणात् ॥ ३१३ ॥

कस्यचिद्वरणीयतानिदाने प्रियतमत्वे श्रुत्यभिप्रेतः सततयुक्तशब्दोक्तश्च हेतुस्तत्रैव विवृत इत्याह—**प्रियो हीति** । **अत्यर्थम्** ; अत्यभिधेयम् ; मयापि दुर्वचमिति भावः । अत्र वरणं 'मामयं प्राप्नुयात्' इत्यमोघः संकल्पः । अत्र लभ्यत्वं चास्य " विवृणुते " इत्यनेनाभिप्रेतम् ; निवृत्तप्रतिबन्धनिरुपाधिकानुभवविषयत्वमित्यर्थादुक्तं भवति । अत्र सोपबृंहणयापि श्रुत्या ध्रुवानुस्मृतेः प्रीत्यात्मकतया विशेषितत्वमनभिव्यक्तं व्यनक्ति—**अत इति** ; लोकानुसारात् उपात्तश्रुतिस्मृतितात्पर्यवृत्त्या चेत्यर्थः । **अत्यर्थप्रिया** ; अतिमात्रानुकूल्यस्वभावतया स्वयमेव भासमाना अयुक्तदशायामपि " या प्रीतिरविवेकानाम् " इति न्यायेन प्रीतिरूपज्ञानान्तरेण विषयीकृता ; विषयविशेषायत्तं हि सर्वत्र विषयिणो ज्ञानस्य प्रीतिरूपत्वं प्रीतिविषयत्वं चेत्यभिप्रायेण स्मर्यमाणात्यर्थप्रियत्वोक्तिः । वरणविवरणयोः कर्तुस्तत्कर्मणो वरणीयादार्थी प्राकरणिकी व्यावृत्तिः **परेणेति** दर्शिता । ननु " शेमुषी भक्तिरूपा " इति पुराणादिप्रसिद्धं भक्तेरुपायत्वं प्रक्रान्तम् ; 'ध्यानोपासनादिशब्दवाच्यम्' इत्यादिशब्देन भक्तिशब्दोऽपि विवक्षितः ; उपात्तासु श्रुतिषु तु न तद्गीरस्ति ; अतः कथमविरोधस्तत्राह—**एवंरूपेति** ; उक्तशृङ्खलाक्रमेण विशेषितेत्यर्थः । प्रतिज्ञामात्रमेतदित्यत्राह—**उपासनेति** । ध्रुवानुस्मृतेः प्रीतिरूपत्वेनोपासनशब्दवाच्यतया च विशेषणात् "स्नेहपूर्वमनुध्यानं भक्तिरित्यभिधीयते" इति तल्लक्षणानुरोधात् " सेवा भक्तिरुपास्तिः " इति पर्यायपाठात् शब्दभेदेऽप्यैकार्थ्यसिद्धौ विधेयभेदाभावान्न विरोधप्रसङ्ग इति भावः । वेदनादिशब्दानां भक्तिपर्यवसायित्वमुपबृंहणोपबृंहणीययोर्मिथः प्रतिक्षेपकत्वप्रसङ्गरूपयुक्त्यन्तरेण दृढीकृतमित्याह—**अत इति** । इदं

फलरूपहेतुपरम्; वेदनोपासनादिशब्दैर्भक्तेरेवोक्तत्वादित्यर्थः। अन्यथा श्रुतीनामिव श्रुतिस्मृत्योरपि मिथो विरोधः स्यादित्यभिप्रायवानेवकारः। **एवम्**; श्रुतौ वेदनव्यतिरिक्तः स्मृतौ तु भक्तिव्यतिरिक्तश्चरमोपायो नास्तीत्युक्तप्रकारेणेति यावत्।

ननु "तमेव विदित्वातिमृत्युमेति" इति श्वेताश्वतरवाक्यं शिवादिशब्दसमभिव्याहाराद्रुद्रविषयम्; "तमेवं विद्वान्" इति तु महापुरुषविषयम्; तत्र चात्र च "नान्यः पन्था अयनाय" इत्याम्नातम्; अतो मिथो व्याघात इति मन्दशङ्कापनुत्त्यै तदुभयवाक्योपादानम्। अयं भावः—"वेदाहमेतं पुरुषं महान्तम्" इत्याद्यैः पूर्ववाक्यैः "महान् प्रभुर्वै पुरुषः सत्त्वस्यैष प्रवर्तकः" "सहस्रशीर्षा पुरुषः" इत्याद्यैरुत्तरवाक्यैश्च सत्त्वप्रवर्तकस्यानन्यपरपुरुषसूक्तोदितस्य महापुरुषस्य शब्दतोऽर्थतश्च प्रत्यभिज्ञया शिवमहेश्वरादिशब्दानां तत्परत्वावश्यंभावेनैन्द्रीन्यायेन रूढिपरित्यागस्य न्याय्यत्वात्, "सर्वः शर्वः शिवः" इति भगवन्नामपाठात्, शिवशब्दस्य च मङ्गल्यादौ रूढत्वात्, प्रसिद्धिप्रकर्षस्यात्रोक्तरीत्या नैष्फल्यात्, अनन्यथासिद्धनारायणानुवाकसौबालमहोपनिषदादिप्राबल्यात् "शाश्वतं शिवमच्युतम्" इतिवन्महापुरुषविषयत्वावश्यंभावात्, "तस्मात्सर्वगतः शिवः" इत्यस्यारम्भे "सर्वाननशिरोग्रीवः सर्वभूतगुहाशयः" इति सहस्रशीर्षत्वादिप्रत्यभिज्ञानात्, "सर्वव्यापी च भगवान्" इति भगवच्छब्दस्य महापुरुषरूढत्वस्थापनात्, निगमनस्य प्रस्तुतशेषतया तदविरोधेन नेयत्वाच्च विगीतं पुरुषसूक्तोक्तविषयमेवेति। अत्र "नाहम्" इत्यादेः वेदतपःप्रभृतीनां साक्षादुपायत्वाभावे तात्पर्यमिति न तद्विरोधः। "भक्त्या त्वनन्यया" इत्यादेश्च पर्वभेदवत्तैव भक्तिरूपज्ञानेन ज्ञानान्तरादेः साध्यत्वे तात्पर्यान्नात्माश्रयादिप्रसङ्गः। "पुरुषः स परः" इत्याद्युपादानस्य न पूर्वेण कृतकरत्वम्, तदप्रतिपन्नख्यापनात्। अयं खल्विहाभिप्रायः—"तमेवं विद्वान्" इत्यत्र "आदित्यवर्णं तमसः परस्तात्" इति यत्पूर्ववाक्ये श्रुतं तदेव "अणोरणीयांसमनुस्मरेद्यः" इत्यारभ्याचिन्त्यरूपत्वादित्यवर्णत्वोक्त्या प्रत्यभिज्ञापितम्। "धाता पुरस्तात्" इत्युक्तं च "सर्वस्य धातारम्" इति दर्शितम्। तत्र श्रुतौ विदिनोक्तमिहानुस्मरतिना विवृतम्। "भक्त्या युक्तः" इति चानन्तरं विशेष्यते। अतो भक्तिरूपा ध्रुवानुस्मृतिः श्रुतौ विदिना विधीयत इति गम्यते। यद्यप्यत्र यद्वृत्तावृत्तिवशात्पुरुषार्थान्तरसाधनविषयत्वमेव युक्तम्, तथापि समानन्यायतया मोक्षार्थविदेरपि भक्तिविश्रमसिद्धिः स्वीकार्या। तत्रैव च

" पुरुषः स परः " इत्यादिना मोक्षार्थश्रौतविदेरपि तद्विशेषपरत्वं व्यञ्जयति । " यमेवैष वृणुते तेन लभ्यः " इति श्रुतिसंपुटनिगूढं चात्रोद्घाटितम् । अत्र हि ज्ञानिनां प्राप्यान्तरवत्प्रापकान्तरमपि सविशेषणोक्त्या व्युदस्तम् । श्रुत्युक्तप्रत्यभिज्ञया प्राप्यैक्यवदुपायैक्यमपि हि युक्तम् । अतो विदिस्थाने ध्यायत्युपासिवद्भजतिरप्यत्र विशेषकतया प्रयुक्तः ।

पुंसूक्तभगवद्गीते प्रमाणतमसंमते ।
न मिथो बाधमर्हेतां नैकार्थ्ये स्मृत्यनादरः ॥ ३१४ ॥

ननु " भक्त्या मामभिजानाति " इत्यादौ भक्तिसाध्येन ज्ञानेन परप्राप्तिर्गीता ; मैवम् ; तत्रापि " ततो मां विशते " इति भक्तेरेव प्राप्तिहेतुत्वेन परामर्शात् ; अन्यथा ' ततः ' इत्यस्य नैरर्थ्यात् । अतो " भक्त्या प्रवेष्टुम् " इत्युक्त्यैकार्थ्यम् । ननूपात्तश्रुतिस्मृतिस्वारस्यात् वेदनानुवचनयज्ञादिनिरपेक्षा भक्तिरेव मुक्तिसाधनमस्तु ; ततश्च न कर्मविचारवृत्तत्वं सिध्येदित्यत्राह—**एवंरूपाया इति** ; सुकृतसापेक्षध्यानादिभक्त्यन्तपर्वविशेषवत्तया श्रुतिस्मृतिसूत्रवाक्यसिद्धाया इत्यर्थः । श्रुतिसूत्रयोर्विविदिषाविषयत्वं प्रकरणतोऽर्थतश्च प्रत्यूढमित्यभिप्रायेण **ध्रुवानुस्मृते**रित्युक्तम् । **आभिधास्यते ;** सूत्रकृतास्माभिश्च समर्थयिष्यत इति भावः । " विविदिषन्ति " इत्यस्य संनिधौ " मनसैवानुद्रष्टव्यम् " इति विशदवेदनं विहितम् । " एतमेव विदित्वा मुनिर्भवति " इति स्तुतम् । अतो विधिस्तुतिविषयस्यैव वेदनस्यात्र विध्यन्तराकाङ्क्षा, न तु तदुभयरहिताया विविदिषायाः । विविदिषासाधनत्वेन विधानं च दुर्वचम् । न हि ' यागेन स्वर्गं जिगमिषति ' इत्युक्ते यागस्य जिगमिषासाधनत्वं स्यात् ; इह च वेदनेच्छाविरहे विविदिषाकामत्वस्यासिद्धिः; तत्संभवे तदुपायानपेक्षणम् ; वेदनेच्छया च विविदिषाकामना ; तया यज्ञाद्यनुष्ठानम् ; तेन विविदिषोत्पत्तिरिति चक्रकं स्यात् । अत्र पर्वसंकोचेनात्माश्रयमन्योन्याश्रयं च केचिदूचुः । न चात्राज्ञातसुकृतनीतिः, सावधानकृच्छ्रसाध्यत्वाद्यज्ञादेः । अतः 'असिना जिघांसति' इत्यादिष्विवानुपपत्त्या नेच्छासाधनत्वेनान्वयः ।

साध्येच्छया विना क्वापि साधनेच्छा न सिध्यति ।
अतो विविदिषार्थत्वायोगाद्विद्यर्थता त्विह ॥ ३१५ ॥
अपवर्गाभिलाषात्तत्साधनेच्छापि सिध्यति ।
अतो वेदनकामस्य युक्तं तत्साधने विधिः ॥ ३१६ ॥

51

भक्तिरत्र फलत्वेन प्रकृत्या परिमृश्यते ।
अधिकारतया ख्याप्या तदिच्छा प्रत्ययेन तु ॥ ३१७ ॥

नन्वदृष्टस्य सांसारिकसर्वकार्यहेतुत्वमेवैष्टव्यम्, अन्यथा विषमसुखदुःखादिहेतुभूतविचित्रेच्छोत्पत्तेः कदाचित्तदनुत्पत्तेश्चायोगात्; अत इच्छामात्रस्य साध्यत्वे वेदनेच्छाया अपि तथात्वात् तत्खण्डनं सर्वतन्त्रविरुद्धं स्यात् । अत्रैवं प्रत्युक्तं श्रुतप्रकाशिकायाम्—"भोगादृष्टोद्बोधितपूर्ववासनासचिवाद्विषयवैलक्षण्यज्ञानादिच्छोत्पत्त्युपपत्तेः" इति ।

भोगार्थेन ह्यदृष्टेन पुंभिरप्रार्थितान्यपि ।
अन्तरस्थानि कार्याणि स्युः फलप्रदबुद्धितः ॥ ३१८ ॥

तदिह भक्तिरूपब्रह्मवेदनकामः शान्त्यादिसहितैर्यज्ञादिभिस्तद्भावयेदिति प्रयोगविधिः । ननु भक्त्यर्थोपायविधावपि त्वदुक्तचक्रकादिप्रसङ्गः स्यात् । न स्यात्; भक्तेरुपचयमनुवृत्तिं चापेक्ष्य तद्विधानात् । वेदनसाधनविधावपि न विरोधः, सामान्यतो विदितेऽपि विशेषतो बुभुत्सया प्रवृत्तेः । न च विशेषेऽपि विदिताविदितविकल्पानुपपत्तिरिति वाच्यम्, तवापि बुभुत्साप्रश्नादिघटिते वादादौ प्रवृत्तेः; अन्यथा पामरपरीक्षकविरोधात्; अथैवमुत्पन्नविविदिषस्य तदनुवृत्तिकामनया तदुपायविधिरित्युच्येत, तत्रापि फलवैषम्याभावात् तदन्वारोहात् परोक्तवेदनस्य प्रागेव निरस्तत्वात् । स्वोक्तब्रह्माकारविशिष्टवेदनेच्छानुवृत्त्यै यावज्जीवं कर्मणोऽनुष्ठेयत्वमाह—**यद्यपीति** । परोक्तविविदिषामात्रसाधनत्वे त्वन्वारोह इति पक्षे तु विविदिषानुवृत्त्या प्रत्युत्तरं कथंचिन्नेयम् । **तस्यैव**; विविदिषागोचरस्यैव । न ह्येतद्वेदनं यागादिवदपूर्वादिवद्वा सकृदुत्पन्नं सान्तरं वा साधनमित्यभिप्रायेण ध्यानरूपत्वोक्तिः । **अहरहरि**त्यादिकं निरन्तरस्याप्येकाहसाध्यत्वं दर्शपूर्णमासादिवद्दिवसान्तरितसाध्यत्वं च व्यवच्छिनत्ति । आप्रयाणादनुवृत्तिवचनं संवत्सराद्यवधिकप्रतिदिनकर्तव्यत्वव्युदासार्थम् । **अभ्यासाधेयातिशयस्ये**त्यनेन दृष्टोपकारश्चास्तीति व्यज्यते । **तदुत्पत्तये**; अनुवृत्तेरिष्टतया यज्ञादिसाध्यत्वेनाभिमतविविदिषोत्पत्तय इत्यर्थः । **सर्वाणी**त्येतद्यथार्हं विभाज्यम् । **यावज्जीवमि**त्यनेन जन्मान्तरशतेत्यादेः प्रागुक्तस्योपालम्भः । विविदिषायां जातायामपि मध्ये कर्मणां त्यागो न युक्तः, विविदिषाविच्छेदे वेदनविच्छेदप्रसङ्गात् । न हि सकृदुत्पन्नया विविदिषया वेदनानुवृत्तिः सिध्येत् सकृद्बुभुक्षयेव भोज-

नानुवृत्तिः । प्राचीनसुकृतभूम्नानुवृत्तिसंभवेऽपि पाक्षिकविघ्नशान्त्यै प्रवर्तितव्यमिति भावः । पूर्वं वेदनस्य ध्यानोपासनादिरूपत्वे सूत्रं दर्शितम्; अथाहरहराप्रयाणादनुवर्तनीयत्वे तद्वदेव तदङ्गकर्मानुवृत्तौ च सूत्राणि सन्तीत्याह—**वक्ष्यति चेति**। सूत्रैरेव तत्तद्विषयवाक्यान्यपि सूच्यन्ते। एतेन स्वोक्तानभ्युपगमे सूत्रादिविरोधो दृढीकृतः। "आप्रयाणात्तत्रापि हि दृष्टम्" इत्यनेनैव कर्मणो यावदायुरनुष्ठेयत्वं सिद्धम्, "स खल्वेवं वर्तयन् यावदायुषम्" इति वाक्यस्य "दृष्टम्" इत्यनेन विवक्षितत्वात्। तत्र च "कुटुम्बे शुचौ देशे" इत्याद्युक्तधर्मानुवृत्तेः "एवं वर्तयन्" इत्यत्रानूदितत्वात्। "यावज्जीवमग्निहोत्रं जुहोति" इति नियतस्यापि विद्याङ्गत्वज्ञापनाय अग्निहोत्रादिसूत्रोपादानम्। "विहितत्वाच्चाश्रमकर्मापि" इत्याश्रमाङ्गतयोक्तस्य कथं विद्यार्थत्वमित्यत्र विनियोगपृथक्त्वव्यञ्जनाय "सहकारित्वेन च" इति सूत्रग्रहणम्। आदिशब्देन "सर्वथापि त एवोभयलिङ्गात्" इति कर्मणां विद्याश्रमाङ्गत्वे तन्त्रानुष्ठानसूचकसूत्रसंग्रहः।

अथ "विरोधादप्रमाणत्वात्" इत्यादिपूर्वपक्षहेतून् सूत्रकाराभिप्रायविदां वचसापि परिहरति—**वाक्येति**। एवकारेण शमादेर्यज्ञादेश्च विरोधाभावः स्वोक्तसंवादश्च ख्याप्यते। अथ वा न साधनचतुष्टयेन, न च विवेकादिष्वन्यतमेन कर्ममात्रेण शमादिमात्रेण चेत्यर्थः।

> निषिद्धकाम्यव्यर्थेभ्यो निवृत्तस्य शमादिभिः ।
> स्वाश्रमोचितविद्याङ्गप्रवृत्तिर्न विरुध्यते ॥ ३१९ ॥

अविरोधेन संभूय साधनत्वव्यक्त्यै वाक्यमुपादत्ते—**तल्लब्धिरिति**। अत्र तच्छब्दार्थो **ध्रुवानुस्मृतेरित्यनेन** दर्शितः। "उपासनं स्याद् ध्रुवानुस्मृतिः" इति तत्र प्रकृतं हि परामृश्यते। विवेकादीनां सप्तानामेकस्मिन् कार्येऽन्योन्यसापेक्षत्वरूपेणेतरेतरयोगेन समप्रवृत्तिनिवृत्तिरूपाणामाश्रमभेदेन व्यवस्था शक्येत्यपि कतिपयशङ्का च व्युदस्ता। **संभवात्**; एकत्र योग्यतया विरोधप्रसङ्गाभावात्। **निर्वचनात्**; अतीन्द्रियेऽर्थे निश्चायकमानतया निष्कृष्टाद्वचनात्; युक्तिसहितादागमादिति यावत्। इह विद्यायाः कर्मजन्यत्वसिद्ध्यर्थतयोपात्ताः के विवेकादयः? कथं च तेषामविरोधः? इत्यत्र वाक्यकारेणैव व्याख्यातत्वमाह—**विवेकादीनामिति**। **स्वरूपं च**; उद्दिष्टानां मिथो व्यावर्तक-

रूपं चेत्यर्थः। **जातिदुष्टं** लशुनादि। **आश्रयदुष्टं** शूद्रान्नादि। **निमित्तदुष्टं** केशाद्युपहतम्। तादृशदोषराहित्येनाशुद्धेभ्यो विभक्तादन्नात् सेन्द्रियस्य देहस्य रजस्तमोऽभिभवरहितसत्त्वोन्मेषापादनेन शुद्धितः पृथक्करणं विवेक इति। प्रदर्शकं वाक्यमाह— **जातीति**। **अत्र निर्वचनमिति** भाष्योक्तिः। **आहारशुद्धौ सत्त्वशुद्धिरिति** निर्वचने सत्त्वमन्तःकरणं सत्त्वगुणो वा। तस्य शोधनीयसर्वोपलक्षणतया वाक्ये कायोक्तिः। सापि करणवर्गोपलक्षिका। "आयुःसत्त्व—" इत्यादिभिः शुद्धाशुद्धाहारश्च गीतः। विमोकशब्दस्यात्र "कामः क्रोधस्तथा लोभः" इत्याद्युक्तत्याज्यवर्गानुपश्लेषपरतया **कामानभिष्वङ्ग** इति मूलघातोक्तिरित्यभिप्रायः। कामोऽत्र तीव्रतमसङ्गजन्यः, "सङ्गात् संजायते कामः" इत्युक्तेः। तेनाभिष्वङ्गोऽनुवृत्तदृढग्रहणम्; तदभावे "कामात् क्रोधोऽभिजायते" इत्याद्युक्तपरंपरानिवृत्तिः। "शान्त उपासीत" इत्यत्र शान्तशब्दः करणव्यापारनिवृत्तिमुखेन कामादिराहित्यपरः। **आरम्बणम्**; योगमारुरुक्षोश्चित्तालम्बनं शुभाश्रयरूपम्। विवरणे तु—"ज्ञानालम्बनमुपास्यम्" इत्युक्तम्। तस्य संशीलनम् अनुकूलतया शीलनम्। **पुनः पुनः** इत्येतदङ्गप्रकरणात् "व्यापृतेनापि मनसा" इत्यादिस्मृत्या चोत्थानकाले योज्यम्। अत एव नात्माश्रयशङ्का। इदं च योगानुगुणवासनाप्रचयार्थं कषायापाकरणार्थं च। "बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिः" इति श्रौतनिर्वचनस्यास्पष्टार्थतया तदुपबृंहणं दर्शितमित्यभिप्रायेण स्मार्तोक्तिः। अत्र भाष्यकारो ब्रह्मनन्दिवाक्यव्याख्याता द्रमिडाचार्यः। तेनान्येषु श्रुतिरुदाहृता; अत्र तु स्मृतिः। अथ वान्यत्र वाक्यकारेणैव श्रुतिरुदाहृता; अत्र तु भाष्यकारेणैव स्मृतिरिति। यद्यपि "यं यं वापि स्मरन्" इति प्रक्रमात् "सदा" इत्यादिकं सामान्यं, तथापि "तस्मात्सर्वेषु कालेषु मामनुस्मर" इत्युत्तरवाक्यानुसारेण प्रकृतार्थत्वात्तद्ग्रहः। पञ्चमहायज्ञोपादानं "गृहस्थोऽपि विमुच्यते" इति स्मृतिसूचनार्थम्। आदिशब्देनाश्रमान्तरधर्माणामपि संग्रहः। यद्यपि काम्ये सकलाङ्गोपसंहारः प्राप्तः, तथाप्यत्र वचनाद्यथाशक्त्यनुष्ठानं पर्याप्तमित्यभिप्रायेण **शक्तित** इत्युक्तम्। "तद्धि कुर्वन् यथाशक्ति प्राप्नोति परमां गतिम्" इति हि स्मर्यते। "क्रियावानेष ब्रह्मविदां वरिष्ठः" इत्यत्र सन्प्रयोगाभावेन कर्मणां विद्यान्वयस्फौट्यात् "विविदिषन्ति" इत्येतदपि नियमितम्। इदं च वाक्यं क्रियाया अङ्गत्वेन विद्यापौष्कल्यहेतुत्वपरम्; न तु

निष्क्रियब्रह्मवित्सद्भावसूचकम्, यावज्जीवं क्रियानुवृत्तेरुक्तत्वात्। मत्वर्थीयस्य भूमपरतया विधुरादिब्रह्मविद्यावृत्तिपरं वा। तेषां हि वर्णधर्ममात्रयोगित्वादवरत्वम् "अतस्त्वितरज्ज्यायो लिङ्गाच्च" इति सूत्रसिद्धम्। अत्र "मन्त्रेषु कर्माणि" इत्यारभ्य "तान्याचरत नियतं सत्यकामाः" इति श्रुतिरप्यनुसंधेया। क्रियाशब्दस्य चित्तसमाधानादिमात्रव्यावृत्त्यै **तमेतमित्याद्युपात्तम्।** **अनाशकेन**; अनशनेन। अत्र गोबलीवर्दन्यायात्तपःशब्दसंकोचः। यद्वा नाशकादन्येनेति; यज्ञाद्यपि भोगार्थं चेत् संसारात्मकनाशप्रदमेव श्रुत्यादिसिद्धम्। भूतहितं यथार्थं च वाक्यं **सत्यम्**। **आर्जवम्**; करणत्रयस्यैकरूप्यम्। **दया**; स्वार्थनिरपेक्षा परदुःखनिराचिकीर्षा। **दानम्**; न्यायसिद्धद्रव्यस्य यथाविधि पात्रसात्करणम्। तेन लोभनिवृत्तिर्व्यज्यते। "दैप् शोधने" इति धातौ स्वपक्षादिशोधनं वा। "दो अवखण्डने" इत्यत्र पराहंकारखण्डनं वा, "निगृह्णीयाद्यथाशक्ति देवतागुरुनिन्दकान्" इति स्मृतेः; "न विगृह्य कथां कुर्यात्" इत्यस्य कामकारविषयत्वात्। अशास्त्रीयप्राणिपीडावर्जनमत्र**ाहिंसा**, "अहिंसन् सर्वभूतान्यन्यत्र तीर्थेभ्यः" इति स्थापनात्। **अभिध्या**; परप्रतिकूलचिन्ता; अभिचारादौ ह्यभिः प्रातिकूल्यार्थः; परकृतद्रोहे निरन्तरस्मृतिर्वा, वितथाभिनिवेशो वा, परस्वे ग्राह्यत्वधीर्वा; तन्निवृत्तिः **अनभिध्या**। एवं कतिपयोपादानमार्जवदयादिसहपठितानामन्येषामप्युपलक्षणम्। **इत्यादी**त्यनेन "अमानित्वमदम्भित्वम्" "दया सर्वेषु भूतेषु" "क्षान्तिरनसूया" इत्यादेः संग्रहः। अनवसादोऽर्थात् सिध्येदिति कृत्वा सहेतुकं तत्प्रतियोगिस्वरूपविषयं वाक्यमुपादत्ते—**देश इति**। शोकनिमित्तं वस्तु **शोकवस्तु**; शोचत्यनेनेति करणव्युत्पत्त्या वा शोकशब्दः। आदिशब्दो भीतिहेतुपरः; भूतभाव्यनिष्टगोचरधीरूपे दुःखे शोकभये। **वैगुण्यादनुस्मृतेश्चे**त्यनयोः **मनसोऽभास्वरत्वमि**त्यनेनान्वयः। **अभास्वरत्वम्**; भास्वरत्वाभावः, तद्विरोधि वा। तज्जनितं तदभास्वरत्वम्। तत्स्वरूपाभिव्यक्त्यै तद्विवरणवाक्यस्याकाङ्क्षायां मध्ये **तज्जं दैन्यमिति** वाक्यान्तरम्। तस्यां जातं तस्मिन्मनसि वा जातमभास्वरत्वं दैन्यम्; उपयुक्तप्रकाशनाशक्तत्वमित्यर्थः। यद्वा मनसो यदभास्वरत्वं, यच्च तज्जं दैन्यं तदुभयमवसाद इति योज्यम्। **तज्जम्**; तादृशदयाविशेषाज्जातमित्यर्थः। अस्ति हि पुंसां परदुःखदुःखित्वादि भास्वरत्वविरोधि मनसो दैन्यम्; तज्जं च शोकादिकमिति वा नेयम्। भास्वरत्वमिह प्रकाशकत्वम्; तदभावः।

" तज्जं च दैन्यमवसादः " इत्यत्र **तद्विपर्ययोऽनवसाद** इति वाक्यशेषो भाष्योक्तः । वाक्ये तु शिष्याणामूहशक्तिसंपत्त्यै तदनुक्तिः । **बलहीनेन** ; " समदुःखसुखं धीरम् " इत्युक्तमनोबलरहितेनेत्यर्थः । **तद्विपर्ययजा** ; देशादिगुणैर्भूतभाविसुखहेतुधिया बन्धुसुखेन च जातेत्यर्थः । उद्धर्षोक्तावपि पूर्ववत्तद्विपर्ययोऽनुद्धर्ष इत्यूह्यत्वाद्वाक्यानुक्तं भाष्ये दर्शितम् । "यदृच्छालाभसंतुष्टः" "सततं योगी" "स्वाध्यायशौचसंतोष" इत्यादिविरोधमाशङ्क्याह—**अतिसंतोष इति** । असंतोषवदतिसंतोषोऽपि विषयान्तरेष्वपि प्रवर्तकतया विरोधीत्यर्थः । इदं च 'उद्धर्षः' इत्युपसर्गेण सूचितम् । "ऐश्वर्यमदमत्तो हि" इत्यादिषु तत्तद्वृत्तान्तेषु चास्य विरोधित्वं प्रसिद्धम् । **निर्वचनमपी**त्यत्रापिशब्दः संभवसमुच्चयार्थः पूर्वनिर्वचनेष्वपि भाव्यः । प्रकृतं कर्मणामुपयोगं निवृत्त्यंशेन तेषामविरोधेन निवेशनं च सूत्रवाक्याभिप्रेतन्यायसमाहारसिद्धं निगमयति—**एवमिति** । एवकारेण परानिष्टत्वं द्योत्यते । तत्त्वमस्यादिवाक्यानि वा व्यवच्छिद्यन्ते । तदिह कर्मणोऽनुपयोगविरोधप्रमाणाभावा निरस्ताः ।

अथ मृषावादिना समुच्चयवादिभ्यां चान्यथा व्याख्याता श्रुतिरस्मदुक्तप्रकारमेव व्यनक्तीत्याह—**तथेति** । **चो**ऽवधारणे ; श्रुत्यन्तरं च तथेति वान्वयः । **अन्तर-शब्दः** सन्प्रत्ययरहितत्वेन स्फुटार्थत्वात् अङ्गानामङ्गिनिष्पादने द्वारप्रदर्शनात् कर्मणां विध्यन्तानां कण्ठोक्तवेदनकरणकफलभावनानिष्ठतया परमपुरुषार्थविश्रान्तिबोधनाच्च प्रागुक्तवाक्याद्विशेषं व्यनक्ति । **विद्यां चे**त्यादेः परविद्यां तदङ्गभूतां कर्मरूपाविद्यां चानुष्ठेयत्वेन शास्त्रतो यो वेत्तीत्यर्थः । चकारावत्रोक्तसमुच्चयार्थौ । तयोरनुक्तद्योतकत्वे तु तत्तदितिकर्तव्यताविशेष्ययोरेव विद्याफलयोर्निवर्त्ययोश्च प्राप्त्युपायविरोधिनोर्ग्रहणम् । **उभयं सहे**त्यत्राङ्गाङ्गितया तृतीयाध्याये साधयिष्यमाणयोरनुष्ठेययोर्बुद्ध्यारोहणे साहित्यमभिप्रेतम् ; न तु समकालतयोपादेयत्वे । वेद्यत्वे हि सहभाव उच्यते ; न तु सहिततया वेदनम् । न ह्युत्पत्तिदशायां विरोधिनिरासदशायां च विद्याकर्मणोः सहत्वसंभवः । अत्र " अन्धं तमः प्रविशन्ति " इत्यादिना " ततो भूय इव ते तमः " इत्यादिना च प्रत्येकनिन्दापरत्वम् । चकारः सहशब्दश्च समसमुच्चयस्थापकाविति न भ्रमितव्यम् , तेषामन्यथासिद्धत्वात् । " य उ विद्यायां रताः " इति कर्मानादरेण विद्योत्पत्त्यर्थोत्साहवन्त इत्यर्थः । कर्मनिरतानां विद्यानिरपेक्षकर्मस्वरूपं तावन्निष्पद्यत एव ; न तु तावन्मात्रेण

मुक्तिः ; विद्यानिरतानां हेत्वभावाद्विद्यैव न संभवति, कुतस्तरां मुक्तिरिति भूयःशब्दाभिप्रायः । अविद्याशब्दस्यात्र कर्मविषयत्वं प्रकरणेन स्थापयति—**अत्रेति** । न तु सर्वत्र ; "अविद्यायामन्तरे वर्तमानाः" "क्षरं त्वविद्या" "अनात्मन्यात्मबुद्धिर्या" इत्यादिष्वर्थान्तरे प्रयोगात् । इह तु "आत्मन्येवानुपश्यति" "कुर्वन्नेवेह कर्माणि" इत्यादिना विद्या तदङ्गं कर्म च प्रकृतम् ; तदेवात्राविद्याशब्देन विद्योपयोगज्ञापनार्थमनूदितम् । परव्याख्यायां व्याख्यातौ संशयविपर्ययौ छेत्तुं पदार्थवाक्यार्थौ स्फुटयति—**अविद्ययेति** । पापस्यानर्थहेतुतया अवयवशक्त्या गौण्या वा मृत्युशब्दबोध्यत्वाय यज्ञादेर्विविदिषोत्पत्तिविरोधिनिवर्तकत्वव्युदासाय चोदितज्ञाननिवर्त्यतया श्रुतिस्मृतिशतसिद्धप्राप्तिविरोधिव्यावृत्त्यै च ज्ञानोत्पत्तिविरोधित्वोक्तिः । यादवप्रकाशीयनिर्वाहोऽप्येतेन निरस्तः । यद्यत्र मृत्युतरणं मुक्तिरेव कथं विद्ययान्यत्साध्यं स्यात् ? क्त्वाश्रुतिश्च न घटते, स्वापेक्षया स्वस्य पूर्वत्वायोगात् ।

धीसंकोचनिवृत्तिश्चेदविद्याख्येन कर्मणा ।
धीविकासोऽपि सैवेति न साध्यान्तरसंभवः ॥ ३२० ॥
प्रतिबन्धनिरासश्च साध्यते चेदविद्यया ।
अमृताप्तिः स्वतःसिध्येन्नादृष्टान्तरकाङ्क्षिणी ॥ ३२१ ॥
स्वतः स्वानुभवाधानप्रवणः प्राणिनां प्रभुः ।
प्रशान्तप्रतिबन्धानां निरपेक्षं हि कारणम् ॥ ३२२ ॥

मृत्युशब्दस्य साधारण्यसंभवेऽपि "तमेव विदित्वातिमृत्युमेति" इत्यादिस्पष्टार्थबहुश्रुतिस्मृतिबलेन विद्यानिवर्त्यप्राप्तिविरोधिविषयत्वासंभवात्, तत्र च "नान्यः पन्थाः" इति साधनान्तरप्रतिषेधेन कर्मणो विमुक्तिसाधनत्वेन समुच्चेतव्यत्वायोगात् कर्मणः श्रुत्यादिभिरेव विद्यासाधनत्वस्थापनादिहोपायविरोधिनि कर्मण्येव वृत्तिः । विद्याया इव कर्मण उत्तराघविरोधित्वाभावात् प्राचीनग्रहणम् । 'तीर्त्वा' इत्यस्य स्वरसार्थं त्यक्त्वा 'प्राप्य स्थितः' इति परोक्तं क्लिष्टत्वादध्याहाराच्चायुक्तम् । यज्ञादिसत्कर्मणां विविदिषाविरोधितया मृत्युशब्दवाच्यं कर्म तीर्त्वेति गमनिकापि विविदिषार्थविनियोगप्रतिषेधात्प्रत्युक्ता । "एतं सेतुम्" इत्यादिषु गत्यभावात्तरतेः प्राप्तिवचनत्वमित्यभिप्रायेण **अपोह्येत्युक्तम्** । विद्याशब्दस्य शास्त्रादिष्वपि प्रयोगादिह प्रकृतब्रह्मवेदनविषयत्वं

व्यनक्ति—**ज्ञानेनेति**। "एतदमृतम्" "एतदभयम्" "एतद्ब्रह्म" "ब्रह्मविदाप्नोति परम्" इत्यादिश्रुत्यनुसारेणाह—**अमृतं ब्रह्मेति**। ननु पूर्वम् 'अविद्यानिवृत्तिरेव मोक्षः, सा च ब्रह्मविज्ञानादेव भवति' इति परोक्तमभ्युपगतम्, इह तु "ब्रह्मविदाप्नोति" इत्युक्तयास्यां श्रुतौ साध्यान्तरं स्वीकृतमिति भाति; मैवम्—अविद्यानिवृत्तिशब्देन ज्ञानसंकोचनिवृत्तेर्विवक्षितत्वेन भावान्तराभावनयेन सैव ब्रह्मप्राप्तिरिति समानार्थत्वात् मोक्षशब्दस्वारस्यानुरोधात् "अविद्या कर्मसंज्ञा" इत्युक्तबन्धककर्मनिवृत्तिविवक्षायां तु तावन्मात्रमेवोपासनसाध्यम्। धीसंकोचहेतुनिवृत्तौ सेतुभङ्गस्रोतःप्रवृत्तिनीत्या तादृशेश्वरसंकल्पेन स्वतः प्राप्तो धीविकासः। अतः "विद्ययामृतमश्नुते" इत्यनेन प्रतिबन्धनिवृत्तौ विद्यातः सिद्धायां स्वतः सेत्स्यन्ती ब्रह्मानुभूतिरुच्यत इति न पूर्वापरविरोधः। ब्रह्मप्राप्तेश्च परमपुरुषार्थतया काम्यमानत्वेऽपि तत्प्रतिबन्धकनिवृत्त्युपायस्य काम्यवर्गात्पृथगेव व्यपदेशः।

प्राप्तितत्साधनानां हि प्रतिबन्धनिवर्तकाः।
निवृत्तिधर्माः सर्वेऽपि नैमित्तिकपदे स्थिताः॥ ३२३॥

अत्र करणविभक्त्यन्तकर्मज्ञानशब्दाभ्यां "कषायपक्तिः कर्माणि ज्ञानं तु परमा गतिः। कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तते" इति स्पष्टार्थोपबृंहणार्थः सूच्यते। तेन च मृत्युशब्दस्यात्रोपायविरोधिविषयत्वं वेदानुवचनादीनां "विविदिषन्ति" इत्यत्र प्रकृत्यर्थेनान्वयः समुच्चयवादनिरासश्च सिध्येत्। कषायस्य पापस्य तज्जन्यरागादेर्वा पक्तिः; पच्यतेऽनेनेति पाकनिमित्तम्। गम्यतेऽनेनेति गतिः। ततो ज्ञानम्; न तु विविदिषा, नापि मुक्तिः प्रवर्तते; उचितविषये प्रकृष्टवृत्तिमद्भवतीत्यर्थः।

आस्तां प्रकरणम्। अस्मिन्नेव कर्मणां विद्याङ्गत्वे साधारणानामविद्यादिशब्दानामस्मदुक्तपदार्थनियमे च निर्बाधः स्वारस्यप्राप्तो वस्तुसामर्थ्यरूपो हेतुर्लक्ष्य इत्यभिप्रायेणाह—**मृत्युतरण इति**। **प्रतीता** इति हेतुगर्भम्। **विद्येतरत्** इत्येतदत्रत्याविद्याशब्दनिरुक्तिः। अत्राश्रमादिशब्दनयात्तदन्यवृत्तौ प्रकरणस्थासन्नविषयत्वं युक्तमित्यभिप्रायेण **विहितं कर्मे**त्युक्तम्; न त्वविहितं कर्म, नापि ब्रह्मज्ञानादिकमिति पदद्वयान्वितावधारणाभिप्रायः। एतेन "कुर्वन्नेवेह कर्माणि" इत्यत्र कर्मशब्दः साधारणोऽप्युचितविषये नियमितः; न हि काम्यादिकं यावज्जीवमनुष्ठेयम्। उक्तश्रुतेरुपबृंहणेन स्वोक्तौ पदार्थवाक्यार्थौ स्थिरीकृताविति याह—**यथोक्तमिति**। **ज्ञानव्यपाश्रयः**;

आगमोत्थज्ञाने प्रतिष्ठितः। **ब्रह्मविद्यामधिष्ठाय**—विवेकादिजन्यां परविद्यां भक्तिरूपापन्नां निष्पाद्यत्वेनाभिसन्धायेत्यर्थः। "आगमोत्थं विवेकाच्च" इति प्रस्तुतं ज्ञानद्वयमेव ह्यत्र स्पष्टीकृतम्। अत एव मृत्युशब्दस्यात्र विविदिषाविरोधित्वं चायुक्तम्; तस्याः साध्यत्वेनानुपादानात्। "ब्रह्मविद्यामधिष्ठाय" इत्यनेनैव विविदिषानिष्पत्तेरर्थसिद्धत्वाच्च। "तर्तुं मृत्युम्" इति प्रयोजनवचनेन "तीर्त्वा" इत्यस्य प्राप्त्यर्थत्व शङ्का च निरस्ता। उपबृंहणीयश्रौतपदसूचकाविद्याशब्दोक्तमेव च यज्ञशब्देन व्यञ्जितम्। **यज्ञान्** इयाज—चकारेत्यर्थः। ननु धर्मेण पापस्यैवापनोद्यत्वं श्रुतम्, अत्र तु प्राचीनं कर्मेत्यविशेषेण पुण्यस्यापि तरणं कथं भाषितमित्यत्र वक्ष्यमाणश्रुतावपनोद्यतयोक्तं शोधयति—**ज्ञानेति**। पुण्यस्य कथं धर्मापनोद्यत्वं, पापशब्दवाच्यत्वं चेत्यत्राह—**ब्रह्मेति**। **उभयोः** इति विगीताविगीतसंवलितत्वोक्तिर्निदर्शनपरा। अत्र **अभिधेयत्वम्**—बोध्यत्वम्। "लक्षयेत्" इति विवरणोक्तिर्वैभवात्। अयं भावः—"स एव धर्मःसोऽधर्मः तं तं प्रति नरं भवेत्" इत्यादि स्मर्यते। अतः पुण्याभिसन्धिप्रसिद्धमपि मुमुक्षुदशायां पापायते।

मुमुक्षुत्वामुमुक्षुत्वदशाभेदेन कर्मिणः।
कर्मैकं पापपुण्यत्वे साध्यैक्येऽपि समश्नुते॥ ३२४॥
श्येनादेश्चोदितस्यैव द्वैरूप्यं द्विविधश्रुतेः।
एकस्यैवैकदैवास्ति कालभेदे तु किं पुनः॥ ३२५॥

प्रकृष्टसुखरूपस्वर्गैकसाधनं पुण्यमपि ह्यन्तरायनिरयशब्दनिन्दितस्वफलसङ्गार्थसिद्ध्यै निरुपाधिकसुखरूपब्रह्मज्ञानं प्रतिरुणद्धि; अतः प्रवृत्तिधर्मस्य निवृत्तिधर्मेणापनोद्यत्वं युज्यते। पापलक्षणं च कर्तुरनिष्टफलसाधनत्वेन शास्त्रवेद्यत्वम्; "नैतङ्सेतुमहोरात्रे तरतो न जरा न मृत्युर्न शोको न सुकृतं न दुष्कृतम्। सर्वे पाप्मानोऽतो निवर्तन्ते" इति श्रुतौ च निगमनस्थस्य पाप्मशब्दस्य शोकादिषु लाक्षणिकत्वेऽपि सुकृतदुष्कृतयोर्निमित्तसम्भवान्मुख्यत्वमेव ग्राह्यम्। छत्रिन्यायेन सर्वत्र लक्षणावृत्त्यैक्यपक्षेऽपि तारतम्यमस्ति। न च सुकृतदुष्कृतशब्दयोरिव दुष्कृतपाप्मशब्दयोरिह गोबलीवर्दन्यायात् पाप्मशब्दस्य दुष्कृतविशेषपरत्वं शङ्क्यम्; उभयोरपि व्यापित्वेन हयतुरङ्गशब्दयोरिव तदयोगात्, सर्वशब्दविशेषणवैयर्थ्यं च। "अपहतपाप्मा ह्येष ब्रह्मलोकः" इत्यनन्तरवाक्यं च प्रकृतसर्वहेयनिवृत्तिप्रख्यापने स्वरसम्। तदिह पूर्वापरपाप्मशब्दयोरसङ्कोचेन समानार्थत्वमेव

युक्तम्; एवं सति पुण्यविशेषे पापशब्दः प्रवृत्तिनिमित्तैक्यात् घटत इति। ननु रजस्तमसोर्ज्ञानविरोधित्वमिष्टम्; तत् किं पापेन सह समुच्चयतः, विकल्पतः, कारणान्तरेण वेति नियामकाभावात्पापस्य ज्ञानविरोधित्वं दुरवधारणम्; अतो दुःखसाधनत्वमेव तस्येत्यत्राह—**अस्येति**। शुद्धसत्त्वमिहाभिभूतरजस्तमस्कमुपयुक्तप्रकाशादिजनकं सत्त्वम्। ज्ञानोत्पत्तिदशायामपि पुंसां त्रैगुण्यानुवृत्त्या तदातनगुणान्तराभ्यां विशेषव्यक्त्यै विवृद्धिशब्दः। "कर्मवश्या गुणाः" इत्यादिभिः गुणानां तद्द्वारत्वसिद्धिः, पापस्य दुःखसाधनत्वं च नान्यव्यवच्छेदेनेति भावः। द्वयोरपि ज्ञानविरोधित्वे मानाभावे कथं द्वारद्वारित्व कल्पनमित्यत्र द्वारिणस्तावद्विरोधित्वे मानमाह—**पापस्येति**। "एष एव" इत्यादिश्रुतौ न तावत् "अधो निनीषति" इत्येतन्निरयादिनिनीषार्थम्; अत्रोन्निनीषायाः स्वर्गादिविषयत्वाभावात्। "यमेभ्यो लोकेभ्य उन्निनीषति" इत्यत्र स्वर्गादिसर्वलोकेभ्यो ह्युन्नयनं स्वरसतः प्रतीयते; अतोऽपवर्गप्रापणप्रतिपक्षभूताधोनयनार्थमिहासाधुकर्म तत्साधनविरुद्धमेव स्यात्; तत्साधनं चात्र "मामुपास्स्व" इत्यादि विहितम्। तस्य चोपक्रमे "यं त्वं मनुष्याय हिततमं मन्यसे" इति हिततमत्वमव्यवहितमोक्षोपायत्वं सिद्धम्। तदेवात्र सन्निधिबलात् साधारणेनापि साधुकर्मशब्देन गृह्यते तत्कारयितृत्वं च "ददामि बुद्धियोगं तम्" इत्यादिभिर्विशेषतोऽप्युक्तम्। तस्य चोत्पत्तिप्रतिबन्धकत्वेन विरुद्धं कर्म भगवद्वैमुख्यापादनं कर्म; तत्सांमुख्येऽधोगतिप्रसङ्गाभावात्। असाधुकर्मणश्चाधोगतिनिदानत्वम् "तानहं द्विषतः क्रूरान्" इत्यारभ्य "ततो यान्त्यधमां गतिम्" इत्यन्तेन स्फुटीकृतम्। यद्वा साधुकर्मशब्द इह प्रस्तुतोपायाकाङ्क्षिताङ्गपरः। न चात्र कर्मण उन्नयनशब्दोदितमुक्त्युपायत्वम् अद्वारकम्; श्रुत्यादिभिस्सद्वारकत्वस्थापनात्। अतो विद्याङ्गकर्मप्रतिकोटिस्थमसाधुकर्मात्र विद्योत्पत्तिविरुद्धमेव। किं च साध्वसाधुकर्मकारयितृत्वमिह न प्राचीनजीवकर्मनिरपेक्षम्; वैषम्यनैर्घृण्यप्रसङ्गात्। न च वायूदकादिवत् प्रेरकत्वम्; शास्त्रवैयर्थ्यादिप्रसङ्गात् बुद्धिप्रदानादिवचनविरोधाच्च। अतः "यमधो निनीषति" इति यद्वृत्तेन कस्यचिदनुवादोऽधोनिनीषाहेतुभूतपापकारित्वं व्यनक्ति। पूर्वपापे चोत्तरपापारम्भे ज्ञानलोपः तन्मूलविपरीतज्ञानं च द्वारम्। तथा चोपबृंहितम्—"यस्मै देवाः प्रयच्छन्ति" "पापं प्रज्ञां नाशयति" इत्यादिभिः। सर्वदेवेषु सर्वपापेषु च सामान्योक्तमपि प्रकृतेऽप्यकुण्ठितम्। विशेषतश्च गीयते—"क्षिपाम्यजस्रम्"

इत्यादि । अतः पापस्य ज्ञानोदयविरोधित्वं सिद्धम् । ननु श्रुतेन द्विविधेन पापेनैव ज्ञानं
निरुध्यताम् ; निवृत्तिधर्मेण चोत्पद्यताम्; अलमुभयत्र प्रकृतिगुणैर्द्वारीकृतैरित्यत्राह—**रज**
**इति** । '**सत्त्वस्य**' इत्युपादानमिह रजस्तमसोर्व्यतिरेकव्याप्त्या च ज्ञानहेतुत्वनिश्चयार्थं
साधुकर्मद्वारप्रदर्शनार्थं ज्ञानोत्पत्तिहेतुभूतशुद्धसत्त्वेत्युक्तस्थापनार्थं च । श्रुतिस्मृतिप्रमितान्य-
तरत्यागस्य सति गत्यन्तरे विकल्पस्य चायोगात् द्वारद्वारित्वमेवात्र युक्तमिति भावः । ननु
"रजसो लोभः" इत्यनेनान्यथाधीहेतुत्वमपि सिद्धम्, अप्राप्तविषयलोभस्य भ्रान्तिहेतु-
त्वात् ; "यया धर्ममधर्मं च" इत्यादिना तद्व्यक्तम् ; "नाभुक्तं क्षीयते कर्म" इत्यादि-
स्मृत्या कर्मफलभोगावसाने ज्ञानं साध्यतां, धर्मस्य च धृतिशब्दार्थसुखसाधनत्वमेव
प्राप्तमिति शङ्कापनुत्त्यै निष्कृतिशास्त्रविनियोगपृथक्त्वाभ्यां सिद्धं निरास्यनिरासकत्वभावं
निर्धारयन्नुक्तमर्थद्वयं निगमयति—**अत इति** । **निरसनीयम्**—अनन्तेषु पापेषु सन्त-
न्यमानेषु न कदाचिदपि भोगेन निश्शेषशान्त्यवसरः ; अतश्शास्त्रोक्तनिष्कृत्यैव तन्निरासः
कार्य इति भावः । तथाप्यपरिमितानां निष्कृतिरप्यशक्येत्यत्राह—**तदिति** । "स्वल्प-
मप्यस्य धर्मस्य" इत्यादिन्यायेन फलान्तरसङ्गरहितनिवृत्तिधर्ममाहात्म्यात्तन्निवर्तनं शक्य-
मित्याशयः । "य उ चैनमेवं वेद" इत्यादिषु शास्त्रार्थवेदने फलश्रुतिः प्रशंसार्था
परम्परया वा स्यात् अधिकारिभेदेन वा । अतः अनुष्ठानं प्रधानम् ; तत्परित्यागिनां तु
कारणाभावात् कार्याभाव इत्यभिप्रायेणोक्तम्—**अनुष्ठितेनेति** । उपात्तश्रुतिगतानाम-
विद्यादिशब्दानां स्वेष्टार्थत्वं, पापस्य भोगेन विनापि निवर्त्यत्वं च स्पष्टयन्तीं श्रुतिमुदा-
हरति—**तथेति** ; तत्र धर्मशब्दः प्रायश्चित्तमात्रविषयोऽप्यविशेषान्निवृत्तिधर्ममपि
गृह्णाति । "विज्ञानादानन्दो ब्रह्मयोनिः" इत्यादिना ब्रह्मविद्यासन्निधानात् । सहपठित-
दानादिषु प्रतीतानि द्विषद्वशीकरणफलान्तराण्यपि ब्रह्मविद्यानिष्पत्त्यनुगुणान्येव ।
अङ्गिफलं चात्र "भूयो न मृत्युमुपयाहि विद्वान्" इति प्रस्फुटम् । अतोऽत्र
निवृत्तिधर्मेण सांसारिकपुण्यपापयोः द्वयोरपि पापशब्दोक्तयोर्निवर्त्यत्वं सिध्येदिति ।
एतावता किमायातमित्यत्र तन्मूलमुपासनात्मकं ज्ञानमित्यनेनाभिप्रेतं कर्मसापेक्षत्वं
निरूढमित्याह—**तदिति** । तत्—उक्तश्रुतिस्मृतिसूत्रोपपत्तिसम्प्रदायबलात् । **एवम्**—
निष्कामकर्मणां ब्रह्मविद्याप्रतिबन्धनिरासकत्वप्रकारेण । अस्त्वेवं विचार्यस्योपासनस्य स्वाङ्ग-
कर्मापेक्षा । तद्विचारस्य कृत्स्नकर्मविचारापेक्षा कथमित्यत्र स्थापितमर्थं निगमनेन स्थिर-

यति—**अत इति** ; मुक्तिसाधनविद्याया निवृत्तिधर्मनैरपेक्ष्यायोगादित्यर्थः । **अपेक्षितकर्मस्वरूपज्ञानमि**त्यनेन वृद्धव्यवहारेण व्रीह्यादिवत्कर्ममीमांसया यज्ञादिपदार्थानां सेतिकर्तव्यताकानां विशेषतो वेदितव्यतया विधिविनियोज्यस्वरूपापेक्षिणि विनियोगे नागृहीतविशेषणन्यायतः स्वाङ्गसाध्यस्य फलसाधनतया तत्स्वरूपान्वितस्यैव बुभुत्सितत्वमचिन्तितेऽप्युपासने कर्मणश्चिन्तयितुं शक्यत्वं च सूच्यते । विद्यानङ्गकर्मनिन्दया विद्याप्ररोचनं च तादृशकर्मज्ञानापेक्षमित्यभिप्रायेण **केवल** इत्यादिकमुक्तम् । **अवसेयम्** ; साध्यमिति यावत् । **मीमांसा** अत्र विचारः । त्याज्योपादेयसहितोपासनशास्त्रार्थं विचारयतामवश्यंभाविनस्तदुभयस्वरूपनिश्चयस्य कर्ममीमांसासाध्यतयात्रापेक्षिता त्वदनिष्टा वृत्तत्वेन वक्तुं युक्तेत्यभिप्रायेण **सैवे**त्युक्तम् । अन्ततः कर्मपरीक्षासापेक्षा त्रापत्रयवृत्ततोक्तिश्चानेन निरस्ता । साधनचतुष्टयस्य वा व्युदास एवकारेणोपक्षिप्यते ।

## मूलभावप्रकाशिका

**केवल श्रवणेति** ; केवलशब्देन प्रीतिराहित्यमुच्यते । श्रुतौ प्रवचनशब्दो मननलक्षकः, मननसाध्यत्वात् प्रवचनस्य ; प्रसिद्धप्रवचनस्य मोक्षहेतुत्वाप्रसक्त्या निषेधानर्हत्वात् । मेधाशब्दो निदिध्यासनपरः । श्रुतशब्दः श्रवणपर इति भावः । **यमेवैष इति** ; एष परमात्मा यं वृणुते प्रार्थयते तेन पुंसा अयं परमात्मा प्राप्यो भवति । एष परमात्मा तस्य स्वां तनूं स्वस्वरूपं विग्रहं च विवृणुते प्रकाशयतीति "यमेवैषः" इति श्रुतिखण्डस्यार्थः । अनया श्रुत्या भवदभिमतं किं सिध्यतीत्याशङ्क्य परमात्मवरणीयतायाः परमात्मप्राप्तिहेतुत्वावगमात् परमात्मप्रीतिविषयत्वमन्तरेण परमात्मप्रार्थनीयत्वलक्षणवरणीयत्वं नास्तीति सिद्धम् । यस्य पुंसः परमात्मनि प्रीतिरस्ति तस्मिन्नेव पुंसि परमात्मप्रीतिर्युक्ता, सर्वेषां पुंसां स्वविषयप्रीतिमत्पुरुष एव प्रीतिदर्शनात् । ततश्च परमात्मनि प्रीतिर्मोक्षोपाय इति सिध्यति ; ध्यानस्य च मोक्षोपायत्वं सिद्धम् ; अतः शास्त्रद्वयैककण्ठयाय प्रीतिरूपं निदिध्यासनं मोक्षहेतुरित्याह—**प्रियतम एव हीत्यादिना** । **यथायं प्रियतम** इत्यनेन " तस्यैष आत्मा विवृणुते तनूं स्वाम् " इति श्रुत्यर्थोऽत्रोक्तो भवतीति द्रष्टव्यम् । यद्वा ' यथायं प्रियतमः ' इत्युत्तरग्रन्थशेषः । तस्मिन् पक्षे ' स्वयमेव भगवान्यतते ' इत्यस्याहमेव यत इत्यर्थः । **प्रयतत इति** ; ' यमेवैष वृणुते तेन लभ्यः ' इत्युक्तमिति पूर्वेणान्वयः । न केवलं परमात्मविषयप्रीतेर्मोक्षहेतुत्वस्य वरणीयत्वाक्षिप्तपरमात्मप्रि-

यतमत्वाक्षेपलाभमात्रं, गीतं च भगवतेत्याह—**भगवतैवोक्तमिति**। **सततयुक्तानाम्**; सततयोगमाशंसमानानाम्; मयि प्रीतिमतामिति यावत्; भजतां तेषां येनोपायेन मामुपयान्ति तादृशं बुद्धिलक्षणोपायं प्रीतिपूर्वकमहं ददामीत्यर्थः। 'सततयुक्तानाम्' इत्यनेनोपासकस्य भगवति प्रीतिर्दर्शिता, प्रीतिपूर्वकम्' इति भगवत्प्रीतिर्दर्शिता भवति। न च "आशंसायां भूतवच्च" इति क्तप्रत्ययः प्रयोक्त्राशंसायामेव दृष्टः; यथा 'देवश्चेद्वृष्टः, संपन्नाःशालयः' 'उपाध्यायश्चेदागतः, अधीतं व्याकरणम्' इत्यादाविति शङ्क्यम्, प्रयोक्त्राशंसायामेवेति नियमस्य वृत्तिग्रन्थादावदृष्टेः। **प्रियो हीति**; अत्यर्थम्; अत्यन्तमित्यर्थः। यतो ज्ञानिनोऽहमत्यन्तप्रीतिविषयोऽत एव मम तस्मिन् प्रीतिरित्यर्थः। **अत्यर्थप्रिया यस्येति**; विषयस्यात्यन्तानुकूलतयात्यन्तानुकूलं यस्य भगवज्ज्ञानं तस्य वरणीयत्वम्; अतस्तेनैव पुंसा परमात्मा लभ्य इति "यमेवैषः" इति गीतोपबृंहितश्रुत्योक्तं भवतीत्यर्थः। नन्वन्यत्र भक्तेरुपायत्वं प्रतीयते; कथमुच्यते प्रीतिरूपापन्नध्रुवानुस्मृतेरेवोपायत्वमित्याशङ्क्याह—**एवंरूपेति**। **उपासनपर्यायत्वादिति**; "सेवा भक्तिरुपास्तिः" इति नैघण्टुकोक्तेः "स्नेहपूर्वमनुध्यानं भक्तिरित्यभिधीयते" इति स्मरणाच्चेति भावः। **अत एवेति**; यतः,

> वेदनं ध्यानविश्रान्तं ध्यानं श्रान्तं ध्रुवस्मृतौ।
> सा च दृष्टित्वमभ्येति दृष्टिर्भक्तित्वमृच्छति॥

अत एव वेदनातिरिक्तोपायनिषेधकश्रुतीनां भक्तिव्यतिरिक्तोपायनिषेधकगीतावचनानां च प्रमाणतमत्वेन सर्वसंप्रतिपन्नानामैककण्ठ्यं सिध्यतीति भावः। **अतिमृत्युमेति**; मृत्युं संसारमत्येति, तरतीत्यर्थः। **अमृतः**; मुक्त इत्यर्थः। **अयनाय**; ईयते प्राप्यत इत्ययनं प्राप्यम्; मोक्ष इति यावत्। **प्रवेष्टुम्**; प्राप्तुमित्यर्थः। **पुरुषः स पर** इत्यस्य "यस्यान्तःस्थानि भूतानि येन सर्वमिदं ततम्" इत्येतदुत्तरार्धम्। नन्वस्त्वेवंरूपा ध्रुवानुस्मृतिर्मुक्त्युपायः; तावता भवतः किं सिद्धमित्यत्राह—**एवंरूपाया इति**। **यज्ञादिश्रुतेरिति**; "सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्" इति सूत्र इत्यर्थः। ननु कथं यज्ञादीनां ध्रुवानुस्मृतिहेतुत्वम्? "विविदिषन्ति यज्ञेन दानेन" इति यज्ञादेर्विविदिषान्वयस्यैव प्रतीतेरित्याशङ्क्याह—**यद्यपीति**। **विनियुज्यन्त इति**; विनियोगः प्रतीयत इत्यर्थः। औपगवादौ प्रत्ययार्थप्राधान्यदर्शनेऽपि सनन्ते 'अश्वेन जिगमिषति'

'असिना जिघांसति' इत्यादावश्वादेः प्रकृत्यर्थान्वयस्यैव दर्शनात्, 'ये प्रतितिष्ठासन्ति त एता रात्रीरुपेयुः' इति फलार्थकल्पितवाक्यश्रुतेः प्रकृत्यर्थप्रतिष्ठाया एव फलत्वप्रतीतिरिति मीमांसकव्यवहारात्, ज्योतिष्टोमादिविधिवाक्येषु कामनाविषयत्वेन श्रुतस्य स्वर्गादेः फलत्वदर्शनेन प्रकृतेऽपि सन्प्रत्ययवाच्येच्छाकर्मत्वेन श्रुतस्य वेदनस्यैव यज्ञादिफलत्वस्योचितत्वाच्चेहापि प्रकृत्यर्थवेदनान्वय एव यज्ञादेः प्रतीयते, सनन्तस्थले व्युत्पत्तिभेददर्शनादिति **यद्यपीत्यस्या**भिप्रायः। **ब्रह्मप्राप्तिसाधनत्वादिति**; वेदनस्यैव फलसाधनत्वात् तत्साधनत्वेनैव विविदिषाया गौणफलत्वस्येच्छाविषयत्वस्य च वक्तव्यत्वात् वेदनेच्छामन्तरेण तत्साधनविविदिषेच्छया कर्मानुष्ठानं नास्तीति सिद्धम्। वेदनेच्छायां च सत्यां सिद्धा विविदिषेति किमुद्दिश्य कर्मानुष्ठीयेत? अतो वेदनोत्पत्त्यर्थमेव कर्मानुष्ठेयम्। "विविदिषन्ति" इत्यत्र प्रत्ययार्थान्वयस्वारस्यं च भञ्जनीयमिति भावः। नन्वेवं तुल्यन्यायेन बुभुक्षासिद्ध्यर्थं चिकित्साकर्मविपाकादिकं च नानुष्ठीयेत, भोजनेच्छाभावे तत्साधनबुभुक्षायामिच्छाया असंभवेन तदुद्देशेन कर्मानुष्ठानायोगात्; तत्सत्त्वे च बुभुक्षायाः सिद्धत्वात् किमुद्दिश्य चिकित्साद्यनुष्ठानमिति साम्यात्। यदि च सामान्यतो भोजन इष्टसाधनत्वावगत्येच्छामात्रसत्वेऽजीर्णादिप्रतिबन्धकवशात् प्रवृत्तिपर्यन्तोत्कटेच्छा न जायत इति तदर्थं चिकित्साद्यनुष्ठानमिति, तर्हि ब्रह्मज्ञानेच्छायां सत्यामपि बह्वायाससाध्यत्वज्ञानात् प्रवृत्तिपर्यन्तोत्कटेच्छा न जायत इति वक्तुं शक्यमिति चेत्—न; भोजनप्रवृत्तिप्रतिबन्धकीभूतधातुवैषम्यमूलकाजीर्णनिवृत्त्यर्थमेव चिकित्सानुष्ठानम्; न तु भोजनेच्छासिध्यर्थम्, तस्याः पूर्णायाः पूर्वमपि सत्त्वात्। तर्हि पूर्वं भोजनेच्छा सर्वात्मना नास्ति, इदानीमौषधसेवया संजाता' इति व्यवहारः कथमिति चेत्--न; पूर्वं क्षुत्पीडाया अभावात् तन्निवृत्त्युद्देशेन भोजनेच्छा प्राङ् नासीत्; अधुना साभूदित्येतत्परत्वात् व्यवहारस्य। अतो विविदिषार्थकर्मानुष्ठानासम्भवात् तादर्थ्ये च सत्याप्रयाणं कर्मानुष्ठानानुवृत्तिविधिविरोधप्रसङ्गाच्च वेदन एव सनर्थं विहायान्वयोऽङ्गीकर्तव्य इति भावः। यद्वा विविदिषार्थत्वेऽपि कर्मणां यावज्जीवं वेदनानुवृत्त्यर्थं विविदिषाया अनुवृत्त्यवश्यंभावात् विविदिषार्थमपि कर्मणामावश्यकत्वमिति भावः। अस्मिन् पक्षे 'तदुत्पत्तये सर्वाण्याश्रमकर्माणि' इत्यत्र तच्छब्दो विविदिषापरः। "आप्रयाणात्तत्रापि हि दृष्टम्" इति सूत्रं प्रायणान्तं ध्यानानुवृत्तिप्रतिपादनपरम्। "अग्निहोत्रात्" इति सूत्रं तु विद्यालक्षणकार्यायाग्निहोत्रादेर्या-

वज्जीवमनुष्ठेयत्वप्रतिपादनपरम् ; " विविदिषन्ति यज्ञेन दानेन " इति यज्ञादेर्वेदनार्थत्वदर्शनाद्विद्यालक्षणकार्यायाग्निहोत्रादिकमनुष्ठेयमिति हि तस्य सूत्रस्यार्थः । **विवेकादिभ्य एवेति** ; न तु केवलकर्मणा केवलशमादिना वेत्यर्थः । **तल्लब्धिरिति** ; ध्रुवानुस्मृतिलम्भ इत्यर्थः । **दर्शन**शब्देनोपपत्तिरुच्यते ; **निर्वचन**शब्देन प्रमाणम् ; प्रमाणोपपत्तिभ्यामित्यर्थः । **जात्याश्रयेति** ; जातिदुष्टं कलञ्जादि । आश्रयदुष्टं पतिताद्यन्नम् । केशकीटादिदूषितं निमित्तदुष्टम् । **कामानभिष्वङ्ग इति** ; कामशब्दितशब्दादिविषयेष्वनत्यादर इत्यर्थः । **शान्त इति** ; रागद्वेषादिरहित इत्यर्थः । **आरम्बणेति** ; आरम्बणमालम्बनं शुभाश्रयः ; तस्य संशीलनं योगकालकर्तव्यध्यानानुग्रहार्थं कालान्तरेऽपि क्रियमाणमभ्यसनम् । **अभ्यास इतीति** ; अत्र इतेर्विवेकादीनां स्वरूपं चाहेत्यत्रान्वयः । एवमुत्तरत्रापि द्रष्टव्यम् । **स्मार्तमुदाहृतमिति**; यद्यपि "बाल्येन तिष्ठासेदथ मुनिः" इति श्रौतमपि निर्वचनमस्ति, तथापि तद्वाक्ये आरम्बणसंशीलनविधित्वस्य " सहकार्यन्तरविधिः " इत्यधिकरणन्यायसापेक्षत्वात् तदनादृत्य " सदा तद्भावभावितः " इति वाक्ये " तस्मात् सर्वेषु कालेषु मामनुस्मर " इति विधेः स्पष्टत्वादिदं स्मार्तवचनमेव द्रमिडभाष्यकारेणोदाहृतमित्यर्थः । **पञ्चेति** ; यथाशक्ति पञ्चमहायज्ञाद्यनुष्ठानं क्रियेत्यर्थः । **क्रियावानिति**; क्रियायाः ब्रह्मविद्याहेतुत्वस्य स्पष्टं प्रतिपादनात् वाक्यान्तरमाह—**तमेतमिति** ; **वेदानुवचनम्** ; वेदाध्ययनम् । **अनाशकः**; अनशनम् ; स्वार्थे कन् प्रत्ययः । कामानशनलक्षणतपसेत्यर्थः । कृच्छ्रचान्द्रायणादिपापनाशकव्यावृत्त्यर्थम् 'अनाशकेन' इति तपोविशेषणमिति केचित् । **सत्यम्** ; भूतहितम् । **आर्जवम्** ; मनोवाक्कायानामैकरूप्यम् । **दया** ; स्वार्थनिरपेक्षपरदुःखासहिष्णुत्वम् । **दानम्** ; लोभराहित्यम् **अहिंसा** ; करणत्रयेणापि परपीडानिवृत्तिः । अभिध्या ; परकीये स्वत्वबुद्धिः, निष्फलचिन्ता वा ; तद्राहित्यमनभिध्या । **सत्येनेति** ; सत्यादिशब्देनार्जवादिप्रतिपादकवाक्यजातं क्रोडीकृतम् । शोकवस्तु पुत्रमरणादिकम् । आदिपदेन भयनिमित्तं विवक्षितम् । अत्र च शब्दो दैन्यशब्दश्च भिन्नक्रमः । तथाच देशकालवैगुण्यात् शोकवस्त्वाद्यनुस्मृतेर्दैन्यं तज्जं च दैन्यं मनसो भास्वरत्वविरोध्यवसाद इत्यर्थः । अत्र बन्धुजनदैन्यदर्शनेनापि दैन्यदर्शनात्तद्दैन्यस्य दैन्यजत्वमस्तीति भावः । **बलहीनेन** ; मनोबलहीनेनेत्यर्थः । **तद्विपर्ययजा** ; देशकालसाद्गुण्यप्रियवस्त्वाद्यनुस्मृतिजेत्यर्थः । 'मनसोऽवसादः' इति 'तुष्टिरुद्धर्षः' इत्येतावदेव

वाक्यकारवाक्यम्; तद्विपर्ययोऽनवसादः, तद्विपर्ययोऽनुद्धर्ष इति चार्थसिद्धम्। ननु "स्वाध्यायशौचसंतोषतपांसि नियतात्मवान्" इत्युपादेयतयोपात्तस्य संतोषस्य कथं विरोधित्वमित्यत्राह—**अतिसंतोषश्चेति**। तल्लब्धिरिति वाक्यकारवाक्यफलितार्थमाह—**एवंनियमेति**; अनवसादानुद्धर्षविवेकविमोकादिलक्षणशमदमादिनिवृत्तिधर्मयुक्तस्येत्यर्थः। **अनुष्ठानेनैवेत्येवकारेण** केवलशमदमादिः केवलकर्म च न विद्यानिष्पादकमित्युक्तं भवति। **तथाचेति**; विद्यायाः कर्मसापेक्षत्वप्रतिपादकं श्रुत्यन्तरमित्यर्थः। **विद्यां चाविद्यां चेति**; **विद्याम्**; ज्ञानम्, अविद्याम्; तद्भिन्नं कर्म च; सह सहिततया अविनाभूततया कार्यकारणभावेन; यो वेद कर्मणो विद्यासाधनत्वं यो जानाति; स कर्मानुष्ठाय निरस्तज्ञानप्रतिबन्धको भूत्वा विद्यां संपाद्य मुक्तो भवतीति श्रुत्यर्थः। **प्राचीनमिति**; अनादिभवसंचितमित्यर्थः। नन्वविद्याशब्दस्य विद्याविरोधिवाचिनः

"अविद्या कर्मसंज्ञान्या तृतीया शक्तिरिष्यते।
यया क्षेत्रज्ञशक्तिः सा वेष्टिता नृप सर्वगा।
संसारतापानखिलानवाप्नोत्यति संततान्॥"

इति समीचीनज्ञानप्रतिबन्धककर्मवाचितया कथं ज्ञानानुकूलकर्मवाचित्वमित्यत्राह—**मृत्युतरणेति**। नात्राविद्याशब्दस्य विद्याविरोधिवाचित्वम्, अपितु तदन्यवाचित्वमेव। नञस्तदन्यतद्विरुद्धतदभावानां त्रयाणामप्यर्थत्वादिति भावः। **विहितं कर्मैवेति**; फलाभिसंधिरहितं परमात्माराधनरूपं कर्मेत्यर्थः। 'अविद्यया मृत्युं तीर्त्वा' इत्यस्योपबृंहणं दर्शयति—**इयाजेति**। केशिध्वजोऽपि शास्त्रजन्य ब्रह्मज्ञानयुक्तः सन् ब्रह्मविद्यां फलत्वेनाधिष्ठायोद्दिश्य अविद्यया फलाभिसंधिरहितकर्मणा मृत्युं ज्ञानविरोधि कर्म तर्तुमत्येतुं सुबहून्यज्ञानिष्टवानिति श्लोकार्थः। एतेन "अविद्यया मृत्युं संसारं तीर्त्वा प्राप्य वर्तमानः" इति तरतेः प्राप्त्यर्थतया व्याख्यान्तरयोजनाया अनवकाश इत्युक्तं भवति। ननु "धर्मेण पापमपनुदति" इति श्रुत्यनुसारेणानभिसंहितफलेनापि कर्मणा पापस्यैव निरसनीयत्वात् कथं 'ज्ञानोत्पत्तिविरोधि प्राचीनं कर्म' इति पुण्यापुण्यसाधारणकर्मसामान्यस्य निवर्त्यत्वमुक्तमिति शङ्कायामाह—**ज्ञानविरोधि चेति**। **अनिष्टफलतयेति**; अलौकिकानिष्टसाधनत्वस्यैव पापशब्दार्थत्वादिति भावः। ननु कर्मणो ग्राह्याभावावगाहिनिश्चयतत्सामग्रीभिन्नस्य ज्ञानकारणविघटकस्य कथं ज्ञानविरोधित्वम्? इत्यत्राह—**अस्य**

**च ज्ञानविरोधित्वमिति । शुद्धसत्त्वविरोधीति**; शुद्धं समृद्धं सत्त्वम्; सत्त्वविवृद्धिविरोधीत्यर्थः। ननु पापस्य ज्ञानविरोधित्वे प्रमाणप्रतिपन्ने हि कल्पनेयं शोभते; तदेव कुत इत्यत्राह—**पापस्य चेति । एष एवासाधु कर्म कारयतीति** ; अधोनिनीषाया असाधुकर्महेतुत्वप्रतिपादकेऽस्मिन्वाक्ये वैषम्यनैर्घृण्यपरिहारार्थं "यमधो निनीषति" इत्यत्र यच्छब्देनाधोनिनीषाहेतुभूतपापविशिष्टोऽभिप्रेतः। ततश्च पापस्याधोनिनीषाद्वारा असाधुकर्मकारयितृत्वं प्रति निमित्तत्वं प्रतीयते । तत्कारयितृत्वं च

"यस्मै देवाः प्रयच्छन्ति पुरुषाय पराभवम् ।
बुद्धिं तस्यापकर्षन्ति सोऽपनीतो न पश्यति ॥"

इत्युक्तरीत्या समीचीनबुद्धिप्रतिबन्धपूर्वकविपरीतबुद्ध्युत्पादनद्वारेणैवेति पापस्य ज्ञानविरोधित्वमनेन वाक्येन प्रतिपाद्यत इति भावः । 'पापस्य ज्ञानविरोधित्वं ज्ञानोत्पत्तिहेतुभूतशुद्धसत्त्वविरोधिरजस्तमोविवृद्धिद्वारेण' इति पूर्वोक्तार्थे प्रमाणं दर्शयति—**रजस्तमसोरिति । धर्मेणेति** ;

"पुण्यं प्रज्ञां वर्धयति क्रियमाणं पुनः पुनः ।
वृद्धप्रज्ञः पुण्यमेव नित्यमारभते नरः ॥
पापं प्रज्ञां नाशयति क्रियमाणं पुनः पुनः ।
नष्टप्रज्ञः पापमेव पुनरारभते नरः ॥
सत्त्वात् संजायते ज्ञानं रजसो लोभ एव च ।
प्रमादमोहौ तमसो भवतोऽज्ञानमेव च ॥
सर्वद्वारेषु देहेऽस्मिन् प्रकाश उपजायते ।
ज्ञानं यदा तदा विद्वान् विवृद्धं सत्त्वमित्युत ॥
लोभः प्रवृत्तिरारम्भः कर्मणामशमः स्पृहा ।
रजस्येतानि जायन्ते विवृद्धे भरतर्षभ ॥
अप्रकाशोऽप्रवृत्तिश्च प्रमादो लोभ एव च ।
तमस्येतानि जायन्ते विवृद्धे कुरुनन्दन ॥"

इत्यादिकमत्रानुसंधेयम् । **अवसेयमिति** ; उत्पाद्यमित्यर्थः । नन्वस्तु ब्रह्मोपासनस्य कर्मसापेक्षत्वं, कर्मणस्तद्विचारसापेक्षत्वं च ; ब्रह्मविचारस्य कर्मविचारसापेक्षत्वे किमायात-

मित्याशङ्क्य कर्मणामल्पास्थिरफलत्वप्रतीतिरूपब्रह्मविचाराधिकारिविशेषणांशे 'एतादृशकर्माङ्गमुपासनमस्थिरफलकम्' इत्येवंरूपानन्तस्थिरफलापातप्रतीतिरूपाधिकारिविशेषणे चोपयोगात् कर्मविचारस्य ब्रह्मविचारोपयोगोऽप्यस्तीत्याह—**अतोऽपेक्षितेति** । इदमुपलक्षणम्—मुख्यक्रमानुरोधेनाङ्गक्रमस्य पञ्चमे स्थितत्वात् कर्मब्रह्मोपासनलक्षणमुख्यक्रमानुरोधेन तच्छेषभूतयोस्तद्विचारयोरपि क्रमो युक्तः । व्याख्येयभूतवेदक्रमानुरोधादपि व्याख्यानभूतकर्मब्रह्मविचारयोः क्रमो युक्त इत्यपि द्रष्टव्यम् ।

### श्रीभाष्यम्

**अपि च नित्यानित्यवस्तुविवेकादयश्च मीमांसाश्रवणमन्तरेण न संपत्स्यन्ते, फलकरणेतिकर्तव्यताधिकारिविशेषनिश्चयादृते कर्मस्वरूपतत्फलतत्स्थिरत्वास्थिरत्वात्मनित्यत्वादीनां दुरवबोधत्वात् । एषां साधनत्वं च विनियोगावसेयम् । विनियोगश्च श्रुतिलिङ्गादिभ्यः । स च तार्तीयः । उद्गीथाद्युपासनानि कर्मसमृद्ध्यर्थान्यपि ब्रह्मदृष्टिरूपाणि ब्रह्मज्ञानापेक्षाणीतीहैव चिन्तनीयानि । तान्यपि कर्माण्यनभिसंहितफलानि ब्रह्मविद्योत्पादकानीति तत्साद्गुण्यापादनान्येतानि सुतरामिहैव संगतानि । तेषां च कर्मस्वरूपाधिगमापेक्षा सर्वसंमता ।**

### श्रुतप्रकाशिका

यदनपेक्षितं परेणोक्तं तदेवापेक्षितमित्युक्तम्; यत्तु परेणापेक्षितमित्युक्तं तस्यानपेक्षितत्वमुच्यते—**अपि चेत्यादिना** । **नित्यानित्यवस्तुविवेकादयश्चेति**; चस्त्वर्थः, प्रत्युतेति यावत् । **मीमांसाश्रवणमन्तरेण**; कर्मब्रह्ममीमांसाश्रवणमन्तरेणेत्यर्थः । **न संपत्स्यन्त** इत्यनेन पश्चाद्भावित्वमुक्तम् । कुत इत्यत्राह—**फलेति** । **फलविशेषो** भोगमोक्षरूपः; **करणविशेषो** यज्ञोपासनादिः; **इतिकर्तव्यताविशेषः** प्रयाजादिः साधनसप्तकं च; **अधिकारिविशेषो** बुभुक्षुर्मुमुक्षुश्च । एषां निश्चयादृते । **कर्मस्वरूपं** साङ्गयज्ञात्मकमुपासनात्मकं च । भाष्यकारश्च "यागात्मकमुपासनात्मकं च कर्म" इति हि

वक्ष्यति । " प्रकाशश्च कर्मण्यभ्यासात् " इति च सूत्रम् ; " उपासनात्मके कर्मणि " इति च तस्य भाष्यम् । उपासनस्य कर्मत्वं स्मृतिसंततिरूपतया तस्य प्रयत्नसाध्यत्वात् ।

" वाचिकैः पक्षिमृगतां मानसैरन्त्यजातिताम् ।
शरीरजैः कर्मदोषैर्याति स्थावरतां नरः ॥ "

इत्यत्र मनुश्च " मानसैः कर्मदोषैः " इत्युक्तवान् । **फलं** चोभयं भोगो मोक्षश्च । **आत्मनित्यत्वादीनामिति ;** आदिशब्देनात्मनो " निर्वाणमय एवायम् " इत्युक्तज्ञानानन्दस्वरूपत्वादिकं विवक्षितम् । अत्र साध्याविशिष्टत्वं हेतोः प्रतीयत इति चेत्—नैवम् ; मीमांसायां फलकरणेतिकर्तव्यतादीनां प्रत्यधिकरणं तत्तन्न्यायैर्यो निर्णयः क्रियते, स हेतुः ; एवं तत्तदधिकरणन्यायानुगृहीतश्रुतिवाक्यसमुदायजन्या या प्रमितिरुपायोपेयविषया, सा साध्या । तत्तदवान्तरवाक्यार्थनिश्चयैस्तत्समुदायरूपमहावाक्यार्थनिर्णयः साध्य इत्यर्थः ; यथा 'पदार्थनिश्चयैर्वाक्यार्थनिश्चयः' इत्युक्ते सति न साध्याविशिष्टता, तद्वत् । अत एव हि करणेतिकर्तव्यतादिशब्दैः पूर्वं पृथगुक्त्वा पश्चात्कर्मस्वरूपशब्देनोक्तम् । 'फलकरण—' इत्यादि भाष्यस्य कर्ममीमांसामात्रविषयत्वे 'तत्फलस्थिरत्वास्थिरत्वात्मनित्यत्वादीनाम्' इति वक्तुमयुक्तम् । निरुपपदमीमांसाशब्दस्य "मीमांसाशास्त्रम्" इत्यादिभाष्ये भागद्वयविषयतया प्रयुक्तत्वाच्च यथोक्त एवार्थः । तस्मात्कर्मब्रह्मविचारानन्तरभावी नित्यानित्यवस्तुविवेकः ; तत इहामुत्रफलभोगविरागो मुमुक्षुत्वं च ; शमदमादिसाधनसंपच्च " शमदमाद्युपेतः स्यात् " इति ; ब्रह्ममीमांसायां हि शमदमादिस्वरूपं निरूप्यते ; अस्मिंश्चतुष्टये सिद्धे ब्रह्मविचारः, ब्रह्मविचारात्तत्सिद्धिरित्यन्योन्याश्रयः स्यात् । अतः पश्चाद्भाविनः पूर्ववृत्तत्वमनुपपन्नम् । साङ्गाध्ययनजापातप्रतीतिरेव नित्यानित्यवस्तुविवेक इति चेत्—तदयुक्तम् ; न ह्यापातप्रतीतिरिहामुत्रफलभोगविरागमुमुक्षुत्वयोर्हेतुः, नित्यानित्यविपर्ययप्रतीतेः । किंच—आपातप्रतीतिरुभयभागविचारसाधारणी ; तत्र प्रथमं कर्मविचार एव प्रवृत्तिर्युक्ता, उभयत्र बुभुत्साया अविशिष्टत्वात् प्रथमातिक्रमे कारणाभावाच्च । शास्त्रान्तरेणापि नित्यानित्यविवेकादिर्नोपपद्यते, प्रथममेवाध्ययनविधिवश्यतया पुरुषस्य शास्त्रान्तरानवकाशात् । किंच—शास्त्रान्तरे परमाणुकारणत्वाब्रह्मात्मकप्रधानकारणत्वगगनादिनित्यत्वनिमित्तमात्रेश्वरत्वादयो वेदान्तविरुद्धा एवार्था बहव उपलभ्यन्ते ; अतः शास्त्रान्तरजन्यो नित्यानित्यवस्तुविवेको वेदान्तविरुद्धत्वान्न तद्विचारं प्रति पूर्ववृत्तो भवितुमर्हति । किंच—शास्त्रान्तरे षट्पदार्थ-

षोडशपदार्थज्ञानादीनां मोक्षसाधनत्वप्रतिपादनेन वेदान्तश्रवणनैरपेक्ष्याच्च न तज्जन्यविवेकस्य पूर्ववृत्तत्वं युक्तम्; "यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः" "छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगमः" इति हि तत्र तत्रोच्यते। किंच "तस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वात्मन्येवात्मानं पश्येत्" इति श्रुतिरेवंविच्छब्देन शास्त्रजन्यज्ञानमनूद्य "पश्येत्" इति प्रतिपन्नस्योपासनस्याङ्गतया शमादीनुपदिशति। अतः शमादीनां श्रवणपूर्ववृत्तत्वं श्रुतिविरुद्धम्। "प्रशान्तचित्ताय" इत्यादिश्रुतिस्तु श्रवणौपयिकावधाननिष्पादनार्थेत्युक्तम्। इतिहासपुराणादिश्रवणान्नित्यानित्यविवेक इति चेत्, तर्हि तत एव ब्रह्मस्वरूपावगमाद् ब्रह्मविचारस्यानारम्भणीयत्वं स्यात्। इतिहासपुराणयोरपि संशयविपर्ययबाहुल्यात्तन्निरासाय ब्रह्मविचारोऽपेक्षित इति चेत्, संशयविपर्ययबाहुल्यादेव नित्यानित्यविवेकोऽपि तत्र दुःसंपाद इति न साधनचतुष्टयस्य पूर्ववृत्तत्वं युक्तम्। यत्तु "नित्यानित्ययोर्वसन्तीति नित्यानित्यवस्तूनि, तद्धर्माः" इत्यारभ्य वाचस्पतिनोक्तम्—"नित्यस्य धर्मिणो नित्यत्वं सत्यत्वं, तत एवोपादेयत्वम्; अनित्यस्य धर्मिणोऽनित्यत्वमसत्यत्वं, तत एव हेयत्वमित्येवं नित्यानित्ययोर्धर्मिणोस्तद्धर्माणां च विवेको नित्यानित्यवस्तुविवेकः" इति; तत्र ब्रूमः—अनित्यस्य तावदसत्यत्वं वक्ष्यमाणप्रकारेण निरस्तं वेदितव्यम्। 'यन्नित्यं तदुपादेयं, यदनित्यं तद्धेयम्' इत्युभयमप्यनुपपन्नम्, सुखदुःखनिवृत्तितत्साधनतदुपयोगिनामेवोपादेयत्वबुद्धिदर्शनात्, तद्व्यतिरिक्तस्यैवानुपादेयताबुद्धिदर्शनाच्च। नित्यमपि दुःखरूपं दुःखनिमित्तं वा यदि स्यात् हेयमित्येव प्रतीयते; अनुभयं चेदुपेक्ष्यते; अनित्यमपि सुखरूपं सुखनिमित्तं वा भवति चेत् तदुपादीयते। निरूपकस्य तु हेयमिति चेत्—न; प्रकृष्टसुखान्तरदर्शनात्यन्तदुःखसाध्यत्व दुःखोदर्कत्वविरहे सति निरूपकस्यापि तत्रोपादेयताबुद्धिदर्शनात्। क्षीरौदनलाभात्कणस्त्यज्यते; अन्धकूपपतिता वराटिका तदुद्धरणक्लेशस्य तल्लाभसुखादतिशयितत्वात्त्यज्यते; विषमिश्रमन्नं मरणभयात् त्यज्यते; स्रक्चन्दनादि तु ततः प्रकृष्टसुखालाभादाद्यन्तयोस्तीव्रदुःखानुबन्धाभावाच्च परिमितमप्युपादीयते। तस्मादनित्यस्य हेयत्वं नानित्यत्वमात्रप्रयुक्तम्। यद्युच्येत—नित्यस्य दुःखासंभिन्नसुखरूपत्वादुपादेयत्वं, तदसंभवादनित्यस्य च हेयत्वमिति; अत्रोच्यते—नित्यस्य दुःखासंभिन्नसुखरूपत्वं किं व्याप्त्यावगम्यते? उत शास्त्रात्? न प्रथमः, नित्यस्य कालादेः

सुखरूपत्वादर्शनात्; नित्यस्यात्मनो दुःखासंभिन्नसुखरूपत्वादर्शनाच्च। आत्मनो हि दुःखमुपलभ्यते—'अहं दुःखी' इति। शास्त्रतश्चेत्; यदि वेदात्, वेदजन्यं च किमापातज्ञानम्? उत प्रमितिरूपम्? प्रथमे कर्मब्रह्मभागसाधारण्यात् कर्मविचारातिक्रमेण ब्रह्मविचारं प्रति तस्य पूर्ववृत्तत्वानुपपत्तिः; निश्चयरूपं चेत्, मीमांसाद्वयफलं स्यात्; आगमान्तरमूलत्वे विरुद्धतयानुपयोगात्तस्यैतन्नैरपेक्ष्याच्च पूर्ववृत्तत्वानुपपत्तिः। अथोच्येत—यन्नित्यं तदुपादेयमिति नैवं प्रतीतिः। किंतु नित्यं सुखं संभवति चेत्, तदुपादेयम्; सति तस्मिन्ननित्यमनुपादेयमिति। तत्र तावन्नित्यसुखसंभवज्ञानस्य ब्रह्मविचारोपयोगो नित्यफलोपादित्साद्वारेणेति वक्तव्यम्। शास्त्रान्तरेषु कर्मकाण्डे च नित्यफलसंभावनाया निवारकाभावान्नित्यानित्यविवेकानन्तरं तेषामप्यारम्भणीयता स्यात्। तेषु हि नित्यं फलं प्रतीयते। तदसदिति चेत्, तदसत्त्वमप्रामाण्यादन्यपरत्वाद्वा भवेत्; तदुभयं कर्ममीमांसया विना न सिध्यतीति तस्याः पूर्ववृत्तत्वमभ्युपेतव्यम्। आद्यसूत्रं तज्ज्ञापनपरमिति चेत्—न; तस्य स्वशास्त्रारम्भौपयिकविषयप्रयोजनपरत्वेन शास्त्रान्तराप्रामाण्यादिप्रतिपादनपरत्वाभावात्। स्वार्थोपयोगित्वात्तदप्रामाण्यादिकमभिप्रेतमिति चेत्, तर्हि तस्य स्वोपजीव्यज्ञापनमपेक्षितमिति कर्मविचारस्य तर्कपादस्य च पूर्ववृत्तत्वमापद्येत। शास्त्रान्तराप्रामाण्यं हि कर्ममीमांसाप्रथमपादावसेयम्। अन्यपरत्वं वाक्यान्तरविरोधादिभिः। नित्यफलाविवक्षाध्यवसायश्च तत्रत्यन्यायाधीनः। शास्त्रान्तरप्रमेयदौःस्थ्यं च तर्कपादे दर्शयिष्यते। किंच, आद्यसूत्रादेव शास्त्रान्तरगतनित्यफलासत्त्वावगमश्चेदन्योन्याश्रयः—ब्रह्मविचारे प्रवृत्तस्यान्यत्र नित्यफलासत्त्वावगमः, तदवगमाद्ब्रह्मविचारे प्रवृत्तिरिति। न चैवं सति धर्मजिज्ञासासूत्रेऽप्यन्योन्याश्रयः शङ्कनीयः, पित्रादिप्रेरणया कृतसाङ्गाध्ययनस्य पुरुषस्य प्रयोजनवदर्थापातप्रतीत्यैव प्रवृत्त्युपपत्तेः। येषां धर्मविचारो वैधस्तेषामेवान्योन्याश्रयः—वैधत्वज्ञानाद्विचारो विचाराद्वैधत्वज्ञानमिति। किंच, अनित्यफलहेयताज्ञानस्य स्वर्गादिफलजिहासाद्वारेण ब्रह्मविचारोपयोगो वक्तव्यः; स्वर्गादिफलस्यानित्यत्वं दुःखसंभिन्नत्वं च कथमवगम्यते? शास्त्रान्तरेण चेत्, तत्रैव नित्यपुरुषार्थसिद्धेर्नैराकाङ्क्ष्येण ब्रह्मविचारप्रवृत्त्ययोगात्तत्पूर्ववृत्तत्वानुपपत्तिः। यत्सुखं तदनित्यमिति स्वोत्प्रेक्षिततर्कमात्रेण चेत्, तेनैव निरस्तनित्यपुरुषार्थसंभावनतया ब्रह्मविचारः प्रतिबध्येत। दुःखनिवृत्तेरन्तराहित्यात् स्वाभाविकसुखस्यानादिभावत्वादन्तविरहोपपत्तेश्च न नित्यपुरुषार्थासंभावनेति

चेत्—न; दुःखनिवृत्तिश्चेद् दुःखानुबन्धिनी दुःखनिवृत्तित्वात् संप्रतिपन्नवत्; सुखं चेत्सुखत्वादेव कृतकमित्येवंरूपकुतर्कोत्प्रेक्षासंभवेन केवलतर्कशरणानां नित्यपुरुषार्थसंभावनाया दुरुपपादत्वात्। शास्त्रसिद्धनित्येतरविषयो व्याप्तिनिश्चय इति चेत्—न; वेदान्तश्रवणपूर्वको व्याप्तिनिश्चयः, तत्पूर्वकं वेदान्तश्रवणमित्यन्योन्याश्रयप्रसङ्गात्। अतो ब्रह्मविचारं प्रति नित्यानित्यगतधर्मविवेकोपयोगाय नित्यानित्यविभागे प्रत्यक्षाप्रवृत्तेः तर्कस्यातिप्रसक्तेः शास्त्रान्तराणां ब्रह्मविचारनैराकाङ्क्ष्यापादकत्वात् तद्विरोधेनानुपयोगाच्च वेद एव प्रमाणीकर्तव्ये तत्रापातप्रतीतेरुभयभागसाधारण्यात्। नित्यानित्यनिश्चयस्य मीमांसाद्वयफलत्वेनान्योन्याश्रयस्य दुस्तरत्वाच्च नित्यानित्यगतहेयोपादेयत्वज्ञानं नित्यानित्यवस्तुविवेक इत्ययुक्तम्। ननु शास्त्रान्तरेषु नित्यफलसंभावनाया निवारकाभावान्नित्यानित्यविवेकादिमतस्तत्रापि प्रवृत्तिप्रसङ्ग इति यदुक्तं तन्न, शास्त्रान्तरनिवारकत्वादाद्यसूत्रस्य; 'ब्रह्मैव जिज्ञास्यं, न प्रकृतिपुरुषौ' इति हि सूत्रार्थ इति—तदयुक्तम्; साधनचतुष्टयपूर्ववृत्तत्ववादिभिरस्यार्थस्यानङ्गीकृतत्वात्। तापत्रयज्ञानपूर्ववृत्तत्ववादिभिरयमर्थ उक्तः; न चायमर्थ उपपन्नः; तथाहि—न तावदयमर्थः सूत्रकृतोपदिश्यते, न वा ज्ञाप्यते; किंतूपपाद्यत इति वक्तव्यम्, न्यायनिबन्धनत्वात् सूत्राणाम्। उपपत्तिश्च शास्त्रान्तरदौर्बल्यमेव वा, स्वशास्त्रप्राबल्यमेव वा, समुच्चितमुभयं वा। न प्रथमः, स्वशास्त्रस्य दौर्बल्ये ब्रह्मणोऽप्यजिज्ञास्यत्वात्। न द्वितीयः, शास्त्रान्तरस्य प्राबल्ये ब्रह्मण एव जिज्ञास्यत्वासिद्धेः। तृतीये सूत्रवैयर्थ्यम्, पूर्वमीमांसायामेव चोदनासूत्रप्रभृतिभिस्तदुभयसिद्धेः। तत एव तस्याः पूर्ववृत्तत्वापत्तिश्च, अवश्यापेक्षितत्वात्। वेदप्रामाण्यमात्रे सिद्धेऽपि ब्रह्मणि प्रामाण्यं न तावता सिध्यतीति चेत्, तर्हि यैर्हेतुभिर्ब्रह्मणि प्रामाण्यासंभवशङ्कास्ते परिहर्तव्याः। ते च सिद्धे व्युत्पत्त्यनुपपत्त्यादय इति तत्परिहारेण ब्रह्मणि वेदान्तप्रामाण्यसमर्थनपरत्वेऽस्मदीय एव पक्षः परिगृहीतः स्यात्। अत एव दुःखत्रयाभिघातज्ञानस्य पूर्ववृत्तत्वमपि निरस्तम्; तथाहि—किमैहिकदुःखज्ञानं पूर्ववृत्तम्? उत नारकदुःखज्ञानम्? उत स्वर्गादेरप्यल्पास्थिरतया तापत्रयान्तर्गतत्वज्ञानम्? न प्रथमः, आयुर्वेदादिभिस्तन्निरसनोपायावगमाद्वेदान्तविचारनैरपेक्ष्यात्। न द्वितीयः, निरयदुःखहेतुभूतपापापनोदनकरव्रतनियमविधायकशास्त्रबाहुल्याद्वेदान्तनैरपेक्ष्यात्। तृतीये तु कर्मविचारापेक्षा स्यादेव, प्रथमत एवाध्ययनविधिवशस्य शास्त्रान्तरावगमावसरविधुरत्वात्, सत्यप्यवसरे स्वर्गाद्यल्पा-

स्थिरत्वज्ञापकैस्तैरेव शास्त्रैर्मुक्त्युपायस्यावगतत्वेन वेदान्तनैरपेक्ष्याद्वेदान्तविरुद्धार्थाभिधायिनां तेषामवगमस्य वेदान्तज्ञानपूर्ववृत्तत्वायोगात्, आपातप्रतीतेरितिहासपुराणयोश्चाल्पास्थिरत्वानन्तस्थिरत्वविपर्ययप्रतीतिहेतुत्वाच्च। पूर्वं व्याख्येयस्वभावात् क्रमनियम उक्तः; व्याख्यानस्वभावादपि तत्सिद्धिरिदानीमुच्यते---**एषामिति**। **एषाम्**; शमादीनाम्। **च:** समुच्चये। **विनियोगावसेयम्**; विनियोगोऽङ्गत्वज्ञापनम्। ततः किमित्यत्राह--**विनियोगश्चेति**। ततोऽपि किमित्यत्राह--**स च तार्तीय इति**; तृतीयाध्यायोक्त इत्यर्थः। इदं प्रदर्शनार्थमुक्तम्, कर्मविचारोक्तकृत्स्नन्यायसापेक्षत्वाद्ब्रह्मविचारस्य। एतानि हि कर्ममीमांसाध्यायानां प्रमेयाणि--प्रथमेऽध्याये प्रमाणलक्षणं वृत्तम्। द्वितीयेऽध्याये शास्त्रभेदः कर्मभेदो वा; भेदहेतवश्च शब्दान्तराभ्याससंख्यागुणप्रक्रियानामधेयानि। तृतीयेऽङ्गनिरूपणम्; अङ्गत्वज्ञापकानि प्रमाणानि श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानानि। चतुर्थे क्रत्वर्थपुरुषार्थभेदनिरूपणेन पुरुषार्थैः क्रत्वर्थानां प्रयुक्तिर्निरूपिता। पञ्चमे क्रमः; क्रमप्रमाणानि श्रुत्यर्थपाठप्रवृत्तिमुख्यकाण्डानि। षष्ठेऽधिकारिनिरूपणम्। सप्तमे सामान्यातिदेशो निरूपितः। अष्टमे विशेषातिदेशः। नवम ऊहः। दशमे बाधः। एकादशद्वादशयोस्तन्त्रप्रसङ्गौ। यथोक्तम्--

" धर्मधीमानभेदाङ्गप्रयुक्तिक्रमकर्तृभिः।
सातिदेशविशेषोहबाधतन्त्रप्रसक्तिभिः॥ "

इति। एतन्न्यायसापेक्षत्वं संकर्षसापेक्षत्वं च ब्रह्मविचारे तत्र तत्र द्रष्टव्यम्। तस्मात् **स च तार्तीय** इति प्रदर्शनार्थमुक्तम्। अथ कर्मविचारापेक्षत्वेऽभ्युच्चययुक्तिरुच्यते--**उद्गीथादीति**। परेण प्रसङ्गात् संगतिरुक्ता; अत्र तु साक्षात्संगतिरुपपाद्यते। **कर्मसमृद्ध्यर्थान्यपीति**; "कर्मसमृध्यर्थत्वे तत्प्रयोजनं तन्निर्वचनात्" इति वाक्यकारवचनं स्मारितम्। **ब्रह्मदृष्टिरूपाणीति**; अब्रह्मणि ब्रह्मत्वेन दृष्टिर्ब्रह्मदृष्टिः; ब्रह्मदृष्टिरूपत्वात् ब्रह्मज्ञानसापेक्षाणीत्यर्थः। इतिर्हेतौ। **इहैव चिन्तनीयानि**; न तु कर्मविचारे। **तान्यपि कर्माणि**; यत्समृध्यर्थान्युद्गीथाद्युपासनानि तान्यपीत्यर्थः। **अनभिसंहितफलानि**; अनभिसंहितफलत्वात् ब्रह्मविद्योत्पादकानीत्यर्थः। इतिर्हेतौ। **तत्साद्गुण्यापादनानि**; साद्गुण्यं प्रबलप्रतिबन्धके सत्यपि शीघ्रफलप्रदत्वम्; तदापादनानि; ब्रह्मविद्यां शीघ्रं संपादयन्तीत्यर्थः। **एतानि**; उद्गीथाद्युपासनानि। अत इहैव सुतरां संगतानि। प्रधानानु-

पयोगित्वेन सादृश्यादिना धीस्थत्वं प्रसङ्गात्संगतिः। अन्यतरापेक्षयोभयापेक्षया वा संगतिः साक्षात्संगतिः। अत्र तूभयोरपेक्षितत्वं प्रतिपादितम्। **ब्रह्मदृष्टिरूपाणी**त्युद्गीथाद्युपासनस्य ब्रह्मज्ञानापेक्षाभिहिता। **ब्रह्मविद्योत्पादकानीति** ब्रह्मज्ञानस्योद्गीथाद्युपासनापेक्षाभिहिता। एतदभिप्रायेण सुतरामित्युक्तम्। इहैवेत्युभयापेक्षाया अत्रैव विद्यमानत्वात् सुतरां संगतिरिहैव, न तु कर्मविचारे इत्यर्थः। ननु—कथमुद्गीथादिविचारस्य ब्रह्मविचार एव सुतरां संगतिः? कर्मविचारेऽपि सुतरां संगतिरस्ति; उभयापेक्षया संगतिर्हि सुतरां संगतिः; कर्माङ्गाश्रयत्वादुद्गीथादिधियां तद्विचारस्य कर्मापेक्षास्ति; कर्मणामपि स्वसमृद्ध्यर्थोद्गीथाद्युपासनापेक्षास्तीत्युभयापेक्षाया विद्यमानत्वात्। उच्यते—कर्मसमृद्ध्यर्थोद्गीथाद्युपासनापेक्षा केवलकर्मणां विद्याङ्गकर्मणां च तुल्या। अतः कर्मसमृद्ध्यर्थत्वहेतुः साधारणः। कर्माङ्गाश्रयत्वं पूर्वभागविचारसंगतेरसाधारणहेतुः। ब्रह्मज्ञानसापेक्षत्वमुत्तरभागविचारसंगतेरसाधारणहेतुः। एवं साधारणासाधारणहेतुद्वयवत्तासाम्येऽपि ब्रह्मदृष्टिरूपोद्गीथाद्युपासनानां ब्रह्मज्ञानसापेक्षत्वात् तेन विना तच्चिन्तनमशक्यं पूर्वभागविचारे; न हि कर्मविचारात्पूर्वं ब्रह्मविचार उपपद्यते, प्रागुक्तसंगतिविशेषविशिष्टत्वात्तयोः। उत्तरभागे तु ब्रह्मज्ञानस्य सुलभत्वान्निर्वृत्तकर्मविचारस्योद्गीथाद्युपासनचिन्तनं कर्तुं शक्यम्। अत एव शक्यत्वादुद्गीथाद्युपासनान्युपनिषद्भागे विहितानि। अत एव ब्रह्ममीमांसायां निरूपितानि च। एवं वेदान्तभागविहितत्वब्रह्ममीमांसाविचारितत्वशक्यत्वरूपवैषम्यत्रयविशेषिताया उभयापेक्षाया उत्तरभाग एव विद्यमानत्वात् तन्निबन्धना सुतरां संगतिस्तत्रैवेत्यभिप्रायेण सुतरामिहैव संगतानीत्युक्तम्। अयं चाभ्युच्चयहेतुः। यदप्रधानस्यार्थस्यापि साक्षात्संगतत्वात्तस्याप्यवश्यापेक्षितः कर्मविचार इति प्रधानप्रतिपाद्यस्य नियमेनापेक्षितत्वरूपः प्रधानहेतुः पूर्वमेवोक्तः। ततः किं प्रकृतानन्तर्यस्येत्यत्राह—**तेषां चेति**। **तेषाम्**; उद्गीथाद्युपासनानाम्। **सर्वसंमता**; तत्साक्षात्संगतत्वे हि विगानम्; उद्गीथाद्युपासने चिन्त्ये सति तस्य कर्मज्ञानापेक्षा सर्वाविगीता। यत्त्वधीतवेदान्तस्य कर्माधिगमापेक्षा नास्तीत्युक्तम्—तदसंगतम्, वेदान्तेष्वप्युपाय्यपरमुक्तिपरवाक्यमात्राध्यायिनः पुरुषस्य ब्रह्मविचारेऽपि तृतीयचतुर्थाध्यायमात्रश्रवणप्रसङ्गात्। तृतीयचतुर्थयोः प्रथमद्वितीयोक्तन्यायसापेक्षत्वमस्तीति चेत्, तर्हि कृत्स्नस्य ब्रह्मविचारस्य कर्मविचारन्यायसापेक्षत्वात्तस्यैव पूर्ववृत्तत्वम्। जन्मान्तरसुकृतविशेषेण कस्यचिद्ब्रह्मविचारमात्रापेक्षेति चेत्, तस्य सुकृतविशेषेण

तृतीयचतुर्थमात्रापेक्षा किं न स्यात्? अथवा सुकृतातिशयात्कृत्स्नब्रह्मविचारनिरपेक्षा किं न स्यात्? किंच वेदान्तेषूपायफलपरवाक्यमात्राध्ययनमशास्त्रीयमिति त्वयापि वक्तव्यम्; तद्वेदान्तमात्राध्ययनस्यापि तुल्यम्, कृत्स्नस्वाध्यायाध्ययनस्य विहितत्वात्। अतो विध्यतिलङ्घिनां यदपेक्षितं तदेव पूर्ववृत्तमित्यसंगतम्। कृत्स्नाध्यायिनोऽपि सुकृतवशात् काचित्कश्रवणापेक्षायां पूर्वमेव दत्तमुत्तरम्। "विरोधादप्रमाणत्वात्" इत्यादिग्रन्थसंगृहीतानि दूषणानि "अत्रोच्यते" इत्यादिना सिद्धान्तभाष्येण परिहृतानि। तथाहि—कर्मणामनित्यफलत्वेन विरोधोऽनभिसंहितफलत्वात्परिहृतः। भेदवासनाजनकत्वेनैक्यज्ञानविरोधस्तु "पृथगात्मानम्" इति पृथक्त्वज्ञानस्य मोक्षोपायत्वश्रुत्या परिहृतः। अयं विरोधो वक्ष्यमाणवस्तुसामर्थ्यान्तर्भूतश्च; मोक्षस्य सकलभेददर्शननिवृत्तिरूपतायाः प्रपञ्चमिथ्यात्वोपपादनसापेक्षत्वात्। ऐक्यज्ञानस्योपायत्वेऽपि कर्मणामदृष्टद्वारेणोपयोगादविरोधः। अप्रमाणत्वं "क्रियावानेष ब्रह्मविदां वरिष्ठः" इत्यादिसन्निहितविनियोजकप्रमाणप्रदर्शनात् परिहृतम्। विविदिषार्थचित्तशुद्ध्युपयोगस्तु वेदनोत्पत्त्युपयुक्तमनोनैर्मल्यहेतुत्वोपपादनेन विविदिषार्थत्वेऽपि तस्या अहरहरुत्पत्त्यपेक्षोपपादनेन च प्रत्युक्तः। ज्ञानमात्रस्य हेतुत्वश्रवणं च साधनद्वित्वानभ्युपगमाद्दत्तोत्तरम्। सामर्थ्यं नाम मिथ्याभूतशब्दस्य ज्ञानैकनिवर्त्यत्वरूपं वस्तुसामर्थ्यम्; तत्तु प्रपञ्चमिथ्यात्वदूषणेन प्रतिवक्ष्यते। शमाद्यङ्गकताज्ञानकृतो विरोधश्च प्रवृत्तिरूपयज्ञादेर्निवृत्तिरूपशमादेश्च भिन्नविषयत्वेनाविरोधात्परिहृतः। शमादयो ह्यविहिताप्रतिषिद्धनिषिद्धकाम्यविषया इत्युक्तम्। वाक्यार्थज्ञानस्यैव मोक्षोपायत्वं प्रत्यक्षविरोधशास्त्रविरोधाभ्यां निरस्तम्। तत्र निवर्त्यवासनाया निवर्तकोत्पत्तिप्रतिबन्धकत्वाभावेन श्रवणादेर्भेदवासनानिरासार्थमनपेक्षितत्वात् तद्वैयर्थ्यपरिहारस्यानुपपन्नत्वात् "श्रवणादिक्रमोन्निद्रवाक्यजा धीर्विमोचिका" इत्येतदप्यपास्तम्।

### भावप्रकाशिका

**साधनसप्तकं चेति**; विवेकविमोकादीत्यर्थः। **इत्यारभ्येति**; "नित्यानित्ययोर्वसन्तीति नित्यानित्यवस्तूनि, तद्धर्माः; नित्यानित्ययोर्धर्मिणोस्तद्धर्माणां च विवेको नित्यानित्यवस्तुविवेकः", एतदुक्तं भवति—मा भूत् 'इदमृतं नित्यम्, इदमनृतमनित्यम्' इति धर्मिविशेषविषयो विवेकः, धर्मिमात्रयोर्नित्यानित्ययोस्तद्धर्मयोश्च विवेकं निश्चिनोत्येव; तथा चास्थागोचरः; अनित्यत्वमसत्यत्वम्; नित्यत्वं सत्यत्वम्; तद्यस्यास्ति तन्नित्यं सत्यम्;

त्यत्वम्; तद्यस्यास्ति तदनित्यमनृतम्; तथा चानास्थागोचरः। तदेतेष्वनुभूयमानेषु युष्मदस्मत्प्रत्ययगोचरेषु विषयविषयिषु यद्दतं नित्यं सुखं व्यवस्थास्यते तदास्थागोचरो भविष्यति। यत्त्वनित्यमनृतं भविष्यति तत्तापत्रयपरीतं त्यक्ष्यत इति। सोऽयं नित्यानित्यवस्तुविवेकः प्राग्भवीयाद्वा, ऐहिकाद्वा कर्मणो विशुद्धसत्त्वस्य भवत्यनुभवोपपत्तिभ्याम्" इत्यन्तेन ग्रन्थेनेति शेषः। 'इदं नित्यम्, इदमनित्यम्' इति विशेषनिश्चयाभावेऽपि नित्यत्वानित्यत्वयोर्धर्मिभ्यां भवितव्यमित्येवं योऽयं सामान्यनिश्चयः स एव नित्यानित्यवस्तुविवेकशब्दार्थ इति भावः। "नित्यस्य धर्मिणो नित्यत्वं सत्यत्वम्" इति पाठः कोशेषु दृश्यते। तत्र 'नित्यस्य इत्येतत् स्वरूपकथनपरम्। यस्य धर्मिणो नित्यत्वं सत्यत्वं च तस्योपादेयत्वं, यस्य धर्मिणोऽनित्यत्वमसत्यत्वं तस्य हेयत्वमित्येवं विवेक इति पर्यवसितार्थः। 'यस्य धर्मिणः' इति पाठस्तु सुगम एव। **निरूपकस्य तु हेयमिति चेदिति;** अनित्यमिति शेषः। **आद्यन्तयोरिति;** साधनानुष्ठानफलानुभवदशयोरित्यर्थः। **तस्यैतन्नैरपेक्ष्याच्च पूर्ववृत्तत्वानुपपत्तिरिति;** तस्यागमान्तरस्य ब्रह्मविचारनैराकाङ्क्ष्यापादकत्वादित्यर्थः। अत एवोपसंहारेऽपि तथैव वक्ष्यति—"शास्त्रान्तराणां ब्रह्मविचारनैराकाङ्क्ष्यापादकत्वात्" इति। **स्वार्थोपयोगित्वादिति;** आरम्भोपयोगित्वादित्यर्थः। **तत्रत्यन्यायाधीन इति;** आवृत्तिविधानाद्यधीन इत्यर्थः। **किंचाद्यसूत्रादेवेति;** यद्यपि सूत्रस्य विषयप्रयोजनाधिकारिप्रतिपादनपरत्वेऽपीदृशान्योन्याश्रयस्य सुवचत्वात् शास्त्रारम्भोपयोगवर्णनसूत्रमात्रस्योच्छेदप्रसङ्गः, तथाप्याद्यसूत्रस्य शास्त्रान्तराप्रामाण्यादिप्रतिपादनपरत्वेन परैर्व्याख्यातत्वादित्यत्र तात्पर्यात्; अत एव "किंच, अनित्यफल—" इति दूषणान्तरोपन्यासेन स्वर्गादिफलानित्यत्वावगतौ शास्त्रान्तरस्वोत्प्रेक्षिततर्कयोरेवोत्थापनं, न तु शास्त्रारम्भसूत्रस्येति द्रष्टव्यम्। **शास्त्रान्तरदौर्बल्यमेव वा स्वशास्त्रप्राबल्यमेव वेति;** स्वशास्त्रप्राबल्यं विना कृतशास्त्रान्तरदौर्बल्यं वा, शास्त्रान्तरदौर्बल्यं विना कृतस्वशास्त्रप्राबल्यं वेत्यर्थः। **समुच्चितमुभयं वेति;** शास्त्रान्तराणां दौर्बल्यं स्वशास्त्रप्राबल्यं चेत्यर्थः। **स्वशास्त्रस्य दौर्बल्य इति;** स्वशास्त्रप्राबल्याभावे शास्त्रान्तरसमानयोगक्षेमत्वादित्यर्थः। **अत एव दुःखत्रयाभिघातज्ञानस्येति;** न च "तापत्रयातुरैरमृतत्वाय स एव जिज्ञास्यः" इति भाषणात् तद्विरुध्येतेति शङ्क्यम्, तस्यापि कर्मविचारजन्यकर्माल्पास्थिरफलत्वज्ञानाभिप्रायत्वेनादोषात्। **ननु**

कर्मविचारजन्यायाः कर्मणामल्पास्थिरफलत्वादिप्रतीतेरनन्तस्थिरफलाभिलाषस्य च पराभिमतसाधनचतुष्टयसंपत्तिरूपत्वसंभवान्न विरोध इति चेत्, सत्यमविरोधः; तथापि "अथातः शेषलक्षणम्" इत्यादिवत् पूर्वपूर्वाध्यायविचारस्य पूर्ववृत्तत्वं युक्तमित्यत्र भाष्यकृतः संरम्भात्। **व्याख्येयस्वभावात् क्रमनियम उक्तः; व्याख्यानस्वभावादपि तत्सिद्धिरिदानीमुच्यत इति**; वेदद्वारा व्याख्येययोः कर्मोपासनरूपशेषिणोः कार्यकारणभावेन पौर्वापर्यात् तच्छेषभूतविचारयोरपि पौर्वापर्यमुक्तम्; अधुना कर्मकाण्डोक्तन्यायोपजीवित्वादस्य शास्त्रस्य पौर्वापर्यमुच्यत इत्यर्थः। **इदं प्रदर्शनार्थमुक्तमिति**; अयमभिप्रायः—"एषां साधनत्वं च विनियोगावसेयम्" इति भाष्यपर्यालोचनायां तृतीयाध्यायव्युत्पाद्यश्रुतिलिङ्गादिनिर्णेतव्यसाधनताकत्वात् साधनचतुष्टयस्य तत्पूर्ववृत्तत्वमिति प्रतीयते; न च तद्युक्तम्; तर्कशास्त्रव्युत्पादितप्रत्यक्षप्रमाणतदितिकर्तव्यताभूततर्कादिग्राह्यकारणताकत्वात् कर्मविचारस्य तर्कशास्त्रस्यापि तत्पूर्ववृत्तत्वप्रसङ्ग इति वाचाटवचसोऽप्यवकाशप्रसङ्ग इति न शङ्क्यम्, अत्र व्युत्पाद्यानां बहूनां प्रायेण तन्निर्णयसापेक्षत्वात् तदुपजीवित्वमित्यत्र भाष्यस्य तात्पर्यादिति। **प्रमाणलक्षणं वृत्तमिति**; विध्यर्थवादमन्त्रनामधेयस्मृत्याचारवाक्यशेषसामर्थ्यात्मकप्रमाणस्वरूपं वृत्तमित्यर्थः। **शास्त्रभेदो चेति**; इदं तु गुरुमते द्रष्टव्यम्। **भेदहेतव इति**; 'यजति, जुहोति, ददाति' इति चोदनासु यजत्यादिधातुभेदरूपेण शब्दान्तरेण यागदानहोमानां भेदः; "समिधो यजति" "तनूनपातं यजति" इत्यादिविधिषु 'यजति' इति पञ्चकृत्वोऽभ्यासेनाविशेषपुनःश्रुतिरूपेण प्रयाजानां भेदः; "सप्तदश प्राजापत्यान् पशूनालभते" इत्यत्र देवतासंबन्धभेदिन्या सप्तदशसंख्यया तदनुमेययागानां भेदः; "अथैष ज्योतिः" इत्यादिवाक्येषु ज्योतिरादिनामधेयैस्तन्नामकयागानां प्रकृतज्योतिष्टोमाद्भेदः; "तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनम्" इत्यत्रामिक्षारूपगुणान्तरावरुद्धे यागे निवेशमलभमानेन वाजिनगुणेन वाजिनयागस्यामिक्षायागात् भेदः; प्रकरणान्तरेण नित्याग्निहोत्रान्मासाग्निहोत्रस्य भेद इत्येवं शब्दान्तरादिभिर्भेदः प्रतिपाद्यत इत्यर्थः। **श्रुतिलिङ्गेति**; निरपेक्षशब्दः श्रुतिः। सा त्रिधा—विधात्री, अभिधात्री, विनियोक्त्री चेति। लिङादिश्रुतिर्विधात्री। इन्द्रादिश्रुतिरभिधात्री। विनियोक्त्री त्वेकप्रत्ययरूपा, एकपदरूपा विभक्तिरूपा चेति त्रिधा। तत्राद्या—"पशुना यजेत" इत्यत्र तृतीया; सा हि स्वोक्तकरणकारकं प्रति स्वोक्तैकत्वरूपसंख्यायाः

शेषत्वमर्पयति। द्वितीया "यजेत" इति पदम्; तेन प्रत्ययोक्तभावनां प्रति प्रकृत्युक्तयागस्य शेषतोपनीयते। तृतीया शेषित्वबोधिका शेषत्वबोधिका चेति द्विधा। "व्रीहीन् प्रोक्षति" इत्यादिषु द्वितीया व्रीह्यादीनां प्रोक्षणादिक्रियां प्रतीप्सिततमत्वरूपशेषित्वबोधिका। "क्रीते सोमे मैत्रावरुणाय दण्डं प्रयच्छति" इत्यत्र चतुर्थीश्रुतिः मैत्रावरुणस्य प्रदानक्रियेप्सिततमेन कर्मणाभिप्रेयमाणत्वरूपशेषित्वबोधिका। "अरुणया क्रीणाति" इत्यत्र क्रयभावनां प्रत्यारुण्यस्य; चात्वालान्मृदमाहरति" इत्यत्र मृदाहरणक्रियां प्रति चात्वालस्य, "वेद्यां हवींष्यासादयति" इत्यत्र हविरासादनक्रियां प्रति वेद्याश्च तृतीयापञ्चमीसप्तम्यः शेषत्वबोधिकाः। षष्ठी तु क्वचित्, "दध्नेन्द्रियकामस्य जुहुयात्" इत्यत्र शेषित्वबोधिका "यजमानस्य याज्या" इत्यादौ शेषत्वबोधिका च, संबन्धमात्रेऽनुशिष्टायाः षष्ठ्या योग्यताद्यनुसारेणोभयथापि पर्यवसानसंभवात्। वस्तुसामर्थ्यं लिङ्गम्। तद् द्विविधम्—शब्दसामर्थ्यमर्थसामर्थ्यं चेति। तत्र "बर्हिर्देवसदनं दामि" इति मन्त्रस्य लवनप्रकाशनसामर्थ्यरूपाल्लिङ्गाल्लवनशेषता। "स्वधितिनावद्यति" "स्रुवेणावद्यति" "हस्तेनावद्यति" इत्यवदानसामान्ये साधनत्वेन श्रुतानां स्वधित्यादीनां तत्तत्सामर्थ्यरूपाल्लिङ्गात् विशिष्य मांसद्रवद्रव्यपुरोडाशाद्यवदानेषु शेषता। शेषत्वस्य शेषित्वस्य वा बोधिकया श्रुत्या रहितपदसमभिव्याहारो वाक्यम्; यथा "अग्निहोत्रं जुहुयात् स्वर्गकामः" इति; यथा वा "मैत्रावरुणः प्रेष्यति चान्वाह" इति। न हि होमभावनां प्रति स्वर्गस्य भाव्यत्वेन शेषित्वबोधिका द्वितीयाश्रुतिः, प्रैषानुवचनं वा प्रति मैत्रावरुणस्य कर्तृत्वेन शेषत्वबोधिका तृतीयादिश्रुतिर्वास्ति। प्रथमा तु प्रातिपदिकार्थमात्रेऽनुशिष्टा। अतः पदसमभिव्याहाररूपेण वाक्येन शेषशेषिभावबोधः। विधिवाक्येन कर्तव्यतयावगतस्य 'केन प्रकारेण कर्तव्यम्?' इति विशिष्याज्ञायमानस्येतिकर्तव्यताकाङ्क्षा प्रकरणम्। तद् द्विविधम्—महाप्रकरणमवान्तरप्रकरणं चेति। तत्राद्येन दर्शपूर्णमासादिकं प्रति प्रयाजादीनां, द्वितीयेन प्रयाजादिकं प्रत्यभिक्रमणादीनां च तत्तत्संनिधिसमाम्नातानां शेषता। स्थानं द्विविधम्—यथासंख्यं संनिधिश्चेति। तत्राद्येन "दब्धिरस्य दब्धो भूयासम्" इति मन्त्रस्याग्नेयाग्नीषोमीयमन्त्रद्वयमध्याम्नातस्याग्नेयाग्नीषोमीययागद्वयमध्यानुष्ठेयोपांशुयाजशेषता। संनिधिस्तु—आम्नानसंनिधिः, अनुष्ठानसंनिधिश्चेति द्विविधः। आद्येन "शुन्धध्वं दैव्याय कर्मणे देवयज्यायै" इति मन्त्रस्य महाप्रकरणावान्तरप्रकरणरहितसांनाय्यपात्रप्रोक्षणशेषता। द्वितीयेन पशुधर्माणामग्नीषो-

मीयपशुशेषता। समाख्या यौगिकी संज्ञा। सा लौकिकी वैदिकी चेति द्विविधा। 'होतृचमसः' इति वैदिकसमाख्यया होतुश्चमसभक्षणं प्रति 'आध्वर्यवम्' इति याज्ञिकप्रसिद्धलौकिकसमाख्ययाध्वर्योरवघातादिकं प्रति च कर्तृत्वेन शेषतेत्येवं सापवादः शेषशेषिभावस्तृतीयाध्याये प्रपञ्चित इत्यर्थः। **पुरुषार्थैः क्रत्वर्थानामिति**; पुरुषार्थैः क्रतुभिः क्रत्वर्थानामित्यर्थः; शेषिभिः शेषाणां प्रयुक्तिरिति यावत्। शेष्येव विधेयं प्रयुङ्क्ते स्वसिद्ध्यर्थमनुष्ठापयति, न त्वनुनिष्पाद्यपि। नापि शेषः शेषिणं प्रयुङ्क्ते। अनेकशेषिसद्भावेऽपि यत्रान्यप्रयुक्तस्यैवान्यत्र विनियोगः, तत्र यत्प्रयुक्तस्यान्यत्र विनियोगः स एव शेषं प्रङ्क्ते, न तु शेष्यपि सन्नन्योऽपि। एवं च "तप्ते पयसि दध्यानयति" इति वाक्ये विधीयमानस्य दध्यानयनस्य द्विकर्मकस्य कर्मान्तराकाङ्क्षायां समभिव्याहृतं पयः कर्मान्तरत्वेनान्वीयमानं सप्तम्याधिकरणत्वेन निर्देशात् प्रधानकर्मतया पर्यवस्यतीति प्रकृतप्रधानभूतपयः—परामर्शिना तत्पदेन सामानाधिकरण्येन निर्दिष्टतया पयोरूपत्वेनावगतामिक्षैव शेषित्वात् शेषभूतं दध्यानयनमनुष्ठापयति, न तु तदनुनिष्पादि वाजिनमपीत्यामिक्षापचार एव पयोऽन्तरे दध्यानयनस्य प्रयुक्तिः, न वाजिनापचारे। "कृष्णविषाणया कण्डूयते" "चात्वाले कृष्णविषाणां प्रास्यति" इति कृष्णविषाणायाः कण्डूयनप्रासनरूपक्रियाद्वयान्वये सत्यपि कृष्णविषाणा तृतीयया कण्डूयनं प्रति शेषः, प्रासनं प्रति तु द्वितीयया शेषिणीति निर्वृत्तकण्डूयनप्रयोजनिकायास्तस्याः प्रासनात् प्रागपचारे प्रासनार्थं न पुनः कृष्णविषाणान्तरोपादानप्रयुक्तिः। "पुरोडाशकपालेन तुषानुपवपति" इत्यत्र पुरोडाशप्रयुक्तस्यैव कपालस्य तुषोपवापं प्रति शेषत्वेन विनियोगात् यत्र पुरोडाशो नास्ति न तत्र तुषोपवापार्थं कपालप्रयुक्तिरित्येवं सापवादानुष्ठापनशक्तिरूपा प्रयुक्तिर्निरूपितेत्यर्थः। **श्रुत्यर्थेति**; "अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति" इत्यादौ क्त्वाश्रुत्या दीक्षयोः क्रमः। "अग्निहोत्रं जुहोति" "यवागूं पचति" इत्यत्र होमपाकयोः प्रयोजनवशात् क्रमः। "समिधो यजति" "तनूनपातं यजति" इत्यादौ पाठक्रमात् क्रमः। "सप्तदश प्राजापत्यान् पशूनालभते" इति विहितप्राजापत्ययागाङ्गभूतेषूपाकरणनियोजनादिषु प्रथमप्रवृत्तोपाकरणक्रमानुरोधेनैव पशुषु नियोजनादीनां पाश्चात्यानां क्रमः। साद्यस्क्रे सवनीयस्थाने "सह पशूनालभते" इति सहालभ्यमानेष्वग्नीषोमीयसवनीयानुबन्धिपशुषु सवनीयस्थानानुरोधात् सवनीयस्य प्राथम्यम्। "सार-

स्वतौ होमौ भवतः" इति विहितस्त्रीपुंसदैवत्ययोः कर्मणोर्याज्यानुवाक्यावशात् स्त्रीदैवत्यस्य प्राथम्ये स्थिते तदङ्गभूतानामपि प्रधानक्रमेणैव क्रम इत्येवमादि क्रमलक्षणे निरूपितमित्यर्थः। **अधिकारिनिरूपणमिति**; अधिकारः फलस्वाम्यम्। **सामान्यातिदेश इति**; 'तद्वदिदं कर्तव्यम्' इत्यतिदेशः। स च त्रिविधः; यथा—"समानमितरच्छ्येनेन" इति प्रत्यक्षवचनेन श्येनवैशेषिकाङ्गानामिषुनामक एकाहक्रतावतिदेशः। कुण्डपायिनामयनाग्निहोत्रे नाम्ना नैयमिकाग्निहोत्रधर्माणामतिदेशः क्रियते। "मासमग्निहोत्रं जुहोति" इति सौर्यादिषु विकृतिषु 'प्रकृतिवदङ्गानि कर्तव्यानि' इत्यानुमानिकवचनेन सामान्यतोऽतिदेशः सप्तमे निरूपित इत्यर्थः। **विशेषातिदेश इति**; 'अस्य कर्मण इदं कर्म प्रकृतिः' इति प्रकृतिविकृतिविशेषचिन्ताष्टमे कृतेत्यर्थः। **ऊह इति**; प्राकृतपदार्थकार्यापन्नवैकृतपदार्थसंबन्धेन मन्त्रसामसंस्काराणामन्यथाभावात्मक ऊहो नवमे चिन्तित इत्यर्थः। **बाध इति**; कार्यमुखेन विकृतिं प्राप्तानां प्राकृताङ्गानां द्वारलोपप्रत्याम्नानप्रतिषेधपर्युदासैर्निवृत्तिः। यथा—कृष्णलेष्ववघातस्य तुषविमोकरूपद्वारलोपान्निवृत्तिः; कुशैः शराणां प्रत्याम्नानान्निवृत्तिः; "नतौ पशौ करोति" इति प्रतिषेधेनाज्यभागयोः पशौ निवृत्तिः; महापितृयज्ञे "नार्षेयं वृणीते" इति पर्युदासेनार्षेयवरणनिवृत्तिः; इत्येवं बाधो दशमे निरूपित इत्यर्थः। **तन्त्रप्रसङ्गाविति**; अनेकप्रधानोद्देश्यकसकृदङ्गानुष्ठानं तन्त्रम्; यथा—दर्शादित्रिकद्वयोद्देशेनानुष्ठीयमानानां देशकालकर्त्राद्यैक्यादगृह्यमाणविशेषतयाङ्गानां तन्त्रेणानुष्ठानम्। अन्योद्देशेनानुष्ठितेनान्यस्योपकारसिद्धिः प्रसङ्गः; यथा पश्वर्थानुष्ठितैरङ्गैः पशुतन्त्रमध्यपातिपुरोडाशस्योपकारसिद्धिरित्येवमेकादशद्वादशयोस्तन्त्रप्रसङ्गौ चिन्तितावित्यर्थः। **संकर्षसापेक्षत्वं चेति**; "प्रदानवदेव तदुक्तम्" इत्यत्र "नाना वा देवतापृथक्त्वात्" इति न्यायसापेक्षत्वस्याविष्करिष्यमाणत्वादिति भावः। **अभ्युच्चययुक्तिरुच्यत इति**; अप्रधानार्थस्यापि साक्षात्संगतत्वेन तदपेक्षितत्वात् कर्मविचारस्य पूर्ववृत्तत्वाश्रयणे, अस्मिन् शारीरकशास्त्रे ब्रह्मकारणत्वविरोधिशास्त्रान्तरप्रतिक्षेपस्यापि तत्पादे करिष्यमाणस्योपयुक्ततया सकलशास्त्रार्थविचारस्यापि पूर्ववृत्तत्वप्रसङ्गादभ्युच्चययुक्तिरित्युक्तम्। "कर्मसमृद्ध्यर्थत्वे तत्प्रयोजनं निर्वचनात्" इत्येतावद्वाक्यकारवचनं द्रष्टव्यम्। **ब्रह्मदृष्टिरूपत्वात् ब्रह्मज्ञानसापेक्षाणीत्यर्थ इति**; यद्यपि न सर्वेषामुद्गीथाद्युपासनानां ब्रह्मदृष्टिरूपत्वम्, "लोकेषु पञ्चविधं सामोपासीत"

"वृष्टौ पञ्चविधं सामोपासीत" इत्यादौ तदभावात्; तथापि ब्रह्मदृष्टिरूपोद्गीथाद्युपासनविशेषाणां ब्रह्मदृष्टिरूपत्वात् ब्रह्मज्ञानापेक्षेत्यर्थः। यद्यप्युद्गीथाद्युपासनविशेषा भवन्तु ब्रह्मदृष्टिरूपा ब्रह्मज्ञानसापेक्षाः, नैतावता "तन्निर्धारणानियमस्तद्दृष्टेः" "अङ्गेषु यथाश्रयभावः" इत्यादिषु क्रियमाणस्योद्गीथाद्युपासने क्रत्वर्थपुरुषार्थत्वविचारस्य ब्रह्मज्ञानसापेक्षत्वमस्ति, अपितु प्रसङ्गान्निरूपणम्; तथापि "ब्रह्मदृष्टिरुत्कर्षात्" इत्यादिषु ब्रह्मदृष्टित्वपुरस्कारेण प्रवृत्तेषूद्गीथाद्युपासनविचारेषु ब्रह्मज्ञानसापेक्षत्वमस्तीत्यभिप्रायः। ननु "ब्रह्मदृष्टिरुत्कर्षात्" इति विचारस्य "मनो ब्रह्मेत्युपासीत" इति मनआदिसाधारण्यात् मनआदिस्वरूपशोधकसांख्याद्यागमस्याप्युपजीव्यत्वप्रसङ्गेन पूर्ववृत्तत्वप्रसङ्ग इति चेत्—न; एतस्याभ्युच्चययुक्तितयैतादृशातिप्रसङ्गस्यादोषत्वात्। **ब्रह्मविद्यां शीघ्रं संपादयन्तीत्यर्थ इति**; न च ब्रह्मज्ञानसापेक्षाणामेषां ब्रह्मविद्योत्पादकत्वं विरुद्धमिति वाच्यम्, आगमोत्थब्रह्मज्ञानसापेक्षस्योद्गीथोपासनस्य विवेकादिजन्योपासनाङ्गत्वेऽविरोधात्। ततश्च ब्रह्मविद्योत्पादकशमदमादिचिन्तनवदेतच्चिन्तनमप्यत्र संगतमित्यर्थः। **अन्यतरापेक्षयोभयापेक्षया वेति**; अयं भावः—"ब्रह्मजिज्ञासा" इति सूत्रे ब्रह्मानुबन्धिनां सर्वेषां विचार्यत्वं प्रतिज्ञातम्। अतस्तदुपासनतत्फलतदनुबन्धिविचारस्य सर्वस्य प्रतिज्ञाततया तत्संगतिः साक्षात्संगतिः। ततश्चोपासनापेक्षिततयोपासनानुबन्धित्वमप्यस्ति; ब्रह्मदृष्टिरूपत्वात् ब्रह्मानुबन्धित्वमप्यस्ति। अतः केवलोपासनमात्रानुबन्धिशमाद्यपेक्षयाप्यभ्यर्हितत्वमिति। **कर्माङ्गाश्रयत्वं पूर्वभागविचारसंगतेरिति**; अन्ततो गत्वा इदमपि केवलकर्मविद्याङ्गकर्मसाधारणत्वात् साधारणमित्यभिप्रायः। **प्रागुक्तसंगतिविशेषविशिष्टत्वात्तयोरिति**; ननु कर्मब्रह्मविचारयोः पौर्वापर्यविचारदशायां कथं तत्सिद्धवत्कारेण 'न हि कर्मविचारात् पूर्वं ब्रह्मविचार उपपद्यते, संगतिविशेषविशिष्टत्वात् तयोः' इत्युक्तिरिति चेत्—न; क्रमविशेषनियामकसंगतिविशेषविशिष्टाविरुद्धावान्तरवाक्यार्थैकप्रयोजनत्वरूपशास्त्रैक्यस्यैव कर्मविचारपूर्ववृत्तत्वे प्रधानयुक्तितयान्यस्याभ्युच्चययुक्तित्वेन सिद्धवत्कृत्य कथने दोषाभावात्। **वैषम्यत्रयविशेषिताया इति**; उभयापेक्षायाः साम्येऽपि कर्मविचारे कर्तुमशक्यत्वादुपनिषद्भागविहितत्वाच्च सूत्रकृतेह शास्त्रे विचारितमिति ब्रह्ममीमांसाविचारितत्वमेव फलतया वक्तुमुचितम्, न तु ब्रह्ममीमांसाविचारितत्वमपि हेतूकर्तुमुचितमिति चेत्—न; वैषम्यद्वय एव तात्पर्यादिति केचित्। अन्ये तु सूत्रकाराणां स्वतन्त्रेच्छत्वात् जैमिनिना न कृतम्, बादरायणेन कृतमित्यपि युक्त्यन्तरप्र-

दर्शकं तदिति वदन्ति। **नियमेनापेक्षितत्वरूपं प्रधानहेतुरिति**; ननु यागस्य देवतोद्देशेन द्रव्यत्यागरूपत्वात् देवताविचार एव सर्वापेक्षया पूर्वभावी किं न स्यात्? किंच अथशब्दस्य देवताविचारानन्तर्यमवश्याश्रयणीयम्, न तु व्यवहितकर्मविचारानन्तर्यमिति चेत्; उच्यते—संकर्षकाण्डोऽप्यविचारितकर्मविशेषविषय एव। जैमिनिर्हि द्वादशलक्षणीं प्रणीय तत्राविचारितांशमालोच्य पुनरपि चतुर्लक्षणीं प्रणिनायेति प्रसिद्धिः। अत एव हि "संहितमेतच्छारीरकं जैमिनीयेन षोडशलक्षणेन" इति वृत्तिग्रन्थोऽपि संगतः। अत एव "प्रदानवदेव" इत्यधिकरणे भाष्ये यत्संवादतयोपात्तं "नाना वा देवता पृथक्त्वात्" इति तज्जैमिनीय एव दृश्यते, न तु देवताकाण्डे काशकृत्स्नीये। अतोऽपि संकर्षः कर्मविषय एव। तत्रैव केषांचिद्देवताकाण्डत्वव्यवहारोऽप्यस्तीति[1]। भाष्ये—**सर्वसंमतेति**; सर्वेषां संमता सर्वसंमतेति शेषलक्षणषष्ठ्याः समासः, "क्तस्य च वर्तमाने" इति षष्ठ्यास्तु "क्तेन च पूजायाम्" इति निषेधादिति द्रष्टव्यम्। **वक्ष्यमाणवस्तुसामर्थ्यान्तर्भूत इति**; ततश्च तत्परिहार एवास्यापि परिहार इति भावः।

### श्रुतप्रदीपिका

एवं कर्मविचारस्य पूर्ववृत्तत्वमुपपादितम्; अथ परोक्तसाधनचतुष्टयपूर्ववृत्तत्वं निरस्यते—**अपि चेति**। मीमांसेत्युभयभागोक्तिः। फलं भुक्तिमुक्ती। करणं यज्ञादिकमुपासनं च। इतिकर्तव्यता प्रयाजादिका यज्ञशमादिका च। बुभुक्षुर्मुमुक्षुश्चाधिकारी। पदार्थनिश्चयाद्वाक्यार्थनिश्चयवत् तत्तदधिकरणाधीनप्रातिस्विकार्थनिश्चयात् पुरुषार्थतत्साधनसमुदायनिश्चय इति भिदा। साङ्गाध्ययनाधीननित्यानित्यापातप्रतीतिः स्वर्गापवर्गसाधारणीति न सामान्यविरागमुमुक्षुत्वहेतुः। कणादादिशास्त्रान्तरं तु नित्यानित्यविपरीतधीहेतुः, वियत्परमाण्वादिनित्यताद्युक्तेः; अनवसरग्रस्तत्वं च, पुरुषस्य प्रथममध्ययनगृहीतत्वात्। पुराणादि च श्रुतवेदार्थोपबृंहणम्, न स्वातन्त्र्येण नित्यादिनिश्चायकम्, तथा सति तेनैव ब्रह्मस्वरूपनिश्चयेन शारीरकवैयर्थ्यप्रसङ्गात्। शमादि तु निरूपयिष्यते। **शमदमाद्युपेतः स्यादिति**। अतः पश्चाद्भाविनो न पूर्ववृत्तत्वमित्यर्थः। एवं व्याख्येयवेदस्वभावात् कर्मब्रह्ममीमांसयोः पौर्वापर्यमुक्तम्; अथ व्याख्यानरूपमीमांसास्वभावाच्च कर्मचिन्तायाः

---

१. अधिकरणसारावल्यादिग्रन्थपर्यालोचने श्रीनिगमान्तमहादेशिकानामयमेव पक्षः संमत इति गम्यते।

पूर्ववृत्तत्वमाह—**एषामिति । एषाम्**; शमादीनाम् । **विनियोगः**; अङ्गत्वज्ञापनम् । **तार्तीयः**; तृतीयाध्यायसिद्धः । इदं प्रदर्शनार्थम्; तत्र तत्र पूर्वकाण्डोक्तकृत्स्नन्यायसापेक्षत्वादिति भावः । अथाभ्युच्चयहेतुमाह—**उद्गीथेति** । समृद्धिरप्रतिबन्धफलत्वम् । अन्यतरस्योभयोर्वापेक्षाविरहेऽपि सादृश्यादिना धीस्थत्वं प्रासङ्गिकत्वमिति तद्व्युदासाय प्रथममुद्गीथादिधियो ब्रह्मचिन्तापेक्षामाह—**ब्रह्मदृष्टीति** । ब्रह्मविद्याया एतदपेक्षामाह—**तान्यपीति** । तच्छब्दो विद्योत्पादककर्मपरः; सुतरामुभयापेक्षयेत्यर्थः । कर्माङ्गाश्रयत्वात् पूर्वत्र ब्रह्म दृष्टिरूपत्वादुत्तरत्र च चिन्त्यत्वे प्राप्ते धर्मसमृद्ध्यर्थत्वे च साधारणेऽपि पूर्वत्र ब्रह्मणोऽपि चिन्तितत्वात् तद्दृष्टिरूपोद्गीथादिधियां चिन्तनं तत्राशक्यमित्यभिप्रेत्य **इहैवेत्युक्तम्** । अस्त्वेवं संगतिः, तथापि किमित्यत्राह—**तेषामिति** । एवमुद्गीथविद्यादिविचारस्य साक्षात्संगतत्वात् तदपेक्षितं कर्मचिन्तनं पूर्ववृत्तमित्यभ्युच्चयहेतुः । एकदेशाध्ययनं त्ववैधम् । कृत्स्नाध्यायिनोऽपि सुकृतवशादुत्तरत्रैवापेक्षा चेत् तत्रापि फलाध्याय एव सा किं न स्यात् ? तस्य समन्वयलक्षणाद्यपेक्षास्ति चेत्, इहापि पूर्वभागचिन्तापेक्षा तुल्या । आपाततोऽनन्तस्थिरप्रतीतिस्तु पूर्वत्रापि तुल्येत्युक्तम् । अतोऽधीतक्रमेण कर्मविचारप्राथम्यात् तन्न्यायसापेक्षत्वात् ब्रह्मविचारस्योद्गीथादिचिन्तापेक्षितत्वाच्च कर्मविचारस्यैव पूर्ववृत्तत्वम् ।

### नयप्रकाशिका

"ननु ब्रह्मजिज्ञासा यदेव" इत्यारभ्य "सर्वसंमता" इत्यन्तेषु भाष्येषु विवक्षितविवेकायास्मद्राद्धान्तोपयोगिन्यो युक्तय उपात्ताः, प्रदेशान्तरसूत्रभाष्यलब्धाश्च तत्सौकर्यायैव परप्रक्रियाप्युत्तरत्रोपन्यस्य निरस्यते । **यस्यायंनिरतिशयप्रियः स एवास्य प्रियतमो भवतीति**; यस्य पुरुषस्यायं परमात्मा प्रीतिविषयः स पुरुष एवास्य परमात्मनः प्रियतमो भवतीत्यर्थः । **आरम्बणसंशीलनमिति**; ज्ञानालम्बनस्योपास्यस्य संशीलनमित्यर्थः । शेषं न्यायोक्त्यैव व्याख्यातं स्पष्टं च । अत्र परेषां शास्त्रैक्यादिभङ्गहेतवः प्रायेण निरस्ताः । यत्तु तैः श्रुतिलिङ्गादीनां लोकसिद्धत्वान्न पूर्वकाण्डापेक्षेत्युक्तम्—तदसत्, तेषां लोकसिद्धत्वाभावात् । न हि लोके घटादिवत् श्रुत्यादयः प्रसिद्धाः । विद्वल्लोकप्रसिद्धावपि तेषां तदुपजीवनादेव श्रुत्यादिव्यवहारः । न हि यथाजातानामविदुषां केषांचिन्मीमांसापरिचयाभावेऽपि तद्व्यवहारः, तद्वित्सेवया कर्णाकर्णिकया वा तत्र श्रुत्यादिस्वरूपव्युत्पत्तेः । किंच पश्यतोहराणां तेषां नोत्तरं देयम् । यतः स्वैरपि तत्र तत्र पूर्वमीमांसो-

55

क्तन्यायकलाप एवोपजीव्यते, अथ च 'न हेतुत्वादिकम्' इति वदन्ति। न हि सर्वापलापिनामेषामेवंविधोक्तिर्विस्मयहेतुः। अर्थात् परप्रक्रियाभङ्गसिद्धावप्यज्ञानां तन्निरासपाटवजननाय पूर्वोत्तरयोर्हेतुहेतुमद्भावप्रसाधनव्याजेनार्थात् परप्रक्रियोपन्यासनिरासौ कृतौ। यथाशक्ति तौ प्रकाश्येते—मिथ्यावादिनस्तु पूर्वोत्तरमीमांसयोरैकशास्त्र्यादिकं न सहन्ते; तथाहि—ब्रह्मविचारस्य न कर्मज्ञानापेक्षा, तदनधिगमेऽपि ब्रह्मविचारोपपत्तेः। न चोद्गीथादिविद्यायाः कर्माश्रयत्वेन तन्निश्चयापेक्षेति वाच्यम्, अस्या वस्तुतः कर्मविचारान्तर्गतत्वात्। न च तर्हि नात्र तद्विचारो युक्त इति वाच्यम्, ज्ञानरूपत्वेनात्र विचारितत्वात्। न च तयोरैक्ये पौर्वापर्ये च प्रमाणमस्ति। निःश्रेयसार्थत्वात् ब्रह्मज्ञानस्याभ्युदयार्थत्वेन धर्मज्ञानस्य तद्विरोधित्वात्, ब्रह्मज्ञानस्य सकलभेदोपमर्दित्वादितरस्य च भेदावलम्बित्वात्, फलद्वारतोऽप्यन्योन्यापेक्षाभावाच्च तयोर्नैक्योपपत्तिः। अत्र भास्करीयाः प्राहुः—ज्ञानकर्मणोः समप्रधानयोरेव मोक्षसाधनत्वेन "विद्यां चाविद्यां च" इत्यादौ श्रुतत्वात् "सर्वापेक्षा" इत्यादौ सूत्रकारेण च वक्ष्यमाणत्वात् कर्मज्ञाने हेयोपादेयविभागेन कर्मानुष्ठानस्य शक्यत्वात् तदपेक्षेति—तन्न, "विद्यां चाविद्यां च" इत्यादौ फलभेदश्रवणादेकफलत्वानुपपत्तेः; प्रत्युत "ब्रह्मविदाप्नोति परम्" "नान्यः पन्था अयनाय विद्यते" इत्यादौ ब्रह्मवेदनस्यैव हि मोक्षसाधनत्वं श्रूयते। "न कर्मणा" इत्यादौ कर्मणस्त्याज्यता च श्रूयते। "सर्वापेक्षा च" इत्यादिरपि कर्मणां परम्परयोपायत्वकथनमात्रपरः। "यज्ञेन दानेन" इत्यत्र विविदिषायामेव हि विनियोगः। न च—वेदनं प्राप्तुमिच्छा विविदिषा, ततो वेदनप्राधान्यमेव गम्यत इति वाच्यम्; प्रधानस्यापि वेदनस्य प्रकृत्यर्थतया शब्दतोऽप्रधानत्वात्; इच्छायाश्च प्रत्ययार्थत्वेन प्राधान्यात्; प्रधाने च कार्यतासंप्रत्ययस्य 'राजपुरुषमानय' इत्यादौ दर्शनात्। वस्तुतः प्रधानस्यापि न राज्ञः कार्यसंबन्धः, उपसर्जनत्वाद्राजशब्दस्य। तेषां परंपरयोपयोगश्च नित्यकर्मानुष्ठानाद्धर्मोत्पादः, ततः पापक्षयः, ततः संसारेऽनित्यत्वाशुचित्वज्ञानोदयः, ततस्तत्र विरक्तिः, ततस्तज्जिहासा, ततस्तद्धानोपायान्वेषणम्, तत आत्मज्ञानस्यैव तदुपायत्वश्रवणम्, ततस्तच्छ्रवणादौ प्रवर्तत इति। किंच यज्ञादीनां प्रधानत्वे प्रयाजादिवदङ्गत्वे च नित्यवत् संन्यासिनामप्यनुष्ठेयता स्यात्। संन्यासश्च मोक्षज्ञानार्थ इति सर्वसंमतः। सन्यासिनः सर्वकर्मणां यज्ञोपवीतादेरपि त्यागः श्रूयते, स्मर्यते च—"अथ परिव्राड्विवर्णवासा मुण्डोऽपरिग्रहः" इत्याद्युक्त्वा "अय-

ज्ञोपवीती कथं ब्राह्मणः ?" इति प्रश्ने "इदमेव तद्यज्ञोपवीतं य आत्मा" इत्येवकारेण यज्ञोपवीतस्यापि व्यावृत्तिः श्रूयते। तथा "परिव्राडेकशाटीपरिवृतो मुण्ड उदपात्र्यरण्यनित्यो भिक्षार्थी ग्रामं प्रविशेत्सायंप्रदक्षिणोऽविचिकित्सः सार्ववर्णिकं भैक्षचरणमभिशस्तपतितवर्जमयज्ञोपवीती शौचनिष्ठः काममेकवैणवं दण्डमाददीत" इत्यादावपि कर्मत्यागः श्रूयते। तथा बोधायनस्मृतावपि "ऊर्ध्वं यज्ञोपवीतमासनं शिखा यष्टयः शिक्यं जलपवित्रं कमण्डलुमित्येतानि वर्जयित्वाथ दण्डमादत्ते" इति। "संन्यसेत् सर्वकर्माणि" इति स्मृत्यन्तरं च। न च कर्मक्षयहेतुत्वेनापि कर्मणां स्वीकारापेक्षा, "क्षीयन्ते चास्य कर्माणि" इत्यादौ ज्ञानादेव कर्मक्षयश्रवणात्। किंच ब्रह्मव्यतिरिक्तस्य कृत्स्नस्य मिथ्यात्वेन ज्ञानबाध्यत्वश्रुतेः कर्मनिवृत्त्यर्थं नोपायान्तरान्वेषणम्। किंच तेषामङ्गत्वेऽपि ब्रह्मविचारस्य प्राथम्यं स्यात्; अन्यथा ह्यधर्मविचारान्मुमुक्षुणानुष्ठीयमानकर्मानर्थक्यप्रसङ्गः। ब्रह्मणि विचारिते ह्यनुष्ठीयमानकर्मणस्तदङ्गत्वसिद्धिः। न च सर्वसाधारणत्वात्कर्मविचारस्य प्राथम्यमिति वाच्यम्, सर्वसाधारणार्थप्रवृत्त्यनुपपत्तेः। स्वेष्टसाधनादिष्वेव हि प्रवृत्त्युपपत्तिः। ननु कर्माननुष्ठाने प्रत्यवायापत्तेः कर्मनिश्चयार्थं तत्प्राथम्यमिति चेत्, न; नित्याल्पानुष्ठानेऽपि प्रत्यवायपरिहारात्। किंच संन्यासिनः स्वाश्रमधर्ममात्रस्य विद्याङ्गत्वाभिधानादग्निहोत्रादिविचारश्च निष्प्रयोजनः। न चात्र पूर्वकाण्डोक्तन्यायोपयोगात्कर्मज्ञानस्य पूर्ववृत्तत्वमिति वाच्यम्, सगुणविद्यास्वेव तद्विनियोगात्, तासां च धर्मान्तर्गतत्वात्। ननु चत्वारिंशत्संस्काराणां ब्राह्मणादेरावश्यकत्वात्तत्संस्कारयुक्ताक्रोधादिसहितस्यैव मोक्षश्रवणात् कर्मज्ञानापेक्षा; कर्मणां विविदिषोत्पत्त्यर्थत्वेनाप्यनुष्ठेयत्वात्; कर्मविचारापेक्षा "यस्यैते चत्वारिंशत्संस्कारा अष्टावात्मगुणाः स ब्रह्मणः साधुज्यं गच्छति"

"महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः।"
"ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः॥"

"यज्ञेन दानेन" इत्यादिभिर्हि श्रूयत इति चेत्—न; केवलचत्वारिंशत्संस्काराणां मोक्षहेतुत्वाभावात्। विविदिषोत्पत्त्यर्थत्वेऽपि विद्योदयजन्मन्यनुष्ठीयमानानामेव तदर्थत्वमिति न नियमः, जन्मान्तरानुष्ठितैरपि तत्सिद्धेः। न ह्यदृष्टसाध्ये फले कालनियमः। अतो न नियमेन तद्विचारस्य पूर्ववृत्तत्वम्। अतो न हेतुत्वम्। तस्य नियम एव हि तद्धेतुत्वसंभवः। अतः कर्मणां ज्ञानबाध्यत्वेन वस्तुविरोधान्न विद्याङ्गत्वम्; "विविदिषन्ति" इति शब्द-

बलाच्च। अतो न कर्मज्ञानस्य पूर्ववृत्तत्वम्; किंतु नित्यानित्यवस्तुविवेकादेरेव, तस्यैवापेक्षितत्वात्। न ह्यनित्यवस्त्वप्रतीतौ नित्यवस्तुपरिच्छेदः तयोरविवेके च नैहिकादिफलविरागः; तदभावे च न शमाद्युपपत्तिः; तदभावे च न मुमुक्षुत्वम्; तदभावे च न ब्रह्मजिज्ञासाप्रवृत्त्युपपत्तिरिति तस्यैव पूर्ववृत्तत्वम्। अनित्यतादिपरिज्ञानं च "तद्यथेह कर्मचितः" इत्यादिश्रुत्या। ब्रह्मव्यतिरिक्तस्य परिच्छिन्नत्वेन कार्यता सिद्धा। कार्यस्य च विनाशः सिद्धः। विनाशश्चोपादानावधिकः। उपादानं च ब्रह्मैव, शून्यस्योपादानत्वानुपपत्तेः। तथात्वे च कार्यस्यापि शून्यतापातः। कृत्स्नकार्यस्य चैकोपादानत्वकल्पनैव युक्ता, लाघवात्। सर्वं कार्यं कदाचित्कार्त्स्न्येन वैकदेशेन वा विनश्यति, एकोपादानत्वात् सुषुप्तावात्मगतसुखादिवदित्यादिभिस्तर्कसहितानुमानैश्च तदनित्यत्वादिपरिज्ञानम्। फले विरक्तिश्च "परीक्ष्य लोकान्" इत्यादिश्रुत्या। शान्त्यादिश्च "शान्तो दान्तः" इत्यादिश्रुत्या। तदङ्गत्वं चैतच्छ्रुत्यैवावगम्यते। तेषां च न वाक्यज्ञानाङ्गत्वम्, ज्ञानस्याविधेयत्वात्। विधेयार्थस्य विधेयार्थाङ्गतैव युक्ता। अत्र विधेयं च श्रवणम्। श्रवणे च मुमुक्षुरधिकारी। अधिकारनिमित्तत्वेनैव शमादीनां स्वीकारः। अङ्गानामनुष्ठेयत्वेऽपि दीक्षादिवदधिकारनिमित्तत्वं चोपपन्नम्। श्रवणं चात्मैकत्वप्रतिपादनपरत्वं वेदान्तस्येति तत्त्वविद्भ्यो न्याययुक्ततदर्थग्रहणम्। ग्रहणविधिश्च "तपसा ब्रह्म विजिज्ञासस्व" इत्यादिश्रुत्या। "विजिज्ञासस्व" इत्यन्तर्णीतविचारस्यैव विधिः। ज्ञानस्य तु यथाप्रमाणं प्रत्यक्षादिना घटादिज्ञानस्येव जायमानत्वेनाविधेयत्वम्। अतः "आत्मन्येवात्मानं पश्येत्" इत्यादयोऽपि साधनविधिपराः। अतो मनननिदिध्यासनाभ्यां श्रवणरूपाङ्गविधिः। तच्च वाक्यार्थज्ञानोपयोगि, तत्सद्भाव एव वाक्यार्थज्ञानोत्पत्तेः। अतः साधनचतुष्टयसंपत्त्यभावे श्रवणप्रवृत्त्यनुपपत्तिरूपात् सामर्थ्यात्पूर्वोक्तसाधनचतुष्टयस्यैव पूर्ववृत्तत्वम्। ननु ब्रह्मव्यतिरिक्तस्य मिथ्यात्वं कथम्? येन तस्य ज्ञानैकनिवर्त्यत्वं स्यादिति चेत्, "सदेव सोम्येदमग्र आसीत्" इत्यादि प्रमाणान्यथानुपपत्त्येति ब्रूमः। न हि प्रपञ्चस्य सत्यत्वे "एकमेवाद्वितीयम्" इत्याद्युपपत्तिः। सजातीयविजातीयस्वगतनानात्वं हि तत्र निषिध्यते। गुणा अपि "निर्गुणम्" इत्यादौ निषिध्यन्ते; तत्र तत्र नानात्वनिन्दाप्रतीतेश्चय; नानावस्तुसद्भावे हि न तद्दर्शननिन्दोपपत्तिः।*

---

* टि. इतः परं महापूर्वपक्षोक्ता विषया उपपादिताः। ते च महापूर्वपक्षान्ते निवेशिता द्रष्टव्याः।

## तत्त्वटीका

न केवलमस्मदुक्तस्य युक्तत्वमात्रम्; त्वदुक्तस्य दोषोऽप्यस्तीत्यभिप्रायेणाह— **अपि चेति**। तत्रान्योन्याश्रयमुद्घाटयति—**नित्येति**। चस्त्वर्थो वर्तिष्यमाणस्य वृत्ततावैपरीत्यद्योतकः। **मीमांसा**शब्दोऽत्र भागद्वयार्थः; आत्मनित्यताद्युपादानात्। **श्रवण**शब्दश्च विचारपर्यन्तः। अयं भावः—किमत्र विवेकशब्देन निश्चयो विवक्षितः, आपातधीर्वा? नाद्यः—कृत्स्नमीमांसासाध्यस्य ब्रह्मविचारापेक्षया पूर्ववृत्तत्वायोगात्; आत्मनित्यत्वादिकं ब्रह्मकाण्डे हि निरूपयिष्यते। न द्वितीयः—तस्याः कर्मब्रह्मकाण्डसाधारणत्वेन विशेषतोऽत्र वक्तुमयुक्तत्वात्। प्रथमातिक्रमे कारणाभावस्य चोक्तत्वात्। न च सा फलान्तरवैराग्यादेर्हेतुः; उभयत्रामृतत्वाद्यापातधीसिद्धेः। न च कपिलकणादादितन्त्रैर्विवेकः; अध्ययनादिक्रमेण तदवसरनिरोधोक्तेः, तेषु च बहुधा निःश्रेयसतत्साधनादौ विवेकवैपरीत्यस्य त्वयापि संमतत्वात्। अत एव हि निरसिष्यन्ते। "नित्यं हि नास्ति जगति" इत्याद्युपबृंहणं तु श्रुतिमनुरुध्यैव विवेकार्थं स्यात्। न तु स्वातन्त्र्येण; अन्यथा किं शारीरकेण? ततोऽन्यत्र संशयादिसंभवादिति चेत्; तर्हि तत्र न विवेकसिद्धिः। यत्त्वत्र वाचस्पतिनोक्तम्—"नित्यानित्ययोर्वसतीति नित्यानित्यवस्तु, तद्धर्माः, नित्यानित्ययोर्धर्मिणोस्तद्धर्माणां च विवेको नित्यानित्यवस्तुविवेकः" इत्यारभ्य, "नित्यत्वं सत्यत्वं तद्यस्यास्ति तन्नित्यं सत्यं, तथा चास्थागोचरः; अनित्यत्वमसत्यत्वं तद्यस्यास्ति तदनित्यमनृतम्; तथा चानास्थागोचरः" इति; "यदृतं तन्नित्यं सुखं व्यवस्थाप्यते, तदास्थागोचरो भविष्यति; यत्त्वनित्यमनृतं भविष्यति, तापत्रयपरीतं तत्त्यक्ष्यत इति सोऽयं नित्यानित्यवस्तुविवेकः" इति च; एतदपि मन्दम्, अनित्यस्याप्यबाधितत्वेन सत्यत्वस्य स्थापयिष्यमाणत्वात्। न च नित्यं सुखमनुपादेयमिति धिया कर्मिणां कर्मविचारादौ प्रवृत्तिः; किं तु तस्य कर्मसाध्यत्वभ्रमाद्वा दौर्लभ्यबुद्ध्या वा। किंच नित्यत्वादिमात्रं नास्थागोचरत्वादिनिदानम्; पुरुषार्थतत्साधनत्वाभ्यामेव सास्था; तद्वैपरीत्याच्चानास्था। ते च नित्यानित्ये यथार्हे स्याताम्। निरूपकस्यापि ह्यनित्यसुखत्यागः "अशक्यानि दुरन्तानि समव्ययफलानि च" इति न्यायात्; अधिकसुखलाभतृष्ण्या वा स्यात्। तदभावेऽत्यल्पमपि सुखमुपादीयते। नित्यमपि यदि दुःखात्मकमनुभयरूपं वा कथमास्थार्हम्? प्रकृतस्य प्रकृष्टसुखत्वेन प्रतीतत्वादिति चेत्—तत्प्रतीतिस्तावन्न व्याप्त्या,

अदृष्टेः । न च श्रुत्या, तन्मूलापातधियः साधारण्यादिदौस्थ्यात्; निश्चयस्य तु मिथः संश्रयग्रस्तत्वात्; तन्त्रान्तरस्मृत्योश्चासाधकत्वस्य दर्शितत्वात् । नित्यसुखसंभवमूलोपादित्सा च साधारणी । तन्त्रान्तरे तदसंभवश्च सुव्यक्तः । "आनन्दो ब्रह्म" इत्यादिरमीमांसितकर्मब्रह्मभागैर्दुर्बोधः, प्रमाणाध्याये तर्कपादे च तन्निरासात् । तत एवात्राद्यसूत्रेऽन्यत्र च नित्यफलासंभवः प्रकृतोपयोगात् प्रतिष्ठाप्यत इत्यपि दुर्वचम्; युष्माभिरेवं सूत्रवाक्यार्थानुक्तेश्च । अपि च नित्यसुखस्यात्र संभावनामात्रम् । स्वर्गादिसुखस्यानित्यत्वं च न शास्त्रान्तरेणानुमानेन वा सिध्येत्, ताभ्यामेव वैपरीत्यस्यापि सुवचत्वात्; स्वर्गसुखमनित्यं सुखत्वादित्यादेरमृतत्वादिश्रुतिबाधात्; तदान्यपर्यस्य तन्निरूपणसापेक्षत्वात्; अन्यथा मुक्तसुखमनित्यं सुखत्वादित्यादेरपि प्रसक्तेः । तदप्रसक्तिश्च त्रय्यन्तार्थनिर्णयात्, स च तयेति मिथःसंश्रयः । अतः कर्मविचार एवात्रापेक्ष्यः । शमदमादीनां साधनत्वविवेकः तत्स्वरूपमात्रं वा वृत्तमित्युच्यते । न पूर्वः; तस्य "शमदमाद्युपेतः स्यात्" इति साधनलक्षणे निष्पाद्यत्वात् । नोत्तरः; तत्र श्रवणौपयिकावधानादिमात्ररूपाणां सर्वशास्त्रसाधारण्येन विशेषतोऽत्र वक्तुमयुक्तत्वात् । योगौपयिकानां तु बाह्यान्तःकरणनिरोधादिरूपाणां त्रय्यन्तार्थश्रवणात्पूर्वमयुक्तेः, "तस्मादेवंविच्छान्तो दान्तः" इति ब्रह्मधीपूर्वकत्वोक्तेश्च । किं च नित्यानित्यविवेकादयः किं हेतुसाध्यरूपेण स्थिताः? अन्यथा वा? आद्ये कर्मविचारोऽपि "परीक्ष्य लोकान्" इत्यादिप्रकारेण मुमुक्षायाः परंपरया हेतुहेतुमद्भावात्सह पाठ्यः; अन्यथा मुमुक्षुत्वमेकमेव हि पाठ्यम्; किं चतुष्कग्रहणेन । द्वितीयेऽप्यभ्युपगमविरोधात्, "विवेकाद्वैराग्यम्" इत्यादिक्रमस्य पौर्वापर्यख्यातत्वादिति । अत्र **मीमांसाश्रवणमन्तरेणे**त्युक्तं विवृणोति—**फलेति** । कर्मभागे स्वर्गादिर्यागादिः प्रयाजादिर्बुभुक्षुश्च फलादयः । ब्रह्मभागे तु मुक्त्युपास्तिशमादिमुमुक्षवः । एषां विशेषः पूर्वपक्षोक्तात् व्यावृत्तं रूपं मिथो भेदश्च । नात्र फलकरणादिनिश्चयेन कर्मस्वरूपादिबोधोक्तौ साध्याविशेषः; पदार्थवाक्यार्थनीत्या तेषु तेष्वधिकरणेषु तत्तदवान्तरवाक्यार्थनिश्चयेन पश्चान्मिथः संसृष्टविशिष्टमहावाक्यार्थबोधोक्तेः, वैराग्यादिमूलभूतस्य नित्यानित्यविवेकस्य फलकरणादिनिश्चयान्तर्गतबोधनपरत्वाच्च । कर्मग्रहणमिहोपास्तेरप्युपलक्षकम् । क्रियत इति बोभयसंग्रहः; उपासनेऽपि कर्मशब्दः सूत्रेऽप्युक्तः—"प्रकाशश्च कर्मण्यभ्यासात्" इति । तत्र च भाष्यम् "उपासनात्मके कर्मणि" इति । अन्यत्र

च "यागादिकमुपासनात्मकं च कर्म" इति। मानसकर्मोक्तिश्च स्मृत्यादिषु दृश्यते। कर्मशब्दस्यात्र ज्योतिष्टोमादिमात्रविषयत्वं मत्वा **तत्स्थिरत्वास्थिरत्वे**त्येतन्निरूपणप्रकारस्यानुकारः, न तु निश्चयप्रकारस्येति केचित्। अत्र वैघटघट्यञ्जकेन व्यतिरेकेण भाष्यमाणस्यायं च भावः—'किं, केन, कथम्' इत्याकाङ्क्षितफलायंशत्रयनिश्चयमन्तरेण कथं त्र्यंशभावनात्मककर्मबोधः? कथं च जीवनादिविशेषिताधिकारान्वितस्वर्गादिपदार्थस्य देहान्तरदेशान्तरभोग्यत्वनिश्चयः? तदभावे च कथं लोकायतसौगतगतिखण्डनगर्भपूर्वोत्तरदेहानुवृत्तात्माध्यवसायः? आत्मनि च सुखतयोपलब्धेरन्यथासिद्ध्या वचनमन्तरेण कथं सुखत्वश्रुतिमुख्यत्वम्? तादृशात्मनिश्चयाभावे देहमेवात्मानं मन्यमानस्य कथमैहिकफलविरक्तिः? नित्यसुखरूपतया सिद्धस्याप्यधिकर्तुः प्रवृत्तिधर्मफलं कृत्स्नं 'परिमितविषयभोगरूपमनित्यं, निवृत्तिधर्मफलं परं नित्यम्' इति निश्चयालाभे कथं स्वर्गाद्यनित्यफलजिहासा, नैगमान्तिकनित्यफलधिया समाकर्षश्च? अतः साधनचतुष्कवृत्तवादे विवेकविशेषादेर्मूलतया भागद्वयविचार एष्टव्यः। ततश्च कर्मविचारसापेक्षत्वम्। परमन्योन्याश्रयस्त्वधिक इति। आदिशब्देन ज्ञानानन्दरूपत्वसंग्रहः। शमादिसाधनसंपत्तौ विशेषतश्च दोषमाह—**एषामिति**; "शान्तो दान्तः" इत्यादिविनियोजकवाक्योक्तानामित्यर्थः। विनियोगोऽङ्गाङ्गित्वबोधनम्। "संबन्धः" इति तु न्यायसुदर्शनम्। शमादेरङ्गत्वे बोधिते ह्यत्र साधनत्वमनुक्तमप्यर्थात्सिध्येत्। ततः किमित्यत्र शेषलक्षणसिद्धप्रमाणलक्षणसापेक्षत्वमाह—**विनियोग इति**। एतैर्मा नैर्ब्रह्मकाण्ड एव तद्विनियोगश्चिन्त्यतामित्यत्राह—**स इति**। **स च तार्तीयः**; प्रागुक्तसंगतिक्रमेण कर्मकाण्डतृतीयाध्यायोक्तः। इह पुनस्तृतीये लाघवानुसारात्पूर्वं व्युत्पादितैस्तैरेवाक्षेपसमाधानमात्रं करिष्यते। एवमेवाध्यायान्तरन्यायोपजीवनं चात्र द्रष्टव्यमिति भावः। अथ युक्त्यन्तरं दर्शयन्नुद्गीथाद्युपासनविचारस्य स्थानान्तरानर्हतयात्रैव मुख्यसंगत्या कर्मब्रह्मचिन्ताक्रमं स्थापयति—**उद्गीथेति**। **कर्मसमृद्ध्यर्थान्यपी**त्यनेन पूर्वत्रोपयोग इह नेति शङ्कोद्घाट्यते। **कर्मसमृद्धिः**; "तदेव वीर्यवत्तरम्" इति श्रुत्युक्तेः प्रबलकर्मभिरप्रतिबन्धो गुणफलरूपः। **ब्रह्मदृष्टिरूपाणीति** हेतुगर्भम्। **ब्रह्मज्ञानापेक्षाणि**; न ह्यारोप्यस्वरूपमन्यत्राजानतः क्वचिदपि तदारोपः, अनिर्वचनीयादिदृष्टेर्दूषयिष्यमाणत्वात्। इह च ब्रह्मज्ञानं प्रथमद्विकसाध्यमित्याशयः। दृष्ट्युपासनानां प्रधानानुपयोगं प्रणाड्योपयोगात् परिहरति—**तानीति**; उद्गीथाद्युपासनपरिहार्यप्रत्यूहानीति यावत्। **अपि**रत्र परारोपितविरोधद्योतकः; यद्वा

पूर्वग्रन्थेऽनुपयोगमन्वारुह्य सजातीयप्रयोगमात्रात्संगतिरनन्यगतिकाकाङ्क्षोक्त्या परिहृता ; अत्र तूपयोगश्चास्तीति व्यज्यते । **अनभिसंहितफलानि** ; बन्धकफलसंकल्परहितत्वादित्यर्थः । ब्रह्मविद्यात्र स्वाभीष्टा । **साद्गुण्यम्** ; पूर्वोक्तैव समृद्धिः, न तु वैकल्यनिवृत्तिः । तदापादकानि ; कर्मसमृद्ध्युत्पादकानि ।

कर्मजात्कर्मसाद्गुण्यं विद्यासाद्गुण्यतश्च सा ।
अतो विरोध इत्यलं व्यक्तिभेदाद् व्यवस्थितेः ॥ ३२६ ॥

**सुतराम्** ; स्वापेक्षया परविद्यापेक्षया चेति भावः । **इहैवे**त्ययोगवदन्ययोगोऽपि व्यवच्छिद्यते ।

अब्रह्मदृष्ट्यादिषु तु प्रधानैकार्थता भवेत् ।
विद्यौपयिकदृष्ट्यादि हेतुन्यायादिहेष्यते ॥ ३२७ ॥
नातिप्रसक्तिरेवं स्यादधीत्यासत्त्यनुद्रुतेः ।
कथंचित्संगतिश्चात्र परेष्टा न प्रणुद्यते ॥ ३२८ ॥

अस्तु यथावदनवगतेऽधिष्ठाने मिथ्यादृष्टिः प्रसिद्धेत्यत्राह—**तेषामिति** । न ह्येतन्मिथ्यादृष्टिमात्रम् ; अपि तु यथावदवगते वैधमारोपणम् । ततश्चाधिष्ठानभूतं कर्माङ्गं यथावदविजानता तत्रान्यदृष्टिविधिर्न चिन्तयितुं शक्यते । **सर्वसंमता**, विश्वापलापिनोऽपि निरूपकसंनिधौ दुरपह्नवा ; आहत्य सन्मात्रेऽवगतिविमतेरिति भावः । ननु काम्यकर्मणोऽप्यनङ्गैरपि स्ववीर्यवत्तरत्वापादकैरेतैरपेक्षास्ति ; तेषामपि विचारानुष्ठाने च कर्मज्ञानापेक्षा सिद्धा ; अत उभयाकाङ्क्षया कर्मकाण्डे तच्चिन्तास्तु ; मैवम् ; अविदितब्रह्मणस्तदयोगस्योक्तत्वात् । अत एव ह्युपनिषत्स्वेव तदधीतिः । यत्तु "अधीतवेदान्तस्य" इत्यादिना वेदान्तमात्राध्यायिनस्तावन्मात्रचिन्ता शक्येति पूर्वं चोदितम् ; तदसत्—अध्ययनविधिर्हि यथाक्रमं कृत्स्नाध्ययनं प्रयुङ्क्ते । न च विध्यतिलङ्घनेन प्रवृत्तमापत्कृतं वा त्रय्यन्तमात्राध्ययनमपेक्ष्येदानीं तद्विचारस्य पूर्ववृत्तं मृग्यते । एतेन प्राचीनसुकृतविशेषनियतवैराग्यातिशयादेकदेशाध्ययनविचारौ स्यातामित्यपि निरस्तम्, तस्याप्यध्ययनविध्यतिलङ्घनायोगात् ; अनधिगतकर्मणः कर्माङ्गविद्याधिगतिरशक्यविचार इति चोक्तम् । अविशदनिरूपणेन पश्चात् शेषपूरणं च क्लिष्टम् । ब्रह्मचिन्तोद्यतस्य विद्याङ्ग कर्मणां गुरूपदेशमात्रेण ज्ञप्तिरस्त्विति चेत्, तर्हि तेनैव न्यायेन ब्रह्मविचारोऽपि मा भूत् । तदिह यथाविधि कृत्स्ना-

ध्यायिनः प्रागिव कृतावशिष्टे विचारपर्वणि वृत्तविशेषः स्थाप्यत इति शुद्धः पन्थाः ॥

श्रुतिकिरीटशरीरविकृष्टिकृन्मलिनवृत्तिमलिम्लुचवृत्तिभिः ।
विघटितामिव विंशतिलक्षणीं यतिपतेरिति नीतिरजीघटत् ॥ ३२९ ॥

## मूलभावप्रकाशिका

परमतं प्रतिक्षिपति—**अपिचेति** । **आत्मनित्यत्वादी**त्यादिपदेन सत्यत्वादिग्रहणम् । परमते—आत्मा नित्यः, अतः सत्य उपादेयश्च; तद्व्यतिरिक्तं तु कर्मफलमनित्यं मिथ्याभूतम्, अतो हेयमित्येवंरूपस्यैव विवेकस्य नित्यानित्यविवेकरूपतया वाचस्पतिनोक्तत्वादेवंरूपस्य विवेकस्य विंशतिलक्षणमीमांसासाध्यत्वेन ब्रह्मविचारपूर्ववृत्तत्वासंभवादिति भावः । **स्थिरत्वास्थिरत्वेति ;** स्थिरत्वास्थिरत्वान्यतरेत्यर्थः ; कर्मफलभूतकृत्स्नप्रपञ्चास्थिरत्वं दुरवबोधमिति यावत् । यद्वा कर्मणामल्पास्थिरफलत्वप्रतीतिसहितानन्तस्थिरफलापातप्रतीतेः पूर्ववृत्तत्वं वदद्भिर्भवद्भिरेव नित्यानित्यविवेकस्य पूर्ववृत्तत्वमभ्युपगतमित्यत्राह—**अपिचेति** । सत्यमेतादृशो नित्यानित्यविवेकः पूर्ववृत्ततयास्माभिरभ्युपेत एव; अपितु ईदृशनित्यानित्यवस्तुविवेकस्य "तद्यथेह" इत्यादिवाक्यैः कर्ममीमांसासनाथैरेव निष्पाद्यत्वात्कर्ममीमांसायाः पूर्ववृत्तत्वं वक्तव्यमिति भावः । अनन्तस्थिरफलप्रतीतिमभिप्रेत्यात्मनित्यत्वादीत्युक्तम् । वैदिकवैराग्यशमादेः " परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायात् " "सम्यक् प्रशान्तचित्ताय शमान्विताय" " शान्तो दान्त उपरतः " इत्यादिवाक्यैस्तृतीयाध्यायव्युत्पाद्यविनियोजकश्रुतिलिङ्गादिन्यायालोचनसनाथैरेव श्रवणशेषत्वस्यावगन्तव्यतया ब्रह्मविचारस्य कर्मविचारसापेक्षत्वमस्तीत्याह—**एषां साधनत्वं चेत्यादिना** । इदं चोपलक्षणम् । प्रायेण ब्रह्ममीमांसायाः कर्ममीमांसासापेक्षत्वं मीमांसापरिचयशालिनां सुव्यक्तम् । नन्वस्मिन् शास्त्रे सर्ववेदान्तानां ब्रह्मणि समन्वयार्थमुपक्रमादीन्येव ज्ञातव्यानि, न श्रुतिलिङ्गादीनीति चेत्—न, उपक्रमोन्मेषार्थं श्रुतिलिङ्गादीनामपेक्ष्यत्वात् । न हि ब्रह्माभिधानश्रुत्यादिकमनुपलभ्योपक्रमो ब्रह्मविषय इति निश्चेतुं शक्यम् । न चैतावता श्रुतिलिङ्गादिकमेव समन्वयोपयोगि नोपक्रमादिकमिति शक्यं वक्तुम्, श्रुत्यादिष्वपि प्रकरणस्योपक्रमादितात्पर्यलिङ्गाधीनात्मज्ञानत्वात् । साकाङ्क्षप्रधानवचनं हि प्रकरणम् । प्राधान्यनिर्णयश्च तात्पर्यलिङ्गावसेयः । किंच—येषु वाक्येषु ब्रह्माब्रह्मसमावेशस्तत्र ब्रह्मलिङ्गबलवत्त्वस्य तात्पर्यलिङ्गोपक्रमाद्यवसेयत्वात् श्रुतिलिङ्गादिकमुपक्रमादिकं

चापेक्षितम्। न चोपक्रमादीनां श्रुतिलिङ्गादीनां चान्योन्याश्रयः; उपक्रमादीनां स्वरूपलाभार्थं श्रुतिलिङ्गाद्यपेक्षणं, बलाबलावधारणार्थमुपक्रमाद्यपेक्षणमिति विषयभेदेन परस्परापेक्षायामुत्पत्तिज्ञप्तिविषये धूमवह्न्योरिव परस्परापेक्षाया अदोषत्वात्। तस्मात् श्रुतिलिङ्गादिकमुपजीव्यमेवेति तदर्थं तृतीयाध्यायापेक्षाया अपि सत्त्वम्; एवमन्यदपि द्वादशलक्षण्याः कर्ममीमांसायाः प्रमेयं प्रायेण ब्रह्ममीमांसायामुपजीव्यमेव। *तथाहि— "अथातो धर्मजिज्ञासा" इति सूत्रेण प्रमाणस्वरूपसाधनफलैर्धर्मस्य विचारं प्रतिज्ञाय प्रथमाध्याये तस्मिन् प्रमाणं निरूपितम्। तत्र प्रथमपादे साक्षाद्धर्मे प्रमाणभूतायाश्चोदनाया अपि पौरुषेयत्वाद्यप्रामाण्यहेतुशङ्कानिराकरणपूर्वकं तत्र प्रामाण्यमुपपादितम्। द्वितीयपादे अर्थवादमन्त्रयोर्विध्यपेक्षितद्रव्यदेवतास्तुत्यनुष्ठेयार्थस्मृतिसमर्पकतया, तृतीयपादे मन्वाद्याप्तप्रणीतवेदाविरुद्धस्मृत्यादीनां मूलवेदानुमापकतया, चतुर्थपादे "अग्निहोत्रं जुहोति" "श्येनेनाभिचरन् यजेत" इत्यादिविधिवाक्यगतानां नाम्नां कर्मनामतया च तत्र प्रामाण्यमुपपादितम्। एवं प्रमाणसिद्धस्य धर्मस्य परस्परभिन्नं स्वरूपं द्वितीयाध्याये निरूपितम्। तत्र 'यजति, ददाति, जुहोति' इति चोदनासु यज्यादिधातुभेदरूपेण शब्दान्तरेण यागदानहोमानां भेदः। "समिधो यजति" "तनूनपातं यजति" इत्यादिषु विधिषु 'यजति' इति पञ्चकृत्वोऽभ्यासेनाविशेषपुनःश्रुतिरूपेण प्रयाजादीनां भेदः; "सप्तदश प्राजापत्यान् पशूनालभेत" इत्यत्र द्रव्यदेवतासंबन्धभेदिन्या सप्तदशसंख्यया तदनुमेययागानां भेदः। "अथैष ज्योतिः" इत्यादिषु वाक्येषु ज्योतिरादिनामधेयैस्तन्नामकानां प्रकृतज्योतिष्टोमाद्भेदः। "तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनम्" इत्यत्रामिक्षारूपगुणान्तरावरुद्धे यागे निवेशमलभमानेन वाजिनगुणेन वाजिनयागस्यामिक्षायागात् भेदः। प्रकरणान्तरेण नित्याग्निहोत्रान्मासाग्निहोत्रस्य भेद इत्येवं द्वितीयाध्याये कर्मभेदः प्रपञ्चितः। तृतीयाध्याये भिन्नानां श्रुतिलिङ्गादिभिः प्रमाणैः शेषशेषिभावो निरूपितः। तत्र निरपेक्षशब्दः श्रुतिः। सा त्रिविधा—विधात्री अभिधात्री विनियोक्त्री च। लिङादिश्रुतिर्विधात्री। इन्द्रादिश्रुतिरभिधात्री। विनियोक्त्री तु—एकप्रत्ययरूपा, एकपदरूपा, विभक्तिरूपेति त्रिविधा। तत्राद्या "पशुना यजेत" इति तृतीया; सा हि स्वोक्तकरण-

---

*** एतदारभ्य ४५० तमे पृष्ठे द्वितीयपङ्क्तौ 'निरूपितः' इतिपर्यन्तो भागः सर्वोऽप्यनयैवानुपूर्व्या शिवार्कमणिदीपिकायां दृश्यते।**

कारकं प्रति स्वोक्तैकत्वसंख्यायाः शेषत्वं समर्पयति । द्वितीया "यजेत" इति पदम् । तेन प्रत्ययोक्तभावनां प्रति प्रकृत्युक्तयागस्य शेषतोपनीयते। तृतीया शेषित्वबोधिका शेषत्वबोधिकेति द्विधा। "व्रीहीन् प्रोक्षति" इत्यादिषु द्वितीया व्रीह्यादीनां प्रोक्षणक्रियां प्रतीप्सिततमत्वरूपशेषित्वबोधिका। "क्रीते सोमे मैत्रावरुणाय दण्डं प्रयच्छति" इत्यत्र चतुर्थीश्रुतिः मैत्रावरुणस्य प्रदानक्रियेप्सिततमेन कर्मणाभिप्रेयमाणत्वरूपशेषित्वबोधिका। "अरुणया क्रीणाति" इत्यत्र क्रयभावनां प्रत्यारुण्यस्य, "चात्वालान्मृदमाहरति" इत्यत्र मृदाहरणक्रियां प्रति चात्वालस्य, "वेद्यां हवींष्यासादयति" इत्यत्र हविरासादनक्रियां प्रति वेद्याश्च तृतीयापञ्चमीसप्तम्यः शेषत्वबोधिकाः। षष्ठी तु क्वचित् "दध्नेन्द्रियकामस्य जुहुयात्" इत्यादौ शेषित्वबोधिका "यजमानस्य याज्या" इत्यादौ शेषत्वबोधिका च; संबन्धमात्रेऽनुशिष्टायाः षष्ठ्याः योग्यताद्यनुसारेणोभयथापि पर्यवसानसंभवात्। वस्तुसामर्थ्यं लिङ्गम्। तद् द्विविधम्—शब्दसामर्थ्यमर्थसामर्थ्यं च। तत्र "बर्हिर्देवसदनं दामि" इति मन्त्रस्य लवनप्रकाशनसामर्थ्यरूपाल्लिङ्गाल्लवनशेषता। "स्वधितिनावद्यति" "स्रुवेणावद्यति" "हस्तेनावद्यति" इत्यवदानसामान्ये साधनत्वेन श्रुतानां स्वधित्यादीनां तत्तत्सामर्थ्यरूपलिङ्गात् विशिष्य मांसद्रवद्रव्यपुरोडाशाद्यवदानेषु शेषता। शेषत्वस्य शेषित्वस्य वा बोधिकया श्रुत्या रहितपदसमभिव्याहारो वाक्यम्। यथा "अग्निहोत्रं जुहुयात् स्वर्गकामः" इति; यथा वा "मैत्रावरुणः प्रेष्यति चान्वाह च" इति। न हि यागभावनां प्रति स्वर्गकामस्य भाव्यत्वेन शेषित्वबोधिका द्वितीयाश्रुतिः, प्रैषानुवचनं प्रति मैत्रावरुणस्य कर्तृत्वेन शेषत्वबोधिका तृतीयाश्रुतिर्वास्ति। प्रथमा तु प्रातिपदिकार्थमात्रेऽनुशिष्टा। अतः पदसमभिव्याहाररूपेण वाक्येनात्र शेषशेषिभावबोधः। विधिवाक्यतः कर्तव्यत्वेनावगतस्य केन प्रकारेण कर्तव्यमिति विशिष्याज्ञायमानस्येतिकर्तव्यताकाङ्क्षा प्रकरणम्। तद् द्विविधं—महाप्रकरणमवान्तरप्रकरणं चेति। तत्राद्येन दर्शपूर्णमासादिकं प्रति प्रयाजादीनां, द्वितीयेन प्रयाजादिकं प्रत्यभिक्रमणादीनां च तत्तत्संनिधिसमाम्नातानां शेषत्वम्। स्थानं द्विविधम्—यथासंख्यं संनिधिश्च। तत्राद्येन "दब्धिरस्यदब्धो भूयासम्" इति मन्त्रस्याग्नेयाग्नीषोमीयमध्याम्नातस्याग्नेयाग्नीषोमीययागद्वयमध्यानुष्ठेयोपांशुयाजशेषता। संनिधिस्त्वाम्नानसंनिधिरनुष्ठानसंनिधिश्चेति द्विधा। आद्येन "शुन्धध्वं दैव्याय कर्मणे देवयज्यायै" इति मन्त्रस्य महाप्रकरणावान्तरप्रकरणरहितस्व सांनाय्यपात्रप्रोक्षणशेषता। द्वितीयेन पशुधर्माणामग्नीषोमीयपशुशेषता। समाख्या यौगिकी संज्ञा। सा लौकिकी वैदिकी चेति

द्विधा। होतृचमस इति वैदिकसमाख्यया होतुश्चमसभक्षणं प्रति, आध्वर्यवमिति याज्ञिकप्रसिद्धलौकिकसमाख्ययाध्वर्योरवघातादिकं प्रति कर्तृत्वेन शेषत्वमिति शेषशेषिभावः सापवादस्तृतीयाध्याये प्रपञ्चितः। एवं सिद्धशेषशेषिभावानां कर्मणामनुष्ठापनशक्तिरूपा प्रयुक्तिश्चतुर्थे निरूपिता। शेष्येव शेषं प्रयुङ्क्ते,स्वसिद्ध्यर्थमनुष्ठापयति,न त्वनुनिष्पाद्यपि। नापि शेषः शेषिणं प्रयुङ्क्ते। अनेकशेषिसद्भावेऽपि यत्रान्यप्रयुक्तस्यैवान्यत्रविनियोगस्तत्र यत्प्रयुक्तस्यान्यत्र विनियोगः स एव शेषं प्रयुङ्क्ते, न तु शेष्यपि सन्नन्योऽपि। एवं च "तप्ते पयसि दध्यानयति" इत्यादिवाक्ये विधीयमानस्य दध्यानयनस्य द्विकर्मकस्य कर्मान्तराकाङ्क्षायां समभिव्याहृतं पयः कर्मान्तरत्वेनाविधीयमानं सप्तम्याधिकरणत्वेन निर्देशात् प्रधानकर्मतया पर्यवस्यतीति प्रकृतप्रधानभूतपयःपरामर्शिना तत्पदेन सामानाधिकरण्येन निर्दिष्टतया पयोरूपत्वेनावगतामिक्षैव शेषित्वात् स्वशेषभूतं दध्यानयनमनुष्ठापयति न तु तदनुनिष्पादि वाजिनमपीत्यामिक्षापचार एव पयोऽतरे दध्यानयनस्य प्रयुक्तिः, न वाजिनापचारे। "कृष्णविषाणया कण्डूयते" "चात्वाले कृष्णविषाणां प्रास्यति" इति कृष्णविषाणायाः कण्डूयनप्रासनरूपक्रियान्वये सत्यपि कृष्णविषाणा तृतीयया कण्डूयनं प्रति शेषः, प्रासनं प्रति तु द्वितीयया शेषिणी। निवृत्तकण्डूयनप्रयोजनायास्तस्याः प्रासनात् पूर्वमपचारे प्रासनार्थं न पुनः कृष्णविषाणान्तरोपादानप्रयुक्तिरित्येवं सापवादा प्रयुक्तिश्चतुर्थाध्याये प्रपञ्चिता। एकप्रयोगान्तर्गतानामङ्गप्रधानानामनुष्ठानक्रमः पञ्चमाध्याये श्रुत्यर्थादिभिः प्रपञ्चितः। तत्र "अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति" इत्यादिश्रुत्या गृहपत्यादीनामुन्नेत्रन्तानां सप्तदशानां सत्रयजमानानां दीक्षाक्रमः। "अग्निहोत्रं जुहोति" "यवागूं पचति" इत्यत्र होमद्रव्यनिष्पत्त्यर्थयवागूपाकप्रयोजनरूपेणार्थेन पाकहोमयोः क्रमः। "समिधो यजति" इत्यादिविधिविहितानां प्रयाजानां विधिवाक्यपाठक्रमेण क्रमः। वाजपेये प्राजापत्यानां पशूनां प्रतिपश्वावर्तनीयेषूपाकरणनियोजनादिषूपाकरणे यतः कुतश्चित् पशोरारभ्य यत्र क्वचित्पशौ समापिते तेनैव प्रवृत्तिक्रमेण नियोजनादिक्रमः। साद्यस्क्रे "सह पशूनालभते" इति श्रुत्या सवनीयस्थान एवाग्नीषोमीयसवनीयानुबन्ध्यपशुत्रयस्यापि सह कर्तव्यतया प्राप्तौ सवनीयस्थानेन प्रथमं सवनीयपशोरुपाकरणम्, अनन्तरमग्नीषोमीयानुबन्ध्ययोरिति क्रमः। दर्शे पुरोडाशसांनाय्ययोर्मुख्यक्रमेण प्रयाजशेषाभिघारणक्रम इत्येवं श्रुत्यर्थादिभिः क्रमः सापवादः प्रपञ्चितः। एवं द्वितीये उत्पत्तिविधिप्रमेयस्य कर्मभेदस्य, तृतीये नियोगविधिप्रमेयस्य शेष-

शेषिभावस्य, चतुर्थपञ्चमयोः प्रयोगविधिप्रमेययोः प्रयुक्तिक्रमयोश्च निरूपणानन्तरं षष्ठेऽधिकारिविधिप्रमेयफलसंबन्धो निरूपितः । तत्र स्वर्गकामादिपदं विधिप्रयोजनभूतपुरुषप्रवृत्त्यपेक्षितफलविशेषान्वयपरं, न तु चन्दनादिरूपयागादिद्रव्यसमर्पकम् । तच्च फलं "स्वर्गकामः" इत्युद्देश्यगतलिङ्गविशेषस्याविवक्षितत्वात् स्त्रीणामप्यविशिष्टम् । "ऋद्धिकामाः सत्रमासीरन्" इत्यादावेकैकस्य कृत्स्नफलं न तु परिषद्गतं फलमित्येकैकस्य फलान्वय इत्येवमादिरूपेणाधिकारः सापवादः षष्ठे प्रपञ्चितः । एवं विधिचतुष्टयप्रमेयात्मकोपदेशविचारे पूर्वषट्केण कृते ततः परमध्यायचतुष्टयेनातिदेशविचारः । 'इत्थं कर्तव्यम्' इत्युपदेशः; 'तद्वत् कर्तव्यम्' इत्यतिदेशः । तत्र सप्तमाष्टमयोर्वचननामधेयचोदकैरतिदेशो निरूपितः । इषुनामके क्रतौ कांश्चिद्वैशेषिकान् धर्मान् विधायाम्नातेन "समानमितरत् श्येनेन" इति प्रत्यक्षवचनेन श्येनवैशेषिकाङ्गानामिषावतिदेशः ; "मासमग्निहोत्रं जुहोति" इत्यत्र नित्याग्निहोत्रेऽग्निदेवतासद्भावात् क्लृप्तशक्तिकेन तत्सादृश्यविधित्सया कौण्डपायिनामयने कर्मणि प्रयुक्तेनाग्निहोत्रनामधेयेन तस्मिन्नित्याग्निहोत्रधर्माणामतिदेशश्च सापवादः सप्तमे पादत्रयेण निरूपितः । चतुर्थपादेन "सौर्यं चरुं निर्वपेत्" इत्यादिष्वनुपदिष्टधर्मेषु प्रत्यक्षवचनस्य नाम्नश्चातिदेशिकस्याभावेऽपि कुतश्चिद्वैदिकात् कर्मणो धर्मप्रापकवचनमस्तीत्यानुमानिकवचनरूपेण चोदकेनातिदेशः सामान्यतो निरूपितः । अष्टमे तु कस्य कुतो धर्मप्राप्तिरित्याकाङ्क्षायां शब्दार्थकृतसादृश्यविशेषाल्लिङ्गादिष्टीनां दर्शपूर्णमासतो धर्मः प्रापितः । अग्नीषोमीयपशुतः पशूनां, सवनीयादेकादशिनीनां, ज्योतिष्टोमात् सोमानां, द्वादशाहादहर्गणानां, गवामयनात् संवत्सरसत्राणामित्येवंरूपेण विशिष्य चोदकातिदेशः सापवादः प्रपञ्चितः । अतिदिष्टानां मन्त्रसामसंस्काराणां प्राकृतपदार्थकार्यापन्नवैकृतपदार्थान्तरसंबन्धेनान्यथाभावरूप ऊहो नवमे चिन्तितः । प्राकृतपदार्थकार्यापत्तिः प्रत्यक्षेणानुमानेन प्रत्यक्षवचनावगतप्राकृतनिवृत्त्यनुमितशब्देन वावसीयते । "नैवारश्चरुर्भवति" इत्यत्र प्राकृतव्रीहिकार्यहविर्निर्वाहकत्वं प्रत्यक्षेणैवावसीयते, न तु नैवार इति तद्धितेन ; "तस्येदम्" इति संबन्धसामान्ये अण्प्रत्ययविधानात् तस्य प्रकृतिविकारभावरूपसंबन्धविशेषपर्यवसायित्वकल्पनायाः प्रत्यक्षाधीनत्वात् । "नैर्ऋतं चरुं परिवृत्त्यै गृहे कृष्णानां व्रीहीणां नखनिर्भिन्नम्" इत्यत्र श्रुतस्य नखस्य प्राकृतोलूखलमुसलकार्यापत्तिर्न प्रत्यक्षेणावसीयते ; ऊलूखलमुसलाभ्यां व्रीहीणामवहननं निष्पद्यते, नखेन तेषां निर्भेद-

नमिति प्रत्यक्षेण कार्यभेदस्य दर्शनात् । किंतु अवहननेनेव निर्भेदनेनापि तुषविमोकात्तण्डुलनिष्पत्तिदर्शनेन प्राकृतावघातस्योलूखलमुसलकार्यतायां यद्रूपं विवक्षितं तण्डुलनिष्पत्तिद्वारेणापूर्वोपयोगिक्रियात्वं तन्निर्भेदनेऽपि समानमिति तेन रूपेणावहनननिर्भेदनयोरैक्यस्योन्नेयत्वात् तत्कार्यापत्तिरनुमानेनावसीयते । "परिधौ पशुं नियुञ्जीत" इत्यत्र प्राकृतयूपकार्ये पशुनियोजने परिधेर्विनियोगः प्रत्यक्षवचनेनापि विधीयते । "न गिरा गिरेति ब्रूयादैरं कृत्वोद्गेयम्" इत्यत्र गिरापदोक्तिप्रतिषेधावगतया गिरापदनिवृत्त्या तत्कार्यस्य साधनापेक्षत्वावगमात् तत्कार्यवाचि पदमनुमाय गिरापदकार्यार्थमैरं कृत्वोद्गेयमित्येवंरूपेण श्रुतानुमितैकदेशनिष्पादितेन वाक्येन गिरापदकार्यापत्तिरिरापदस्यावसीयते । "यस्योभयं हविरार्तिमार्च्छेति । ऐन्द्रं पञ्चशरावमोदनं निर्वपेत्" इत्यत्र पञ्चशरावद्रव्यकस्य यागस्य दर्शकार्यापत्तौ दर्शकार्यनिवृत्तिर्न प्रत्यक्षवचनादवगम्यते ; तन्निवृत्तौ तत्कार्यस्य साधनापेक्षायां तद्वाचिपदमनुमाय दर्शकार्यार्थम् "ऐन्द्रं पञ्चशरावमोदनं निर्वपेत्" इति श्रुतानुमितैकदेशनिष्पाद्येन वाक्येन पञ्चशरावयागस्य दर्शकार्यापत्तिरवसीयते । "स प्रत्यामनेत् स्थानात्" इति षष्ठाध्यायाधिकरणपूर्वपक्षरीत्येदमुदाहरणम् । सिद्धान्ते तु द्रव्यापचारे द्रव्यान्तरानयनेन दर्शनिष्पत्तेर्न तन्निवृत्त्युन्नयनमस्तीत्युदाहरणान्तरमन्वेषणीयम् । एवं कार्यापत्त्या व्रीहिधर्माणामवघातादीनां नीवारेषूलूखलमुसलधर्माणां प्रोक्षणादीनां नखे यूपधर्माणां परिव्ययणादीनां परिधावूहः संस्कारोहः । गिरापदगतगीतिक्रियाया इरापद ऊहः सामोहः । दर्शधर्माणां तु सिद्धान्ते नास्त्यूहः पञ्चशरावयागे । मन्त्रोहस्त्वष्टविधः । क्वचित् प्रकृतिमात्रमूह्यते; यथा–"अग्नये जुष्टं निर्वपामि" इत्यत्राग्निपदस्थाने सौर्यचरोः 'सूर्याय' इति । क्वचिल्लिङ्गमात्रमूह्यते ; यथा "वस्व्यसि रुद्रासि" इत्येकहायिनीमन्त्रे विकृतिविशेषविहितसोमक्रयणवत्सं प्राप्ते "वसुरसि रुद्रोऽसि" इति । क्वचित् वचनमात्रमूह्यते; यथा "छागस्य वपाया मेदसः" इति मन्त्रे प्राजापत्यपशून् प्राप्ते छागानामिति । क्वचित् प्रकृतिर्लिङ्गं चोह्यते; यथा—"अग्नये जुष्टं निर्वपामि" इत्यादित्यचरुं प्राप्ते मन्त्रे "अदित्यै जुष्टं निर्वपामि" इति । क्वचित् प्रकृतिर्वचनं चोह्यते ; यथा—तस्मिन्नेव मन्त्रे वैश्वदेवं चरुं प्राप्ते "विश्वेभ्यो देवेभ्यः" इति । क्वचिल्लिङ्गं वचनं चोह्यते; यथा–"प्रास्मा अग्निं भरत" इति मन्त्रे "मल्हा आलभेत" इति विहितान् पशून् प्राप्ते 'प्राभ्योऽग्निम्' इति । क्वचित् त्रीण्यप्यूह्यन्ते; यथा—"आपो देवीः" इति मन्त्रे "आज्यं प्रोक्षणम्" इति सोमारौद्रचरौ

विहितं घृतं प्राप्ते 'घृतं देवम्' इति। क्वचित्सकलस्य पदस्याभ्यासरूप ऊहः। यथा "एकधास्य त्वचमाच्छयतात्' इति मन्त्रे पशुगणं प्राप्ते 'एकधैकधा' इति। एवमूहः सापवादो नवमे प्रपञ्चितः। एवमातिदेशिकपदार्थगतरूपान्तरातिदेशनिरूपणानन्तरं तन्निवृत्त्यात्मको बाधो दशमे निरूपितः। निवृत्तिश्च कस्यचित् क्वचिदतिदेशवाक्यप्रवृत्तिकाले प्रकृतावज्ञातत्वेन तद्ग्राह्यत्वासंभवात्। यथा दर्शपूर्णमासाङ्गभूतायामारम्भणीयायामारम्भणीयायाः। न हि आरम्भणीयाविधानसमये दर्शपूर्णमासयोरारम्भणीया अङ्गमिति विज्ञातं येन सापि प्रयाजादिवदतिदेशवाक्येन गृह्येत। कस्यचिदतिदेशवाक्यप्रवृत्तिकाले प्रकृतौ विज्ञातस्याप्यसंभवान्निवृत्तिः। यथा पवमानेष्टावग्निहोत्रहवण्याः; ययाग्निहोत्रं हुतं साग्निहोत्रहवणी। प्रकृतौ "अग्निहोत्रहवण्या हवींषि निर्वपति" इति निर्वापकरणत्वेन ग्राह्येति। न च पवमानेष्टिसमयेऽग्निहोत्रं हुतम्। क्वचिद् द्वारलोपान्निवृत्तिः। तत्र द्वारलोपः क्वचित् द्वारत्वाभिमतस्य स्वतः सिद्धतया। कृष्णलेष्ववघातद्वारस्य वैतुष्यस्य स्वतः सिद्धतयावघातस्य निवृत्तिः। क्वचित्पूर्वसिद्धतया। यथा "खलेवाली यूपो भवति" इत्यत्र खलेवाल्याः प्रागेव छित्वा तक्षणेन श्लक्ष्णीकृत्य निखातायाश्छेदनतक्षणोच्छ्रयणानां निवृत्तिः। क्वचित् द्वारसंपादनाशक्तया; यथा प्राशित्रेडाभक्षणार्थेषु कृष्णलेष्वभिघारणजन्योपकारस्य स्वादिम्नः संपादयितुमशक्यत्वादभिघारणनिवृत्तिः। क्वचित्सिद्धशेषिविरोधान्निवृत्तिः; यथा आग्रयणदक्षिणारूपे वत्से अन्वाहार्यधर्मस्य पाकस्य। पाके हि कृते वत्सो नश्येत्; तन्मांसमेव दक्षिणा स्यात्। क्वचित् साध्यशेषिविरोधात् कस्यचिन्निवृत्तिः; यथा "बार्हस्पत्यो नैवारश्चरुर्भवति" इत्यत्र निर्वाप्येषु "चतुरो मुष्टीन्निर्वपति" इत्यतिदेशप्राप्तस्य चतुर्मुष्टिपरिमाणस्य सप्तदशशरावपरिमाणचरुरूपसाध्यशेषिविरोधित्वात् संख्यामुष्ट्योरन्यतरनिवृत्तेरवश्यंभावे जघन्यत्वान्मुष्टेर्निवृत्तिः। क्वचिद्विरोधाभावेऽपि प्रयोजनाभावान्निवृत्तिः; यथा—आग्रयणदक्षिणारूपे वाससि पाकस्य। प्रकृतौ ह्यन्वाहार्यरूपदक्षिणाद्रव्यनिष्पत्त्यर्थं "दक्षिणाग्नावपरिमितं महान्तमोदनं पचति" इति पाको विहितः। इह दक्षिणाद्रव्ये वाससि प्रागेव निष्पन्ने स्थिते तन्निष्पत्त्यनुपयोगिना किं पाकेन? द्वारलोपनिवृत्तिरित्यत्र द्वारशब्देन यत् द्वारतया फलतया वा प्रयोजनं तत्सर्वं विवक्षितम्। तेन मृते यजमाने क्रियमाणायामिष्टौ "आयुराशास्ते" इत्यादिमन्त्राणां विवक्षितफलानां मृतस्य यजमानस्यायुरादिफललोपान्निवृत्तिरप्युदाहरणमित्यादि द्रष्टव्यम्। क्वचित् प्रत्याम्नानात् प्राकृतपदार्थनिवृत्तिः। साप्यनेकविधा—क्वचिदुद्दिष्टपदार्थविरोधान्निवृत्तिः; यथा "औदुम्बरो यूपो भवति" इति वैकृतपशावतिदेश-

प्राप्तयूपोद्देशेनोदुम्बररूपप्रकृतिद्रव्यविधानादुदुम्बरप्रकृतिके यूपे प्राकृतस्य बिल्वपलाशादेर्विरोधेन प्रकृतित्वासंभवान्निवृत्तिः। क्वचिदुपदिष्टपदार्थगतश्रुतनैरपेक्ष्यविरोधान्निवृत्तिः; यथा— "नैवारश्चरुर्भवति" इत्यत्र नीवारप्रकृतिके चरौ व्रैहतण्डुलानामपि मिश्रेण प्रकृतित्वसंभवेऽपि नीवारशब्दपरतद्धितोत्पत्त्यवगतनैरपेक्ष्यविरोधात् व्रीहीणां निवृत्तिः। नीवाराणां व्रीहिसापेक्षाणां चरुप्रकृतित्वे हि सापेक्षमसमर्थमित्यसामर्थ्यात् तद्धितोत्पत्तिर्न स्यात्। क्वचिदविरोधेऽपि नैरपेक्ष्यान्निवृत्तिः; यथा—आग्रयणे "वासो दक्षिणा" "वत्सः प्रथमजो दक्षिणा" इति श्रुताभ्यां वासोवत्साभ्यामृत्विजामानतौ तयोरन्वाहार्यनिरपेक्षकारणत्वात् प्राकृतान्वाहार्यदक्षिणानिवृत्तिः। क्वचिन्नैरपेक्ष्याभावेऽपि नियमवशान्निवृत्तिः; यथा "सोमचमसो दक्षिणा सप्रियाय सगोत्राय ब्रह्मणे देयः" इति श्रुतेन सोमचमसेन केवलं ब्रह्मणे दत्तेन लौकिकोपायान्तरमनपेक्ष्य ऋत्विजामानतेरसंभवेऽपि श्रुतनियमविधिवशात् प्राकृत्याः द्वादशशतदक्षिणाया निवृत्तिरित्युदाहरणीयम्। क्वचित्प्रतिषेधात् प्राकृतपदार्थनिवृत्तिः। प्रतिषेधशब्देन यः कश्चित् प्राकृतपदार्थनिवृत्तिफलको विधिः स सर्वोऽपि विवक्षितः। तेन महापितृयज्ञे—"नार्षेयं वृणीते" इत्यनेनार्षेयवरणवर्जं प्रकृतिवत् कुर्यादिति पर्युदासेन या तस्मिन्नार्षेयवरणनिवृत्तिः, "न तौ पशौ करोति" इत्याज्यभागनिषेधाद्या पशावाज्यभागनिवृत्तिः "आज्यभागौ यजति" इत्यपूर्वतापरविधिनाज्यभागानां या गृहमेधीयकर्मणि निवृत्तिः, सा सर्वाप्यत्रोदाहरणम्। एवं च दर्शपूर्णमासयोः "कपालेषु श्रपयति" इतिवाक्यस्य तण्डुलहविष्केषु चित्रादिषु व्रीह्युपादाननिवृत्तेरेव फलत्वात् साप्यत्रोदाहरणम्। एवमुपदेशविषयेऽतिदेशविषये च पृथङ् निरूपणीयेषु निरूपितेषु तदुभयसाधारणयोस्तन्त्रप्रसङ्गयोर्निरूपणीययोरेकादशे तन्त्रं निरूपितम्। तत् त्रिविधम्—फलतन्त्रम्, पदार्थतन्त्रम्, अनुष्ठानतन्त्रमिति। "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इत्यत्र फलमुद्दिश्योपादीयमानानामाग्नेयादीनां षण्णां द्वन्द्वावगतं "राजसूयेन स्वाराज्यकामो यजेत" इत्यत्र बहूनामिष्टिपशुसोमानामेकेन नाम्ना तन्त्राभिधानावगतं च साहित्यं विवक्षितमिति सहितानां फलान्वयादाग्नेयादीनां षण्णां फलं राजसूयनामगृहीतानां यागानां च फलं साधारणम्। तदेतत्फलतन्त्रम्। "समे दर्शपूर्णमासाभ्यां यजेत" "पौर्णमास्यां यजेत" "दर्शपूर्णमासयोश्चत्वार ऋत्विजः" इति विहिता देशकालकर्तार एकफलसाधनानां कर्मणां यथायोगं साधारणा इत्येतत् पदार्थतन्त्रम्। एकफलानामेकदेशकालकर्तृकाणां यदभेदेन प्रयाजाद्यनुष्ठानं तदनुष्ठानतन्त्रम्। फलैक्येऽपि यत्र देशकालकर्तृ-

णामन्यतमस्यापि भेदः, तत्र प्रतिप्रधानमङ्गानुष्ठानावृत्तिलक्षण आवापः। तत्र द्वादशाहे द्वादशानां सोमयागानां द्वादशस्वहःसु कर्तव्यानां कालभेदात् सुत्योपसुत्प्रभृत्यङ्गानुष्ठानावृत्तिः। वरुणप्रघासेषु नवहविष्कायामिष्टौ विहारद्वयं विधाय "अध्वर्युरुत्तरे विहारे हवींष्यासादयति, मारुतीमेव प्रतिप्रस्थाता दक्षिणस्मिन्" इति देशभेदविधानात् तत्र तत्र देश उपदिष्टानां हविषां मारुत्याश्चाङ्गानुष्ठानं भिद्यत इति देशभेदेन तदावृत्तिः। तत्रैव "गार्हपत्ये पत्नीसंयाजान् जुहोति" इति विहितानामापराग्निकहोमानां देशकालैक्येऽप्यध्वर्युप्रतिप्रस्थातृरूपकर्तृभेदात् भेदः। यत्र कर्तृत्वाधिष्ठानाभेदेऽपि कर्तृकारकभेदः, तत्रापि प्रयोगभेदेनाङ्गानुष्ठानावृत्तिरेव; यथा "आग्नावैष्णवमेकादशकपालं निर्वपति, वामनो दक्षिणा। सोमापौष्णं चरुं निर्वपति श्यामो दक्षिणा" इत्यादिवाक्यविहितेषु राजसूयान्तर्गतयागेषु देशकालफलभेदाप्रतीतावपि वामनानतैराग्नावैष्णवयागः कर्तव्यः; श्यामानतैः सोमापौष्णश्चरुः कर्तव्य इत्येवं दक्षिणाव्यवस्थया तद्भेदात् कर्तृरूपं भिद्यत इति ततः प्रतियागं प्रयोगभेदादङ्गानुष्ठानावृत्तिः। यानि तु कालभेदेन कर्तव्यानामपि प्रधानानां कर्मकालाद्यङ्गानि तान्यगृह्यमाणविशेषत्वात् सर्वेषां तन्त्रं भवति। यथा ज्योतिष्टोमे अग्नीषोमीयसवनीयानुबन्ध्यपशूनां "दीक्षासु यूपं छिनत्ति" इति दीक्षाकालकर्तव्यत्वेन विहितो यूपः। यथा वा द्वादशाहे द्वादशानां सोमयागानामहर्भेदेन कर्तव्यानां दीक्षोपसदादय इत्येवंरूपेण सापवादं तन्त्रमेकादशे निरूपितम्। द्वादशे प्रसङ्गो निरूपितः। अन्यार्थेनान्यस्य तत्प्रयुक्तिशक्तिकस्योपकारः प्रसङ्गः। यथा भोजनार्थं प्रथमागतस्याचार्यस्य कृते कृतेन सूपापूपादिना पश्चादागतस्य स्वयमाचार्येनैरपेक्ष्येणापि सूपापूपादिप्रयुक्तिशक्तिकस्य जामातुरुपकारः। यत्त्वन्यार्थेन स्वयं तत्प्रयुक्तिशक्तिरहितमुपक्रियते, तन्न प्रसङ्गिकम्; आचार्यार्थिकृतसूपाद्युपक्रियमाणपरिचारकादिवत् तदुपजीव्य प्रयोजकम्। यथा दध्यानयनेनोपक्रियमाणं पुरोडाशकपालं प्रति तुषोपवापस्य शेषित्वे सत्यपि न तत्प्रयुक्तिशक्तिः, "पुरोडाशकपालः" इति सविशेषणोपादानेनान्यप्रयुक्त्युपजीव्यत्वाविष्करणात्। स च प्रसङ्गस्त्रिविधः—अनुष्ठानप्रसङ्गः; पदार्थप्रसङ्गः; शास्त्रप्रसङ्गश्चेति। पश्वर्थप्रयाजाद्यनुष्ठानेन पशुपुरोडाशाद्युपकारोऽनुष्ठानप्रसङ्गः। सौमिक्या वेद्या सोमान्तर्गतेष्टिपशूनामुपकारः पदार्थप्रसङ्गः। "यजमानादिर्ब्राह्मणो धनमार्जयेत्" इति द्रव्यार्जनशास्त्रेण ज्योतिष्टोमादिशास्त्रस्य ऋत्विगपेक्षस्याविशेषेण त्रैवर्णिकानामा-

र्त्विज्यमाक्षेप्तुं प्रवृत्तस्योपकारः शास्त्रप्रसङ्गः—इत्येवमादिरूपेण द्वादशे सापवादः प्रसङ्गो निरूपितः। तत्र द्वादशलक्षणीप्रतिपाद्यप्रमेयस्य ब्रह्ममीमांसायामुपजीव्यत्वं तत्र तत्र प्रदर्शयिष्यत इति नात्र प्रपञ्च्यते। यदुक्तम्—उद्गीथाद्युपासनविचारस्य ब्रह्मविचारे प्रासङ्गिकविचारोपयुक्तकर्मविचारस्य न पूर्ववृत्तत्वमिति; तन्न, "अथातो ब्रह्मजिज्ञासा" इति सूत्रे ब्रह्मवत्तदनुबन्धिनामपि विचारः प्रतिज्ञातः। ब्रह्मोपासनानां ब्रह्मानुबन्धित्ववदुद्गीथाद्युपासनानामपि ब्रह्मदृष्टिरूपतया ब्रह्मानुबन्धित्वमस्त्येव। तथा ब्रह्मोपासनाङ्गकर्मसमृद्ध्यर्थतया ब्रह्मानुबन्ध्युपासनानुबन्धित्वमप्यस्त्येव। एवं ब्रह्मोपासनादिवत्साक्षात्संगतस्योद्गीथाद्युपासनविचारस्य प्रासङ्गिकत्वं कुतस्त्यमित्याह—**उद्गीथाद्युपासनानीत्यादिना।** **ब्रह्मदृष्टिरूपाणी**त्यनेन ब्रह्मानुबन्धित्वमुक्तम्। **ब्रह्मज्ञानापेक्षाणी**त्यनेन ब्रह्मानुबन्ध्यनुबन्धित्वमुक्तम्। **तान्यपी**त्यनेन प्रकारान्तरेण ब्रह्मानुबन्ध्यनुबन्धित्वमुच्यत इति द्रष्टव्यम्। **सुतरामि**त्यनेनानुबन्धत्रैविध्यं सूचयते। **इहैव संगतानीति**; कर्मविचारापेक्षयात्र संगत्यतिशयसद्भावादिति भावः।

**न्यायसुदर्शनम्**

अविशेषेण वेदनोपादानादुभयावस्थामपेक्ष्य संविभक्तेर्विनियोगो धर्मिणामिच्छाद्वारतोऽयमिति केचित्। **फलकरणेत्यत्र** फलशब्दोऽपूर्वादिगोचरः। उत्तरफलशब्दः स्वर्गादिगोचर इति विवेकः। **एषां साधनत्वं च विनियोगावसेय**मित्यत्र विनियोगो विशेषसंबन्धः। श्रुतिलिङ्गादीनां स्वरूपमुत्तरत्र वक्ष्यामः।

---

**इति लघुसिद्धान्तः।**

---

